# BHATTI KAVYA;

A

# POEM

## ON THE ACTIONS OF RAM

Part the First.

WITH THE COMMENTARIES

OF

## JAYAMANGALA

AND

## BHARATAMALLIKA.

PUBLISHED FOR THE USE OF

The Sanscrit College.

UNDER THE AUTHORITY OF THE COMMITTEE OF

PUBLIC INSTRUCTION.

*CALCUTTA:*

PRINTED AT THE EDUCATION PRESS.

1828.

# ॥ भट्टिकाव्यं ॥

अस्य टीका जयमङ्गलरचिता जयमङ्गला ॥

॥ भरतमल्लिकनिर्म्मिता मुग्धबोधिनी च ॥

---

॥ तस्य प्रथमोभागः ॥

---

॥ कलिकाता राजधान्यां कमिटीसाहेवानामाज्ञया

एडुकेशन् यन्त्रालये मुद्रितः ॥

---

॥ सम्वत्सरे १८८४ शके १७४९ ॥

## जयमङ्गला टीका।

श्रीगणेशाय नमः॥ प्रणिपत्य सकलवेदिनमतिदुस्तरभट्टिकाव्यसलिलनिधेः। जयमंगलेति नाम्ना नौकेव विरच्यते टीका। लक्ष्यं लक्षणं चोभयमेकत्र विदुषः प्रदर्शयितुं श्रीस्वामिसूनुः कविर्भट्टिनामा रामकथाश्रयमहाकाव्यं चकार। तथा ह्यस्योपनिबंधनं कविना द्विधा कृतं एकं लक्षणसूचकैः प्रकीर्णाधिकारप्रसन्नतिङंतकांडैश्चतुर्भिः। द्वितीयं लक्ष्यसूचकै रामसंभवादिभिर्द्वाविंशत्या सर्गैः। तत्र लक्षणं द्विविधं। शब्दलक्षणं काव्यलक्षणञ्च। तत्र प्रथमस्य प्रकीर्णाधिकारतिङंतकांडानि द्वितीयस्य प्रसन्नकांडं यच्चाप्रस्तावेन बहूनां लक्षणानां प्रकरणं तत्प्रकीर्णकांडं तदेवात्र प्रथममुक्तं तस्य व्यापित्वात्। उत्तरत्रापि द्रष्टव्यमितिप्रदर्शनार्थं अत्र यद्यप्यादौ कविना देवतानमस्कारो न कृतः तथापीष्टदेवतासंकीर्तनमपि विघ्नोपशमनहेतुर्भवतीतिमन्यमान आह। अभूदित्यादि तस्य हीष्टदेवता सनातनो विष्णुः स चादौ कीर्त्तितः। तत्प्रतिबंधना चेयं कथेति प्रबंधेनैवास्य संकीर्तनं रामायणवृत्तञ्च विष्णोर्यस्मिन्काले जगत्कार्यवशादवतारः कृतः तदेव प्रथमं दर्शयति।

भरतटीका।

नमो गणेशाय ॥ नत्वा श्रीकरमम्बहगौराङ्गमखिल
भट्टिटीकां प्रकुरुते भरतो मुग्धबोधिनीं। विहिताः
याः पठनीयादिशोधिकाः। भट्टिटीका मम त्वेष भोग
उद्यमः। कविकल्पद्रुमादीनां धातूनामनुबन्धतः।
यानि कार्य्याणि तेषां बोध्यानि तानि तु। कानि स्पष्टानि
ग्रन्थगौरवभीतितः। व्याख्यान्यत्र न चाप्यर्था अतिविस्तृत
भर्तृहरिर्नाम कविः श्रीरामकथाश्रयं महाकाव्यं चका
सर्गबन्धो लक्ष्यसूचनाय काण्डबन्धो लक्षणसूचनाय
द्वाविंशतिः प्रकीर्णाधिकारप्रसन्नतिङन्तकाण्डानि चत्वा
लक्षणकाव्यलक्षणभेदाल्लक्षणं द्विविधं। तत्र काण्डत्र
क्षणं प्रसन्नकाण्डे काव्यलक्षणं आदौ वङ्गलक्षणप्रदर्शनं
एवं व्यापकत्वाद्दर्शितं। महाकाव्यस्यादावाशीर्नमस्क्रि
निर्देशो वा कर्त्तव्य इति सम्प्रदायानुरोधादस्य निर्देशं
इष्टदेवतास्मरणात्मकं मङ्गलमप्यादौ प्रकाशयति।

अभून्नृपो विबुधसखः परन्तपः श्रुता[illegible]नो दशरथ इत्युदाहृतः। गुणैर्वरं भुवनहितच्[illegible]न यं सना तनः पितरमुपागमत्स्वयं॥ १ ॥

अभूदिति भूतसामान्ये लुङ् भूत इत्यर्थः। [illegible]न्यथा राज स्थिरातीतत्वात्कवेः परोक्षत्वाच्च लिट् स्यात्। [illegible]तस्थेति सिचो लुक्। भूसुवोस्तिङीति गुणप्रतिषेधः। नयतेर्डि[illegible] न [illegible]र्यादि क इत्यन नरो मनुष्यास्तान्नृन पातीति [illegible] नृप [illegible] लोपः नृपो राजा अत्यंतधर्मविजयित्वादेवराज[illegible] [illegible]नां दित्याह विबुधसख इति विबुध्यंत इति विबुधा [illegible] प्र धानत्वात्तद्वेगुपधलक्षणः कः सामान्यशब्दोऽपि [illegible] वर्तमानो ऽप्यर्थवशाच्छक्रे प्रयुक्तस्तस्य सखेति राजाहःसखिभ्यष्टच् विबुधस खः अनेन धर्मविजयित्वं दर्शयति विबुधसखत्वस्य [illegible]र्यकार्य्य त्वात्। धर्म्मविस्तरणात्[illegible]लोकविजयिनश्च ये राजान[illegible] धर्म्म विजयी प्रधानं। परं शत्रवस्त्रिविधाः उच्छेदनीयोपपीडने[illegible]र्षणी याः तत्र ये उपपीडनोत्कर्षणीयास्तान्परांस्तापयतीति [illegible]रंतपः द्विषत्परयोस्तापेरिति खच्। खचिह्रस्वः अरुर्द्विषदजन्त[illegible]ति मम् नृप इत्यनेन स्वमण्डले वृत्तिराख्याता परंतप इति पर[illegible]मण्डले। [illegible]यंत इति श्रुतानि वेदादीनि तैरन्वितः संबद्धः ग्रंथतोऽर्थतश्च

गृहीतत्वात्। दशरथ इत्यनेन नाम्ना उदाहृतो लोके गीतः गुण्यन्त अभ्यस्यन्त इति गुणाः गुण आमंत्रण इति चौरादिकाददन्तः तस्मादकर्तरि चेत्यादिना घञ् येषामेरजण्यन्तानामिति दर्शनं येषां तन्नास्ति तेषामेरच् स्वरं प्रति विवादो न रूपं प्रति। गुणैरभिरामादिभिर्वरं श्रेष्ठं यं नृपं पितरमुपागमदिति संबंधः। श्रि इति वरः ग्रहादिना कर्मण्यप्। केन हेतुना उपगतवान्सं पितरं सनातन इत्यत आह भुवनहितच्छलेनेति भवंति उत्पद्यंत इति भुवनानि भूर्भुवःस्वरिति त्रयो लोकाः। रञ्जेः क्युन्नित्यनुवर्तमाने भूसूधूभ्रस्जिभ्यश्छंदसीत्याणादिकः क्युन् बहुलवचनाद्भाषायामपि भवति तेभ्यो हिताः भुवनहिताः विष्णोर्दशावताराः इह तु रामो द्रष्टव्यः तच्छलेन व्याजेन भुवनहितच्छलेन इदानीं रावणादिकंटकोद्धारणात् तथा चोक्तं परित्राणाय साधूनां विनाशाय च दुष्कृतां। धर्मसंस्थापनार्थाय संभवामि युगे युग इति। सनेत्यव्ययं सदार्थे वर्तते सना भवतीति सायं चिरमितिष्ट्युट्युलौ टच्तु सनातनो विष्णुः उपागमत् उपजगाम लृदित्वादङ्। अन्यस्त्वन्येषु राजसु गुणैर्वरत्वात् यं पितरं जनकमङ्गीकृतवान् सोऽभूदिति योज्यं। स्वयमित्यात्मना न कर्मणान्येन वा प्रेरित इत्यर्थः॥ १॥

अभूदिति॥ दशरथ इति नाम्ना उदाहृतः ख्यातो नृपो राजा अभूत् स कथंभूतः विबुधसखः विबुधानां देवानां सखा मित्रं अथवा विबुधस्य इन्द्रस्य सखा सामान्यदेवतावाचिनोऽपि विबुधशब्दस्य विशेषपरत्वात् प्राधान्याद्वा इन्द्रवाचित्वं एतेन त्रिजयित्वं दर्शितं विबुधसखत्वं विनयेनापि भवतीति प्रतापं दर्शयन्नाह परान् शत्रून् तपतीति परन्तपः श्रुतान्वितः श्रूयन्ते गुरुभ्य

स नृपो वेदानध्यैष्ट अधीतवानिति स्वाध्याय उक्तः। वेदयंति ज्ञापयंति धर्माधर्माविति वेदाः सामादयः पचाद्यच्। इङोऽधिपूर्वस्य विभाषा लुङ्लृङोरिति गाङ् विभाषयेति गाङ्भावपक्षे रूपं अजादित्वादाट्। आटश्चेति वृद्धिः ङित्वादात्मनेपदमादेशप्रत्यययोरिति षत्वं मूलञ्च। त्रिदशान्देवानयष्ट अग्निष्टोमादिभिः पूजितवान् यजनमुक्तं। यजेः स्वरितत्वात्तङ् अनिकमसोपगत्वात् झल. लिङ्सिचाविति कित्वं न भवति। अनिगन्तत्वात् व्रश्चादिना षत्वं झलोझलीति सिचोलोपः। पितॄनपारीत् आप्यायितवान् पितॄनुद्दिश्य यजनं पृपालनपूरणयोरित्यस्मात् पूरणार्थात् लुङि रूपं सिचि वृद्धिः इट ईटीति सिचोलोपः अथवा पितॄनतार्प्सीदिति पाठः तृपप्रीणने इत्यस्मात् लुङि स्पृशमृशकृषतृपदृपां सिच्वक्तव्य इति क्सः सिचि। अनुदात्तस्य चेत्यादिना अमभावपक्षे रूपं पितॄन् तर्पितवानित्यर्थः। समममंस्त बंधून् मातृपित्रादिज्ञातीन् संमतवान् सदा दानमानादिभिः पूजितवानित्यर्थः मन्यतेरनुदात्तत्वात्तङ्। इट्प्रतिषेधस्य येषां सिच इकार उच्चारणार्थो येषां त्वनुबंधार्थः तेषां हनः सिजिति कित्करणज्ञापकान्नलोपाभावः। येषां तु इकार इत् तेषामिदित्वान्नकारलोपाभावः। आभ्यंतरं शत्रुमजित्वा कथं परंतप इत्याह व्यजेष्ट षड्वर्गमिति कामक्रोधलोभमोहमदमात्सर्याणां षण्णां वर्गः षड्वर्गः तमभिभूतवान्। विपूर्वस्य जयतेर्विपराभ्यां जेरिति तङ्। अरंस्त नीतौ सामादिषु संध्यादिषु च रतः नीतिमानित्यर्थः। समूलघातं न्यवधीत् समूलान् निःशेषानरीन् शत्रून् निहतवान् उच्छेदनीया ये शत्रवः तेष्विदं विधानं समूलोपपदाद्धंतेः समूलाकृतेत्यादिना णमुल्। हो हंतेरिति घत्वं वृद्धिः हनस्त इति तत्वं कषादिषु यथेत्यादिना

यथाविध्यनुप्रयोगः अनुप्रयोगे लुङ्क्चेति वधादेशः। तस्याकारा न्तत्वादुपदेशे ऽनेकाच्त्वादिडनिषेधो न भवति। अतोलोपे कृते तस्य स्थानिवद्भावादतो हलादेरिति विभाषावृद्धिर्न भवति ॥ २ ॥

भ० सोऽध्यैष्टेति ॥ स दशरथो वेदानध्यैष्ट अधीतवान् अधीङ्ल ध्ययने नवशः पमे इति ङित्वात्मं थांसिः धीटीथीष्वित्यमं कृत्वा आदिगेचोरिति णौ कृते भूयो ऽमजादेरिति पुनरमं कृत्वा आदिगेचोरिति त्रिः क्वित्वादिनि षःष्टुभिरिति तस्य टः वेदानिति वेदयन्तीति वेदाः सामादयः पचादित्वादन् घञन्तमट् इति करणे वा घञ् त्रिदशान् देवान् अयष्ट अग्निष्टोमादिना पूजित वान् केचित्तु यजेरेव देवपूजावाचित्वात् त्रिदशानित्यस्य वैयर्थ्याप त्तेस्त्रिदशानयष्ट सङ्गतवानित्याहुः वस्तुतस्तूपचारात् पूजामा त्रवाचित्वे ऽपि यजश्चोदेवार्चादानसङ्गतावित्यत्र देवो देवनं क्रीडा अर्चा चेतिद्वन्द्वः देवस्यार्चेति तत्पुरुषो ऽपि तात्पर्य्यभेदाद्वा क्यभेदो लौकिके न दोष इति केचित् शश्वज्जाजिति अस्य षङ्झम स्यादिति सेर्लोपः ष्टुभिरिति तस्य टः पितॄन् अपारीत् आप्यायित वान् त्रिपृलिश्चो पालने पूर्त्तौ थांमिः रुदाद्यसीति ईम् वमो ऽरमो तिदम् झवस्यादिति सेर्लोपः त्यलोपे त्यलक्षणमिति न्यायात् सेर्लो पेऽपि अजवदेत्यादिना त्रिः अतार्पीदिति क्वचित् पाठः तृपधातुः प्रीणने सकर्म्मकः प्रीतिमात्रे त्वकर्म्मक इतिक्षीरस्वामिप्रभृतयः।ब न्धून् समर्मस्त आदृतवान् मन्योङ् बोधेसम्पूर्व्वोयमादरार्थ आदि त्वादनिम्। षड्वर्गं कामक्रोधलोभमानमदहर्षरूपं व्यजेष्ट अभि भवतिस्म जिजये चकारात् अभिभवे विपराजेति मं मीनो अरंस्त क्रीडितवान् रमूङ् औ क्रीडे मरीम् शत्रून् समूलघातं यथास्यात्त था न्यवधीत् हतवान् समूलानां शत्रूणां घातः प्राणवियोगफलक

व्यापारो यत्र हिंसाक्रियायां। अन्ये तु समूलशब्दात् पराङ्गतार्था द्धन्तेर्णमुविभक्तमन्ततदनुप्रयोगश्चेत्याहुः। समूलान्निःशेषान् अरीन् प्राप्य हतवानित्यर्थः चणमाभीक्ष्ण्ये पूर्व्वकाले इत्यत्र वाश ब्दस्य व्यवस्थावाचित्वात् योगविभागाद्वा अन्यत्रापि चणमा स्यादि ति देवीदासचक्रवर्त्तिना व्याख्यातं। अरीन् समूलान् हत्वा तत् प्राणत्यागानुकूलव्यापारं कृतवानित्यर्थस्तेन पूर्व्वकालत्वमपीति दुर्गसिंहप्रभृतयः। एतेन पुनः सन्धानशङ्कया सदा सावधानत्वं सूचितं। घातमिति हन्तेर्घञ्त्रि चणमा हनस्तङिति नस्य तङ् स्वेर्हो घ इति हस्य घः ञ्णित्यन्ते जुङ्तोरिति त्रिः न्यवधीदिति हन् स्तोहिंसागत्योः हनवधष्टीति बधादेशेन बधान्तत्वाद्धसादेः सेम इत्यादौ बधवर्जनाद्वधेः सेमृत्वसूचनाद्वा वसोरस्येतीम् हसादेः सेम इति बधवर्ज्जनान्न त्रिः व्रजेष्ट षड्वर्गमित्यनेन मानसा रिप वः अरीन् न्यवधोदित्यनेन च बाह्याश्च निर्ज्जिता अतः पर न्तप इति प्रागुक्तमुपपादितं॥ २॥

वसूनि तोयं घनवद्व्यकारीत्सहासनं गोत्रभिदाध्य वात्सीत्। न त्र्यम्बकादन्यमुपास्थितासौ यशांसि सर्व्वे षुभृतां निरास्थत्॥ ३॥

वसूनि॥ वसूनि द्रव्याणि बन्धुव्यतिरेकेण बालादिभ्यो व्यकारीत् दत्तवान् विक्षिप्तवानितिवा। किरतेर्लुङि रूपं कः किमिवेत्यपेक्षा यामाह तोयं घनवदिति तोयं उदकं घनो मेघः फलनिरपेक्षतया यथा विकिरति तद्वत्। एवं सम्पत्पालनमादिश्येन तुल्यत्वमाह स हासनं गोत्रभिदाध्यवात्सीदिति गोत्रभिदा इन्द्रेण सहासनं अध्य

वात्सीत् अध्युषितवान् अनेनात्यन्तधर्म्मविजयित्वस्य फलं दर्शयति वस निवास इत्यस्य रूपं वसिः संप्रसारणीति वचनादिड्भावः। अस्तिसिच इतीट्। वदव्रजेत्यादिना वृद्धिः सस्यार्द्धधातुक इति तत्वं आसनमिति उपान्वध्याङ्वस इति अधिकरणस्य कर्म्मसंज्ञा। त्रीणि अम्बकानि अक्षीणि यस्येति त्र्यम्बको महादेवः तस्मादन्यं न। पास्थित न पूजितवानित्यर्थः उपपूर्व्वात्तिष्ठतेः देवपूजासंगतिक रणपथिष्विति देवपूजायां तङ् स्थाघ्वोरिच्चेत्यादिना इत्वं कित्वं च। ह्रस्वादङ्गादिति सिचो लोपः। इषून् बिभर्त्तीति अन्येभ्योऽपि दृश्यत इति क्विप् इषुभृतो धनुर्द्धराः सर्व्वेषां तेषां यशांसि निर स्यत् निरस्तवानित्यर्थः असाधारणीकृतास्त्रत्वं दर्शयति। उप सर्गादस्यत्यूह्योर्वा वचनमिति वचनाद्यदा तङ् नास्ति तदा तिप् अस्यतीत्यादिना ङ्लेरङ् अस्यतेस्थुक् ॥ ३ ॥

भ० वसूनीति ॥ असौ दशरथो वसूनि धनानि अधारीत् दत्तवान् क इव घनवत् मेघ इव वत् साम्ये इति वत् चित्वादव्ययत्वं तोय मिति तोयमिव तोयतुल्यानि वसूनीत्यर्थः। तोयशब्दोऽयं स्व प्राधान्यैकत्वादत्युक्तैकवचनः अनेकेषामपि वसूनामेकतुल्यतत्वा श्रयः क्षविक्षेपे सौ व्रजवदिति त्रिः गोत्रान् पर्व्वतान् भिनत्तीति गोत्रभिदिन्द्रः त्रासुभित्यादिना। क्विप्। तेन सह एकमासनम ध्यवात्सीत् वत्सोनिवासे अनिमत्वात् व्रजवदिति त्रिः सतस्यरे इति सस्य तः कर्म्मक्रिया इत्यादिना ङस्य ढत्वं त्र्यम्बकात् महादेवाद न्यं न उपास्थित न पूजितवान् सैवाध्वसंज्ञाराधइति आराध नार्थे सं स्थादोर्ङिरिति णुनिषेधस्य त्रीणि अम्बकानि नेत्राणि य स्येति विग्रहः द्यौर्भूमिरापस्तिस्रोऽम्बा यस्येति भारतं। त्रयाणां लोकानामम्बः पितेत्यन्ये तिस्रोऽम्बाः प्रकृतयोऽस्येति केचित् अन्या

रश्चेति पो सर्व्वपुभृतां सकलधनुर्द्धराणां यशांसि निरास्थत् निर स्तवान् ततोऽधिकत्वात् वक्षस्ख्यातिप इति कः वचश्चेति अस्य तरस्यादेशः इपून् बाणान् बिभर्त्तीति पूर्व्ववत् क्विप् स्वस्य तत् पितीति तत्॥ ३॥

पुण्यो महाब्रह्मसमूहजुष्टः सन्तर्पणो नाकसदां व रेण्यः। जज्वाल लोकस्थितये स राजा यथाऽध्वरे वह्नि रभिप्रणीतः॥ ४॥

पुण्यो॥ पुनातीति पुण्यः पूञो यत् णुक् ह्रस्वश्चेति औणादिकोय न। णुगागमस्य ह्रस्वस्य अत्यन्तपुण्यकरत्वाद्राजापि पुण्य इत्युच्य ते। तस्य यस्माद्राजा अग्निरपि पुण्यः पावनात्पुण्यः यागादिः पुण्यः तेन पुरुषः पूज्यते। महतां वेदविदां ब्रह्मणां ब्राह्मणानां समूहेन जुष्टः सेवितो राजा अग्निश्च ब्रह्मशब्दो ऽत्र ब्राह्मणपर्य्यायः। नाके स्वर्गे मोदन्तीति सत्सुद्विषेत्यादिना क्विप् नाकसदो देवाः तेषां कर्म णि षष्ठी संतर्पयति प्रीणयतीति संतर्पणः संतर्पयतेः कृत्यल्युटोबहु लमिति कर्त्तरि ल्युट् राजा यागादिना तर्पयति अग्निरप्यग्निमुख त्वाद्देवानां वरेण्यः श्रेष्ठः राजा अग्निश्च वृञ् एण्यः जज्वाल प्रदीप्त वान् लोकस्थितये मा भूल्लोकस्य स्थित्यतिक्रम इत्येवमर्थो अग्निरपि लोकस्य स्थितये ज्वलति। यथोक्तं। अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति। अभि प्रणीत इत्यग्निविशेषणं। आभिमुख्येन प्रणीत इतिप्रादिसमासः उ पसर्गादसमास इत्यादिना णत्वं मंत्रेणाभिमुखीकृत इत्यर्थः। यथा ऽध्वरे यागे ऽभिप्रणीतो वह्निर्ज्वलति तथा राजापीत्यर्थः॥ ४॥

भ० पुण्यो महेति ॥ स राजा लोकस्य स्थितये मर्य्यादार्थं जज्वाल दीप्तवान् प्रतापवान् बभूवेत्यर्थः यथा अध्वरे यज्ञे अभिप्रणीतो मन्त्रेण संस्कृतोऽग्निर्ज्वलति अग्निज्वलनमपि लोकस्थित्यर्थं स्यात् यदुक्तं अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति उभयोर्विशेषणमाह पुण्यः पुनातीति पुण्यं धर्म्मः नाम्यन्येतिकेति सूत्रेणान्येऽपि कृतः प्रयोगाः स्युरिति सूचितं तेन पूधातोर्डुण्ये टेर्लोपाडितीति टेर्लोपः पुण्ययोगात् पुण्यः अर्शआदित्वादः। पुण्यं धर्म्मे मनोज्ञे च पावने च प्रयुज्यते। महतां ब्रह्मणां समूहेन जुष्टः सेवितस्तेन प्रीतो वा ब्रह्मा विरिञ्चिर्द्विजयोरिति विश्वः। शब्दे तत्त्वे तथा सामे वेदे श्रौतिषि केदिजे। यात्रायां पथि निद्रायां महत् शब्दो न दीयत इति निषेधान्महता ब्रह्मसमूहेन जुष्ट इति वा विगृह्यते। महांश्चासौ ब्रह्मसमूहजुष्टश्चेति वा यद्वा महद्ब्रह्म तपो ... तेषां समूहेन जुष्टः। वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिरित्यमरः। यद्वा असहा अस्यैव विष्णोरिव महसोऽसा यस्मात्वमहा इतिपृथक्पदं। यद्वा मह्यते पूज्यतेऽसौ महात्मासूनिति कर्म्मण्यसुः। यद्वा असो रोगस्तं हन्तीत्यसहा तस्मिन् राजनि सति लोकानां व्याधिभयं नाभीदित्यर्थः। आरोग्यमपि कविभिर्वर्ण्यते तथाच कालिदासः जनपदे न गदः पदमादधावभिभव. कुत एव सपत्नज इत्यर्थो व्याधिहन्तृत्वमस्यैव। शडोश्चि जुषसुदि सेवे ईदित्वान्नेम् डीश्वीदितीम् निषेधः। नाके स्वर्गे सीदन्तीति नाकसदो देवाः पूर्व्ववत् क्विप् तेषां सन्तर्पणः ग्रहनन्दीति घेऽनः ढघेकतीति ढे षी सम्यक् तर्पणं यस्मादिति विद्यमानसम्बन्धे षष्ठीत्यन्ये। कं सुखं तद्विपरीतमकं नास्यस्मि

श्चिति णाकः षञ्चोऽसोवाऽस्म्भमोरिति व्यवस्थितविकल्पत्वान्नञो ऽनादेशः। वरेण्यो ऽन्यापेक्षया श्रेष्ठः वृञधातोः श्रेष्ठार्थे नान्य न्येतिकेत्यन्यकृतसूत्रवचनादेन्यः ॥४॥

स पुण्यकीर्त्तिः शतमन्युकल्पो महेन्द्रलोकप्रतिमां समृद्ध्या। अध्यास्त सर्व्वर्त्तुसुखामयोध्यामध्यासितां ब्रह्मभिरिद्धबोधैः ॥ ५ ॥

यत्रासौ राज्यं चकार तां नगरीं दर्शयन्नाह। स पुण्येतित्यादि। जय० स्वामिगुणपूर्व्वका हि निवासस्य गुणा भवन्तीति प्रदर्शनार्थं पश्चा त्तदभिधानं तथा चोक्तं। यतु यच्छीलस्तच्छीला अस्य प्रकृतयो भवं तीति। स राजा पुण्यकीर्त्ति. पुण्याः पवित्राः कीर्त्तयो यस्य सः। शतमन्युकल्पइति प्रभावं दर्शयति ईषदसमाप्ताविति कल्पः शतम न्युरिन्द्रः महेन्द्रलोकप्रतिमामयोध्यामिति योज्यं। प्रतिमीयते तु ल्यते इतिप्रतिमा आतश्चोपसर्गइत्यङ्। महेन्द्रलोकेन प्रतिमा तु ल्यातृतीयेतियोगविभागात्समासः अमरावतीमिवेत्यर्थः कया समृद्ध्या सम्यगतिशयेन ऋद्धिः समृद्धिः प्रादिसमासः अध्यास्त अ ध्यासितवान् भूतसामान्ये लङ्। आस्तेरनुदात्तेत्त्वात्तङ् अधिशी ङित्यादिना अधिकरणस्य कर्म्मसंज्ञा सुखयतीति सुखा पचाद्यच् सुखहेतुत्वाद्वा सुखा। सर्व्वेषु ऋतुषु सुखेति सप्तमीति योगविभा गात्समासः। अध्यासितां अध्युषितां ब्रह्मभिर्ब्राह्मणैरिद्धबोधैः सर्व्वशास्त्रपरिज्ञानात् पटुबुद्धिभिरित्यर्थः इन्धेर्निष्ठायामनुना सिकलोपः ॥५॥

स पुण्येति। स राजाऽयोध्यामध्यास्त अध्युवास कर्म्मक्रियेत्यादि भ०

ना उस्य ठलं। ञिलाषड् उपवेशे थां लुगश्चोऽप इन्द्रियोपेलुक् स किम्भूतः पुण्या शोभना कीर्त्तिर्यस्य स तथा। पुण्यं सुगन्धे सुकृते पुण्यं शोभनमृच्यत इति शाश्वतः। शतं मन्यवो यज्ञा यस्य स शत मन्युरिन्द्र स्तस्य गोवहूनस्त्वादेशोने इतिकल्पः। अयोध्यां किम्भूतां समृद्धां सम्पदा महेन्द्रलोकेनामरावत्या प्रतिमा सादृश्यं यस्याः सा तां सर्व्वंस्वृतुषु सुखयतीति पचादित्वादन् सुखहेतुत्वात् स र्व्वर्त्तुसुखां इडुवांधैर्दीप्ताञ्जानैर्व्रीह्यश्वैरध्यासितां इन्धेः क्ते इडुः बुधिर्घत्ति शेधः ॥ ५ ॥

निर्म्माणदक्षस्य समीहितेषु सीमेव पद्मासनकौशलस्य। ऊर्ध्वस्फुरद्रत्नगभस्तिभिर्या स्थितावहस्येव पुरं मघोनः ॥ ६ ॥

निर्म्माणेति॥ पद्मासनो ब्रह्मा पद्ममासनं यस्येतिकृत्वा तस्य कौशलं नैपुण्यमिति षष्ठीसमासः। तस्य पूरणगुणेत्यादिना न प्रतिषेधः तत्र विशिष्टा एव गुणाः रूपरसगंधस्पर्शाः तद्विशेषास्च शुक्लनीलादयः कटुकाम्लादयःसौरभ्यादयः शीतोष्णादयश्च गृहीताः तत्र रूपादिभिः समासोभवत्येव। तत्स्थैश्च गुणैः षष्ठी समस्यते न तु तद्विशेषगुणैरिति वचनात् अन्यैस्तु समासप्रतिषेधः। एवञ्च कृत्वा सुनिश्चयवचनमर्थवद्भवति तद्यथा। अधिकरणैतावत्वे च तदशिष्यं संज्ञाप्रमाणत्वादिति पाणिनेः युगपद्देशपृथक्त्वदर्शनादिति रूपसामान्याद्वा इतिवचनप्रामाण्यादिति चेद्लोपप्रतिषेध इति कात्यायनस्य नकारग्रहणसामर्थ्यात् लोपो न भविष्यतीति किं पुनरत्रासत्तत्वमितिभाष्यकारस्येति। तस्य सीमेव मर्य्यादेव

अयोध्या ततो न सृष्टतरं शोभनमस्तीत्यर्थः। कीदृशस्य निर्मा णदक्षस्य निर्मितिर्निर्माणं सृष्टिः तत्र दक्षस्य पटोः। क विषयेषु समीहितेषु स्रष्टुमीप्सितेष्वित्यर्थः। ऊर्ध्वमुपरिष्टात्स्फुरद्भिः गभस्तिभिः स्फुरन्तो ये रत्नानां गभस्तयो रश्मयः तैर्धामभूतैर्मघोन इन्द्रस्य पुरममरावतीं विहस्येव अवस्थिता या तामयोध्यां मघवन् अन् उचन् इत्यौणादिकः श्वयुवमघोनामिति संप्रसा रणं ॥ ६ ॥

निर्म्माण इत्यादि॥ ऊर्द्ध्वं स्फुरन्तो ये रत्नानां गभस्तयो रश्मयस्तै र्धामभूतैर्मघोन इन्द्रस्य पुरं अवहस्येव निर्म्माणदक्षस्य विश्वकर्म्म णः समीहितेषु सम्यक्चेष्टितेषु या स्थापिता तामयोध्यामध्यास्तेति पूर्व्वेणान्वयः समुपसर्गेण बहुलेन च चेष्टाया आधिक्यं सूचितं। वि श्वकर्म्मणा नेदृशी शोभना पुरी निर्म्मिता अत इमां विलोक्य ईदृक् पुरीनिर्म्माणे चेष्टा जातेत्यभिप्रायः। पद्ममेव आसनं यस्य स पद्मास नो ब्रह्मा तस्य कौशलस्यनैपुण्यस्यसीमाइवउत्प्रेक्षायां ब्रह्मणा नेदृ शी शोभनान्या पुरी निर्म्मितेति भावः। अतः सुतरां विश्वकर्म्मण ई दृक्‌निर्म्माणे चेष्टावत्त्वं। यद्वा निर्म्माणदक्षस्य विश्वकर्म्मणः समीहि तेषु निर्म्मितेषु सीमेवेतः परं शोभनं न निर्म्मितं इत्यभिप्रायः। कि म्भूतस्य पद्मासनस्येव कौशलं यस्य यद्वा पद्मासनस्य कौशलं शोन्द र्य्यं यस्य स पद्मासनकौशलो ब्रह्मा तस्य समीहितेषु वाञ्छितेषु शो मेव तस्य किम्भूतस्य निर्म्माणदक्षस्य निर्म्माणचतुरस्य। यद्वा कौ पृ थिव्यां शलतेचलतीति कौशलः पचादित्वादच् सरसिजमित्युदा हरता वोपदेवेन क्वचित् समासे विभक्तेर्नलुक इति सूचितं तेनात्र समम्या अलुक् पद्मासनस्यासौ कौशलश्चेति कर्म्मधारयस्तस्य भ०

समीहितेषु सीमेव कश्चिद्विशेष्यः प्राक् प्रयुज्यते प्राग्भावस्य विवक्षाधीनत्वात् इतिपश्चामनस्य प्राग्भावः कोशल इति विशेषणात पथिव्यां विहितसृष्टेर्नैतादृशी सृष्टिरिति सूचितं अतएव पृथिव्यां प्रतियोग्यभावात् स्वर्गमुपहस्य स्थिता मघोनः किंभूतस्य निर्म्माणदक्षस्य स्वपुरनिर्म्माणं दक्षते हन्तीति पचादित्वादच् इमां पुरीं दृष्ट्वा स्वपुरीनिर्म्माणनिन्दकस्येत्यर्थः ॥ ६ ॥

सद्रत्नमुक्ताफलवज्रभाञ्जि विचित्रधातूनि सकाननानि । स्त्रीभिर्युतान्यप्सरसामिवौघैर्मेरोः शिरांसीव गृहाणि यस्यां ॥ ७ ॥

ज०म० सद्रत्नेति ॥ सन्ति शोभनानि यानि रत्नादीनि तानि भजन्ते यानि गृहाणि तानि सद्रत्नमुक्ताफलवज्रभाञ्जि मुक्ताफलवज्रयो रत्नान्तर्भावेऽपि प्राधान्यख्यापनार्थं वचनं गोबलीवर्द्दन्यायाद्वा रत्नशब्देन मरकतपद्मरागवैदूर्य्यादयो गृह्यन्ते। सद्रत्नादियुञ्जीति पाठान्तरं। युजेरसमासे इति प्रतिषेधो न भवति अनपुंसकविषयत्वात् नपुंसके तु झलचणस्य नुमो विधानात्। विचित्रधातूनि विचित्रा नानाप्रकारा धातवो मनःशिलादयो येषु गृहेषु सेवाविरचितचित्रकर्म्मत्वात्। सकाननानि सौधानि स्त्रीभिर्युतानि अप्सरसामिवौघैः तत्रत्याभिस्त्रीभिरप्सरोभिरिवेत्यर्थः। मेरोः शिरांसीव मेरोः शृङ्गाणीव एवंविधानि गृहाणि यस्यामयोध्यायां तामध्यास्त। गृहइति गेहेकः तत्र गृहशब्दो वेश्मनि नपुंसकलिंगः तत्स्थायिषु पुंलिङ्गो नित्यं बहुवचनान्तश्च ॥ ७ ॥

यस्यामयोध्यायां गृहाणि मेरोः शिरांसीव उभयविशेषणमा भ॰
ह। सद्रत्नइत्यादि॥ सन्ति शोभनानि रत्नानि पद्मरागादी
नि मुक्ताफलानि मौक्तिकानि वज्राणि हीरकाणि च भजन्ते इति
विण् ज्वित्यक्तं सुक्तोरिति वृद्धिः मुक्ताफलवज्राणां रत्नत्वेऽपि
प्राधान्यात् प्राचुर्य्याद्वा पृथगुपादानं जातौ जातौ यदुत्कृष्टं तद्धि
रत्नं प्रचक्ष्यते इत्यनुशासमनात्। सद्रत्नानि शोभनमध्ये उत्कृ
ष्टानीत्यर्थः। युञ्जीति पाठे रत्नादीनां युक् योगो येषु तास
मितिक्विप् दिचित्रा धातवो येषु मनःशिलादिभिः कृतचित्रत्वात्
समेरुगृहेषु सह्ज(?)त्वात् काननैः सह वर्त्तमानानि गृह सन्निधिवि
हितोद्यानात् मेरुगृहेषु सहजत्वात् सहःसौवेति विभाषया सह
शब्दस्य सो वकुश्रोहो अप्परसामौघैरिव स्त्रीभिर्युतानि श्रोघश
ब्दादेकेकशोऽपि स्त्रीणामप्सरःसमूहसादृश्येनातिसौन्दर्य्यं दर्शि
तं। श्रोघोवृन्देऽम्भसां रये इत्यमरः॥ ७॥

अन्तर्निविष्टोज्ज्वलरत्नभासो गवाक्षजालैरभिनि
ष्पतन्त्यः। हिमाद्रिटंकादिव भांति यस्यां गंगाम्बुपात
प्रतिमा गृहेभ्यः॥ ८॥

अन्तरित्यादि। अन्तः गृहमध्ये निविष्टानि निहितान्युज्ज्वलर अ॰म॰
त्नानि यानि तेषां भासो रश्मयः गृहेभ्यो गवाक्षजालैः अभिनिष्प
तन्त्यः निर्गच्छन्त्यः यस्यां भान्ति तामध्यास्तेतियोज्यं पर्व्वतस्य उन्न
तप्रदेशष्टङ्क इत्युच्यते तस्मात् हिमवत्पर्व्वतटङ्कादिव गङ्गाम्बु
पातप्रतिमा गङ्गाजलप्रवाहतुल्याः स्वच्छत्वात्॥ ८॥

भ० अन्तरित्यादि॥ यस्यामन्तर्गर्भे निविष्टानामर्पितानां उज्ज्वला नामुद्दीप्तानां रत्नानां भासो दीप्तयो गवाक्षजालैर्वातायनरूपैः जालाकृतिगवाक्षैर्वा गृहेभ्यो निःसरन्त्यो भवन्ति हिमाद्रेर्हिमालय यस्य टङ्कात पाषाणदारणात् विदीर्णप्रस्तरभागात निःसरन्त्यो गङ्गाम्बुपातप्रतिमा इव गङ्गाजलपतनच्छटा इ। टङ्कः कपित्थभेदे स्यात् मानान्तरे खनित्रयोः। कोपे ऽधिकांघे जङ्घायां टङ्कः पाषाणदारण इति विश्वः। गवामक्षीव गवाक्षः अक्ष्णो; चक्षुषी तिसूः अयोर्लोपइतीकारलोपः। हिमप्राधान्यात हिमस्याद्रिर्हि माद्रिरिति षष्ठी समासः हिमेन युतो ऽद्रिरितिवा निष्पतन्त्य इति नदंतसोत्वस्यर्थे चेतिसूत्रेण पदत्वनिषेधात समासेलुप्तविभक्ति कस्य पदान्तत्वं ज्ञापकमिदं ज्ञापकसिद्धस्यानित्यत्वं तेन समासे लुप्तविभक्तिकस्य कचिदपदान्तत्वमपि तेन सेतुकस्वपर्कवति सूत्रेण विसर्गसम्बन्धिसस्य क्रतत्वात् क्विलादिति पत्वं स्यादितितु वेसूदित्यादि सूत्रे निष्कृपइति मूर्द्धन्यपनिर्द्देशात सूचितं तेनात्र सेतु कस्वपर्केवेति विसर्गस्य से कृते क्विलादिति पत्वं मनीषादित्वाद्वा सेतु कस्वपर्कत्यत्र वाशब्दो व्यवस्थावाची तेनात्र नित्यं सकार इति बोध्यं॥ ८॥

धर्म्म्यासु कामार्थयशस्करीषु मतासु लोके ऽधिगतासु काले। विद्यासु विद्वानिव सो ऽभिरेमे पत्नीषु राजा तिसृषूत्तमासु॥ ९॥

जय० धर्म्म्यासु॥ धर्म्मादनपेतास् धर्म्मपथ्यर्थेत्यादिना यत्। कामार्थयशांसि कर्त्तुं शीलं यासां तास्। कृञोहेत्वित्यादिना ताच्छी

ल्पे टः अतः कृकमीत्यादिना विसर्जनीयस्य सत्वं टित्वात् ङीप् मताम् पूजिताम् लोके तासां प्रतीतत्वात्। अधिगताम् काले विवाहयोग्ये काले परिणीताम् सोऽभिरेमे स राजा ऽभिरतवा न्पत्नीषु पत्युर्नोयज्ञसंयोग इति नकारः। तिसृषु कौसल्या कै केयीसुमित्रासु उत्तमास्विति सन्नारीगुणैः श्रेष्ठासु विद्यास्विति विदन्ति आभिर्धर्माधर्माविति विद्या संज्ञायां समजेत्यादिना क्यप्। तिसृषु सामर्ग्यजुराख्यासु धर्म्यास्वित्यादिकं तुल्यम्। वि द्वानिव यथा अधिगतविद्य इत्यर्थः विदेः शतुर्वसुः दीर्घहल्ङ्या दि संयोगान्तलोपः तस्य राज्ञः पत्नीभिस्ताभिः सह रममाणस्य सुता नैवासन्॥ ८ ॥

धर्म्यास्विति॥ स राजा तिसृषु पत्नीषु अभिरेमे विक्रीड तृफले भ० त्यादिना अकारस्यैत्वं खिलोपश्च यथा विद्वान् पण्डितो विद्यासु रमते वेत्तेः शतुः क्वसुर्वेति वाशब्दस्य व्यवस्थावाचित्वात् पाण्डि त्यार्थे नित्यमिति बोध्यं। विदन्तीति विद्याः मोव्रजयजेत्यादिना क्यप् उभयविशेषणमाह धर्म्यासु धर्मादनपेतासु ठघेकात् पणोकेत्यादिना ष्यः तेषां ष्यादीनां सेत्त्वमनित्यञ्च स्यात् अचा नित्वं तेन णित्ते श्रिरित्यादिना नश्रिः श्रिञ्जेति न ईप् काममर्थं यशः कुर्वन्ति इति स्तकुरु इतिटः। हेत्वाद्यर्थे ट इति परे स्वमते यशस्करी विद्येति उदाहरणेन हेत्वाद्यर्थः सूचितः विद्याया यश स्करणं हेतुत्वात् अन्यथा विद्येति निर्देशो निरर्थकः टित्वात् ङिश्च ञ्ज्वा हेति ईप् सेतुकस्वपफेवेति वेःसः लोके मतासु पूजितासु काले विवाहसमये अधिगतासु परिणीतासु पक्षे शैशवसमये गृही तासु श्रेष्ठासु॥ ९ ॥

पुत्रीयता तेन वराङ्गनाभिरानायि विद्वान् क्रतुषु क्रियावान्। विपक्किमज्ञानगतिर्मनस्वी मान्यो मुनिः स्वां पुरमृष्यशृङ्गः॥ १०॥

ज०म० ऋष्यशृङ्गनामा मुनिः पुत्रीयं क्रतुं जानातीति पुरोधसो व शिष्ठादुपश्रुत्य राज्ञा वारविलासिनीभिरानायितामुनिरित्येत त्कथयितुमाह। पुत्रीयतेत्यादि। पुत्रीयता आत्मनः पुत्र मिच्छता इच्छायां सुप आत्मनः क्यजिति क्यच् क्यचिचेतीत्वम। तेन राज्ञा प्रयोजककर्त्रा वराङ्गनाभिर्वरस्त्रीभिः प्रयोज्यकर्त्री भिः आनायि स्वां पुरमिति योज्यम। नीवह्योरित्यादेरपि अकथितञ्चेति चकारेण संगृहीतत्वात् नयतिर्द्विकर्म्मकः। तत्र प्रधानकर्म्मणि लुङ्। चिण्भावकर्म्मणोरिति चिण् चिणो लुगिति तशब्दस्य लुक् गु णकर्म्मणि तु पुरमिति द्वितीया गतिबुद्धीत्यादिना प्रयोज्यकर्त्तरि द्वितीया न भवति। नीवह्योः प्रतिषेध इति वचनात् विद्वान् वेदा र्थतत्त्ववित् एवञ्च कृत्वा क्रतुषु क्रियावान् प्रशस्तक्रियः प्रशंसायां मतुप् विपक्किमज्ञानगतिरिति विपाकेन निर्वृत्तम् पचतेः क्त्रिः क्त्रेर्मप् यत्पूर्व्वजन्मकृतमनिवर्त्तनीयं कर्म्म तस्मात्तपःप्रत्ययादि नोपदेशात् ज्ञानाप्रवृत्तिर्बुद्धावस्य जातेत्यर्थः। मनस्वी प्रश स्तमनाः प्रशंसायामस्मायामेधेत्यादिना विनिः मान्यो माना र्हः अर्हेकृत्यतृचश्चेति ण्यत्। धर्म्मादिमननान्मुनिः मनेरुच्चोप धाया इति इन् उपधायाउकारः। ऋष्यस्य शृङ्गं ऋष्यशृङ्गं तच्छृङ्गमिव शृङ्गं यस्य स ऋष्यशृङ्गः। सप्तम्युपमानेत्यादिना उत्तरपदलोपी समासः॥ १०॥

पुत्रीयतेत्यादि॥ आत्मनः पुत्रमिच्छता तेन राज्ञा प्रयोजक भ॰
कर्त्रा वराङ्गनाभिः प्रयोज्यकर्त्रीभिर्ऋष्यशृङ्गनामा मुनिः स्वां पु
रमानायि णीञ् प्रापणे द्विकर्मकः ण्यादिकृन्तात्वेत्यादिना मुख्य
कर्मोक्तं रतनोर्यगिणाविति तनि इण् इणस्त्रलोप इति तनो
लोपः। जेर्लोप इति जिलोपः तदानयनेहेतुगर्भविशेषणमाह
विद्वान् पण्डितः क्रतुषु यज्ञेषु क्रियावान् प्रशस्तक्रियः सोऽस्य
पादिति अस्त्यर्थे वतुः अस्त्यर्थप्रत्ययाः प्राशस्त्यादिविवक्षया भव
न्ति। यदुक्तं भूमनिन्दाप्रशंसासु नित्ययोगेति शायने। संसग
स्ति विवक्षायां भवन्ति मतुबादय इति। विपाकेन जाता ज्ञा
नस्य गतिर्मार्गोयस्य स तथा विनोपदेशाज्ज्ञानं जातमित्यर्थः
अतिपरिणतज्ञानमार्ग इत्यर्थोवा। द्वितस्त्वज इति चिमक् गति
र्मार्गे दशायाञ्चज्ञाने यात्रायुपायने इतिविश्वः। मनस्वी प्रशस्त
मनाः। स्वश्मेधास्रजायादिति विन् मान्यः मानार्हः दण्डेका
दिति अर्हार्ये साध्वर्थेवा यत्यः धर्मादिमननान्मुनिः मनेर्निपात
नात् ऋष्यस्य मृगस्य शृङ्गमिव शृङ्गमस्य आकर्षस्य इत्युदाहरणे
न क्वचिन्मध्यपदलोप इति सूचितं षष्ठीप्रथमयोरित्रार्थ समास
इति श्रीपतिदत्तः तन्मते ऋष्यस्येव मृगस्येव शृङ्गमस्येति विग्रहः।
प्रशस्तान्यङ्गान्यासामिति गोतृणेति पामादित्वान्नप्रत्ययेऽङ्गनाः
पुत्रीयतेतिक्योऽस्यादितिक्यः अकारस्य ईकारः॥१०॥

ऐहिष्ट तं कारयितुं कृतात्मा क्रतुं नृपः पुत्रफलं मुनीन्द्रं। ज्ञाताशयस्तस्य ततो व्यतानीत्स कर्म्मठः कर्म्म सुतानुबन्धि ॥ ११ ॥

ज° म° ऐहिष्ट ॥ तं मुनीन्द्रं क्रतुं कारयितुं नृप ऐहिष्ट ईहितवान् ईहतेरात्मनेपदिनो लुङि सेट्त्वादिटि च रूपं। द्विकर्म्मकता तु हृक्रोरन्यतरस्यामिति। कृतात्मा वशीकृतात्मेतिभावः। पुत्र फलं पुत्रः फलं कार्य्यं यस्य क्रतोः तत उत्तरकालं स मुनिः पर चित्तज्ञत्वात् ज्ञाताशयो ज्ञाताभिप्रायो राजाभिमतं कर्म्म कार यितुं तस्य नृपस्य कर्म्म व्यतानीत् प्रारब्धवान। तनोतेर्ण्टीतिह लन्तलक्षणायां प्रतिषिद्धायां अतोहलादेर्लघोरिति विभाषावृद्धिः कर्म्मठः कर्म्मणि घटते कर्म्मणि घटोठच। यागक्रियानिष्पादक इ त्यर्थः सुतानुबन्धं सुताननुबध्नातीति कर्म्मण्यण। सुतानुबंधीति पाठान्तरम् सुताननुबन्धुं शीलमस्येति। सुप्यजातौ णिनिः सुपी त्यनुवर्त्तमाने सुबग्रहणमुपसर्गनिवृत्त्यर्थमिति केवलस्योपसर्गस्य निवृत्त्यर्थं द्रष्टव्यम् अन्यथा जाताविति किं ब्राह्मणानामन्त्रयिते ति न युज्यते आङिलस्योपसर्गत्वात ॥ ११ ॥

भ° ऐहिष्टेत्यादि ॥ तं मुनीन्द्रं नृपः पुत्रफलं क्रतुं कारयितुं ऐहिष्ट ईह चेष्टायां सिः बलोरस्येतीम् घोटोर्योष्वित्यम् आदिर्गचोरिति त्रिः घोऽङोर्जेरिति प्रयोज्यकर्त्तुः कर्म्मत्वं कृतात्मा कृत आत्मा यत्नो येन आत्मा यत्नो धृतिरित्यमरः ततोऽनन्तरं ज्ञाताभि प्रायः स मुनीन्द्रस्तस्य नृपस्य सुतानुबन्धं कर्म्म व्यतानीत् तनु इञ विस्तृतौ ध्यांसिः हृदाद्यस्तीति ईम् बलोऽरस्येति इम् हसादेः सेम

इति श्रिः सुतानमनुबध्नाति जनयतीति ड्वात्वन्निति यणि सुतस्यानु बन्धः सुतानुबन्धः घञन्तः ततोऽस्त्यर्थेनेकाजिति इन् कर्म्मणि कुशल्लः कर्म्मठः कृत्तद्धितसमासानामभिधान नियामकं इत्युक्तेः कर्म्मणः कौशल्येठइति बोध्यं ॥ ११ ॥

रक्षांसि वेदीं परितो निरास्थदङ्गान्ययाक्षीदभितः प्रधानम्। शेषाण्यहौषीत्सुतसम्पदे च वरं वरेण्यो नृपतेरमार्गीत् ॥ १२ ॥

रक्षांसि ॥ वेदीं परितः यजनवेद्याः समन्तात् विघ्नायोपस्थिता अन्म नि रक्षांसि रक्ष्यते एभ्य इत्यसुन् तानि रक्षांसि निरास्थत् नि रस्तवान्। पर्य्यभिभ्यांसर्व्वोभयार्थे तसिल्। अभितः परित इत्यादिना द्वितीया अङ्गान्ययाक्षीदभितः प्रधानमिति। यद्देवता मयो यागः सा देवता तत्र प्रधानं पुत्रफलत्वाद्विष्णुः प्रधानम्। त मिष्ट्वा तस्योभयतः पार्श्वयोर्यान्यङ्गानि चक्षुरादीनि देवतान्तरा णि तान्ययाक्षीत्। अग्नावाहुत्या पूजितवान् कर्त्तुः क्रियाफला भावात्तङ् न भवति पक्षकल्पे शेषाण्यहौषीदिति स्वाङ्गं विष्णु मिष्ट्वा शेषाणि प्रतिकृतानि पिष्टकमयानि सुतानां सम्पदर्थमग्नौ हुतवान्। जुहोतेः सिचिवृद्धावीटि च रूपम्। वरेण्यः श्रेष्ठः वरं चामार्गीत्। मार्गितवान् हे देवा अग्निप्रभृतयो नृपतेः सुता भूयासुरिति। मार्ग अन्वेषणे। आधृषाद्वेतियदाणिजन्नास्ति तदा चङभावात्सिजेव भवति ॥ १२ ॥

रक्षांसीत्यादि॥ वरेण्यो मुनिर्व्वेदीं परितो वेद्याः समन्तात् भ० रक्षांसि निरास्थन्निराकृतवान् पूर्व्ववदस्यतेर्ङः अस्यादेशस्य प्रधा

समभितः प्रधानयागस्योभयपार्श्वे आदावन्ते च अङ्गानि अया क्षीत् अङ्गयागानकार्षीत् यद्वा प्रधानदेवताया विष्णोरुभयपा र्श्वे अङ्गानि चक्षुरादीनि लोकपालनवग्रहादीन् वा पूजितवान् एतेन साङ्गादिककर्म्मणः फलावश्यम्भाव इति सूचितं ऊर्निहो मे दर्शे अङ्गाः कृत्स्नशाकुनशेषवशेत्यादि नपुंसकसंग्रहे हैमच न्द्रोऽप्याह नपनेः सतसम्बन्धे च यरममार्गीत मार्गअन्वेषणे अ याचीदिति यज्ञेरनिमत्तात् अजवदेतिभिः शक्त्वाजेति षड्पदाः कर्मणिकं क्रिलादिति पल्लवे द्वा प्रधानस्य त्यच परितोऽभितोयो गे धिक् समयेत्यादिना द्वितीया॥ १२ ॥

निष्ठां गते दत्त्रिमसभ्यताषे विहितित्रिमे कर्म्मणि राज पत्न्यः। प्राशुर्हुतोच्छिष्टमुदारवंश्यास्तिस्रः प्रसोतुं चतु रस्सुपुत्रान्॥ १३ ॥

ज०म० निष्ठां॥ निष्ठां समाप्तिं गते कर्म्मणि यागक्रियायां समाप्तायां राजपत्न्यः हुतोच्छिष्टं हुतावशेषं शिष्टचरुं प्राशुः भक्षितवत्यः अश्नातेर्लिटि उसि रूपम् दत्त्रिमसभ्यताषे दानेन निर्वृत्तो दत्त्रि मः सभ्यानां ब्राह्मणानां तोषो यत्र कर्म्मणि। विहितित्रिमे विधाने न निर्वृत्ते कर्म्मणि। दाञो धाञश्च क्रिलः क्रिरिति क्त्रौ विहिते प्रथमस्य दोदद्धोरिति ददादेशः द्वितीयस्य दधातेर्हिरिति हि रादेशः सप् सभायां साधव इति सभ्याः सभाया यः। उदार वंश्याः महावंशोद्भवाः शेषे यत्। कौशल्या कैकेयी च क्षत्रिये सुमित्रा तु वर्णसंकरजा किमर्थं प्राशुः। प्रसोतुं सुपुत्रान्जनयि तान् प्रसवितुं तत्र कौशल्या केकयी च एकैकं पिण्डं प्राशितवत्यौ

ताभ्यां चावयोः परिचारिकेति पिण्डभागद्वयं दत्तं सुमित्रा प्रा शितवती। ततस्य पुत्रद्वयं जनयिष्यति एवञ्चाभिसन्धाय चतुर इत्युक्तं नतु चोनिति। षूङ् प्राणिगर्भविमोचने सरतीत्यादिना विभाषितेट्॥ १२॥

निष्ठामित्यादि॥ कर्म्मणि निष्ठां निष्पत्तिं गते सति उदारवंश्या भ० स्तिस्रो राजपत्न्यः चतुरः शोभनपुत्रान् प्रसोतुं ऋतशेषं प्रापुः। अश भोजने षूङ्ल प्रसवे तादर्थ्ये चतुम् वेमद्दितिइम् पचे इमो ऽभावः। वंश्या इति ढघेकादिति भवार्थे च्यः तस्यानित्वा न्निर्न ईप्। कर्म्मणि कीदृशे दानेन जातः सभ्यानां तोषो यत्र। डुदाञ्लिदाने क्तितस्तङ्ले इति त्रिमक् दद्दोध इति दत्। सभा यां साधुः सभ्यः पूर्व्ववत् च्यः। विहिचिमे विधानेन जाते पूर्व्ववत् त्रिमक् धाञोहिरिति हिः॥ १३॥

कौशल्ययासावि सुखेन रामः प्राक्केकयीतो भरत स्ततो ऽभूत्। प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेन॥ १४॥

कौशल्यया॥ कोशलस्य राज्ञो ऽपत्यमिति वृद्धेत्कोशलाजा ज०म० दाञ्ञ्यङ्। यङ्याप् कौशल्यया प्राक् प्रथमं असावि रामः जन्यतेस्म। षूङः कर्म्मणि लुङि चिण्रूपम् सुखेनेति प्रकृत्यादि त्वात्तृतीया। महतां जन्मनि न काचिदपि पीडास्ति। तदनन्तरं

कैकयीतो भरतोऽभूत्। केकयानाचष्ट इति णिच्। मा हि ईदृशास्तादृशाः केकया इति कथयति। तदन्तादच इरिति इकारप्रत्यय औणादिकः णिलोपः। कृदिकारादक्तिन इति ङीष्। अपादाने चाहीयरुहोरिति तसिः। यदा च केकयस्यापत्यम् जनपदशब्दात् क्षत्रियादञित्यञ्। केकयमित्रयुप्रलयाणां यादेरिय इतीयादेशः। टिड्ढाणञिति ङीप् तदा कैकेयीति द्वितीयं रूपम् सुमित्रा शत्रुघ्नं उदारचेष्टं उदाराचेष्टा यमेति प्रामोष्ट प्रसूतवती कर्त्तरि लुङ्। ङित्वात्तङ् जातमात्रस्य हि तस्य किल महासत्वतया तादृशस्यैव चेष्टाभूदिति श्रूयते। एकेति एकैवेति गम्यमानत्वादेवशब्दो न प्रयुक्तः। सह लक्ष्मणेन लक्ष्मणेन सह॥१४॥

भ० कौशल्येत्यादि॥ कौशल्यया राजकन्यया प्राक् पूर्व्वं सुखेन रामोऽमात्रि प्रसूयते स्म सूङ्ख्यात्मनि कर्म्मणि रूपं कोशलशब्दादपत्यार्थे वृद्धेत्कोसलाजादाञ्ञ्यङ् इत्यादिना ञ्यः तस्य यकारस्याविवक्षया ष्ट्रिञ्चाहेति लोपः अदन्तत्वात् स्त्रियामत आप्। ततोऽनन्तरं भरतः कैकयीतोऽभूत् केकयस्य स्त्र्यपत्यमिति वाक्याद्यत इति ष्णस्तस्य णकारस्याविवक्षया न भिः यतोपायेति ञपी च तसङ्गेरिति तस् एका सुमित्रा लक्ष्मणेन सह उदारचेष्टं शत्रुघ्नं प्रामोष्ट सूङ्ख्यात्मनि रूपं सहत्वारणेनि सहयोगे तृतीया सहवारणेतिसूत्रे सहयोगस्य प्रधानाप्रधानत्वाविशेषोक्तेरत्र सहयोगस्य प्राधान्यं विवक्षितं पित्रा सहागतः पुत्रः राज्ञा सह वनं यातीत्यादिवत् तेन लक्ष्मणो ज्येष्ठ इति बोध्यं ये तु क्रियादिगौणात् सहार्थे तृतीया इत्याहुस्तन्मतेऽपि लक्ष्मणस्य ज्येष्ठत्वं। तथाहि युगपदारब्धप्रसवक्रियायां लक्ष्मणस्य गौणत्वं क्रियाया असमापकत्वादियं प्रसूतेति व्यत्र

द्वाराभावात् शत्रुघ्नस्य प्राधान्यं क्रियायाः समापकत्वात् इयं प्र
सूतेति व्यवहारात् तेन लक्ष्मणे जाते प्रसवक्रिया न समाप्ता प
श्चादव्यवहितकाले शत्रुघ्नस्य सम्भवात् तेन लक्ष्मणस्य सहयोगो
विवक्षितः। शत्रुघ्नस्य तु क्रियाव्याप्यत्वात् कर्म्मत्वं। वस्तुतस्तु यस्य
हि क्रियादिसम्बन्धः साक्षात् शब्देन प्रतिपाद्यते तत् प्रधानं यस्य
न प्रतीयते तत गौणं एतच्च शक्तिस्वभावात पित्रा सहागतः पुत्र
इत्यत्र पितुर्गौणत्वं साक्षात् क्रियासम्बन्धाभावात्। न च पिता
पुत्रसम्बन्धेन प्रधानाप्रधानता तस्मात क्रियागुणद्रव्यसम्बन्धे गौ
णात् सहार्थयुक्तात् तृतीया स्यादितिबोध्यं। शत्रुं हन्तीति हनच
रगष्टक् हनगमित्युङ् लोपे हनोक्तोघ्नः॥ १४॥

आर्चीद्द्विजातीन् परमार्थविन्दानुद्वेजयान्भूतग
णान्न्यषेधीत्। विद्वानुपानेष्ट च तान् स्वकाले यतिर्व
शिष्ठो यमिनां वरिष्ठः॥ १५॥

आर्चीद्द्विजातीन्॥ तेषु जातेषु द्विजातीन् द्वे जाती येषामिति जःसः
तान् ब्राह्मणक्षत्रियवैश्यान् परमार्थविन्दान् विन्दन्तीतिविन्दाः
विद्लृलाभे इत्यस्मात् अनुपसर्गादित्यादिना शः मुचादित्वान्नुम्।
परमार्थस्य विन्दान् लाभिन इति कर्म्मणि षष्ठी तस्याः कृद्योगाच्च
षष्ठी समस्यत इति वक्तव्यमिति समासः। तानार्चीत् स्नगा
दिभिः पूजितवान्। अर्चपूजायामित्यस्मात् लुङि तिप् इट् सिचो
लोपः। भूतगणान् राक्षसादिगणान् उद्वेजयान् उत्कम्पान्।
तस्मिन्नेव सूत्रे उत्पूर्व्वएजिर्ष्वन्तोनिर्दिष्टः तस्मादुद्वेजयन्तीति
शः तान् न्यषेधीत् उत्सादितवान्। षिधेर्नेटोति हलन्तस्य

णायाः प्रतिषेधः विद्याम्पौरोहित्यकर्म्मणि कुशलः उपानिष्ट च तान् रामादीन् तेषामुपनयनादिक्रियां चकार ममानेत्या दिना आचार्य्यकरणे तङ्। स्वकालइति गर्भादेकादशे वर्षे जातस्य गर्भैकादशेष्वित्यादिना वचनेन उपनयनकाल उक्तः। यमनियमेषु यतत इति यतिः। सर्व्वधातुभ्य इनिति इन्। अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यमकल्मषं। इति पञ्च यमा येषां सन्तीति यमिनः स्मृताः। तेषां वरिष्ठः उत्तमः प्रियस्थिरेत्यादिना उरुशब्दस्य वरादेशो महत्पर्य्यायस्य॥ १५॥

भ० आर्चीदित्यादि॥ वशिष्ठः पुरोहितो द्विजान परमार्थविन्द्वान उत्कृष्टधनलाभिनः आर्चीत् परमधनेन पूजितवान् इतिपर्य्यवस्यति विद्लाभ इत्यस्मात् माहिश्मातीत्यादिना शः मुचादित्वान्नुणागमः। परमार्थ आत्मसाक्षात्कारः अर्च्चक पूजायां। उद्वेजयान् भयहेतुक्रूरभूतगणान् राक्षसादीन् न्यषेधीत दूरीचकार एजृकम्पने पूर्व्ववत् शप्रत्ययः विद्वान् विधिज्ञः तान् रामादीन् स्वकाले गर्भैकादशे वर्षे क्षत्रियोपनयनयोग्ये उपानैष्ट ज्ञानार्चात्क्षेपणोपनयेत्यादिना सं। यतते यमनियमादिष्विति यतिः औणादिक इः यमिनां मध्ये वरिष्ठः उरुतमः गुणादेष्ठेयस्य इतिगुणवचनादिष्ठे कृते वाढान्तिकेति उरुशब्दस्य वरादेशः। वसिष्ठ इति पूर्व्ववदिष्ठः वसनिवासे इति दन्त्यमध्यं पारायणिकाः साधयन्ति प्रकृष्टो वशी वशिष्ठ इति तालव्यमध्यमपि प्राहुः॥१५॥

वेदोऽङ्गवांस्तैरखिलोऽध्यगायि शस्त्राण्युपायंसत जित्वराणि। ते भिन्नवृत्तीन्यपि मानसानि समं जनानां गुणिनोऽध्यवात्सुः॥ १६॥

वेदा॥ शिक्षा कल्पो व्याकरणं छन्दोविवृतिर्निरुक्तं ज्योतिषं च चेति षडङ्गानि शास्त्राणि तानि विद्यन्ते यस्य वेदस्येति अङ्गवान्। तैरुपनीतैरामादिभिः अखिलो निश्शेषो वेदो ऽध्यगायि अधीत इत्यर्थः इङोऽधिपूर्व्वात्कर्म्मणि लुङि। विभाषालुङ्लृङोरिति गाङादेशः चिण्युक् तलुक्। यदा इक्स्मरणे इग्वदिकइति वक्तव्य मिति गाङादेशः। अतएव तैरामादिभिः पूर्व्ववेदिताः साङ्गा वेदा वशिष्ठमुखादधीता इत्यर्थः। शस्त्राणि धनुरादीनि जित्वराणि जयशीलानि। इणनशजीत्यादिना क्वरप् तैरुपायंसत स्वीकृतानि। उपपूर्व्वो यमिः स्वीकरणे वर्त्तते तस्मात्कर्म्मणि लुङ्। आत्मनेपदेष्वित्यादिना अदादेशः हनः शिजितिज्ञापकादनुनासिकलोपाभावः। ततस्ते रामादयो गुणिनो मानमानि मनांसि प्रज्ञादित्वात्स्वार्थे णः भिन्नवृत्तीनि नानाविधप्रवृत्तीनि विषयेषु तानि मानमान्यपि जनानां समं साधारणं क्रियाविशेषणम् अध्यवात्सुः अध्युषितवन्तः। अधिपूर्व्वादसेः सिचि वदव्रजेत्यादिना वृद्धिः सस्यैति तत्वम् सिजभ्यस्तेति जुस्। उपाधीत्यादिना अधिकरणस्य कर्म्मसंज्ञा॥१६॥

वेदइत्यादि॥ तैरामादिभिः समस्तः साङ्गोवेदो ऽध्यगायि भ० अधीङ्ध्ययने गीङ्ष्टोर्ध्योर्वेति ग्यादेशः। शिक्षाकल्पो व्याकरणं निरुक्तं छन्दसांचितिः। ज्योतिषां निचयश्चेति वेदाङ्गानि वदन्ति षट्। तैः शस्त्राणि उपायंसत स्वीकृतानीति उपपूर्व्वोयमिः स्वीकारे मान्तो ऽदन्तइत्यत्। जिजये जयन्तीति जित्वराणि क्वरप् क्वजी॥त क्वरप् खस्य तन्पितीतितन् शीलार्थे क्वरबिति परे। खमते ऽपि शीलार्थे तृनित्युक्तेः कचित्तृन् णिन् इष्णु क्वरप्प्रभृ

तयः शीलार्थेऽपि स्युरिति बोध्यं। ते रामादयो जनानां मानसानि विषयेषु भिन्नवृत्तीन्यपि समं साधारणं यथास्यात्तथा अथ्नास्नुः। वसौ निवासे अनिमत्वाद्ध्रजवदिति निः मत्स्य इति मस्यन्तः अनुस्विदेरिति अन उस् गुणिनो गुणवन्तः सिकाद्यद्वितीन्। मन एव मानसं विकारसंघेत्यादिना स्वार्थे ष्णः णिजा निरिति निः कर्म्मक्रियेत्यादिना उस्य द्वन्द्वं॥ १६॥

ततोऽभ्यगाद्गाधिसुतः क्षितीन्द्रं रक्षोभिरभ्याहतकर्म्मवृत्तिः। रामं वरीतुं परिरक्षणार्थं राजार्ष्यमर्हन्मधुपर्कपाणिः॥ १७॥

म॰ज॰ ततो॥ तेषु रामादिषु तथाभूतेषु गाधिसुतो विश्वामित्रः क्षितीन्द्रं राजानमभ्यगात् अभिगतवान् इणो गा लुङीति गातिस्थेत्यादिना सिचो लुक्। रक्षोभिर्निशाचरैः अभ्याहता अभिभूता यागादेः कर्म्मणो वृत्तिः प्रवृत्तिर्यस्येति रामं वरीतुं प्रार्थयितुम् वृतो वेति इटो दीर्घत्वम्। परिरक्षणार्थं विहन्यमानस्य कर्म्मण इत्यर्थः तं गाधिसुतं आर्हत् पूजितवान् अर्ह पूजायामिति स्वार्थिकण्यन्तश्चौरादिको गृह्यते न भावादिकः। तस्माद्धेतुमण्णिचा च न भवितव्यम् णिश्रीत्यादिना चङ् णिलोपः द्विर्वचनेऽचीति स्थानिवद्भावादजादेर्द्वितीयस्येति हिशब्दो द्विरुच्यते रेफस्य न न्द्रा इति प्रतिषेधः चुत्वम् आट् वृद्धिः मधुपर्कपाणिः दधि घृत मधूनि एकीकृतानि मधुपर्क इत्युच्यते तस्मिन्पात्रे स्थितः पाणि

र्थस्येति विग्रहः सप्तम्युपमानेत्यादिना उत्तरपदलोपी समासः। पात्रादुद्धृत्य मधुपर्केण पूजितवानित्यर्थः॥ १७॥

तत इत्यादि॥ अनन्तरं गाधिसुतो विश्वामित्रो रक्षोभिरभ्या भ० हतकर्म्मवृत्तिः सन् अर्थात् कर्म्मण आत्मनो वा परिरक्षणार्थं रामं वरीतुं क्षितीन्द्रमभ्यगात्। इणो गाव्यामितिगादेशः भूस्थापि बेत्यादिना सेर्लुक् राजा तं आर्च्चिहत् अर्हक्पूजायां चुर्णाञ्णिर्ब्रे तिञिः ञिश्रीत्यङ् धुर्द्धिण्यङीति ईर्द्धित्वं नाजन्तादेरादिर्द्विः स्यादौ नवद्रायेइति च निषेधान्नादिरेफघोर्द्धित्वं ञभमयेति ह स्य जः ञेर्लोपः मधुपर्कः पाणौ हस्ते यस्य स तथा एतेन मधुपर्क णार्हनं ग्रस्यते। वरीतुमिति नेमेकाजादित्यादौ वृवर्ज्जनात् वरो रस्यैतीम् वृतोवेसौ घे इति र्धः॥ १७॥

ऐषीः पुनर्जन्मजयाय यत्त्वं रूपादिबोधान्न्यवृतच्च यत्ते। तत्त्वान्यबुद्धाः प्रतनूनि येन ध्यानं नृपस्तच्छि वमित्यवादीत्॥ १८॥

ऐषी॥ मुक्तिस्तत्त्वावबोधस्तस्या ध्यानं प्रयोजनं तत्र पुनर्जन्म अ० भूयोजन्म तस्य जयाय यत् ध्यानं त्वमैषीः एषितवानसि। इषेर्लुङ् मध्यमैकवचने इट्इटीतिसिचो लोपे रूपम् रूपादिबोधान्न्य वृतच्च यत्ते रूपादिषु शब्दस्पर्शरूपरसगंधेषु चक्षुरादिद्वारेण योबोधः अध्यवसायलक्षणा बुद्धिः तस्माच्च यत् ध्यानं न्यवृतत् निवृत्तम्। वृतेर्द्युतादित्वात् द्युद्भ्योलुङीति तिप् ञेरङ् तत्त्वानि पञ्चविंशतिः पुरुषप्रधानमहदहङ्कारादीनि। प्रतनूनि सूक्ष्म

णि येन ध्यानेनाबुद्धाः ज्ञातवानसि बुधेरनुदात्तेतोलुङ् थास्
सिच् लिङ्सिचावात्मनेपदेष्विति सिचः कित्त्वाद्गुणाभावः सिज्लो
पधत्वजशत्वादि। तद्ध्यानं शिवं शोभनं कच्चिदिति नृपः अवा
दीत् न तस्य व्याघात इति। वद्व्रजेत्यादिना वृद्धिः ध्यै चिन्ता
यां भावे ल्युट् ध्यानं ॥ १८ ॥

भ० तैर्गोरित्यादि॥ तव तद्ध्यानं शिवं निर्व्विघ्नं तस्य कल्याणमिति
वा इति नृपो ऽवादीदकथयत् ब्रूञ्वदेतिसिः यद्ध्यानं पुनर्जन्मनो
ऽपाय अभिभवाय त्वं ऐपीः इणुश वाच्के स्थां सि. रुदा शस्ती
ति स् वसोरस्तातेस् झसस्वाज् झसांस इति सलोपः घोठायोष्विति
अस् आदिगवर्गानि णु. भुधामजादेरिति पुनरम् आदिगंचा
रिति ः यच्च ध्यानं ते तव रूपादिवोधात् चक्षुरादिद्वारेण रूप
रसादीनां यो बोधो ज्ञानं तस्मात् न्यवृतत् निवृत्तं ध्यानं न रूपर
सगन्धादिविषयकं ध्यान वृतेद्युत दित्वात् शासुलिद्युदिति ङः ङ
विधानं अतएव पं। येन ध्यानेन प्रतनूनि दुर्बोधादतिसूक्ष्मा
णि तत्त्वानि त्वं अबुद्धाः बुधेस्थासि झमस्वादिति सिलोपं ढभात्त
योरिति थस्य धः झषझमोरितिधस्य दः ॥ १८ ।

आख्यन्मुनिस्तस्य शिवं समाधेर्व्विघ्नन्ति रक्षांसि वने
क्रतूंश्च। तानि द्विपद्वीर्य्यनिराकरिष्णुस्तृणेढु रामः
सह लक्ष्मणेन ॥ १९ ॥

ज०म० आख्यत्॥ पृष्टो मुनिस्तस्य समाधेर्ध्यानस्य शिवमनुपद्रवमा
ख्यत् कथितवान्। चक्षिङः ख्याञ् अस्यतीत्यादिना च्लेरङ् आतो

लोपः किम्भूयं दोषः यिघ्नन्ति रक्षांसि वने क्रतून्। गमहनेत्यादिना उपधालोपः होहन्तेरिति कुत्वं। किं क्रियतामिति चेदाह तानि रक्षांसि द्विषतां वीर्य्यं सामर्थ्यं वीरैः स्वार्थिकष्यन्तादेरा यत् तस्य निराकरिष्णुः निराकरणशीलः अलंकृञित्यादिना इष्णुच् तृणेढु हिनस्तु तृहर्विधौ लोट्। श्नः रुधादित्वान्नम्। तृणह इम् हाढः ष्टुत्वं ढोढ इति ढलोपः सह लक्ष्मणेन लक्ष्मणेन सह॥१८॥

आख्यदित्यादि॥ ततो मुनिराख्यत् कथितवान् वक्तव्यम् ख्या भं लिपेतिङः उसेचीत्यालोपः तस्य समाधेः मित्रं कल्याणं तस्य नृपस्य आख्यत् सम्बन्धविवक्षया षष्ठीत्यन्ये। तु शब्दो वाक्यभेदे विषयद्योतकत्वे वा। रक्षांसि वने क्रतून् यज्ञान् विघ्नन्ति हन गमेत्युङ्लोपः हनोक्तोघ्नः तानि रक्षांसि रामो लक्ष्मणेन सह तृणेढु हन्तु तृहधकि हिंसे विधिनिमन्त्रणेति प्रार्थनायां गी तुपि रुधादित्वात् दिवसुतुदरुधेति नम् तृह इन् पिह्वत्ते इति इन् हो ढोभाविति हस्य ढः ढभात्तयोरिति तस्य धः ष्टुभिरिति धस्य ढः ढोढ़ीति ढलोपः द्विषतां शत्रूणां वीर्य्यं निराकरोतीति ञिभाज भू सहेति इष्णुः शीलार्थे वा इष्णुरित्यन्ये॥१८॥

स शुश्रुवांस्तद्वचनं मुमोह राजासहिष्णुः सुतविप्रयोगं। अहंयुनाथ क्षितिपः शुभंयुरूचे वचस्तापसकुञ्जरेण॥२०॥

स राजा तस्य मुनेस्तद्वचनं शुश्रुवान् श्रुतवान् सन् सुत जन्मं

विप्रयोगमसहिष्णुः असहनशीलः सुमोऽह मोहमुपगतः शृणाति भाषायामदवसश्रुवेत्यनेन क्सुः। सुतेन विप्रयोगमिति कर्तृक रणेकृतावहुलमिति समासः नलोकाव्ययनिष्ठेति षष्ठ्याः प्रतिषेधः। अथानन्तरं अहंयुना अहंकारवता अहंशुभमोर्थम् तापसकुञ्जरेण तपःसहस्राभ्यांविनीनिरित्यनुवर्तमाने अणंवति मत्वर्थे अण् तापसस्य स कुञ्जरश्चेति वृन्दारकेत्यादिना समासः। तेन क्षितिपो राजा शुभंयुः कल्याणवान् पुंवयुम्। वक्ष्यमाणम् ... कर्मणि लिट् ... अहंयुनाथ इति विभक्त्यन्तपाठान्तरम् ... क्षत्रियाणां नाथ इति व्याख्येयम् ॥ १८ ॥

भा० सत्पुत्रानित्यादि ... स राजा मोहा सुस्थूर्च्छा ... विरहं असहिष्णुः अथानन्तरं तापसकुञ्जरेण तपस्विश्रेष्ठेन क्षितिपो वक्ष्यमाणं वच ऊचे कथयति ... ब्रुवादीन्यन्तेति गौणकर्म उक्तं कीदृशेन स्वप्रार्थनाभङ्गसम्भावनया क्रोधादहङ्कारवता कीदृशो राजा शुभंयुः शुभयुक्तः गौतृणमेधेति अव्ययाभ्यां अहंशुभंशब्दाभ्यां युरस्त्यर्थे॥ २० ॥

मया त्वमाप्थाः शरणंभयेषु वयं त्वयाप्याप्स्महि धर्म्मवृद्धौ। क्षात्रं द्विजत्वं च परस्परार्थं शंकां कृथा मा प्रहिणु स्वसूनुं॥ २१ ॥

ज०म० मया॥ भयेषु त्वं शरणम् आप्थाः प्राप्तोऽसि मया आपेः कर्म्मणि लुङ्सिज्लोपः। त्वयापि धर्म्मवृद्धौ धर्मोपचयाय वय

माप्स्महि प्राप्ताः। पूर्व्ववत्तुङादिः उत्तम वहुवचनं सिचोलोपा भावः सकारस्याप्तत्वात्। तदित्यं चात्रं द्विजत्वं च धर्मवृद्धौ प रस्परार्थं अन्योन्यप्रयोजन कर्मव्यतीहारे सर्व्वनाम्नो द्वे भवतः स मासवच्च वहुलमिति यदा न समासवत् तदा प्रथम। तस्मात्मा शङ्कां कृथाः माकार्षीः कथमस्मिन्संकटे पुत्रं नियोजयामीति। माङि लुङ् अडभावः उश्चेति कित्वाद्गुणाभावः ह्रस्वादङ्गादिति सिचोलोपः प्रहिणु प्रेषय स्वं पुत्रं हिनोतेः प्रार्थनायां लोट् श्नुः अपित्वात् ङित्वं गुणाभावः उतश्चप्रत्ययादिति हेर्लुक् हिनुमी नेति णत्वम्॥ २१॥

मयेत्यादि॥ मया भयेषु शरणं रक्षिता त्वं आप्थाः प्राप्तः भ० ढे थास् आप्नोतिप्रापणे झलस्वादिति सेर्लोपः। त्वयापि धर्म वृद्धौ वयं आप्स्महि प्राप्ताः अत्रापि ढे महि तस्मात् क्षत्रियत्वं ब्रा ह्मणत्वञ्च अन्योन्यप्रयोजनकं जातिव्यक्त्योरभेदोपचारात् व्यती हारे गतिहिंसार्थेभ्यसूत्रे ऽनन्योन्यार्थ इति ज्ञापकात् परस्परं व्यति लुनन्तीत्युदाहरणेन च क्रियाव्यतीहारे परस्परार्थं भवतीति बोद्धव्यं। त्वं शङ्कां मा कृथाः झलस्वादितिसेर्लोपः घोटौर्योव्वित्य त्रामति वाक्यात् मायोगे अमनिषेधः स्वसूनुं प्रहिणु प्रस्थापय विधिनिमन्त्रणेति प्रार्थनायां गी हिनवर्द्धने गतौ स्वादित्वात् दि क्सतुदेति नुः हेर्लोप इति हिलोपः प्राग्वन्नोन इति णत्वं॥ २१॥

घानिष्यते तेन महान्विपक्षः स्थायिष्यते येन रणे पु रस्तात्। मा मां महात्मन्परिभूरयोग्ये न मद्विधो न्यस्यति भारमग्र्यं॥ २२॥

जं०म० घानि॥ अनागतमर्थं ज्ञानेन समीक्ष्याह। महान्विपक्षो रावणः त्रैलोक्यविजयित्वात् सोऽपि रामेण घानिष्यते किमुत इतरराक्षसाः। हन्तेः कर्मणि लृट् स्यसिजित्यादिना चिण्वदिट् उपधावृद्धिः। हो हन्तेरिति कुत्वं पुरस्तादग्रतो यस्य रणं युद्धं भावि परशुरामेण सार्द्धमिति भावः। तत्र येन स्थायिष्यते तेन घानिष्यते इति योज्यं अत्र तिष्ठतेरपि लृट् चिण्वदिड्वा आतोयुक् हे महात्मन् महामत मा मां परिभूः मावज्ञासीः। किमेवं वदसीति परिपृष्टो भवतिर्निराकरणं वर्त्तते। मद्विध इति विधानं विधाप्रकारः आतश्चोपसर्गे इत्यङ् विधा भेदः सादृश्यञ्च इह सादृश्यं गृह्यते मया विधा सादृश्यं यस्येति मद्विधः प्रत्ययोत्तरपदयोश्चेति मदादेशः मद्विधा मत्सदृशोऽन्यो न भारसह्यं अयाय्यत् अयोग्ये असमर्थे न्यस्यति निक्षिपति किमहं येनानागतं समीक्षितमितिभावः। योगाय प्रभवति योग्य. योगाद्यत्॥ २२॥

भ० शङ्काया अकरणे हेतुमाह॥ घानिष्यतइत्यादि॥ येन रामेण रणं पुरस्तादेव स्थायिष्यते नच पराङ्मुखीभविष्यते तेन महान् विपक्षोऽपि घानिष्यते यद्वा येन हेतुना रामेणैवमेवं करिष्यते ततः शङ्कां मा कृथा इति पूर्व्वेणान्वयः हनग्रहदृश्यश्चइति सिण् स्थेर्घाघो ञ्णिति चेति हस्य घः हनस्तङ्इत्यत्र इण् वर्ज्जनात् न तङ् सिनिर्णीः समानत्वात् स्थायिष्यते इतिपूर्व्ववत् सिण् यत ञ्णित् छदिन्यात इतियत् पुरस्तादिति दिक्शब्दाद्दिग्देशकाले इति सप्तम्याः स्तात् पूर्व्वाधरावराःपुराधावेति पूर्व्वस्य पुरादेशः हे महात्मन् हे महामते त्वं मां मा परिभूः न तिरस्कुरु माटीवेति भूस्थापिवेति सेर्लुक् मायोगे ऽमनिषेधः। आत्मादेहमनो

मन्त्रस्वभावधृतिबुद्धिष्विति विग्रहः। महिधोऽसमः अयोग्ये ऽसम र्थे अप्यं अष्टं भारं न न्यस्यति नार्पयति योगाय प्रभवति योग्यः ड घकादित्विषाः अनित्त्वविवक्षया न श्रिः तत्पुरुषोवा नञः समास इति। नञ्तत्पुरुषसंज्ञकसमासार्थं परे सूत्रं कुर्व्वन्ति तन्मते न योग्योऽयोग्य इति विग्रहः खमते योग्यादन्यः अयोग्यः अन्यार थेत्यादिना नञो ऽन्यार्थत्वात् पञ्चमीसमासः वंपूर्व्वमिति नञः प्राग्भावः नञोनित्यः एवमब्राह्मण इत्यत्र ब्राह्मणस्य न सदृशो ऽब्राह्मणः समार्थेनेत्यादिना नञः समार्थत्वात् षष्ठी तेनाचषष्ठी समासः अनिमित्तान्यथा पर्य्यविव्यत्र एकार्थेन निन्दितानि यता नि निमित्तानि चेति कर्म्मधारयः नञो निन्दितार्थे एकार्थत्वात् अपापमित्यत्र पापस्याभावो ऽपापमित्यव्ययीभावः ऽनञोऽव्यय त्वात् एवमन्यत्र यथान्वयं वोद्धव्यं। तत् सादृश्यमभावस्य तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः इत्य समासे तु नञो वाचकत्वानङ्गीकारात् तद्योगे उक्तव्याख्या प्राप्त विभक्तिर्न स्यात्। समैव विधा प्रकारो यस्य तादृशः सर्व्व ज्ञाना तीत्यभिप्रायः॥ २२॥

क्रुध्यन्कुलं धक्ष्यति विप्रवह्निर्यास्यन्सुतस्तप्स्यति मां समन्युं। इत्थं नृपः पूर्व्वमवालुलोचे ततोऽनुजज्ञे ग मनं सुतस्य॥ २३॥

क्रुध्यन्॥ यद्यहं भूतरक्षणे ऽधिकृतोऽस्य वचनं न कुर्य्यां तदा जन्म क्रुध्यन् सन् दिवादित्वात् श्यन् विप्रो वह्निरिव उपमितिसमासः धक्ष्यति कुलं भस्मसात्करिष्यति दहेर्लृट् दादेरिति घःभष्भावः

चर्त्वं घकारस्य ककारः। इणकोरिति षत्वं यास्यन् गमिष्यन्
सुतः मां समन्युं सशोकं नय्यति सन्तापयिष्यति तर्पर्ल्रट् इत्यमेवं
प्रकारं नृपः पूर्व्वमादौ अवालुलोचे अवलोचितवान् अवाङ्पू
र्व्वालोचेर्लिट् तत उत्तरकालं सुतस्य गमनमनुजज्ञे अनुज्ञातं
नृपेणेति विभक्ति विपरिणामेन तेनेति योज्यं कर्म्मणि लिट् ज्ञा
अवबोधनेइति परस्मैपदित्वात् नचानुपूर्व्वादस्मादात्मनेपदं वि
हितं॥ ~३ ।

म० कृशानुकाष्ठेति । विप्र एव वह्निः कृष्णवर्त्म धक्ष्यति भस्मीक
रिष्यति दहो दादि धादित्वान्नस दादेर्ध इति हस्य घः झषञ्झो
रिति षत्व काशिकादिति पाध्यास्यन् गमिष्यन् सुतः समन्युं सशो
कं मां तप्स्यति तपो टार्थे इत्ययमनेन प्रकारेण नृपः पूर्व्वमालु
लोचे आलोचितवान् लोचृ दर्शने धृदिष्यङ्गोलिट्टि: अनवस्थह
र्षेति ककारस्य उकारः। ततोऽनन्तरं सुतगमनं अनुजज्ञे
अत्रानुशब्दस्य उपसर्गः प्रतिरूपकत्वेन ज्ञिनृज्यन्तापिवेति सं। य
द्वा विभक्तिव्यत्ययेन नृपेण सुतस्य गमनमनुजज्ञे अनुज्ञातं कर्म्म
णि प्रत्ययः यद्वा अनुपश्चात् ततस्तेन सुतस्य गमनं जज्ञे ज्ञातं तम्
क्तिरिति तम् यद्वा जनाङ्गरूपं अनुज्ञातार्थता इनगमित्युङ्लोपः
॥२३॥

आशीर्भिरभ्यर्च्य ततः क्षितीन्द्रं प्रीतः प्रतस्थे मुनिरा
श्रमाय। तं पृष्ठतः प्रष्ठमियाय नम्रो हिंस्रेषु दीप्रास्त्र
धरः कुमारः॥२४॥

ज० म० आशी॥ रामगमनस्यानुज्ञातत्वात् प्रीतो मुनिः क्षितीन्द्रं

राजानं आशीर्भिरभ्यर्च्य पूजयित्वा आङ्शासेः क्विपुपसंख्यानात् उपधाया इत्वं प्रतस्थे पुनराश्रमाय आश्रमं पुनः प्रस्थितवान्। तिष्ठतेः समवेत्यादिना लिटि तङ् प्रष्ठं अग्रयायिनं तं प्रष्ठोऽग्रगामिनीति षत्वं पृष्ठतः पश्चात् इयाय कुमारः। इणो णलि वृद्धिरायादेशः द्विर्वचनेऽचीतिस्थानिवद्भावात् द्विर्वचनमिकारस्य अभ्यासस्यासवर्णे इतीयङ् नम्रो ऽनुकूलः हिंस्रनाशिनाः इषवः शराः हिंस्रेषवः आप्तमविमस्वादि यद्वनुः तत् हिंस्रेषुदीप्तमाप्तंधनुर्यस्य कुमारस्येति विग्रहः। अत्र धनुषश्चेति अनङ् न भवति समासान्तविधिरनित्य इति। दीप्तास्त्रधनुरिति पाठान्तरं दीप्तमस्त्रं धृष्टतया यस्य धनुषस्तत् दीप्तास्त्रं धनुर्यस्येति सः। कस्मिन्विषये हिंस्रेषु नान्येष नद्यादपो नमिकम्पा त्यादिना रप्रत्ययान्ताः॥ २४॥

आशीर्भिरित्यादि॥ मुनी रामस्य गमनानुज्ञया प्रीतः सन् नितीत्र्यं पुनराशीर्भिरभ्यर्च्य आश्रमाय प्रतस्थे प्रतिज्ञानिर्णयप्रकाशे सं प्रव्यदाचस्य इति सं गत्यर्थ मन्यदे इति चतुर्थी आङः शासः क्विप् शास इदङ्हलोरिति उङ आकारस्य इः सषेमुस्सेति रङि व्यनचृत यीतिर्धः कुमारो रामस्तं प्रष्ठं अग्रगं मुनिं पृष्ठतः पश्चात् इयाय। इण गतौ णप् धुर्द्विष्यङोतिद्विर्णित्यन्ते जुङतोरितिर्धिः खेर्थो ऽ्युवर्णे इति इय प्रातस्थो ऽग्रेइति षत्वं पृष्ठत इति ष्ठासस्। नम्रोऽविनयावनतः हिंसदीपेति कर्त्तरि र. हिंस्रेषु हिंसकेषु दीप्तं दीप्यमानं अस्त्रं धरतीति पचादित्वादच् हिंसदीपाभ्यां पूर्ववत् रः। हिंस्रेषु दीप्तात्तधनुरिति पाठे हिंस्रेण इषुणा दीप्तमात्तं गृहीतं धनुर्येन इतिविग्रहः॥ २४॥ भ०

प्रयास्यतः पुण्यवनाय जिष्णोरामस्य रोचिष्णुमुख
स्य धृष्णुः। त्रैमातुरः कृत्स्नजितास्त्रशस्त्रः सध्यङ्
रतः श्रेयसि लक्ष्मणोऽभूत् ॥ २५ ॥

जं॰म॰ प्रया ॥ प्रयास्यतो गमिष्यतो रामस्य लक्ष्मणः सध्यङ् अभूत् सहायीभूतः सहाञ्चतीति क्विन् अनुषङ्गलोपः उगिदचामिति नुम् हलन्तादिसंयोगान्तलोपः। क्विन्प्रत्ययस्येति कुत्वं नकारस्य ङकारः सहस्य सध्रिरिति सध्रादेशः पुण्यवनाय पुण्यहेतुत्वात्पुण्यं वनं गत्यर्थानां कर्म्मणि चतुर्थी जिष्णोः जयशीलस्य ग्लाजिस्थश्चेति ग्स्नुः रोचिष्णु रोचनशीलं मुखं यस्य रामस्य पितुराज्ञया तुष्टत्वात् अलङ्कृञित्यादिना इष्णुच् धृष्णुः शत्रुविध्वंसने प्रगल्भः। त्रसिगृधीत्यादिना क्नुः त्रैमातुरः तिसृणां मातृणामपत्यमिति तद्धितार्थविषये समासः पञ्चान्मातुरुत्सङ्ख्या इत्यादिना अण् उत्वं च द्विगोर्लुगनपत्ये इति लुङ् न भवति सहि पिण्डद्वयप्राशनात्ताभ्यां च जनितः अस्त्रञ्च शस्त्रञ्चेति द्वन्द्वः। कृत्स्नं समग्रं जितमधिगतमस्त्रं शस्त्रं येनेति विग्रहः रतः श्रेयसि कल्याणे प्रकृत्यैकाच् प्रश्रस्यस्य श्रः लक्ष्मीरित्यौणादिकः लक्षेर्मुट् ईप्रत्ययश्च सा यस्य विद्यत इति लक्ष्मणः। लोमादिषु लक्ष्म्या अच्चेति अच्न प्रत्ययः अत्वञ्च ॥ २५ ॥

भ॰ प्रयास्यत इत्यादि ॥ रामस्य श्रेयसि कल्याणे रतो लक्ष्मणः सध्यङ् सहचरोऽभूत्। सह अञ्चति गच्छतीति क्विप् सहस्त्रिरः सध्रिसमितिरीति सहशब्दस्य सध्रादेशः किम्भूतस्य पुण्यहेतुत्वात् पुण्यं पवित्रं वा यद्वनं तस्मै प्रयास्यतो गमिष्यत

गत्यर्थमन्यद्वेदृति कर्मणि चतुर्थी जयतीति जिष्णुः ग्स्नुक् भूवेरिति ग्स्नुक्। यश्चरणार्थे गमनानन्दात् रोचिष्णु दीप्यमानं मुखमस्य त्रिभ्राजेति इष्णुः किम्भूतः धृष्णुः प्रगल्भः त्रसिगृधिधृषिक्षिपेः क्नुरिति क्नुः शीलार्थे ग्स्नुक् इष्णुक्नुप्रत्यया इत्येके तिसृणां मातृणामपत्यं वै मातरः संख्यासंभद्राम्मातुरुच् इति उर्। इत्त्वं समस्तं जित गस्त्रंशस्त्रं च येन स तथा रतः रमधातोः क्तप्रत्यये वनतनाद्य निमामिति मलोपः ॥२५॥

इषुमति रघुसिंहे दन्दशूकान् जिघांसौ धनुररिभिरसह्यं मुष्टिपीडं दधाने। व्रजति पुरतरुण्यो बद्धचित्राङ्गुलित्रे कथमपि गुरुशोकान्मा रुदन्माङ्गलिक्यः ॥२६॥

इषुमति॥ रघुसिंहे रामे रघुषु रघुवंशभवेषु सिंह इव शौर्य्यादियोगात् व्रजति सति इषुमति सनिषंगे प्रशंसायां मतुप्। दन्दशूकान् हिंस्रान् दंशेः लुपसदेत्यादिना यङ् जपजभेत्यादिना अभ्यासस्य नुक्। यजजपेत्यादिना ऊकः। अतो लोपः यस्य हलः जिघांसौ हन्तुमिच्छौ अज्झनेतिदीर्घः। अभ्यासाच्चेति कुत्वं सना शंसेति उः न लोकेति षष्ठीप्रतिषेधात् द्वितीयैव। धनुर्दधाने बिभ्राणे अरिभिरसह्यं सोढुमशक्यम् शकिसहोश्चेति यत् मुष्टिपीडं मुष्टिना पीडयित्वा मुष्टिशब्दे तृतीयान्ते उपपदे सप्तम्यां चोपपीडेति णमुल् तच्च चकारेण तृतीयानुकर्षणात्। बद्धं चित्रमङ्गुलित्रं येन अङ्गुलिं त्रायत इति कः पुरे अ०म०

तरुण्यः पुरतरुण्यः नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानमिति ङीप्। यदि तद्वयोऽर्थवत्‌मो चेद्गौरादिपाठात्ङीष्। राभागत इति गुरुः शोको यासां ताः। कथमपि माऽरुदन् न रुदितवत्यः। रुदेरिरितोवेति अ्रेरङ् यतो माङ्गलिक्यः मङ्गलप्रयोजनाः। तदस्य प्रयोजनमिति ठञ् टिड्ढाणञित्यादिना ङीप् ॥२६॥

भ० इषुमतीत्यादि॥ रघुसिंहे रघुश्रेष्ठे रामे व्रजति सति तद्विच्छेदात् गुरुशोकात् पुरतरुण्यः कथमपि महाकष्टेन मा रुदन् रुधिरश्रुदरोदे यतो माङ्गलिक्यः मङ्गलाय हिताः मङ्गलप्रयोजना वा विकारसंघेति ष्णिकः ष्टिड्ढाणञिति ङीप् नद्यादित्वात् तरुणशब्दाट्टीप् वयस्यचरमे इति क्रमदीश्वरादयः। रामे कीदृशे इषुमति मतुरस्त्यर्थे प्रशंसायां। दन्दशूकान् जिघांसति दंश दंशने इत्यस्मात् जागृयङन्तेति ऊकः यङो लुगर्वति यङ्लुक् दंशोनलोपोवेति न लोपः दन्दशूकान् दंशनशीलानिति धातुचन्द्रादयः दन्दशूकस्य पुंलिङ्गो राक्षसे च सरीसृपे इति मेदिनी हन्तुमिच्छन्जिघांसुः सन्निच्छायामिति सन् अत्तुमिच्छति जिघत्सतीत्युक्तेस्तुमर्थाद्धातोः सन्निति बोध्यं अन्यथाऽत्तुमिच्छतीत्युक्तेर्वैयर्थ्यं स्यात् सनयङन्तो द्विरिति द्विः खेराद्यचो लोप्य इति खेर्लोपः झभबघेति हस्य जः ख्यसेत्समीति इः खेर्दीर्घो ञ्णिति चेति हस्य घः चोङ्गनिक्रमामिति दीर्घः अरिभिरसह्यं धनुर्दधाने किम्भूतं तत् मुष्टिपीडं मुष्टिना पीडा यस्य तत्तथा एतेन मुष्टेर्दार्ढ्यं सूचितं अन्ये तु समासाभावपक्षोऽतृतीयासप्तमीभ्यां क्त्वाणम् समासो वेत्याहुः। तन्मते मुष्टिना पीडयित्वा इत्यर्थः।

मुष्टिं पीडयतीति पचादित्वादच् मुष्टिपीडमिति विशेषणेन धनुषो ऽतिदार्ढ्यं सूचितमिति केचित्। केचित्तु मुष्टिं मोषणं पीडयति खण्डयति इत्यनेन सौन्दर्य्यापसारणमपि कविभिर्वर्ण्यते मुतान्तस्फुरता स्थितेति कालिदास इत्याह मुष्टिं हि सामर्थ्यात् धनुर्लतां पीडयतीति केचित् धारणक्रियाविशेषणमिति केचित् विचित्रं अङ्गुलित्रं बद्धं येन अङ्गुलिं त्रायते रक्षतीति हनसनादिति डः॥ २६॥

अथ जगदुरनीचैराशिषस्तस्य विप्रास्तुमुलकलनिनादं तूर्य्यमाजघ्नुरन्ये। अभिमतफलशंसी चारु पुस्फोर बाहुस्तरुषु चुकुवुरुच्चैः पक्षिणश्चानुकूलाः॥२७॥

इति भट्टिकाव्ये रामोत्पत्तिर्नाम प्रथमः सर्गः॥

अथ॥ तस्य रामस्य ब्रजनः विप्राः अनीचैः महता ध्वनिना आशिषः इष्टवचनानि जगदुः गदितवन्तः अन्ये वादकाः तूर्य्यं कांस्यतालपटहादिसमूहं आजघ्नुः ताडितवन्तः आङो यमहनइति आत्मनेपदं न भवति। अकर्मकादित्यनुवर्त्तते तुमुलो महान् कलो मधुरो निनादो ध्वनिर्यस्येति अभिमतं इष्टं फलं शंसितुं शीलं यस्य बाहोः स च पुस्फोर सतरां स्फुरितवान्। अत्र दक्षिणो बाहुः सामर्थ्याद्गम्यते स्वाङ्गत्वात् अनेन सीताप्राप्तिबीजमुपन्यस्तं स्फुरतेरभ्यासस्य शर्पूर्वाः खय इति खयः शेषः चर्त्वं। पक्षिणश्च तरुषु स्थिताः अनुकूलाः सन्तः उच्चैः सुष्ठु चुकवुः कूजितवन्तः। कुशब्द इत्यस्य लिटः कित्त्वादुवङादेशः॥ २७॥

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे राम सम्भवः प्रथमः सर्गः॥

भ० अथेत्यादि। अनन्तरं विप्रासस्य रामस्य भनीषैरवैराविषो जगदुः उक्तवन्तः अन्ये तूर्य्यं वाद्यं आजघ्नुः वादितवन्तः कीदृशं तुमुलो महान् कलो मधुरास्फुटो निनादो ध्वनिर्य्यस्य। तूर्य्यो ऽस्त्री वाद्यनिर्घोषे वादित्रं वादनञ्च तदिति केशवः तस्य रामस्य वाऊ स्पाह यथा स्यात्तथा पुस्फोर किम्भूतः अभिमतं फलं शंसति कथयतीत्यर्थात् दक्षिणबाहुस्पन्दनं कान्तालिङ्गनसूचकमिति वृद्धाः। यहादित्वाण्णिन् अन्ये तु शीलार्थे णिन् इत्याहुः। अनुकूलाः पक्षिण उच्चैस्तुकुवुः शब्दं चक्रुः कुङ्शब्दे एतेन गमनमङ्गलमुक्तं। यदुक्तं वामे मधुरवाक् पक्षी वृक्षः पल्लवितो ऽग्रतः। अनुकूलो वहन् वायुः प्रयाणे शुभशंसिन इति॥२७॥

इति श्रीभरतसेनकृतायां भट्टिटीकायां मुग्धबोधिन्यां प्रकीर्ण काण्डे श्रीरामसम्भवो नाम प्रथमः सर्गः॥

वनस्पतीनां सरसां नदीनां तेजस्विनां कान्तिभृतां दिशाञ्च। निर्याय तस्याः स पुरः समन्ताच्छ्रियं दधानां शरदं ददर्श॥१॥

ज०म० इदानीं विजिगीषूणां कण्टकान् समुद्धर्त्तुं शरत्काले समुद्योग इति तमेव वर्णयन्नाह वनस्पतीनामित्यादि। स रामः तस्याः पुरः अयोध्यायाः निर्याय निर्गत्य समन्तात्सर्व्वतः शरदं ददर्श दृष्टवान् कालस्याप्रत्यक्षत्वात् कार्य्याणां दर्शनात्तद्दर्शनमिति

मन्यते श्रियन्दधानां धारयन्तीं केषां वनस्पतीनां पारस्करादि दर्शनात्सुट्। अथ लोकप्रतीत्या वृक्षा द्रष्टव्याः न तु पारिभाषिकाः। तथा सरसां तडागानां नदीनां गङ्गादीनां तेजस्विनाञ्चन्द्रतारादीनां कान्तिं नैर्मल्यं बिभ्रतां दिशां च तदा हि निर्मला दिशो भवन्ति। वनस्पत्यादीनां श्रियं दधानां शरदं ददर्श तां रामव्यापारं विना सामान्येन वर्णयन्नाह ॥ १ ॥

वनस्पतीनामित्यादि ॥ स रामस्तस्याः पुरोऽयोध्याया निर्गत्य भ॰
समन्तात्सर्वतः शरदं ददर्श। यद्यपि कालस्य प्रत्यक्षता नास्ति तथापि तद्व्यञ्जकदर्शनात्तथा व्यपदेशः किम्भूतां वनस्पत्यादीनां श्रियं दधानां वनस्पतयो वृक्षाः परस्परं व्यतिलुनन्तीति खाप कात् क्वचिदभिधानात् सकारागम इति बोध्यं। वानस्पत्येतरद्वो स्याद् द्रुमाद्येऽपि वनस्पतिरितिरभसः तेजो विद्यते येषां ते तेजस्विनश्चन्द्रादयः स्वष्मेधास्मायादिति विन् एषां कान्तिभृतामिति सम्बन्धः कान्तिं बिभ्रतीति क्विप् ह्रस्वस्य पितीति तुक्। वनस्पतीनां पुष्पसम्बन्धात् सरसां विकसितपद्मादिमत्त्वात् नदीदिक्तेजस्विनां अन्यस्मात्कान्तिभृत्त्वं ॥१॥

तरङ्गसङ्गाच्चपलैः पलाशैर्ज्वालाश्रियं सातिशयान्दधन्ति। सधूमदीप्ताग्निरुचीनि रेजुस्ताम्रोत्पलान्याकुलषट्पदानि ॥२॥

तरङ्ग। तरङ्गसङ्गात् सलिलोर्मिसम्पर्काच्चपलैः चञ्चलैः पलाशैः अ॰म
पत्रैः ज्वालाश्रियं सातिशयां दधन्ति सधूमदीप्ताग्निरुचीनि सधूमदीप्ताग्नेरिव रुचिर्येषां रक्तोत्पलानां तानि रेजुः दीप्यन्ते स्म

राजेर्लिटि रूपं चमत्कानामिति एत्वाभ्यासलोपौ। आकुलाः इतस्ततो धाविनः षट्पदा येष्विति ज्वलितपत्राणामग्निशिखा तुल्यत्वात् षट्पदानाञ्च धूमतुल्यत्वात् सधूमदीप्ताग्निरुचीनीत्युक्तं ॥२॥

भ० तरङ्गेत्यादि। ताम्रोत्पलानि रक्तोत्पलानि रेजुः राजृ दीप्तौ फणादित्वात् तृफलभजत्रपेति अत एत्वं खिलोपश्च। कीदृशानि तरङ्गभङ्गाच्चपलैश्चञ्चलैः पलाशैः पत्रैः सातिशयां ज्वालाश्रियं दधन्ति धारयन्ति धूमेन सह वर्त्तमानस्य दीप्ताग्नेरुचिरिव रुचिर्येषां। आकुलाश्चञ्चलाः षट्पदा भ्रमरा यत्र रक्तोत्पलदलानां वह्निज्वालासादृश्यं भ्रमरस्य धूमसादृश्यमितिभावः॥२॥

विम्बागतैस्तीरवनैस्समृद्धिं निजां विलोक्यापहृतां पयोभिः। कूलानि सामर्षतयेव तेनुः सरोजलक्ष्मीं स्थलपद्महासैः॥३॥

ज०म० विम्बा। विम्बं प्रतिविम्बं तेनागतैर्निपतितैरिति। तृतीयेति योगविभागात्समासः। तीरवनैः कुसुमितैरित्यर्थात् तैः करणभूतैः पयोभिः कर्त्तृभिः समृद्धिं विभूतिं निजामात्मीयां अपहृतां विलोक्य कूलानि कर्त्तृभूतानि सामर्षतयेव साचमत्तयेव सरोजलक्ष्मीं कमलशोभां पयःसम्बन्धिनीं तेनुः विस्तारितवन्ति। अत एकहल्मध्यइत्यादिना एत्वाभ्यासलोपौ। कूले सरोजासम्भव इति चेदाह स्थलपद्महासैरिति स्थलकमलविकाशैरित्यर्थः ॥३॥

भ० विम्बेत्यादि। प्रतिविम्बेनागतैस्तीरवनैः करणभूतैः पयोभिः

कर्तृभिरात्मीयां समृद्धिं समाप्तिं अपश्यतां विशोक्य नद्यादीनां कूलानि सामर्षतया सक्रोधतया स्वलपद्महासैः स्वलकमलविकाशैः पयःसम्बन्धिनीं सरोजलक्ष्मीं पद्मशोभां तेनुः तत्र दुःख विसारे इवोत्प्रेक्षार्थः॥३॥

निशातुषारैर्नयनाम्बुकल्पैः पत्रान्तपर्य्यागलदच्छ बिन्दुः। उपारुरोदेव नदत्पतङ्गः कुमुद्वतीं तीरतरु र्दिनादौ॥४॥

निशा॥ निशायां तुषारैः हिमैः नयनाम्बुकल्पैः अश्रुतुल्यैः नयनाम्बुकारिषु पत्रेषु स्थितत्वात्। तैर्हेतुभूतैः पत्रान्तपर्य्यागलदच्छ बिन्दुः पत्रान्तात्पर्य्यागलन्तः अच्छास्तुषारबिन्दवो यस्य तीरतरोः। स दिनादौ दिनारम्भे कुमुद्वतीमुपारुरोदेव आक्रन्दितवानिव भाति शशिवियोगादीदृशी त्वं भूतासीति रोदनक्रियया आक्रन्दनविशिष्टया कुमुद्वत्या ईप्सिततमत्वात् रुदिः सकर्मकः। तदाक्रन्दनं योजयन्नाह नदत्पतङ्ग इति कूजत्पक्षी त्यर्थः पतेरंगत्पक्षिणीत्यौणादिकः। कुमुद्वती कुमुदनडेत्यादिना ड्मतुप्। झयइतिवत्वम् उगित्वात् ङीप्॥४॥ जं०

निशेत्यादि॥ रात्रिसम्बन्धिहिमैर्नयनतुल्यैर्हेतुभिः पर्णान्त पर्य्यागलदच्छबिन्दुः सन् दिनादौ प्रातःकाले तीरस्थितो वृक्षः कुमुद्वतीं उपारुरोद इव चन्द्रस्य विरहात् त्वमीदृशी जातेति क्रन्दितवानिव पर्णान्तेभ्यः समन्तात् गलन्तो निर्मला हिमानां बिन्दवो यस्य एतेन नयनाम्बुतुल्यत्वं सूचितं। नदन्तः कूजन्तः पतङ्गाः पक्षिणो यत्र एतेन पतङ्गशब्दैरेव रोदनं सूचितं। भ०

आक्रान्तविशिष्टाया रोदनक्रियाया: सकर्मकत्वं केवलायाश्च कर्मकत्वमिति वृद्धा: वतो कुमुदश्चानो लोपो निपातनात् ॥ ४ ॥

वनानि तोयानि च नेत्रकल्पैः पुष्पैः सरोजैश्च निलीनभृङ्गैः। परस्परां विस्मयवन्ति लक्ष्मीमालोकयाञ्चक्रुरिवादरेण ॥ ५ ॥

ज॰म॰ वनानि॥ वनानि पुष्पैर्निलीनभृङ्गैः स्थितभ्रमरैः लीयतेः खादय आदित इति निष्ठा नत्वं नेत्रकल्पैः नेत्रतुल्यैः। तोयानि च सरोजैः निलीनभृङ्गैर्नेत्रकल्पैः विस्मयवन्ति जातविस्मयानि परस्परामन्योन्यस्य लक्ष्मीं शोभां आलोकयाञ्चक्रुरिव। आदरेण तात्पर्य्येण ॥ ५ ॥

भ॰ वनानीत्यादि॥ नेत्रसदृशः पुष्पैर्वनानि सरोजैस्तोयानि च परस्परां अन्योन्यस्य लक्ष्मीं शोभां आदरेण आलोकयाञ्चक्रुरिव शोभातिशयात् विस्मययुक्तानि परस्परामिति क्रियाव्यतीहारे निपातः परस्परमितिपाठेऽपि तथा क्रियाविशेषणं वा नेत्रसादृश्ये हेतुगर्भविशेषणमाह निलीना आश्लिष्टा भृङ्गा येषु ॥५॥

प्रभातवाताहतिकम्पिताकृतिः कुमुद्वतीरेणुपिशङ्गविग्रहं। निरास भृङ्गं कुपितेव पद्मिनी न मानिनी संसहतेऽन्यसङ्गमं ॥ ६ ॥

ज॰म॰ प्रभात। प्रभाते यो वातस्तस्याघातेन कम्पिता चलिता आकृति

राकारो यस्याः पद्मिन्याः सा भृङ्गं निरास निरस्तवती। कुमुद्वती रेणुना पिशङ्गः कपिशः विग्रहो यस्य भृङ्गस्य कुपितेव। यथा श्रन्यया स्त्रिया सहोषितं तदङ्गसंक्रान्तपरिमलकण्ठमालमात्म दयितं काचित् कुपिता निरस्यति तद्वत्। सा किमिति निरस्यति यतो मानिनी मानवती अन्यसङ्गमं अन्यया सह सङ्गमं न सहते आत्मसङ्गादन्यसङ्गमं न संसहते न क्षमते॥६॥

प्रभातेत्यादि। पद्मिनी कुपितेव भृङ्गं निरस्यति स्म। कीदृशं कुमुद्वत्या रेणुभिः पिशङ्गः कपिलो विग्रहः शरीरं यस्य। कीदृशी प्रातःकालसम्बन्धिवाताभिघातेन कम्पिता आकृतिर्यस्याः सा यथा कुपिता स्त्री अन्ययोषिता सह गमितरात्रिं पतिं तदङ्गलग्नचन्दनचिह्नेन निर्णीय क्रोधात्कम्पितवती निरस्यति तथैयमपीति भावः यतः प्रशस्तमानवती स्त्री अन्ययोषित्सङ्गमं दृष्ट्वा पतिं न सहते अन्याशब्दस्य पुम्वत्कर्मधारयेति पुम्वत्। संसहत इति पाठे अर्थात् पत्युरन्यस्त्रीसंसर्गं न सम्यक् सहते॥६॥ भं॰

दत्तावधानं मधुलेहिगीतौ प्रशान्तचेष्टं हरिणं जिघांसुः। आकर्णयन्नुत्सुकहंसनादान् लक्ष्ये समाधिं न दधे मृगावित्॥७॥

दत्ता॥ मधुलेहिगीताविति मधु लेढुं शीलमेषामिति णिनिः॥ ज॰म॰
मधुलेहगीताविति पाठान्तरं तत्र लिहन्तीति लेहाः पचाद्यच्

मधुनो लेढ़ा इति षष्ठीसमासः मधु लिहन्तीति वा कर्म्मण्यण्
दत्तावधानं दत्तमानसं हरिणं प्रशान्तचेष्टं जिघांसुः हन्तुमि
च्छुरपि मृगावित् व्याधः मृगान्विध्यतीति क्विप्। ग्रहिज्येत्यादि
ना सम्प्रसारणम् नहिवृतीत्यादिना दीर्घः। लक्ष्ये बध्ये समा
धिं चित्तैकाग्रतां न दधे न धारितवान् श्नित्वात्तङ् लिटः क्ङित्वे
आतोलोपः उत्सुकानां हंसानां नादानाकर्णयन् शृण्वन् तत्रा
भिरतचित्तत्वात्। वर्त्तमानकालो भूतेनाभिसम्बध्यमानः सा
धुः। धातुसम्बन्धे प्रत्यया इति च आकर्णयन्निति प्रातिपदिका
द्धात्वर्थे बहुलमिति णिच् लक्षणहेत्वोरिति शतृप्रत्ययः॥ ७॥

भ० दत्तावधानमित्यादि। प्रशान्ता चेष्टा शरीरक्रिया यस्य ता
दृशमपि हरिणं जिघांसुर्हन्तुमिच्छुर्मृगावित् व्याधः उत्सुकानां हं
सानां नादान् आकर्णयन् शृण्वन् लक्ष्ये शरव्ये हरिणे समाधिं अव
धानं न दधे न धृतवान् हंसध्वनिश्रवणेन स्वस्योत्कण्ठितत्वात् प्र
शान्तचेष्टत्वे हेतुगर्भविशेषणमाह मधुलेहिनां भ्रमराणां गीते
दत्तमवधानं येन। मधुलेढीति ग्रहादित्वान्निन् मृगं विध्यतीति
क्विप् वीरुहोधङ्कावितिदीर्घनिर्देशात् क्वचित् क्विवन्ते पूर्व्वपद
स्य दीर्घत्वं स्यादिति सूचितं तेनात्र दीर्घत्वं आङ्पूर्व्वस्य विध्यते
रूपं वा व्यध्यौताड इत्यस्य दन्त्यवलात् न जवत्वं तेन झभान्त
स्यादिजवामित्यस्य न विषयः कर्णतृकभिदीत्यस्याङ्पूर्व्वस्य अव
णार्थकत्वं। लक्ष्यं लचं शरव्यञ्च इष्टार्थोद्युक्त उत्सुक इतिचाम
रः। शाकटायने तु उन्मनसि उत्सुकः साधितः॥ ७॥

गिरेर्नितम्बे मरुता विभिन्नं तोयावशेषेण हिमाभमभ्रं। सरिन्मुखाभ्युच्चयमादधानं शैलाधिपस्यानुचकार लक्ष्मीं ॥८॥

गिरेर्नि। गिरेः कस्यचित् नितम्बे मध्यभागे स्थितमभ्रं कर्तृ मरुता विभिन्नं विक्लीकृतं तोयावशेषेण पयसोऽवशिष्टतया हिमाभं हिमसदृशं सरिन्मुखानां गिरिनदीनिर्गमाणामभ्युच्चयं वृद्धिं आदधानं कुर्व्वाणं शैलाधिपस्य हिमवतः लक्ष्मीं शोभामनुचकार अनुकृतवत्॥ ८॥ ज॰म॰

गिरेरित्यादि। पर्व्वतस्य नितम्बे शिखरे स्थितं अभ्रं मेघः शैलाधिपस्य हिमालयस्य लक्ष्मीं शोभामनुचकार सदृशीचकार। कीदृशं मरुता वायुना विभिन्नं तोयावशेषेण हिमस्येव आभा यस्य सरिन्मुखस्य गिरिनदीनिर्गमस्थानस्य अभ्युच्चयं वृद्धिं वृष्ट्या आदधानं कुर्व्वाणं अभ्रतीति अभ्रं अभ्रगत्यां पचादित्वादन्। यद्वा न भ्रश्यन्ति जलान्यस्मादिति गमादित्वात् हनजनाद्गमादेर्डइति डः। न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्युत इति निरुक्तिः। आपो भ्रश्यन्त्यस्मादिति वा पूर्व्ववत् डः कुद्धारित्युक्तेः तेन वकारवानप्यब्भ्रशब्दः। अपो विभर्त्तीत्यब्भ्रमिति केचित् नितम्बो रोधसि स्कन्धे शिखरे च कटीरके इति विश्वः॥ ८॥ भ॰

गर्ज्जन् हरिः साम्भसि शैलकुञ्जे प्रतिध्वनीनात्मकृतान्निशम्य। क्रमं बबन्ध क्रमितुं सकोपः प्रतर्कयन्नन्यमृगेन्द्रनादान्॥ ९॥

ज०म० गर्जन्॥ हरिः सिंहः गर्जन् शब्दं कुर्व्वन् क शैलनिकुञ्जे गिरेर्ग हने साम्भसि ससलिले एवंविधे प्रदेशे प्रतिध्वनीन् प्रतिशब्दान् आत्मकृतान् निशम्य श्रुत्वा सरोषः सकोपः क्रमं बबन्ध क्रमितु मुत्पतितुं यत् सामर्थ्यं तच्चकारेत्यर्थः। अनेकार्थत्वाद्धातूनां बधि रत्र करणे वर्तते। किमिति प्रतर्कयन्नन्यमृगेन्द्रनादान्। इदा नीं रामं व्यापारेण वर्णयन्नाह॥९॥

भ० गर्ज्जन्नित्यादि। हरिः सिंहः सजलं पर्व्वतमध्यन्निम्नतादिपि हितस्थाने गर्ज्जन् शब्दं कुर्व्वन् आत्मकृतान् प्रतिनादान् वितर्क यन् सकोपः सन् क्रमितुं उत्पतितुं क्रममुत्पतनानुकूलशरीर क्रियां बबन्ध चकारेत्यर्थः। क्रमःशक्तौ परीपाट्यां क्रमं चरण पङ्कधारितिविश्वः। तर्कक्दीप्ताविति दीप्त्यर्थोऽपि तर्कधातुर्वितर्क माह। प्रयोगतोऽन्ये मन्वन्त्या अनेकार्था हि धातव इत्यभिधा नात्॥९॥

अद्दृक्षताम्भांसि नवोत्पलानि रुतानि चाश्रोषत षट्पदानां। आघ्रायि वान् गन्धवहस्सुगन्धस्तेनार विन्दव्यतिपङ्गवांश्च॥१०॥

ज०म० अद्दृक्षत॥ नवान्युत्पलानि येष्वम्भस्सु जलेषु तानि रामे णाद्दृक्षत दृष्टानि दृशः कर्म्मणि लुङ् शलइगुपधा इति प्राप्तस्य क्समादेशस्य न दृश इति प्रतिषेधात् इरितोवेति सि जेव भवति। तेन विकल्पेनाङोविधीयमानत्वात् सिङ्गुणिषावि

ति किच्चे गुणाभावः। षट्पदानां रुतानि अश्रोषत श्रुतानि। शृणोतेः कर्म्मणि लुङ् वहतीति वहः पचाद्यच् गन्धस्य वह इति कृद्योगे षष्ठी समस्यते। गन्धवहो वायुराघ्रायि आघ्रातः कर्म्मणि लुङ्। अरविन्देन पद्मेन व्यतिषङ्गः सम्पर्कः सोऽस्ति यस्य वायोः स वातीति वान् वातेः शतृप्रत्ययः सुगन्धः शोभनो गन्धो यस्य सः अरविन्दव्यतिषङ्गवत्त्वात्। गन्धस्येदुत्पूतिसुसुरभिभ्य इतीकारः समासान्तो न भवति। गन्धस्येत्वे तदेकान्तग्रहणमिति वचनात् सुगन्ध आपणिक इति यथा॥ १०॥

अद्दृचतेत्यादि। तेन रामेण अम्भांसि अदृचत दृष्टानि नवानि उत्पलानि यत्र अम्भांसि नवानि उत्पलानि चादृचत इति वा षट्पदानां भ्रमराणां रुतानि शब्दा अश्रोषत श्रुतानि। वहतीति वहः पचादित्वादच् गन्धस्य वहो गन्धवहो वायुराघ्रायि वान् गच्छन् वाल गमनहिंसयोः अरविन्देन पद्मेन व्यतिषङ्गवान् संसर्गवान् अतएव सुगन्धः शोभनोगन्धोऽस्य इति सुत्सुरभिपूतेर्गन्धादिरिति समवेतस्यैव गन्धस्य ग्रहणं अत्र तु परम्परया गन्धसम्बन्धान्न इप्रत्ययः। सुगन्धिरितिपाठे विकारसंघेत्यादिना सुगन्धशब्दात् स्वार्थे ष्णिःकचित्तु समवायाध्याहारात् सुगन्धिः समीरण इति प्रयोग इति पाणिनीयाः। अगन्धादेर्व्वा इति कालापाः। अद्दृचतादिषु कर्म्मणि टो अदृचतेत्यत्र इगुकुर्मठीस्य सिस्किदिति किच्चान्न गुः मान्तोऽदनत इत्यन्तस्य अत् आघ्रायीत्यत्र रतनोर्यगिणाविति इण तलोपःयन्ङ्णिदिति यन्॥१०॥

लतानुपातं कुसुमान्यगृह्णात् स नद्यवस्कंदमुपास्पृशच्च। कुतूहलाच्चारुशिलोपवेशं काकुत्स्थ ईषत्स्मयमान आस्त ॥११॥

ज०म० लतेति॥ विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोरिति द्वितीयान्त उपपदे णमुल्विधीयते। तत्र व्याप्यमाने द्रव्यवचनस्य आसेव्यमाने च क्रियावचनस्य नित्यवीप्सयोरिति द्विर्वचनं विधीयते अत्र तु समासेनैवोक्तत्वात् नोपयुज्यत इति स्थितम्। स काकुत्स्थो रामो गच्छन् लता लता अनुपात्य कुसुमान्यगृह्णात् गृहीतवान् लता अनुपात्यानुसृत्य च। तृतीयाप्रभृतीन्यन्यतरस्यामिति समासः ग्रहेर्लङ्। आप्रत्ययस्य अपिदिति ङित्वे ग्रहिज्यादिना सम्प्रसारणम्। नद्यवस्कन्दमिति नदीं नदीं अवस्कन्द्य सर्वान्नदीम् अवस्कन्द्य ढौकित्वा नदीं वा अवस्कन्द्यावस्कन्द्य उपास्पृशत् आचमनं कृतवान्। कौतूहलादिति सर्व्वत्र योज्यम् चारुशिलोपवेशमिति चारुशिलाः चारुशिला उपविश्य चारुशिला उपविश्योपविश्य वा आस्त आसितवान्। आसेर्लङि रूपं ईषत्स्मयमानः ईषद्धसन्॥ ११ ॥

भ० लतानुपातमित्यादि। स काकुत्स्थो रामः लतानुपातं कुसुमानि पुष्पाणि अगृह्णात् गृहीतवान्। लतानां पातस्य पश्चात् लतानुपातमित्यव्ययीभावः लतानां पातमनुक्रम्येति लतानां पतनमनतिक्रम्येति वा अव्ययानामनेकार्थत्वादनुशब्दोऽनतिक्रमेऽपि। नद्यवस्कन्दं उपास्पृशत् स्नातवान् नद्यामवस्कन्दो ऽवगाहो यत्र स्नान

क्रियायां नदीयमिति बोधो यमेति वा उपसर्गः अमंमाचे वाना समनयोरपीतिविश्वः। कुतूहलादिति सर्व्वत्र धौव्यं चारुशिलोपवे शमास्त चारुशिलायामुपवेशोवसनं यत्रासनक्रियायां चारुशि लानां रत्नशिलानामुपगता वेशा यस्मादिति वा। एतेन राम स्थित्या रत्नशिलानां सौन्दर्य्यं सूचितं ईषत् स्मयमान ईषद्धस मानः। यद्यपि स्मिङ्धातोरीषद्धसनमेवार्थस्तथापि ईषत् श ब्देन अत्यन्तानुपलभ्यहास्यत्वेन गाम्भीर्य्यं सूचितं। पातादयो घ ङन्ताः लतानुपातमादयो णमन्ता इति पाणिनीयाः। तन्मते लतां लतामनुपात्य नदीं नदीमवस्कन्द्य गत्वा चारुशिलायां उ पविश्येत्यर्थः। स्वमते घणम् समूलघातमित्यत्र व्याख्यातः अगृद्धा दित्यादिषु घौ वृषरूपस्य इन्द्रस्य ककुदि स्थितत्वात् ककुस्थ इत्या कु पृषोदरादित्वाद्दकारलोप इति रायमुकुटादयः। स्वमते मनीषादित्वादिति यथा देवीदासचक्रवर्त्ती कदाचिदामरे श्वर इव सुग्रीवो वैदेहीतिब्रुवाणस्यालघुकाकुस्थस्यार्थिनः प्रार्थना क्रियतां सफलेति वानरपुङ्गवानादिशदिति मलयमूलेषः तेन निस्तकारकाकुस्थशब्द इति बोध्यं प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियामित्यमरः केचित्तु निपातनात् ककुदशब्दस्यातो लुकि ककुत्स्थशब्दस्तकारवान् इत्याहुः। तैस्तु निपातनात् ककुदस्यातो लुगिति वृथोक्तं दान्तककुद्शब्दस्य विद्यमानत्वात्। तथाहि ककुदोऽस्त्री ककुच्च स्त्री वृषाङ्गे राजलक्षणीति भूरिप्रयो गः ककुद्यंशे इत्यागमश्च निस्तकार एव ककुस्थ शब्दइति कश्चित् तन्न तकारवतोऽपि प्रयोगस्य दृश्यमानत्वात्। तथाच राघवपा

एडवीये। सार्द्धं द्विजैः संवृतधाम्नि जिष्णावुपेयुषि ख्यातककुत्स्थवंश्य इति ज्ञनजनादितितिष्ठतेर्डः ततोऽपत्येष्यः ॥११॥

तिग्मांशुरश्मिच्छुरितान्यदूरात्प्राञ्चि प्रभाते सलिलान्यपश्यत्। गभस्तिधाराभिरिव द्रुतानि तेजांसि भानोर्भुवि संभृतानि ॥१२॥

ज०म० तिग्मांशु॥ अदूरात्समीपे सलिलान्यपश्यत्। इ॰ ञ्चि पाचेति पश्चादेशः तिग्मांशोरादित्यस्य रश्मिभिः छुरितानि रञ्जितानि तुक्। प्राञ्चि पूर्व्वस्यां दिशि अवस्थितानि। प्रपूर्व्वादञ्चते र्ऋत्विगित्यादिना क्विप् अनुपङ्गलोपः शिः नपुंसकस्य नुम्। भानोरिव तेजांसि भुवि सम्भृतानि पिण्डीकृतानि। गभस्तिभिः रश्मिभिः धाराभिरिव द्रुतानि गलितानि धारा प्रपात इतिभिदादिपाठादङ्द्रष्टव्यं॥१२॥

भ० तिग्मांश्वित्यादि। रामोऽदूरात् समीपे सलिलानि अपश्यत् स्यादानपेतिङ्शः पश्चादेशः किम्भूतानि प्रभाते तिग्मांशोः सूर्य्यस्य रश्मिभिश्छुरितानि प्राञ्चि पूर्व्वदिगवस्थितानि। अत्रोत्प्रेक्ष्यते भानोस्तेजांसि गभस्तीनां रश्मीनां धाराभिर्द्रुतानि द्रवीभूतानि सन्ति भुवि सम्भृतानि धाराभिरितिधृञ्जस्तुलंकेत्यादौनिपातः॥१२॥

दिग्व्यापिनीर्लोचनलोभनीया मृजान्वयाः स्नेहमिव स्रवन्तीः। ऋज्वायताः शस्यविशेषपङ्क्तीस्तुतोष पश्यन् वितृणान्तरालाः॥१३॥

दिग्व्यापि। शस्यविशेषाणां शाल्यादीनां पङ्क्तीः पर्य्यस्तुताप जं०म० मुष्टवान्। दिग्व्यापिनीः सर्व्वदिग्व्यापनशीलाः लोभयन्तीति लोभनीयाः वज्जलवचनात्कर्त्तर्य्यनीयर्। लोचनानां लोभनीया इति षष्ठीसमासः। मार्जनम्मृजा मृ॒॒ः षिद्भिदादिभ्योऽङ् तया अन्वयो अनुगमो यासाम् शुद्ध्यनुगता इत्यर्थः। ततः स्नेहमिव स्रुवन्तीः ऋजवश्च ता आयताश्च वितृणान्तरालाः उत्पाटितानि तृणानि अन्तराले मध्यभागे यासान्ताः॥ १२॥

दिग्व्यापिनीरित्यादि। स रामः शस्यविशेषाणां धान्यादीनां भ० पङ्क्तीः पर्य्यस्तुताप। किम्भूताः दिशं व्याप्नुवन्तीति ग्रहादित्वात् णिन् शीलार्थे णिन्नित्यन्ये। लोचनानां लोभनीया आकाङ्क्षणीयाः त व्यानीयया इत्यनीयः। यदा लोचनानां लोभनीयं लोभो दर्शने च्छा रूपा यत्र पूर्व्वेण भावे ऽनीयः लोचनानि लोभयन्तीति कर्त्तर्य्य नीय इति केचित् स्वमते ऽपि नियोक्तुमर्हतीति नियोग्यः प्रभुरिति वाक्यात् क्वचित् कर्त्तर्य्यपि तव्यादयः स्युरिति सूचितं। मृजूष शुद्धौ षित्वात् भीविचिन्तीत्यादिना ङः स्त्रियामाप् अनुयन्तीति अ न्वयाः पचादित्वादच् मृजाया अन्वयाः शुद्ध्यनुगता इत्यर्थः मृजा या अन्वयः सम्बन्धो यत्र इति वा स्नेहं स्निग्धतां अनुरागं वा स्रव न्तीरिव अतिस्निग्धत्वादुत्प्रेक्षा ऋजवः सरलाश्च ता आयता दीर्घाश्चेति उत्पाटिततृणत्वात्तृणरहितं अन्तरालं मध्यन्तरं यासां॥ १२॥

वियोगदुःखानुभवानभिज्ञैः काले नृपांशं विहितं ददद्भिः। आहार्य्यशोभारहितैरमायैरैक्षिष्ट पुंभिः प्रचितान्स गोष्ठान्॥१४॥

ज०म० वियोग॥ पुम्भिः गोपैः प्रचितान् व्याप्तान् गोष्ठान् गावस्तिष्ठन्ति येष्विति सुपिस्थ इति कः अम्बाम्बेत्यादिना मूर्द्धन्यः तान्स राम ऐक्षिष्ट दृष्टवान् अनुदात्तेत्त्वात्तङ् इट् वियोगदुःखस्य योऽनु भवः अनुभवनम् तस्यानभिज्ञैः तेषां पुत्रदारैः सहैव सर्व्वत्र गमनात्। एतावता कालेन एतावद्देयमिति विहितं कृतम् दधातेर्हिः नृपांशकरं ददद्भिः आहार्य्या कटकादिभिः आह रणीया वा शोभा दीप्तिः तया रहितैः अमायैः ऋजुभिः आ हार्य्येति ऋहलोर्ण्यत् शोभयतीति शोभा पचाद्यच्। ण्यासश्र न्थो युजिति युच् न भवति तस्य स्त्रीलिङ्गे भावे अकर्त्तरि च कार के विधानात्। नन्द्यादिपाठात् ल्युर्न भवति तस्य वासरूपोऽस्त्रिया मिति विकल्पितत्वात् अथवा शोभनं शोभा स्त्रीलिङ्गे भावे घञ्। कृत्यल्युटो बहुलमिति बहुलवचनादन्ये ऽपि कृतः प्राप्तमपि स्वाभिधेयं व्यभिचरन्ति॥१४॥

भ० वियोग इत्यादि। स रामो गोष्ठान् गोस्थानानि ऐक्षिष्ट दृष्टवान् ईक्ष दर्शने। किम्भूतान् पुंभिः पुरुषैः प्रचितान् व्याप्तान् किम्भूतैः प्रवासित्वात् वियोगेन स्त्रीपुत्रादिविच्छेदेन यो दुखानुभवस्तस्या नभिज्ञैः एतावति काले एतावद्देयमिति विहितं नृपस्यांशं करं ददद्भिः। आहार्य्या लङ्कारादिभिराहरणीया कृत्रिमा या शो भा तया हीनैः आहार्य्येति ऋहल्योर्ण्यदिति ण्यत् शुभेर्घञन्तस्य

स्त्रीलिङ्गत्वं क्वचिदभिधानात् नास्ति माया येषां गवावादेरिति शः। गोशब्दोऽपि पुंलिङ्गोऽस्तीति प्राहुः गावस्तिष्ठन्ति यत्रेत्याद स्मात्मजनादिति डः अट्टोरित्युक्तेर्गोभूमिदिचोत्यादिना रामा नन्दसूत्रेण पत्वं मनीषादित्वाद्वा गोष्ठान् गोष्ठसहितान् प्रदेशा निति केचित् ॥ १४ ॥

स्त्रीभूषणं चेष्टितमप्रगल्भं चारूण्यवक्राण्यपि वीक्षि तानि। ऋजूंश्च विश्वासकृतः स्वभावान् गोपाङ्गनानां मुमुदे विलोक्य ॥ १५ ॥

स्त्रीभूषणं॥ गोपाङ्गनानां चेष्टितम् गमनागमनादि अप्रगल्भं जं०म० लज्जावत् तच स्त्रीविभूषणं स्त्रीणामलङ्कारस्तथा वीक्षितानि विलोकितानि अवक्राण्यपि कटाक्षादिरहितान्यपि चारूणि शो भनानि स्वभावान् स्वाभिप्रायान् ऋजून् अकुटिलान् विश्वासकृतो विश्वासस्य जनकान् विलोक्य मुमुदे हृष्टवान् स रामः लिटो ऽपित्वात्किच्चे गुणाभावः। कार्य्याणां दर्शनात् स्वभावानां दर्श नमित्युक्तम् ॥ १५ ॥

स्त्रीभूषणमित्यादि। रामो गोपस्त्रीणामेतानि विलोक्य हृष्टा भं० मुमुदे त्रिमुदहर्षे तानि कानीत्याह स्त्रीभूषणं मेखलाकङ्कणा दिकं चेष्टितं गमनादिकं स्त्रीणां भूषणमिव यतो ऽप्रगल्भं सलज्जं तथा अवक्राणि कटाक्षादिरहितान्यपि चारूणि वीक्षितानि वि लोकितानि तथा विश्वासजनकान् ऋजून् कपटरहितान् स्वभा वान् तत्कार्य्यविलोकनादेव तद्विलोकनव्यपदेशः गोपाङ्गनानां

विलासवत्त्वाभावेऽपि स्वभावसिद्धचरितान्येव हर्षजनकानि भवन्ति। तथाहि विलासा नागरस्त्रीणां न तथा रमयन्ति मनः। यथा स्वभावसिद्धानि वृत्तानि वनयोषितामिति कौमुदी। अन्येनाप्युक्तं सर्व्वः प्रियः खलु भवेदनुरूपचेष्ट इति॥२५॥

विवृत्तपार्श्वं रुचिराङ्गहारं समुद्वहच्चारुनितम्बरम्यम्। आमन्द्रमन्थध्वनिदत्ततालं गोपाङ्गनानृत्यमनन्दयत्तं॥२६॥

ज॰म॰　विवृत्तेति। गोपाङ्गनानान्दधिमन्थनाय यत् स्थानं कृतन्तत्। नृत्यमिवेति गोपाङ्गनानृत्यं कर्तृ तं रामं अनन्दयत् सन्तोषितवत् नन्देर्ण्यन्तस्य लङि रूपम् विवृत्ते तिर्य्यक्चलिते पार्श्वे यत्र नृत्ये। रुचिरः शोभनो ऽङ्गहारो अङ्गविक्षेपो यत्र समुद्वहता निर्य्यक् समुद्गच्छता चारुनितम्बेन कटिभागेन रम्यम् मनोहरम्। आमन्द्र ईषद्गम्भीरो यो मन्थकृतो ध्वनिः तेन दत्तस्तालो यत्र॥२६॥

भ॰　विवृत्तपार्श्वमित्यादि। दधिविलोडनावसरे गोपाङ्गनानां गात्रविक्षेपो नृत्यत्वेन वर्ण्यते गोपस्त्रीणां नृत्यमिव नृत्यं कर्तृ तं राममनन्दयत् अतोषयत्। कीदृशं विवृत्तं तिर्य्यक् चलितं पार्श्वं यत्र रुचिरो मनोहरो ऽङ्गहारो ऽङ्गविक्षेपो यत्र। समुद्वहता तिर्य्यगूर्द्ध्वमधश्चलता चारुणा नितम्बेन रम्यं आमन्द्रेण ईषद्गम्भीरेण दधिमन्थनदण्डध्वनिना दत्तस्तालो यत्र एतेन नृत्यसादृश्यं व्यज्यते॥२६॥

विचित्रमुच्चैः प्लवमानमारात्कुतूहलं त्रस्नु ततान तस्य। मेघात्ययोपात्तवनोपशोभं कदम्बकं वातमजं मृगाणां ॥ १७ ॥

विचित्रम्। मृगाणां कदम्बकम्वृन्दन्तस्य रामस्य कौतूहलं ततान विस्तृतवत् विचित्रम् कृष्णश्वेतत्वात् उच्चैः प्लवमानम् ऊर्द्ध्वं जिहानम् आरात्समीपे त्रस्नु त्रसनशीलम् त्रसि गृधीत्यादिना क्नुः। मेघात्ययेन मेघापगमेन उपात्तवनोपशोभम् उपात्तं गृहीतम्वनम् उपशोभा च येनेति व्यधिकरण बहुव्रीहिः वातमजति वातमज्वाताभिमुखङ्गच्छतीत्यर्थः वातशुनीति लश्च र्द्धेष्विति खश्। अरुर्द्विषदिति मुम्॥ १७॥ ज०म

विचित्रमित्यादि। मृगाणां कदम्बकं समूहस्तस्य रामस्य कुतूहलं ततान विस्तारितवत् कीदृशं विचित्रं नानावर्णं उच्चैः प्लवमानं प्लुङ सर्पणे विचित्रं यथा स्यात्तथा उच्चैः प्लवमानं वा आरात् समीपे त्रस्यतीति त्रस्नु चिपत्रसेति कर्त्तरि क्नुः। शीलार्थे क्नुरित्यन्ये मेघात्ययेन शरत्कालेन मेघापगमेन वा प्राप्तं वनं उपशोभा च येन प्राप्तेन वनेन उपशोभते इति वा वातमजं वायोरनुगामि अभिमुखधायि वा तृभृवृहृशीत्यादिना खः परन्तपवत्॥ १७ ॥ भ०

सितारविन्दप्रचयेषु लीनाः संसक्तफेणेषु च सैकतेषु। कुन्दावदाताः कलहंसमालाः प्रतीयिरे श्रोत्रसुखैर्निनादैः ॥ १८ ॥

अ॰म॰ सितेति। सितारविन्दानामञ्चयेषु समूहेषु एरच् सर्वे चानो सराधर्य्य इति घञ् कौ न भवतः प्राणिषु सत्ताशब्दस्य रूढत्वात् लीनाः कलहंसमालाः तथा संसक्तफेणेषु च सैकतेषु पुलिनेषु लीनाः सिकता येषु विद्यन्त इति देशे लुविलचौ चेति चकारादण् कुन्दावदाताः कुन्दमिवावदाताः शुक्लाः उपमानानीत्यादिना समासः। प्रतीयिरे ज्ञाताः तेन रामेणेति विभक्तिविपरिणामेण सम्बन्धः। कर्म्मणि लिट् इणोयण् द्विर्व्वचनेऽचीति स्थानिवद्भावाद् द्विर्व्वचनम्। श्रोत्रसुखैर्मधुरैर्निनादैः करणभूतैः नौगदेत्यादिना घञ्। शरदर्णनमुपसंहरन्नाह॥१८॥

भ॰ सितारविन्देत्यादि। अर्थाद्रामेण कर्त्ता श्रवणसुखकारिभिर्निनादैः कलहंसमालाः प्रतीयिरे ज्ञाताः कर्म्मणि ठी यिणोऽच्युपाविति इणो यादेशः निनादश्रुतिव्यतिरेकेणाप्रत्यये हेतुगर्भविशेषणमाह शुक्लपद्मसमूहेषु फेणयुक्तेषु सैकतेषु च लीना गुप्ताः कुन्दपुष्पवत् शुक्लाः सिकताशब्दात् विकारसंघेत्यादिना इदमर्थे विकारार्थे अण्यर्थे वा अणः सैकतं वालुकामयस्थानमुच्यते कादम्बे कलहंसः स्याद्राजहंसे च दृश्यते॥१८॥

न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदं। न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः॥१९॥

अ॰म॰ नतज्जलमित्यादि। किम्बहुनोक्तेन सर्व्वथा न तज्जलं यत् सुचारुपङ्कजन्न बभूव पङ्कजमपि यदलीनषट्पदन्तदपि न। असौ षट्पदोऽपि तथाविधो नाभूत्। यः कलमधुरन्न जुगुञ्ज न गुञ्जित

वान्। गुजि अव्यक्ते शब्दे इदितोनुम् धातोरिति गुञ्जि लिटि रूपं। गुञ्जितमपि तत् नैवासीत् यन्मनो न जहार न हृतवत् रामस्य लोकस्य वा॥१८॥

न तदित्यादि। शरदि तज्जलं नास्ति यत्र न सुचारूणि पङ्कजानि सन्ति तत् पङ्कजमपि नास्ति यत्र षट्पदा न लीनाः अनाश्लिष्टा लोङ्यश्रोश्लिषि लुन्नाद्योरिति क्तस्य नत्वं। असौ षट्पदोऽपि नास्ति यः कलं मधुरास्फुटं न जुगुञ्ज गुजिकूजने तद्गुञ्जितमपि नास्ति यन्मनो न जहार॥१८॥ भ०

तं यायजूकाः सह भिक्षुमुख्यैस्तपःकृशाः शान्त्युदकुंभहस्ताः। यायावराः पुष्पफलेन चान्ये प्रानर्चुरर्घ्यो जगदर्चनीयं॥२०॥

तं या। यायजूकाः अत्यर्थं यजनशीलाः यजजपदशां यङ इत्यूकः अतोलोपः यलोहलः ते तपोवनस्थितास्तं राममागच्छ त्समानर्चुः सुष्ठु पूजितवन्तः अर्चेर्लिटि द्विर्वचनम् अतआदेरिति दीर्घत्वम्। तस्मान्नुड्द्विहल इति नुट् सह भिक्षुमुख्यैः भिक्षणशीला भिक्षवः परिव्राजकाः सनाशंसभिक्ष उः तेषां ये प्रधानाः तैः सह तपःकृशाः तपसा दुर्बलाः शान्त्यर्थमुदकन्तेन पूर्णः कुम्भः एकहलादावित्यादिना उदकस्य उदभावः स हस्ते येषामिति बहुव्रीहिः परनिपातस्तु च वाहिताग्न्यादिदर्शनात् प्रहरणार्थेभ्यश्च इतिवा। शान्त्युदकुम्भस्तु हितनिवारणसाधर्म्यात् उपचारेण प्रहरणन्ते शिरःस्थदकदानेन प्रानर्चुः। अन्ये मुनयो यायावरा एक भ०

आनियतनिलयाः यातेर्यङ्न्तात् यश्चयङ इति वरच्। अतोलोपादि पुष्पफलेन प्रानर्चुः पुष्पाणि च फलानि चेति जातिरप्राणिनामिति एकवद्भावः। अर्च्या अर्चनार्हाः अर्हे कृत्यः अर्चनीयमित्यत्रापि। जगता जगद्भिर्वा अर्चनीयम् कृत्यानां कर्त्तरि वेति पक्षे षष्ठी। नतु कर्त्तृकर्म्मणोः कृतीति षष्ठी॥२०॥

भ० तमित्यादि। यायजूकाः पुनःपुनरतिशयेन वा यष्टृशीलाः भिक्षुणां परिव्राजकाणां मुख्यैः सह जगतामर्चनीयं तं रामं प्रानर्चुः अर्च पूजायां स्वान्तादाद्दादाद्यच्छोरिति खेरान् जागृयङन्तेति ऊकः। सनभिचेति भिचेरुप्रत्ययः कीदृशाः तपोभिः कृशाः शान्त्यर्थं यदुदकं तस्य कुम्भो हस्ते येषां एतेन शान्तिजलेनार्चा प्रतीयते। उदकुम्भ इत्यत्र समासे उदकस्यासंयुक्तहलादौ पूर्व्वे इति उदादेशो विकल्पेनेति परे स्वमते उदशब्दोऽप्यस्ति। अन्ये मुनयः पुष्पफलेन प्रानर्चुः यायावराः सन्तो नानावनभ्रमणशीलाः यातेर्यङन्तात् यायायभासकसेति वरः यङलुक गत्यर्थादक्के यङिति केचित् यातिरत्र ज्ञानार्थः सर्व्वे गत्यर्थाः प्राप्त्यर्था ज्ञानार्थाश्चेति न्यायादत्यर्थज्ञानशीला इत्यर्थः। अर्च्याः स्तुत्यर्हाः ऋदृशनुत्यां तेभ्यः शक्यार्हमेथ्येति घ्यण् सेमकात् न चजोः कगाविति कत्वं॥२०॥

विद्यामथैनं विजयां जयां च रक्षोगणं क्षिप्नुमविक्षतात्मा। अध्यापिपद्गाधिसुतो यथावन्निघातयिष्यन् युधि यातुधानान्॥२१॥

ज०म० विद्याम्। तपोवनप्राप्तः गाधिसुतः एनं रामं द्वितीयाटाविस्येनादेशः। विद्याम्नाम्ना विजयाञ्जयाञ्च यथावत् यथाविधि

अध्यापिपत् पाठितवान् णौ चङ्‌संज्ञकोरिति गाङ्भावपक्षे रूपम् अधिपूर्व्वादिङो हेतुमणिचि क्रीङ्‌जीनां णौ इत्यात्वम् पुगादिवि धयः। रक्षोगणम् क्षिप्नुम् प्रेरयितारम् त्रसिगृधीत्यादिना क्नुः नलो केति षष्ठीप्रतिषेधात् द्वितीयैव। अविक्षतात्मा रागादिभिरनभि भूतचित्तवृत्तिः। तस्य हि विद्या अमोघा भवति युधि संग्रामे यातु धानान् रक्षांसि निघातयिष्यन् मारयिष्यन्। हन्तेर्हेतुमण्णिच् घत्वं ऌट्‌ल्टः सद्वादेशः ॥ २१ ॥

विद्यामित्यादि। अथानन्तरं युधि संग्रामे यातुधानान् भ० राक्षसान् रामद्वारा निघातयिष्यन् गाधिसुतो विश्वामित्र एनं रामं नाम्ना विजयां जयाख्य विद्यां यथावत् यथाविधि अध्यापिपत् पाठयामास। किम्भूतं रक्षोगणं क्षिप्नुं क्षिप क्ष प्रेरणे मुदि क्षिपत्र सीति कर्त्तरि क्नुः शीलार्थे क्नुरित्यन्ये। ठघेक्तत्येति सूत्रे उदन्तप्र त्ययवर्ज्जनात् न ढ षी। कीदृशः अविक्षतो वाणादिभिरनुपक्षत आत्मा यस्य। एनमिति इदमसमानार्थकस्य एनच्छब्दस्य रूपं द्वितीयेति सूत्रस्यानुक्तिविषयत्वात्। जहातु नैनं कथमर्थसिद्धिः सं शय्य कर्णादिषु तिष्ठते य इति भारविः। अध्यापिपदिति अधीङ्‌ध्य ध्ययने ञिः प्रेरणे इति ञिः क्रीजीङोऽजेत्या ह्रीलीति पन् ञिश्री त्यङ्‌नाजन्तादेरिति निषेधात् धुर्द्विष्यङोति पीत्यस्यैव द्वित्वं ञे र्लोपः निघातयिष्यन्निति पूर्व्ववत् ञिः हनस्तङिति तङ् खेर्होघ इति घः ॥ २१ ॥

आयोधने स्थायुकमस्त्रजातममोघमभ्यर्णमहापह वाय। ददौ बधाय क्षणदाचराणां तस्मै मुनिः श्रेयसि जागरूकः ॥ २२ ॥

ज॰म॰ आयो। स मुनिः तस्मै रामायास्त्रजातम् अस्त्रसमूहन्ददौ दत्तवान्। ददातेर्लिट् णल् आत औ णलः आयुध्यन्ते अस्मिन्निति आयोधनम् संग्रामः अधिकरणे ल्युट् तत्र स्थायुकं स्थितिकरणशीलम् जयावहत्वात्। लषपतेत्यादिना उकञ् आतो युक् अत एवामोघम् अवन्ध्यम् अवृथामोचत्वात् अभ्यर्णो निकटो महाहवो यस्य तस्मै अभिपूर्व्वादर्दः निष्ठायाम् अभेश्चाविदूर्य्ये इतीट् प्रतिषेधः रदाभ्यामिति नत्वम् अभ्यर्णः आहव इति आह्वयन्ते अस्मिन्युद्धायेति ह्वयतेराङ्पूर्वादाङि युद्धे इति सम्प्रसारणम् अप्प्रत्ययः गुणावादेशौ बधाय क्षणदाचराणामिति क्षणदा रात्रिः तत्र चरन्तीति चरेष्टः तत्र हि महाहवे रामो राक्षसान् हनिष्यतीति हनस्च बध इति बधादेशः कृत्प्रयोगे क्षणदाचराणामिति कर्म्मणि षष्ठी। श्रेयसि जागरूकः तत्कल्याणे सावधानः जागर्त्तेरूकः॥ २२॥

भ॰ आयोधनइत्यादि। मुनिः क्षणदाचराणां राक्षसानां बधाय हिंसार्थं तस्मै रामाय अस्त्रजातं ददौ कीदृशं आयोधने युद्धे स्थायुकं स्थितिशीलं जयावहत्वात् शृस्थाभूकमिति उकः यनञिण दिति यत् अमोघं अव्यर्थं तस्मै कीदृशाय अभ्यर्णः समीपवर्त्ती महानाहवो युद्धं यस्य अभ्यर्णेति अभिपूर्व्वस्यार्दतेः क्षान्तरूपं सुब्धवाढेति निपातः। आह्वयन्ते योद्धारोऽस्मिन् इति आहवः अभिधानात्त्रिः कीदृशो रामस्य साधूनां वा श्रेयसि कल्याणे जागरूकः सावधानः जागृयङन्तेति जागर्त्तेरूकः। आयुध्यन्तेऽस्मिन् योद्धार इत्यायोधनं आधारेऽनट्। हन्तेः कभावेऽमी इत्यनि कृते हनबधष्टीच्यमीति बधादेशः समूहार्थस्य जातस्य चवर्गादित्वमीरितमिति विश्वः॥२२॥

तं विप्रदर्शं कृतघातयत्नो यान्तं वने रात्रिचरी डुढौके। जिघांसुवेदं धृतभासुरास्त्रस्तां ताडकाख्यां निजघान रामः॥ २३॥

तम्विप्र। विद्यामस्त्रजातञ्चादाय यज्ञकर्म्मणि विप्रोपद्रवमनार्यं वने यान्तं रामम् रात्रिचरी राक्षसी ताडकाभिधाना डुढौके ढौकते स्म। ढौकतेरात्मनेपदिनो लिटि रूपम् ताञ्च रामो निजघान निहतवान् विप्रदर्शं कृतघातयत्नो विप्रान् ब्राह्मणान्दृष्ट्वा कृतमारणाभियोगा रात्रिचरी रामो ऽपि जिघांसुवेदन्धृतभासुरास्त्रः जिघांसुं विदित्वा धृतम्भासुरं भासनशीलम् अस्त्रं येनेति बहुव्रीहिः विप्रदर्शञ्जिघांसुवेदमिति कर्म्मणि दृशिविदोः साकल्य इति णमुल्॥ २३॥ जं०म०

तमित्यादि। वने यान्तं गच्छन्तं तं रामं रात्रिचरी डुढौके भ० प्राप्तवती ढौकृङ् गत्यां अभ्यस्यैति खेरौकारस्य ह्रस्व उकारः रात्रौ चरतीति पचादित्वादन् ततो नदादित्वादीप् कीदृशी विप्रदर्शं विप्रं दृष्ट्वा कृतो घाते यत्नो यया घात इति हन्तेर्घञन्तस्य रूपं यत्न इति खपरचेति यतेर्नङ् जिघांसुं विदित्वा धृतं भासुरं दीप्तमस्त्रं येन स रामः तां ताडकानाम्नीं रात्रिचरीं निजघान भासृङ् दीप्तौ भिञ्जासभञ्ज इति घुरः विप्रदर्शं जिघांसुवेदमिति णमुल्वा भीक्ष्ण इत्यत्र योगविभागाण्णम् यदा विप्राणां दर्शो दर्शनं यस्मात् रामस्य विशेषणं एतेन रक्षोभिया पलायमानानां विप्राणां पूर्व्वं दर्शनं नासीत् रामागते तु विप्रदर्शनमिति व्यज्यते जिघांसुं वेत्तीति ढात् षण् पचादित्वादन् वा इदमपि रामस्य विशेषणं॥ २३॥

अथालुलोके हुतधूमकेतुशिखाञ्जनस्निग्धसमृद्धशाखं। तपोवनं प्राध्ययनाभिभूतसमुच्चरच्चारुपतत्त्रिशिञ्जं ॥ २४ ॥

जं०म० अथ। अथासौ रामो राक्षसीं हत्वा तपोवनम् आलुलोके दृष्टवान्। कथम्भूतं हुतधूमकेतुशिखाञ्जनस्निग्धसमृद्धशाखम् हुतश्चासौ धूमकेतुरग्निश्च हुतधूमकेतुः तस्य शिखाञ्जनेन स्निग्धाः समृद्धाश्च फलादिना शाखा यस्य तपोवनस्य। प्राध्ययनेन वेदपाठेन अभिभूता तिरस्कृता समुच्चरन्ती चार्व्वी शोभना पतत्त्रिणाम्पक्षिणां शिञ्जा ध्वनिर्यत्र शिजि अव्यक्ते शब्दे शिञ्जनं शिञ्जा गुरोश्च हल इत्यकारप्रत्ययः। पतन्तं त्रायन्त इति पतत्त्राणि पक्षाः आतो ऽनुपसर्गे कः तानि येषां सन्तीति पतत्त्रिणः। पतङ्गशिञ्जमिति पाठान्तरम्॥२४॥

भ० अथेत्यादि। ताडकावधानन्तरं रामस्तपोवनं आलुलोके लोकृ लोचृ दर्शने कीदृशं हुतस्य धूमकेतोरग्नेः शिखाया यदञ्जनं तेन स्निग्धा समृद्धा फलपुष्पवती शाखा यत्र तथा धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोरिति विश्वः। प्राध्ययनेन प्रकृष्टाध्ययनेन अभिभूता समुच्चरन्ती उद्गच्छन्ती चारुणां पतत्त्रिणां पक्षिणां शिञ्जा अस्फुटशब्दो यत्र शिजि त किञ्चस्फुटध्वनौ सेमन्तात् गुरोरिति ङः स्त्रीलत्वं अमरकोषे तु भूषणानान्तु शिञ्जितमित्युपलक्षणं ॥२४॥

क्षुद्रान्न जक्षुर्हरिणान्मृगेन्द्रा विशश्वसे पक्षिगणैः समन्तात्। नंनम्यमानाः फलदित्सयेव चकाशिरे तत्र लता विलोलाः ॥ २५ ॥

क्षुद्रान्। तत्र तस्मिंस्तपोवने तपोधनानामिव प्रभावात्। क्षुद्रानितरानपि हरिणान्मृगेन्द्राः सिंहाः न जक्षुः न बाधितवन्तः क्षुद्यन्त इति क्षुद्राः स्फायितञ्चीत्यादिना औणादिको रक् लिट्यन्यतरस्यामिति अदेर्घस्लृ गमहनेत्युपधालोपः खरिचेति चर्त्वम् शासिवसीत्यादिना षत्वम् पक्षिगणैः समन्तात्सर्वत्र विरुद्धैरपि काकोलूकादिभिः परस्परम्विशश्वसे विश्वस्तम् भावे लिट् लताश्च विलोलाश्चपलाश्चकाशिरे शोभन्ते स्म फलदित्सयेव मुनिभ्यः फलन्दातुमिच्छयेव नंनम्यमानाः अत्यर्थन्नमन्त्यः दातुमिच्छा दित्सा ददातेः सन् सनिमीमेत्यादिना इस् अत्र लोपो ऽभ्यासस्येति अभ्यासलोपश्च। सस्येत्यादिना सकारस्य तकारः अप्रत्ययादित्यकारप्रत्ययः। फलानां दित्सेति कर्मणि षष्ठीं विधाय तद्योगे समासः। नंनम्यमाना इति नमेर्यङि नुगतो ऽनुनासिकेति नुक् यङन्ताच्छानच् आने मुक् ॥ २५ ॥ जं॰म॰

क्षुद्रानित्यादि। तत्र तपोवने मृगेन्द्राः सिंहाः क्षुद्रान् हरिणान् न जक्षुः अद् लिट् भक्षे घसादेशः हनगमित्युपलोपः। शासिवसिघसीनां चेति षत्वम्। शपूर्वस्य ककारो घस्य कः खरि चेति चर्त्वम्। पक्षिगणैः समन्तात्सर्वतो विशश्वसे तपःप्रभावात्। नित्यविरोधस्याप्यभावाद्भावे लिट् विलोलाश्चला लताश्चकाशिरे काशृ दीप्तौ फलानि दित्सयेव नंनम्यमाना अतिशयेन नताः नमेर्यङन्तस्य जपजभेति खेर्नुक् भ॰

फलभारनतानामुन्नेयं। दातुमिच्छा दित्सा दाञः सनि मि मीमादेतीम् खिलोपस्य सत्यरे इति तः संख्यादः स्त्रियामाप् ॥२५॥

अपूपुजन्विष्टरपाद्यमाल्यैरातिथ्यनिष्णा वनवासि मुख्याः। प्रत्यग्रहीष्टां मधुपर्कमिश्रं तावासनादि क्षितिपालपुत्रौ ॥ २६ ॥

ज म० अपू। वनवासिमुख्याः महर्षयो विष्टरादिभिः अपूपुजन् पूजि तवन्तः तौ क्षितिपालपुत्रावित्यर्थात् द्वितीयान्तेन योज्यम् वनवा सीति शयवासेत्यादिना विकल्पेन सप्तम्या अलुक् पुजेः स्वार्थिकण्य न्तस्य णौ चङि ह्रस्वः। दीर्घो लघोरिति अभ्यासस्य दीर्घः विष्ट रमासनम् वृक्षासनयोर्विष्टर इति निपातनात्। पाद्यं पादार्थमु दकम् पादार्घाभ्यामिति यत्तदर्थत्वात्पद्भावाभावः माल्यानि कुसुमानि मालायां माधूनि तत्र साधुरिति यत्। आतिथ्यनिष्णाः अतिथ्यर्थम् आतिथ्यम् अतिथेर्ञ्यः तत्र निष्णाः कुशला निनदीभ्यां स्नातेः कौशल इति षत्वम् तौ च क्षितिपालपुत्रौ रामलक्ष्मणौ तदा सनादि प्रत्यग्रहीष्टाम्प्रतिगृहीतवन्तौ प्रतिपूर्वात् ग्रहेर्लुङ् तस स्ताम् ग्रहोलिटि इति दीर्घः षत्वष्टुत्वे मधुपर्कमिश्रम् मधुपर्केण सहेत्यर्थः ॥ २६ ॥

भ० अपूपुजन्नित्यादि। वनवासिनां मुनीनां मुख्या विष्टरपाद्यमा ल्यैरपूपुजन् अर्थात् रामलक्ष्मणौ पूजकपूजेटौ ञिश्रीत्यङ् ण्यन्तु ङः स्व इति स्वः खः सन्वदित्यादिना खेर्घः विष्टर आसनं वेत्रो मा

श्चेति रामानन्दसूत्रेण मनीषादित्वात् वा षत्वं। वृत्तासनयोर्विष्टर इति क्रमदीश्वरः। आसने कुशमुष्टौ च विष्टर इति विश्वः विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनमित्यमरः पादार्थं जलं पाद्यं विकारसंघेति ष्ण्यः पाद्यं पादाय वारिणीत्यमरः मालैव माल्यं स्वार्थे ष्ण्यः मालायां साधूनि माल्यानि कुसुमानि वा किम्भूताः आतिथ्यनिषणाः अतिथ्यर्थं आतिथ्यं अतिथिशब्दात् तादर्थ्ये ष्ण्यः स्वार्थे ष्ण्य इति केचित् क्रमादातिथ्यातिथेये त्वतिथ्यर्थेऽत्र साधुनीत्यमरः। वस्तुतस्तु आतिथ्यशब्देन अतिथिमेवनमुच्यते तत्र निषणाः कुशला नदीस्नातिनिस्नात्योर्दाचे इति रामानन्दसूत्रेण मनीषादित्वाद्वा षत्वं। निनदीभ्यांस्नः कौशले इति षत्वविधायकं क्रमदीश्वरसूत्रं। क्षितिपालस्य पुत्रौ रामलक्ष्मणौ मधुपर्केण सहितं आसनादि प्रत्यग्रहीष्टां ग्रां सिः ग्रहेरिमोघीऽत्यामिति घः क्विलादिति षः ष्टुभिरिति तस्य टः॥ २६॥

दैत्याभिभूतस्य युवामवोढं मग्नस्य दोर्भिर्भुवनस्य भारं। हवींषि संप्रत्यपि रक्षतं तौ तपोधनैरित्यमभाषिषातां॥ २७॥

दैत्या। दितेरपत्यानि दैत्याः दिस्यदित्यादित्येत्यादिना ण्यः अम्भतैरभिभूतस्य मग्नस्य शरण्यस्य भुवनस्य भारमितिकर्त्तव्यतालक्षणन्दोर्भिर्भुजैः युवामवोढम् ऊढवन्तौ नरनारायणौ युवामित्युक्तौ लक्ष्म लक्ष्मेति एकशेषः अवोढमिति वहेर्न्नङ्‌यससम् हलन्त

लक्षणा वृद्धिः सिजलोपः सहिवहोरित्योत्वं ढत्वष्टुत्वढलोपः ह्रो रिति हृमेर्डोसित्यौणादिको डोस्। हवींषि होतव्यानि अस्य त्यपि रक्षतम् अर्चिशुचिहुसृपिच्छादिकदिभ्य इसिरित्यौणादिक इसिः। राक्षसैः उपहन्यमानानि रक्षतं प्रार्थनायां लोट्। अप थसस्तम् इत्थमिति इदमस्थमुः अनेनाकप्रकारेण तपोधनैस्तप एव धनं येषामिति अभाषिषाताम् अभिहितौ भाषतेः कर्म्मणि लुङ् ।।जिटा॥२७॥

भ० दैत्येत्यादि। तप एव धनं येषां तैस्तपोधनैस्तपस्विभिस्तौ रामलक्ष्मणौ इत्थमभाषिषातां भाषृङ्वाचीति कर्म्मणि टी इदं प्रकारं इत्थं निपातनात् किं तदित्याह युवां भुवनस्य भारं परिर क्षणं दोर्भिर्भुजैः अवोढं वहेष्ण्यामं झमस्वादिति मलुक हो ढोभा विति हस्य ढः ढभात्तथोरिति तस्य धः ष्टुभिरित्यादिना धस्य ढः सहिवहोरोदि इत्योत्वं ढ्राढ्रीति ढस्य लोपः कीदृशस्य दैत्याभिभू तस्य अतएव मग्नस्य नष्टप्रायस्य दितेरपत्यानि दैत्याः वाक्वा घत इत्यादिना गर्गादित्वात् ण्यः मस्जेरोदित्वात् स्वन्याद्योरि त्यादिना कस्य नः स्कोः संयोगाद्योरन्ते च इत्यनेन सलोपः। चजोःकगावि ति सूत्रे अनिम् यस्मात् यज इति कृते ये अनिम्धातवस्तेषां चजोः कगौ स्यातां इति सर्व्वं सङ्गतं भवति तथापि यतोऽसेम इति कृतं चजोर्घिति के च परे चजोःकगौ भवत इतिस्वचनार्थं तेन मग्नरुग्नभु ग्नादयः सिध्यन्ति वश्चेः कङ् चेति कङ्विधानं मृजाजेति षङ्विधा ननिरासार्थं तेन मृजन्तु मृष्ट इत्यत्र षङ्विशेषविधित्वादिति देवोदासचक्रवर्त्तिना व्याख्यातं तेनैव सूत्रेण जस्य गः मनीषादि त्वादा सन्नत्यपि हवींषि होतव्यानि राक्षसेभ्यो रक्षतं विधिनिम न्त्रणेति प्रार्थनायां लोः कलिहोमेदने आमुषिति इम्॥२७॥

तान् प्रत्यवादीदथ राघवो ऽपि यथेप्सितं प्रस्तुत कर्म्म धर्म्यम्। तपोमरुद्भिर्भवतां शराग्निः संधुक्ष्यतां नो ऽरिसमिन्धनेषु ॥ २८ ॥

तान प्र॥ अथैतस्मिन् प्रस्तावे राघवो ऽपि रघुसुतः तान्मुनीन्प्रत्यवादीत् वदव्रजेति वृद्धिः यथेप्सितं यथाभिमतं आप्नोतेः आप्ज्ञपधामादितीत्त्वम् अभ्यासलोपश्च सनन्तात्कर्म्मणि निष्ठा। धर्म्मादनपेतन्धर्म्यं यागादि कर्म्म प्रस्तुत आरभध्वम् प्रपूर्व्वस्तौतिः आरम्भे वर्त्तते तस्मान्निमन्त्रणे विधोगकरणे लोट् थस्य तः शपो लुक् तपांसि मरुत इव तपोमरुद्भिः भवतान्तपोमरुद्भिः नो ऽस्माकं बहुवचनस्य वस्नसाविति नसादेशः शराग्निः शरो ऽग्निरिव संधुक्ष्यतां दीप्यताम् धुक्षधिक्षसन्दीपनक्लेदनजीवनेषु तस्मात्कर्म्मणि लोट् अरिसमिन्धनेषु अरिकाष्ठेषु समिध्यते एभिरिति समिन्धनानि करणे ल्युट् अरयः समिन्धनानीव ॥ २८ ॥ जं॰म॰

तानित्यादि॥ अथ तद्वचनानन्तरं रघोरपत्यं रामोऽपि तान् प्रत्यवादीत् प्रत्युक्तवान् वदेर्ल्लुङि सौ व्रजवदेति वृ॰ः यूयं यथेप्सितं धर्म्मादनपेतं कर्म्म प्रस्तुत आरभध्वं विधिनिमन्त्रणेति विधौ गौ लुगद्धोऽप इत्यदादित्वात् शपो लुक् आप्लृ व्याप्तौ क्रियापने सनि आपज्ञपामीत्त्वे इतीत्त्विलोपौ भवतां तपोवायुभिर्नोऽस्माकं शराग्निः अरिसमिन्धनेषु शत्रुकाष्ठेषु संधुक्ष्यतां धुक्षङ्सन्दीपने समर्थना निषेधार्गीति आशिषि कर्म्मणि गौ तपांसि मरुत इव शरोऽग्निरिव भ॰

त्वः सविभ्रमानीव इति व्याघ्रादीस्तद्गुणस्तुत्यर्थेति समास इति क्षमदीश्वरादयः स्वमते इवादेर्द्योतकत्वात् एकार्थताऽस्त्येव अविशेषणत्वात्सदोवडत्वमेकत्वद्वित्वयोर्व्विकल्पेनेति पाणिन्यादयः स्वमते कद्व्यान्येकद्विवडुष्वेकश इतिसूत्रे एकद्विवडुत्वं विवचया साचात्सम्बन्धेन परम्परासम्बन्धेन वेतिव्याख्यानादचात्मगुणानां वडुत्वेनैव वडुजनसाध्यकार्य्यकारित्वात् द्वित्वे वडुत्वं॥२८॥

प्रतुष्टुवुः कर्म्म ततः प्रकॢप्तैस्ते यज्ञियैर्द्रव्यगणैर्यथावत्। दचिण्यदिष्टं क्कतमार्त्विजीनैस्तद्यातुधानैश्चिचिते प्रसर्पत्॥२९॥

अ॰म॰ प्रतुष्टुवुः॥ ततो रामवचनादनन्तरन्तपोधनाः कर्म्म यागक्रियाम्प्रतुष्टुवुः यथावत् यथाविधि आरब्धवन्तः यज्ञियैः यज्ञकर्म्मार्हैः द्रव्यगणैः प्रकॢप्तैः मिलितैः क्लपो रो लः दचिणामर्हन्तीति दचिण्याः महामुनयः कडङ्गरदचिणाच्छ चेति चकाराद्यत् तैर्दिष्टमुक्तम् क्कतमार्त्त्विजीनैः ऋत्विक्कर्म्मार्हैरनुष्ठितम् ऋत्विजश्च ब्रह्मादयः षोडश पठिताः तच कर्म्म प्रसर्पत् वृद्धिङ्गच्छत् यातुधानै राचसैः चिचिते ज्ञातम् चिती संज्ञाने इत्यस्मात् कर्म्मणि लिट्। यज्ञियैरार्त्विजीनैरिति यज्ञर्त्विग्भ्यां घखञाविति तत्कर्म्मार्हतीति॥२९॥

भ॰ प्रतुष्टुवुरित्यादि। ततो रामवचनानन्तरं ते मुनयो द्रव्यगणैः स्रुवादिभिः करणभूतैर्यथाविधि यागकर्म्म प्रतुष्टुवुः आरब्धवन्तः।

किम्भूतैः प्रकृष्टैर्विरचितैः कपःकृपोऽकपादाविति कृपादेशः यष्टि थैः यजेः खपरवक्तव्यपतेति नङ्जिनिषेधश्च यज्ञाय साधवो यज्ञि या ढघेकादिति इयः तत्कर्म यातुधानैराक्षसैर्विचितैर्ज्ञातं चिती संज्ञाने कर्मणि ठो। कीदृशं दक्षिण्यदिष्टं दक्षिणामर्हन्ति ढघेका दिति च्छ्यः तस्यानित्यत्वविवक्षया न ञिः दक्षिण्या अह्मलेनारोपिता मुनयः तैर्दिष्टं आर्त्त्विजीनैः ऋत्विक्कर्मार्हैः कृतं। ऋतौ यजतीति क्विप् यहस्वपेति जिः ऋत्विजः कर्म आर्त्विजं कर्मार्थे विकारसंघेत्या दिना यणः तदर्हतीति ढघेकादित्यादिना णीनः ऋत्विक् शब्दात् स्वार्थे णीनो वा प्रसर्पदृद्धिं गच्छत्॥२८॥

आपिङ्गरुक्षोर्द्धशिरस्यवालैः शिरालजंघैर्गिरिकूट दघ्नैः। ततः क्षपाटैः पृथुपिङ्गलाक्षैः खं प्रावृषेण्यैरिव चानशे ऽब्दैः॥३०॥

आपिङ्ग। ततः कर्म्मप्रवर्त्तनादनन्तरम् क्षपाटैः निशाचरैः अम अटन्तीत्यटाः पचाद्यच् क्षपायामटा इति सप्तमीति योगविभा गात्समासः खमाकाशमानशे व्याप्तम् अश्नोतेः कर्मणि लिट् अश्नो तेश्चेति नुट्। शिरसि जाताः शिरस्या शरीरावयवाद्यत् आपि ङ्गा आ समन्तात् पिङ्गा विद्युदिव रुक्षाः रूक्षाः ऊर्द्ध्वशिरस्या वाला येषां तैः। अन्योऽपि शिरस्यो भवति इति वालग्रहणम् अम ङ्गल वाला इत्यर्थः। शिराः सन्ति यासामिति प्राणिस्थादातो लजन्यतरस्यामिति लच् शिराला जङ्घा येषान्तैः गिरिकूटदघ्नै

गिरिकूटप्रमाणैः प्रमाणे द्वयसजिति द्रघ्न। पृथूनि विस्तीर्णानि पिङ्गलानि चाक्षीणि येषामन्तैः। सर्वसज्ञीहो सक्थ्यक्ष्णोरिति षच्। प्रावृषेण्यैरिवेति प्रावृष एण्यः अब्दैर्मेघैः कृष्णसाधर्म्यात्। अपो ददतीति अब्दाः चकारः पादपूरणार्थः ॥ ३० ॥

ज०म० आपिङ्गेत्यादि। ततस्तज्ज्ञानानन्तरं चपाटैराचरैः खं आकाशं आनशे व्याप्तं अशूङ्व्याप्तिसंहत्योः कर्मणि ठो स्यान्तादिति खेरान्। कीदृशैः आपिङ्गा ईषत्कपिला रुचा ऊर्द्धाः शिरस्याः शिरसि भवाः केशा येषां शिरस्यग्रहणं श्रवणकुण्डलादिवत् तदा रूढिप्रतिपत्त्यर्थं शिरस्यवालैरिति क्वचित् पाठः शिरा नाडी तया व्याप्ता जङ्घा येषां शिराशब्दात् गोतृणमेधेत्यादिना चूडादित्वाल्लः। गिरिकूटदघ्नैः गिरिशृङ्गप्रमाणैः दघ्न मात्रद्वयसन्मात्रे इति दघ्नः पृथूनि पिङ्गलानि च अक्षीणि येषां सकथ्यक्ष्णःसः स्वाङ्गे इति बहुव्रीहौ षः प्रावृषेण्यैर्वर्षाकालीनैः अब्दैर्मेघैरिव प्रावृष एण्यो भवार्थे अभिधानात् अपो ददातीत्यब्दः आदन्तात् हनज नादिति डः न केवलं चिचिते चानशे च इति चार्थः। पादपूरणे चेति केचित् ॥ ३० ॥

अधिज्यचापः स्थिरबाहुमुष्टिरुदञ्चिताक्षो ऽञ्चित दक्षिणोरुः। तान् लक्ष्मणः संनतवामजङ्घो जघान शुद्धेषुरमन्दकर्षी ॥ ३१ ॥

ज०म० अधि। तान् चपाटान् मगधखान् लक्ष्मणो जघान हतवान्

कीदृशः अधिज्यचापः अध्यारूढा उत्कलिता ज्या गुणो यत्र चा पस्य तदधिज्यम् प्रादिभ्यो धातुजस्येति समासः अधिज्यं चापो यस्य लक्ष्मणस्य। स्थिरो निश्चलो वाङ्मुष्टिर्यस्य। उदश्चि ते उत्क्षिप्ते अक्षिणी येन स उदश्चिताक्षः। आकाशस्थापित दृष्टिरित्यर्थः। अञ्चितः सङ्कोचितो दक्षिणोरुर्येन सोऽश्चित दक्षिणोरुः अञ्चेः पूजायामितीटोऽनुत्पन्नत्वात् उपान्तस्य रूपम् न चात्र पूजा गम्यते किन्तु गतिविशेष एव अनुषङ्गलोपोऽपि न भवति णिलोपस्य स्थानिवद्भावात्। समन्तात् नता वामजङ्घा यस्य स सन्नतवामजङ्घः। शुद्धेषुः निशितवाणः अमन्दमत्यन्तं क्रष्टुं शीलमस्यासावमन्दकर्षी कर्णान्ताकृष्टचाप इत्यर्थः॥३१॥

अधिज्येत्यादि। लक्ष्मणस्तान् राक्षसान् जघान। कीदृशः अधि रूढा ज्या गुणो यत्र तादृशश्चापो यस्य। स्थिरो निश्चलो दृढो वा वाङ्मुष्टिर्यस्य स लक्ष्मणः दर्शनार्थं उदश्चिते ऊर्द्धमुखार्पिते अक्षिणी येन आकाशक्षिप्तदृष्टिरित्यर्थः। अञ्चितः सङ्कुचितो दक्षिणोरुर्येन अल्लोपेऽपि स्थानिवद्भावात् नाञ्चेर्न लोपः सन्नता वामजङ्घा यस्य शुद्धो निशित इषुर्यस्य अमन्दं यथास्यात्तथा ध नुः कर्षतीति ग्रहादित्वाण्णिन् क्रष्टुं शीलमस्येति परे॥३१॥ भ०

गाधेयदिष्टं विरसं रसन्तं रामोऽपि मायाचणमस्त्र चुञ्चुः। स्थाणुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्व्व चनं महार्थं॥३२॥

गाधेय। गाधेरपत्यङ्गाधेयो विश्वामित्रः शुभ्र इत्यनुवर्त्त मानो इतश्चानिञ इति ढक् तेन दिष्टङ्कथितं मारीचं नाम ज०

राघवं रामो जगाद गदितवान् रमन्तमदन्तम् विरममश्रान्तमिति क्रियाविशेषणम् मायाचणस्तायया वित्तम् अस्त्रचुञ्चुः अस्त्रैः प्रतीतो रामः तेन वित्तश्चुञ्चुचणपाविति। स्थास्नु रणे स्थितिशीलम् तस्य सेनापतित्वात् स्मेरमुखः चित्तस्यास्ताभादीषद्धसनशीलवदनः नमिकम्पीत्यादिना रः। उच्चैस्तराञ्जगादेति क्रियाविशेषणम् वचनं वक्ष्यमाणमहार्थप्रधानं ब्रुविशासीत्यत्र ब्रुवीत्यर्थग्रहणात् द्विकर्म्मकता मारीचं वचनञ्च॥ ३२॥

भ० गाधेयेत्यादि॥ रामः अपिशब्दात् लक्ष्मणोऽपि महार्थमुच्चैर्व्वचनं मारीचं जगाद। याञ्चार्थदुहेति सूत्रे ब्रुवीत्यर्थस्य ग्रहणं तेन द्विकर्म्मकत्वं पचादित्वाद्वा। कीदृशं मारीचं गाधेयेन विश्वामित्रेण दिष्टं कथितं गाधेरपत्यार्थे वाक्याद्यत इत्यनेन अत्यादित्वात् ष्णेयः। विरमं कठोरं यथास्यात्तथा रमन्तं शब्दायमानं मायया ख्यातं मायाचणं वित्तचुञ्चुचणाविति चणः। रणे स्थास्नुं स्थितिशीलं ग्लाम्लास्थाइति स्नुः। रामः कीदृशः अस्त्रचुञ्चुः अस्त्रेण ख्यातः स्मेरमीषद्धसनशील मुखमस्य हिंसदीपकम्पेति रः॥ ३२॥

आत्मम्भरिस्त्वं पिशितैर्न्नराणां फलेग्रहीन् हंसि वनस्पतीनां। शौवस्तिकत्वं विभवा न येषां व्रजन्ति तेषां दयसे न कस्मात्॥ ३३॥

ज०म० आत्मम्। नराणाम्पिशितैर्मांसैः आत्मानम् बिभर्षि पुष्णासि नान्यदपि शरीरस्थितिहेतुर्भवतीति भावः। स त्वमात्मम्भरिः आत्मभरणाय फलानि गृह्णन्ति ये वनस्पतीनामाम् फलेग्रहीन्

फलाग्रिनो मुनीन् हंसि मारयसि अपो लुक् फलेग्रहिरात्मम्भरि श्चेति निपातितौ। श्वोभवितारः श्वौवस्तिकाः श्वसस्तुट्चेति ठञ् तुडागमश्च। द्वारादित्वादैजागमः श्वौवस्तिकत्वन्तद्येषां विभवा न व्रजन्ति तेषामश्वस्तनिकवृत्तीनाङ्कस्मान्न दयसे न रक्षसि अधी गर्थदयेशामिति कर्म्मणि षष्ठी ॥२३॥

आत्मम्भरिरित्यादि। त्वं वनस्पतीनां फलेग्रहीन् मुनीन् हंसि भ० फलानि गृह्णन्ति तन्मात्रभोजित्वेन स्वीकुर्व्वन्तीति सत्वत्स्तम्भा दित्यादिना इप्रत्ययः। फले इति सूत्रे निर्द्देशादेत्वं वनस्पतीनां मध्ये फलेग्रहीन् मुनीन् हंसि उन्मूलयसीति केचित्। त्वं कीदृशः नराणां पिशितैर्म्मांसैरात्मम्भरिः आत्मानमेव विभर्त्तीति कुक्ष्या त्मोदराङ्गः खिरिति खिः खित्यव्याजेति मम् येषां विभवाः सम्प दः श्वौवस्तिकत्वं भाविदिनस्थितत्वं न व्रजन्ति तेषां कस्मान्न दयसे समार्थेनेति कर्म्मणि षी श्वोभवः श्वौवस्तिकः श्वसोभवार्थेति कल निधानात् कणि मनीषादित्वात् त्यागमः द्वारस्मरेति उम् श्विन्ते त्रिरिति त्रिः तत्वोभावे इति त्वं देवोदासचक्रवर्त्ती तु श्वस्तेकते श्वस्तिकः तिष्ठन्ञ्गत्यां इजुडत्वात् कृगृज्ञाप्रीति कः ततः स्वार्थे ष्णः अन्यत् पूर्व्ववदित्याह ॥२३॥

अघ्नो द्विजान् देवयजीन्निहन्मः कुर्म्मः पुरं प्रेतन राधिवासं। धर्म्मो ह्ययं दाशरथे निजो नो नैवाध्यका रिष्महि वेदवृत्ते॥२४॥

अन्वः॥ राक्षसः प्राह द्विजान् ब्राह्मणक्षत्रियवैश्यान् अघ्नो अ०म

भक्षयामः देवयजीन् देवान् यजन्ति आराधयन्ति ये तान्निहन्मः अचदरित्यनुवर्त्तमाने सनोत्यादिषूच्यमानेष्वौणादिकेषु सूत्रेषु यद्यपि यजिर्न पठितस्तथापि नायजेरिः प्रकृतेष्य तदूह्यमिति वचनात्। आसिनिप्रहणेत्यत्र सञ्जातविगृहीतविपर्य्यस्तग्रहणात् षष्ठी प्राप्तापि न भवति कर्म्मणः शेषत्वनाविवक्षितत्वात् पुरत्र गरस्प्रेतनराणाम्मृतनराणाम् अधिवासमवस्थानङ्कुर्मः नित्यहनतेन स्मशानतुल्यम् इत्यर्थः। कस्मादत्रमित्याह धर्म्म इति दशरथस्यापत्यं दाशरथिः अत इञ् हे दाशरथे हि यस्मादर्थे वर्त्तते यस्मादयं धर्म्मः आचारः निजो नित्यः न इत्यस्माकम् वेदविरुद्धइति चेत् नैवाध्यकारिष्महि वेदवृत्ते वेदविहितं वृत्तमिति मध्यमपदलोपो समासः। यद्ब्राह्मणानाम् उक्तमनुष्ठानन्तत्र वयं नैवाधिकृता इत्यर्थः। अधिपूर्व्वात्करोतेः कर्म्मणि लुङ् स्यसिजित्यादिना चिण्वदिट्।३४॥

भ० अद्य इत्यादि। पूर्व्वापरपरामर्शाकारीचप्रत्युत्तरमिदं वयं द्विजान् अद्मः भक्षयामः देवयजीन् देवपूजकान् निहन्मः। यहरिमोर्घोऽन्यां त्रजेर्वदेरित्यादिनिर्द्देशात् सर्व्वधातुभ्य इप्रत्ययः स्यादिति सूचितं तेन यजिरिति सिद्धं वातप्रमीवत् दीर्घान्तोऽयमित्येके। पुर मृतमनुष्याधिवासं स्मशानतुल्यं कुर्मः कुरुलोपोऽस्य इति हलन्त्यस्य लोपः कुरोऽदनैरे इत्युकारः हे दाशरथे हि यस्मात् अयमेव अस्माकं निजो नित्यो धर्म्मः स्वभाव आचारो वा। धर्म्माः पुण्ययमन्यायस्वभावाचारसोमपा इत्यमरः वेदवृत्ते वेदविहिते कर्म्मणि नैव अध्यकारिष्महि वयं नाधिकृताः विधात्रा इत्यर्थः। कर्म्मणि टी हनग्रहदृशश्च इतिमिच्॥३४॥

धर्म्मोऽस्ति सत्यं तव राक्षसायमन्यो व्यतिस्ते तु ममापि धर्म्मः। ब्रह्मद्विषस्ते प्रणिहन्मि येन राजन्यवृत्तिर्धृतकार्म्मुकेषुः ॥३५॥

धर्म्मो। रामः प्राह हे राक्षस रक्ष एव राक्षसः प्रज्ञादित्वादण् स्वार्थिका अतिवर्त्तन्त इति पुंलिङ्गता तवायमपूर्व्वोक्तः पराभिद्रोहलक्षणो धर्म्मोऽस्तीति सत्यमेतत् किन्तु ममापि रामस्य अन्यो धर्म्मोऽशिष्टनिग्रहलक्षणो व्यतिस्ते व्यतिभवते इदमुक्तम्भवति यद्यप्येवम्प्रकारस्त्वद्धर्म्मो भविष्यति तथापीदानीमेव या त्वद्धर्म्मेण विद्यमानतया निष्पाद्या सा अस्मद्धर्म्मेणैव निष्पादकत्वेन व्यतिस्ते। ततश्चान्यसम्बन्धिनीं क्रियामन्यः करोति इतरसम्बन्धिनीमितर इति कर्म्मव्यतीहारसम्भवात् अस्तेः कर्म्मव्यतीहारे तङ्। तथा हि यो यदवसरे यां काञ्चित् क्रियाङ्करोति स तत्क्रियाकारीत्युपचारात् लोक उच्यते। येन धर्म्मेण हेतुना ब्रह्मद्विषस्ते प्रणिहन्मि मारयामि स व्यतिस्ते इति योज्यम् नेर्गदेत्यादिना णत्वम् जासिनीत्यादिना कर्म्मणि षष्ठी। तथा कथन्तव धर्म्म इति चेदाह राजन्यवृत्तिरिति क्षत्रियवृत्तिः ततो राज्ञोऽपत्यम् राजश्वशुराद्यत् ये चेति प्रकृतिभावः। धृतङ्कार्म्मुकम् इषवश्च येन सः यतः अहं राजन्यवृत्तिः ततोऽहन्धृतकार्म्मुकेषुरिति धृतकार्म्मुकेष्वित्ति पाठान्तरम् क राजन्यवृत्तिः सायुधेष्वित्यर्थः॥३५॥ ज०म०

धर्म्म इत्यादि। रामवाक्यमिदं हे राक्षस तव अयं धर्म्मोऽस्तीति सत्यं रक्षःशब्दात् विकारसंघेत्यादिना स्वार्थे ण्णः चैलोक्यमि भ०

त्युदाहरणेन स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपीति सूचितं तेन पुंस्त्वं किन्तु ममापि अन्यो धर्मो यतिमते अस्तेर्थतीवारे गतिर्हिंसेति सं लोपोऽस्त्यसोरित्यकारलोपः यथा तव हिंसारूपो धर्मोऽस्ति तथा मम हिंसकहिंसाकारित्वरूपो धर्मोऽस्ति इत्यर्थः धर्मं प्रकाशयति येन धर्मेण हेतुना ब्रह्मद्विषस्ते तव प्राणिहन्मि कर्मणि षो प्रायवन्तेण इति णत्वं। कुतस्तेऽयं धर्म इत्याह यतो राजन्यानां वृत्तिः धृतं कार्मुकमिषुश्च यत्र तथा भवति क्षत्रियाणां धनुर्बाणधारित्वं हिंसनार्थमेव राजन्येति मनवर्णानित्यादिना नलोपनिषेधः ॥३५॥

इत्थंप्रवादं युधि संप्रहारं प्रचक्रतूरामनिशाविहारौ। तृणाय मत्वा रघुनन्दनोऽथ बाणेन रक्षः प्रधनान्निरास्थत् ॥३६॥

ज०म० इत्थम्। इत्थं अनेन प्रकारेण प्रवादो अन्योन्याभिघातो यत्र सम्प्रहारे तं सम्प्रहारम्परस्पराभिभवलक्षणम्प्रकृतवन्तौ युधि रणभूमौ युध्यन्ते अस्यामिति सम्पदादित्वादधिकरणे क्विप् राम निशाविहारौ रामो निशाविहारो निशाचरो मारीचश्चेत्यर्थः निशायाम्विहारो यस्येति समासः अथानन्तरं रघुनन्दनो रघुवंशस्य नन्दयिता रामो मारीचम्बाणेनतत्सम्बन्धिनि मत्यपि तृणाय मत्वा तृणमपि नावमत्य मन्यकर्मण्यनादर इति चतुर्थी तत्र प्रकृष्टकुत्सितग्रहणङ्कर्त्तव्यम् इह माभूत् तृणन्त्वेति प्रधनात्संग्रामात् निरास्थत् अपनीतवान् ॥३६।

इत्थमित्यादि। उक्तप्रकारं प्रवादं तदनन्तरं युधि युद्धे संप्रहारं रामनिशाविहारौ प्रचक्रतुः निशायां विहारोऽस्येति निशाविहारो मारीचः सम्यक् प्रहारो यस्मात् इति संप्रहारं प्रवादविशेषणमित्येके अथ रघुनन्दनो राक्षसं मारीचं तृणाय मत्वा बाणेन प्रधनात् युद्धात् निरास्थन् गत्यर्थमन्यढे इति चौ तृणाप मानेनैवावज्ञा गम्यते तेन तृणादेव चतुर्थी॥ ३६॥ भ०

जग्मुः प्रसादं द्विजमानसानि द्यौर्व्वर्षुका पुष्पचयं वभूव। निर्व्याजमिज्या ववृते वचश्च भूयो न्वभाषे मुनिना कुमारः॥३७॥

जग्मुः। यागविघ्नकारिषु निरस्तेषु द्विजानां मानसानि मना स्येव मानसानि प्रज्ञादित्वादण् प्रसादं अव्याकुलत्वं जग्मुः गतानि गमहनेत्युपधालोपः द्यौः पुष्पचयं वर्षुका वर्षणशीला वभूव भवति स्म लषपतपदइत्यादिना उकञ् नलोकेति षष्ठीप्रतिषेधः। निर्व्याजन्निर्व्विघ्नं इज्या यागः व्रजयजोर्भावे क्यप् ववृते वृत्तः लिट् भूयः पुनरपि मुनिना गाधेयेन कुमारः रामः अकथितं कारकर्म्मत्वात् वचो वक्ष्यमाणमभाषि कर्म्मणि लिट् ब्रुवीत्यर्थ ग्रहणात् द्विकर्म्मकता वचः कुमारस्य॥ ३७॥ ज०म

जग्मुरित्यादि। शत्रुवधात् द्विजानां मानसानि प्रसादं अव्याकुलत्वं जग्मुः हनगमित्युङ्लोपः द्यौः स्वर्गः पुष्पस्य चयं समूहं वर्षुका वभूव वर्षतीति वर्षुका वृषेः सृस्थाभूकमगमेति उकः ढघेक्तीति सूत्रे उकवर्ज्जनात् न कर्म्मणि षष्ठी। निर्व्याजं निर्व्विघ्नं यथा भ०

स्यात्तथा मुनीनां इज्या यज्ञो वर्त्तते निष्पन्ना यजेः शीअजेति क्यप् स्त्रियां मुनिना विश्वामित्रेण कुमारौ रामः भूयः पुनरपि बभाषे अब्रवीत्यर्थात् द्विकर्मकत्वं कुमारककर्मणि पचादित्वादच् कुमारो बालके स्कन्दे युवराजेऽश्ववारके इति विश्वः॥३७॥

महीयमाना भवतातिमात्रं मखाध्वरे घस्मरजित्वरेण। दिवोऽपि वज्रायुधभूषणाया हृणीयते वीरवतीन भूमिः॥३८॥

ज०म० मही। भवता भूमिः पृथिवी महीयमाना पूज्यमाना अतिमात्रं दृढं सम्यक् पालनात् दिवोऽपि स्वर्गस्य न [illegible] न लज्जते किन्तु प्रतिस्पर्द्धत इति भावः हृणी महीङिति कण्ड्वादिपाठाद्यक् ङित्वात्तङ् अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति महीयशब्दात्कर्मणि लकारः शानच यक् अतो लोपः मुक् महीयमानेति रूपं मखाध्वरे [illegible] यज्ञः क्रियते तत्र ये घस्मराः अदनशीलाः राक्षसाः [illegible] जित्वरेण जयशीलेन भवता [illegible] वज्रायुधभूषणायाः [illegible] अलङ्कारो [illegible] दिवः वीरवती [illegible] यस्या भूमाविति॥३८॥

भ० महीयेत्यादि। भूमिर्दिवोऽपि स्वर्गादपि न हृणीयते न लज्जते तामपि स्पर्द्धत इत्यर्थः यतो भवतातिमात्रं अतिशयेन वीरवती प्रशस्तवीरान्विता अतएव लोके महीयमाना पूज्यमाना महीङ् वृद्धिपूजनयोः हृणीङ् लज्जायां आभ्यां कण्ड्वादित्वात् यक् समस्तपाप

रिव इत्यादिना कः कीदृशेन भवता सुराध्वरे देवानां यज्ञे च मराणां वज्ञभक्षणशीलानां राक्षसानां जितवैरेण सघसीभचे इत्यस्मात् घसमदः क्मर इति क्मरः स्वरप्रदशीलेनेति जेः स्वरप् स्वस्यतनपितीत्यनेन तम् दिवः कीदृश्याः वज्रमायुधमस्येति वज्रायुध इन्द्रः स एव भूषणं यस्याः इन्द्रो यथा दिवः परिपालकस्तथा त्वं भूमेरितिभावः। आयुध्यतेऽनेनेति आयुधं इजुडत्वात् कृगृज्ञाग्री जुङ इति कर्त्तरि विहितप्रत्ययः करणेऽपि बोध्यः। हृङ्गोःकभावे इत्युक्तेरन्यत्रापि प्रयोगत इत्युक्तः॥३८॥

बलिर्बबन्धे जलधिर्ममन्थे जह्रेऽमृतं दैत्यकुलं विजिग्ये। कल्पान्तदुःस्था वसुधा तथोहे येनैष भारोऽतिगुरुर्न तस्य॥३९॥

बलिर्वं संक्षेपेण स्तुतिमाह। येन भवता बलिर्बबन्धे बद्धः जलधिर्ममन्थे मथितः मन्दरं दोर्भिर्गृहीत्वा मन्थविलोडन इत्यस्य रूपम् संयोगान्तत्वाल्लिटोऽकित्त्वे अनुनासिकलोपो न भवति जह्रेऽमृतम् हृतम् स्त्रीरूपधारिणा दैत्यबलम्विजिग्ये विजितमनेकधा संलिटोर्जेरिति कुत्वम् एरनेकाच इति यणादेशः तथा कल्पान्ते प्रलये दुःस्था दुस्थाना वसुधा पृथिवी ऊहे उद्धृता वराहरूपिणा वहेर्यजादित्वात्सम्प्रसारणम् तस्य भवत एष भारो मुनिजनरक्षणम् अतिगुरुर्न भवति सर्व्वत्र कर्म्मणि लिट्॥३९॥ ज०

बलिरित्यादि। येन भवता वामनावस्थायां बलिनामासुरो भ०

बबन्धे बद्धः जलधिः समुद्रो ममन्थे मथितः मन्थेः स्यात्यपित् कि द्वेति किद्भावपचे उङो लोपाभावः स्त्रीरूपेण असुरगृहीतम मृतं जह्रे हृतं दैत्यवंशो विजिग्ये विजितः जेर्गिः सन्‌वोः अभ्यासस्य चेति यत्वं कल्पान्ते प्रलयकाले दुःस्था जलप्लाविता वसुधा पृथिवी वराहरूपेण ऊहे उद्धृता सर्व्वत्र कर्म्मणि ठौ वहेर्यजादित्वात् व्ययश्चेति खेर्जिः स्वरूपादीरिति प्रकृतेर्ज्जिः दुःखेन तिष्ठतीति दुःस्था हनजनादिति डः खसयुक्तशमिविसर्गस्य वा लोपो मनीषादित्वात् तस्य भवत एव भारो मुनिरचणरूपो नातिगुरुर्भवति ॥३९॥

इति ब्रुवाणो मधुरं हितञ्च तमाञ्जिहन्मैथिलयज्ञभूमिं। रामं मुनिः प्रीतमना मखान्ते यशांसि राज्ञां निजिघृचयिष्यन् ॥४०॥

अ०म० इति ब्रु। इति यथोक्तप्रकारेण मधुरं श्रोत्रसुखं हितं च ब्रुवाणो अभिदधानः लचणहेत्वोरिति शानच् मुनिः प्रीतमनाः मखान्ते यज्ञावसाने तं राममैथिलस्य यज्ञभूमिं आञ्जिहत् गमितवान् मिथिलानां राजेति जनपदशब्दात् चत्रियादञित्यञ् तस्य राजन्यपत्यवदित्यतिदेशादञ् अहिगतो इदितो नुम् प्रयोजकव्यापारे णिच् लुङ् आट् चङि णिलोपः द्विर्व्वचनेऽचीति स्थानिवद्भावादजादेर्द्वितीयस्येति हिशब्दस्य द्विर्व्वचनम् नन्द्रा इति नकारस्य प्रतिषेधः अभ्यासकार्य्यम् आञ्जिहदिति रूपम्। राज्ञां यशांसि निजिघृचयिष्यन् निग्रहीतुमभिभवितुमेषयिष्यन् ग्रहेः सन् स

नि यहगुहोश्चेति इट्प्रतिषेधः द्विर्वचनादिः रुदविदेत्यादिना मनः कित्त्वम् ग्रहिज्येत्यादिना सम्प्रसारणम् ढत्वभष्भावौ गकारस्य घकारः कत्वषत्वे पश्चात्षिच् तदन्ताद्भविष्यत्सामान्यविवक्षायां लृट् तेन भविष्यदनद्यतने लुङ् न भवति ॥४०॥

इतीत्यादि। उक्तप्रकारेण मधुरं हितं ब्रुवाणो मुनिः प्रीतमना मखस्य यज्ञस्यान्ते तं रामं मैथिलस्य जनकस्य यज्ञभूमिं आजिहत् प्रापयामास राज्ञां यशांसि निग्रहीतुं अभिभवितुं इच्छां कारयिष्यन् अर्थात् राम एव प्रयोज्यकर्त्ता मिथिलाया राजा मैथिलः विकारसंघेति षण: अहिङ्गतौ इदितो नुम् ञिः प्रेरणे ञिश्रीत्यङ् माजन्तादेरिति स्यादौ नवद्वा ऽये इति निषेधात् हिशब्दस्य द्वित्वं खेर्झभखयेति हस्य जः ञेर्लोपः ग्रहेः सनि नेमुगुह इतीम्निषेधः ग्रहस्वपेति जिः होढः झभान्तस्यादिजवामिति घः षढोः कः से इति ढस्य कः किलादिति षः सनयङन्तोद्विः खेराद्यचो लोप्यः झभखयेति खेर्घस्य जत्वं ङकारस्य अत्वञ्च ष्यस्येत्सनि ततो ञिः ततः स्यतृः ॥४० भ०

इतः स्म मित्रावरुणौ किमेतौ किमश्विनौ सोमरसं पिपासू। जनं समस्तं जनकाश्रमस्थं रूपेण तावौजिहतां नृसिंहौ ॥४१॥

इतः। एतौ तत्रागतौ नृसिंहौ नरौ सिंहाविव जनकाश्रमस्थं जनं रूपेण स्वरूपतया औजिहतां वितर्कं कारितवन्तौ ऊहवितर्के इत्यस्माद्धातोः ण्यन्तात् कर्त्तुः क्रियाफलाविवक्षायां णिचश्चेति तङ् न भवति चङि णिलोपस्य स्थानिवद्भावात् अजादेर्द्वितीयस्ये जं०म०

ति द्विर्व्वचनम्। ऊहमाह मित्रावरुणौ आदित्यवरुणौ देवता द्वन्द्वे इत्यानङ् तयोर्म्महानुभावत्वात् सोमरससन्निपाताय पातुमिच्छ् न लोकेति षष्ठीप्रतिषेधः एतावागतौ आङ्पूर्व्वस्येणो निष्ठायां रूपं किमश्विनौ अश्विनीकुमारौ सोमरससन्निपाताय एताविति एव वचनम् आजिहतां सुशब्द इति पाठे एतौ स्मिति निपातः एतौ स्म मिवेति स्मशब्दो निपातः पादपूरणार्थः॥ ४२ ॥

भ० इत इत्यादि। तौ नृसिंहौ मनुष्यश्रेष्ठौ रामलक्ष्मणौ रूपेण सौन्दर्य्येण समसां जनकाश्रमस्थं जनं आजिहतां वितर्क कारित वन्तौ ऊहङ्वितर्के त्रिःप्रकरणं त्रिश्नात्यङ् नाजन्तादेरिति निषे धात् हेर्द्वित्वं घोर्व्रोऽमेरिति ज्ञानार्थत्वात् कर्त्तुः कर्मत्वं। वितर्कमा ह किमेतौ मित्रावरुणौ सूर्य्यावरुणौ सोमरसं पातुमिच्छावन्तौ इतः स्म अमुं देशं प्राप्तवन्तौ इणगतौ कौ स्मेनातीते इति कौ कि म्वा एतौ अश्विनौ अश्विनीकुमारौ नासत्यदस्रौ नासत्यश्चैव दस्र श्च स्मृतौ तौ नासनोऽश्विनाविति मार्कण्डेयपुराणं। केचित्तु स्मश ब्दः पादपूरणे इताऽस्मिन् देश एतौ आगतौ आङ्पूर्व्वादिण. क इत्याहुः। मित्रश्च वरुणश्चेति द्वन्द्वे सहचरितदेवताद्वन्द्वे पूर्व्वपद स्यादन्तता निपातनात् देवीदासचक्रवर्त्ती तु एकादश इत्युदाह रता विश्वराजो ऽदेत्यस्य योगविभागात् क्वचित् समासे पूर्व्वपद स्य दीर्घत्वं सूचितमित्याह॥४२॥

अजिग्रहत्तं जनको धनुस्तत् येनार्द्दिदद्दैत्यपुरं पिनाकी। जिज्ञासमानो बलमस्य वाह्वोर्हसन्नभांक्षीद्रघुनन्दनस्तत्॥४२॥

अजिघ। येन धनुषा दैत्यपुरं पिनाकी महादेव आर्हिदत् जघा
हिंसितवान् अर्हेः स्वार्थिकण्यन्तात् चङि अजादेर्द्वितीयस्येति द्वि
वचने द्विरुच्यते रेफस्य प्रतिषेधः तद्धनुः तं रामं जनकः अजिघ
हत् बोधितवान् अनेन धनुषा त्रिपुरन्दग्धमिति ग्रहेर्हेतुमण्ण्यन्ता
चङि णिलोपः णौ चङि ह्रस्वः सन्वल्लघुन्यादित्वम् ग्रहेश्च बुद्ध्यर्थत्वात्
गतिबुद्धीत्यादिना रामस्य कर्मसंज्ञा। अस्य रामस्य बाह्वोर्भुजयो
र्बलञ्जिज्ञासमानो जनकः एवम्भूतन्धनुः हसन् मथमानो रघुन
न्दनो रामः अभाङ्क्षीत् भग्नवान् भञ्जेर्लुङि सिचि हलन्तलक्षणा
वृद्धिः तत्र हि हल्ग्रहणं समुदायप्रतिपत्त्यर्थमित्युक्तम्॥ ४२ ॥

अजिग्रहदित्यादि। जनको राजा तं रामं तद्धनुरजिग्रहत् भ०
ग्राहयामास धातूनामनेकार्थत्वात् ग्रहिरत्र ज्ञानार्थं इत्यन्ये
घोञ्जेरिति प्रयोज्यकर्त्तुः कर्मत्वं ण्यन्तङ्कः स्व इति ह्रस्वः स्वेः सन्व
दिति सन्वत् येन धनुषा पिनाकी शिवो दैत्यानां पुरं त्रिपुरं
आर्हिदत् हतवान् अर्हकुवधे स्यादौ नवद्रोऽये इति निषेधात् द्वे
र्द्वित्वं केचित्तु धनुषा प्रयोज्यकर्त्ता घातयामास इत्यर्थमाहुः
जनकः कीदृशः अस्य रामस्य बाह्वोर्बलं जिज्ञासमानः ज्ञातुमि
च्छन् स्मृदृशनजुज्ञेति सनन्तज्ञो मं हसन् लीलयैव तद्धनुरभा
ङ्क्षीत् भञ्जोधौ मोटने ण्यांसिः अनिमत्वात् व्रजवदेति शिः चङि
ति कुङ्॥ ४२ ॥

ततो नदीष्णान् पथिकान् गिरिज्ञानाक्रायकान्
भूमिपतेरयोध्यां। दिक्षुः सुतां योधहरैस्तुरङ्गैर्व्यस
र्जयन्मैथिलमर्त्यमुख्यः॥ ४३॥

म० ततो। धनुर्भङ्गादनन्तरमद्यागमयमिति ज्ञात्वा जनकः सुतान्दु हितरन्दित्सुः दातुमिच्छुः ददातेः सनिमीमेत्यादिना अच इस् द्विर्व्वचनम् अचलोप इत्यभ्यासलोपः सश्चेति तत्वम् मत्याग्रं सभित्व उः भूमिपतेर्दशरथस्य आह्वायकान् आह्वयन्ति आकारयन्ती ति कर्त्तरि ण्वुल् आतो युक् कृत्प्रयोगे भूमिपतौ कर्म्मणि षष्ठी तान् अयोध्यां व्यसर्जयत् विसर्ज्जितवान् विपूर्व्वस्य सृजेर्हेतुमण्ण्यन्तस्य लङि रूपं गत्यर्थत्वात् द्विकर्म्मकता। नद्यां स्नान्तीति नदीष्णाः सु पिस्थ इति योगविभागात्कः आतोलोपः निनदीभ्यां स्नातेरिति षत्वम् नदीन्तरीतुङ्कुशलान् इत्यर्थः। पथिकान् पथि कुश लान् तत्रकुशलःपथ इति ठक् गिरिज्ञान् यथाप्रदेशङ्गिरिज्ञान् इगुपधेत्यादिना कः तुरङ्गैः अश्वैः करणभूतैः युध्यन्त इति योधाः पचाद्यच् तानाहर्त्तुं चमैः वयसि चेत्यच्। हसिमृग्रिण्वामिदमि लूपधूर्व्विभ्यस्तन्नित्यौणादिकस्तन्। म्रियन्ते प्राणिनोऽस्मिन्निति मर्त्यो भूर्लोकः तत्र भवा मर्त्या मनुष्या दिगादेराकृतिगणत्वात् यत् आकृतिगणत्वस्य लिङ्गं देवमनुष्यपुरुषपुरुमर्त्येभ्य इति नि र्द्देशः मुखमेव मुख्यः प्रधानम् शाखादिभ्यो यः। मर्त्यानाम्मुख्यो मर्त्यमुख्यः मैथिलस्वामी मर्त्यमुख्यश्चेति विशेषणसमासः जनक इत्यर्थः॥ ४३।

भ० तत इत्यादि। धनुर्भङ्गानन्तरं मिथिलामस्वन्धिमनुष्यश्रेष्ठो जनकः रामाय सुतां दित्सुर्दातुमिच्छुः सन् भूमिपतेर्दशरथस्य आह्वायकान् दूतान् तुरङ्गैरयोध्यां व्यसर्ज्जयत् प्रेरयामास तुर ङ्गैः कीदृशैः योधहरैः योधान् हर्तुं चमैः हृञःपचादित्वादन् वयो बोधकवहनार्थेऽनिति क्रमदीश्वरादयः एतेन शीघ्रगमनं दर्शितं

शरुईंअहेत्यादिना तुरङ्गो निपातितःकिम्भूताम् नदीष्णान् नदीष्व स्नरणकुशलान् नदीस्नातिनिस्नातेत्यादिनाञ्चे इतिरामानन्दश्चेच मनीषादित्वात् वा षत्वं नदीष्णो नदीश इति पुरुषोत्तमः। प न्थानं गच्छति वेत्ति वा इति निपातनादकः पथाञ्चात् स्वार्थे को वा पथि कुशलः पथक इति केचित् गिरिं आनन्तीति गिरिश्चा च्छनजनादिति डः ॥४३॥

क्षिप्रं ततोऽध्वन्यतुरङ्गयायी यविष्ठवद्दृद्धतमोऽपि राजा। आख्यायकेभ्यः श्रुतसूनुवृत्तिरम्लानयानो मि थिलामगच्छत् ॥४४॥

क्षिप्रम्। आख्यान्ति कथयन्ति ये ते आख्यायकास्तेभ्यः श्रुता ज०म सूनुवृत्तिर्येन स राजा दशरथः सूयत इति सूनुः पुत्रः दाभाभ्या नुरिति वर्त्तमाने सुवःकिदित्यौणादिको नुप्रत्ययः। ततोऽनन्त रमेव क्षिप्रं शीघ्रं स्फायितच्चीत्यादिना रक् क्रियाविशेषणञ्चैतत् मिथिलामगच्छत् भरतशत्रुघ्नाभ्यां सहेत्यर्थादनुषक्तव्यं गमेर्ल ङि इषुगमियमाच्छः अध्वानम् अलङ्गामिनो ये तुरङ्गा अश्वाः ते अध्वन्याः अलङ्गामीत्यस्मिन्नर्थे अध्वनीयत्खाविति यत् येचा भावकर्मणोरिति प्रकृतिभावः तैः साधु यातीति साधुकारिणि णिनिः अध्वन्यतुरङ्गयायी एवञ्च सत्वा अम्लानयानः न विद्यते म्लानं म्लानिर्यस्मिन्याने तत् अम्लानं. अम्लानं यानं यस्य तादृ शैस्तुरङ्गैः सुखयानः म्लानेति भावे निष्ठा संयोगादेरात इति

मत्वम्। वृद्धतमोऽपि यविष्ठवत् युवतम इव युवशब्दस्येष्ठनि स्थूलदूरेत्यादिना यणादिपरलोपः पूर्व्वस्य च गुणः पश्चात्तेन तुल्यम् इति वतिः ॥४४॥

भ० क्षिप्रमित्यादि। ततोऽनन्तरं आख्यायकेभ्यः श्रुता सूनोः पुत्रस्य वृत्तिर्व्यवहारो येन स राजा दशरथः मिथिलां जनकपुरीं शीघ्रमगच्छत् कीदृशः अध्वन्यैस्तुरङ्गैर्यातीति यशादित्वात्णिन् शीलार्थे णिन्नित्यके आवश्यके णिन् इति केचित् अध्वानमत्यर्थं गच्छतीति यः अनित्यविवक्षया न खिः मन्वर्ण्णावर्म्मेति मलोपाभावः अध्वनि कुशलोऽध्वन्यो वा वृद्धतम इति अयमेषामतिशयेन वृद्धोऽपि यविष्ठवत् प्रकृष्टयुववत् गुणादेष्ठयस्य इतीष्ठः वाढान्तिकेति यूनो यवादेशः श्रोमंसुडिन्नेकाच इति डित्वात् टेर्लोपः। अम्लानमक्लिष्टं यानं यस्य म्लैकान्तिसंक्षये क्तः यत्युक्तादन्तत्वात् संत्वाद्यारिति क्तस्य नत्वं ॥४४॥

वृन्दिष्ठमार्चीद्वसुधाधिपानां तं प्रेष्ठमेतं गुरुवद्गरिष्ठं। सदृक्प्रहान्तं सुकृताधिवासं वंहिष्ठकीर्त्तिर्यशसा वरिष्ठं॥४५॥

ज०म० वृन्दिष्ठम्। तं राजानमेतमायातञ्जनक आर्चीत् पूजितवान् अर्च्चेर्लुङि रूपम् वृन्दिष्ठं वृन्दारकतममप्रशस्ततममित्यर्थः केषाम्वसुधाधिपानाम्पृथ्वीपतीनाम् प्रेष्ठम्प्रियतमम् गुरुवत् गुरुणा तुल्यम्वर्त्तमानङ्गरिष्ठम् गुरुतमम् सदृक् समानान्ययोश्चेत्युपसंख्यानाद्दृशेः क्विप् रूढिशब्दश्चायम् नात्र दर्शनक्रिया विद्यते।

अभिजनादिभिस्तुल्यो जनक इत्यर्थः महान्तम् महानुभावमहाशयम्भ्य महान्तं सुकृताधिवासं सुकृतनिलयम् अधिवसत्यस्मिन्निति अधिकरणे घञ् वंहिष्ठा बहुलतमा कीर्त्तिर्यस्य स वंहिष्ठकीर्त्तिः यशसा वरिष्ठमुरुतमम् अत्र वृन्दारकप्रियगुरुवहुलोरूणामिष्ठनि यथासङ्ख्यमियस्थिरेत्यादिना वृन्दप्रगरवंहवर इत्येते आदेशा भवन्ति॥ ४५ ॥

वृन्दिष्ठमित्यादि। अर्थात् जनकसमागतं दशरथं आर्चीत् भ॰ पूजितवान् किम्भूतं वसुधाधिपानां राज्ञां मध्येवृन्दिष्ठं प्रशस्ततमं श्रेष्ठं प्रियतमं गुरुवत् उपदेष्टृवत् पितृवद्वा गरिष्ठं गुरुतमं महान्तं महाशयं सुकृतानि पुण्यानि अधिवसन्त्यस्मिन्निति आधारे घञ् यशसा वरिष्ठं उरुतमं वृहत्तममित्यर्थः। जनकः कीदृशः सदृक् अर्थात् दशरथस्य समान इव दृश्यते योऽसाविति तदादिभवत् समानेति क्विप् समानेदमिति सादेशः सदृशानां महान्तमित्यन्ये वंहिष्ठा वहुतमा कीर्त्तिर्यस्य स तथा वृन्दिष्ठादौ गुणादेष्ठेयसु इतीष्ठः वाढान्तिकेत्यादिना वृन्दारकप्रियगुरुवहुलोरूणां वृन्दप्रगरवंहवरादेशः ञीमंस्येति डित्वात् टेर्लोपः प्रेष्ठमित्यत्र एकाचत्वान्न डित्वं॥ ४५ ॥

त्रिवर्गपारीणमसौ भवन्तमध्यासयन्नासनमेकमिन्द्रः। विवेकदृश्वत्वमगात्सुराणां तं मैथिलोवाक्यमिदं बभाषे ॥ ४६॥

त्रिवर्ग। तन्दशरथम्मैथिलो जनकः वाक्यमिदम्बभाषे ब्रुवीत्यर्थं ज॰

ग्रहणात् द्विकर्मकता किन्तद्वाक्यमित्याह असाविन्द्रो भवन्तम् एकासनमध्यासयन् आरोपयन् विविकदृश्वत्वमगादिति सम्बन्धः आसनस्याधिशीङित्यादिना अधिकरणे कर्मसंज्ञा भवन्तमिति गतिबुद्धीत्यादिना आस्तेरण्यन्तावस्थायामकर्मकत्वात्। पारङ्गामीत्यस्मिन्वाक्ये अवारपारेत्यादिना पारशब्दात् खः तत्र विगृहीतविपर्य्यस्तग्रहणात् त्रिवर्गस्य धर्मार्थकामस्य पारीण मिति षष्ठीसमासः त्रिवर्गपारीणम्भवन्तं सुराणाम्मध्ये स एन्द्रो विविकदृश्वत्वं विविक्तज्ञतामगात् इणोगा लुङि गातिस्थेत्यादिना सिचो लुक् विविकन्दृष्टवानिति दृशेः क्वनिप्॥ ४६॥

भ० त्रिवर्गेत्यादि। मैथिलो जनकः तं दशरथं इदं वाक्यं बभाषे ब्रुवीत्यर्थत्वात् द्विकर्मकता किन्तदित्याह भवन्तमेकमासनमध्यासयन्नुपवेशयन् इन्द्रः सुराणां विविकदृश्वत्वं सदसद्विवेकत्वं अगात् प्राप्तवान् कीदृशं त्रिवर्गस्य पारं गच्छतीति ढखेकादिति णीनः त्रिवर्गो धर्मकामार्थैरित्यमरः। असाविति बुद्धिस्थनिर्देशः विविकं दृष्टवानिति चामुमिति क्वनिप् भवन्तमिति अध्यासेः प्रागविवक्षितकर्मत्वादकर्मकत्वेन प्रयोज्यकर्त्तुः कर्मत्वं आसनमिति कर्मक्रियेत्यादिना आधारस्य कर्मत्वं॥ ४६॥

हिरण्मयी शालनतेव जङ्गमा च्युता दिवः स्थास्नुरिवाचिरप्रभा। शशाङ्ककान्तेरधिदेवताकृतिः सुता ददे तस्य सुताय मैथिली॥ ४७॥

ज०म० हिर॥ तस्य दशरथस्य सुताय रामाय सूयत इति सुतः

सुप्रसवस्वर्य्ययोरित्यस्मात् कर्म्मणि निष्ठा सुता मैथिली सीता द
दे जनकेनेत्यर्थात् कर्म्मणि लिट् मैथिलस्यापत्यं स्त्रतद्ञ् तद
न्तादितोमनुष्यजातेरिति ङीष्। रामस्य ज्येष्ठत्वात्तस्यैव कवि
ना परिणय उक्तः न शेषाणाम् तेन अन्या अपि तदैव दुहित
रो दत्ताः हिरण्मयी सुवर्णनिर्मितेव सालसता वृक्षलता सुवर्ण
छवित्वात् तस्याः हिरण्यविकार इति मयटि दाण्डिनायनेत्या
दिना यलोपनिपातनम्। जङ्गमा सञ्चारिणी नतु स्थावरा अ
त्यर्थं गच्छतीति यङि नुगत इति नुक् यङन्तात्पचाद्यचि यङो
ऽचिचेति यङो लुक् च्युता दिवः आकाशात्पतिता अचिरप्रभेव
विद्युदिव तेजस्वित्वात् तन्वीत्वाच्च किन्तु स्थास्नुरचञ्चला सा तु च
ञ्चलेति व्यतिरेकः ऊङुत इति ऊङ् न भवति क्रियाशब्दत्वात्
तत्र मनुष्यजातेरिति वर्त्तते शशाङ्ककान्तेर्य्याधिदेवता अधि
ष्ठात्री देवता तस्या आकृतिर्य्यस्याः सौम्यत्वात् आक्रियते अनये
त्याकृतिः संस्थानम् अकर्त्तरिकारकेति स्त्रियां क्तिन्॥ ४७॥

हिरण्मयीत्यादि। अर्थात् जनकेन तस्य दशरथस्य सुताय मैथि भ॰
ली सुता ददे मैथिलस्यापत्यं स्त्रीति ष्णः यदा मिथिलायां नगर्य्यां
अर्थात् मिथिलाख्यभूभागे जाता अयोनिसम्भवत्वात् पार्थिवीत्य
र्थः अयोनिसम्भवत्वेन दिव्यत्वाल्लक्ष्मीत्वं सूचितं रामसमीपे सीता
कीदृशी हिरण्मयी स्वर्णमयी सालवृक्षसम्बन्धिनी लतेव एतेन रा
मस्य सालवृक्षतुल्यत्वं सूचितं मयटि हिरण्यस्य यलोपो निपात
नात् जङ्गमा सञ्चारिणी अन्या लता स्थिरेति विशेषः यद्यपि
गत्यर्थाद्वक्रतायां यङ्स्यात्तथापि जङ्गमशब्दोऽयं रूढः दिव
श्च्युता अचिरप्रभा विद्युदिव स्थास्नुः स्थितिशीला विद्युच्चञ्चला

इति विशेषः स्वात्मास्येति स्वः अतिशोभ्यत्वात् यच्चकात्मेरधिदेव ताया अधिष्ठातृदेवताया इवाकृतिर्यस्याः ॥४७॥

लब्धां ततो विश्वजनीनवृत्तिस्तामात्मनीनामुदवोढ रामः। सद्रत्नमुक्ताफलभर्म्मभूषां संबंहयन्तीं रघुवंश्यलक्ष्मीं ॥ ४८ ॥

भ०म० लब्धाम्। ततो दानानन्तरम् लब्धान्तामात्मनीनाम् आत्मने हितां आत्मविशेषेति खः रामः उदवोढ वहः स्वरितेत्त्वात्कर्त्तृक्रिया फलविवक्षया तङ् विश्वजनीना विश्वजनाय हिता वृत्तिः प्रवृत्तिर्यस्य रामस्य स पूर्व्ववत्खः मतो उत्कृष्टा रत्नादिशोभा यस्याः तैरलङ्कृतत्वात् तां सद्रत्नमुक्ताफलभर्म्मशोभाभर्म्म स्वर्णं सर्व्व धातुभ्योमनिन् भर्म्मभूषामिति पाठान्तरम् सद्रत्नादिभूषा अलङ्कारो यस्या इति योज्यम् गुरोश्चहल इत्यकारः संबंहयन्तीं सम्बहुलामतिस्थिराङ्कुर्व्वाणाम् बहुलशब्दात्तत्करोतीति णिचि इष्ठवद्भावात् प्रियस्थिरेत्यादिना वंहादेशः पश्चात्तदन्तस्य सम्र्व्वस्य साधनेन योगः कामित्याह रघुवर्ग्यलक्ष्मीमिति रघुवर्गे भवाम्विभूतिम्वर्गान्ताचेत्यनुवृत्तौ अशब्देयत्खावन्यत रस्यामिति यत् ॥४८॥

भ० लब्धामित्यादि। ततोऽनन्तरं आत्मने हितां लब्धां तां सीतां राम उदवोढ उत्पूर्व्ववहः परिणये सहवहोऽदोढोति अत ओत्वं इन्यवत्वात् भत्वाभावः विश्वेषां जनानां हिता वृत्तिर्व्यव

भार्या यस्य विकारसंघेत्यादिना हितार्थे ईनः मन्वर्म्मेत्यादिना आत्मनो नलोपाभावः। सद्मानि मुक्ताफलानि भर्माणि भूषा अलङ्कारो यस्याः शोभामिति पाठे तैः शोभते पचादित्वादन् मतो वर्त्तमाना रत्नादीनां शोभा यचेति वा। हेम स्वर्णं जातरूपं सुवर्णं भर्म हाटकं शातकुम्भमिति हलायुधः रघुवंश्यस्त्रीं संवं हयन्तीं सम्यक् वङ्कलीकुर्म्वतीं लेःहत्याख्यानेभिः वाढाग्नि केति वंहादेशः॥४८॥

सुप्रातमासादितसम्मदं तद्वन्दारुभिः संस्तुतमभ्ययोध्यं। अश्वीयराजन्यकहास्तिकाढ्यमगात्सराजं बलमध्वनीनं॥४९॥

सुप्रातेति। विवाहं निर्व्वर्त्य प्रभाते अयोध्याभिमुखमतद्बलन्दश जं॰म॰ रथस्यागात् गतवत्। सुप्रातन्निरुपद्रवत्वात् शोभनप्रातर्द्दिन मुखं यस्य बलस्य। सुप्रातसुश्वेत्यादिना समासान्तष्टिलोपश्च निपात्यते। आसादितसम्मदम्प्राप्तहर्षं प्रमदसम्मदौ हर्ष इतिनिपातनम्। वन्दारुभिः संस्तुतं कृतस्तवम् अभ्ययोध्यम् अयोध्याभिमुखम् अभिप्रतीआभिमुख्य इति अव्ययीभावः। अश्वानां समूहो अश्वीयं केशाश्वाभ्यांयञ्छाविति छः राजन्यानां चत्रियाणां समूहो राजन्यकम्। गोचोचेत्यादिना वुञ् प्रकृत्याकेराजन्यमनुष्ययुवान इति प्रकृतिभावादपत्ययकारलोपो न भवति। हस्तिनां समूहो हास्तिकम् अचित्तहस्तीति ठक्। एषां सेनाङ्गत्वात् द्वन्द्वएकवद्भावः तैनाढ्यमुपचितमिति तृतीयेति योगविभागात्समासः। सह राज्ञेति विगृह्य साकल्यवचने यौगपद्ये वाव्ययी

। अव्ययीभावे चाकाल इति सभावः अनसन्तेति टच् समा
: । अध्वनीनमध्वानमलङ्गामीत्यध्वनोयत्खौ आत्माध्वानौ
इति प्रकृतिभावः॥४८॥

सुप्रातमित्यादि। तद्दलं दशरथसैन्यं अध्वयोध्यं अयोध्याम
भिमुखीकृत्य अगात् इणोगाथ्यां शोभनं प्रातर्यस्य तत् सुप्रातं
निश्चिन्तत्वात् निपातनेन स्वार्थे ष्णेन वा साध्यं। आसादितः प्राप्तः
सम्मदो हर्षो येन वन्दारुभिः स्तुतिपाठकैः संस्तुतं वदिभ्नुत्यभिवा
दयोः ष्रवन्द आरुः अश्वराजन्यहस्तिनां समूहेन साश्वं प्रभृतं त्रि
कारमंधत्यादिना समूहार्थे अश्वादोयः राजन्यहस्तिभ्यां कण्
राज्ञा सह विद्यमानं सराजं राजसहितं अनवशिष्टं युगपद्वा इत्य
र्थः । अकान्तमे चेति साकल्ये यौगपद्ये वा अव्ययीभावः अनदत्यने
नाव्ययः। सहः साऽकाले इति सः अध्वानमनुगच्छति ठधेक्रा
दिति ईनः सन्वर्ज्जानित्यादिना नलोपाभावः॥४८॥

विशङ्कटो वक्षसि वाणपाणिः सम्यन्नतालद्वयसः पु
रस्तात्। भीष्मो धनुष्मानुपजान्वरत्निरैति स्म रामं पथि
जामदग्न्यः॥५०॥

ज॰म॰ विशेति॥ एवमस्य गच्छतः पथि मार्गे सप्तम्यां भस्य टेर्लोपः
पुरस्तादग्रतः अस्तातीचेति पूर्व्वस्य पुरादेशः। रामोजाम
दग्न्यः जमदग्नेरपत्यं रामोऽयम् गर्गादिपाठाद्यञ् स ऐति स्म
आगतवान् आङ्पूर्वादिणो लट् एत्येधत्यूट्स्विति वृद्धिः। विश
ङ्कटो वक्षसि विशाल उरसि वेः शालच्छंकटचाविति शङ्कटच्।

बाणः पाणावस्येति बाणपाणिः प्रहरणार्थेभ्य इत्यादिना सप्तम्यन्तस्य परनिपातः। सम्यक्नीनिष्कीयस्तालवृक्षः स प्रमाणं यस्य स तथोक्तः प्रमाणे द्वयसच्। भीयते अस्मादिति भीष्मः भियः षुक्चेति औणादिको मक्प्रत्ययः वा षुगागमश्च। भीमादयोऽपादान इत्यपादाने साधुः। धनुष्मान् धनुषा युक्तः संसर्गे मतुप्। जानुनोः समीपमुपजानु सामीप्येऽव्ययीभावः उपजानु अरत्निर्यस्य स तथोक्तः प्रलम्बबाहुरित्यर्थः॥ ५०॥

विशङ्कट इत्यादि। अथ जामदग्न्यः परशुरामः पुरस्तात् पूर्व्वस्यां दिशि अग्रतो वा पथि रामं ऐति स्म आगतः जमदग्नेरपत्यमिति गर्गादित्वात् यञ्। पुरस्तादिति दिक्शब्दाद्दिग्देशकालेस्तादिति स्तात् पूर्व्वाधरावरा इति पुरादेशः। वक्षसि विशङ्कटो विशालः बाणः पाणौ यस्य बाणयुतः पाणिर्यस्येति वा। सम्यङ्नाभिशालीयस्तालवृक्षः स परिमाणं यस्य दघ्नमात्रद्वयसच्प्रमाणे इति द्वयसः। बिभेत्यस्मात् भीष्मो निपातनात्। धनुष्मान् प्रशस्तधनुर्युक्तः मतुरस्त्यर्थे जानुनोः समीपमुपजानु तत्रारत्निर्यस्य दीर्घबाहुत्वात् अरत्निस्तु निष्कनिष्ठेन मुष्टिना इत्यमरः। रत्न्यरत्नी स्त्रियौ हस्तौ बद्धमुष्टिततांगुली इत्यमरमाला॥५०॥ भ०

उच्चैरसौ राघवमाह्वतेदं धनुः सबाणं कुरु मातियासीः। पराक्रमज्ञः प्रियसन्ततिस्तं नम्रः क्षितीन्द्रोऽनुनिनीषुरूचे॥५१॥

ज०म० उच्चैः॥ उच्चैर्महता ध्वनिना राघवन्दाशरथिं एवम्वक्ष्यमाणमाह्वत आह्वतवान् स्पर्द्धायामाङ इत्यात्मनेपदम् आत्मनेपदेष्वन्यतरस्यामिति च्लेरङ्। धनुः सवाणङ्कुरु धनुषि वाणमारोप्य युद्धाय सज्जीभवेत्यर्थः मातियासीः मातिक्रम्य गमनङ्कार्षीः यातेर्माङि लुङ् अडभावः यमरमनमातांसक्चेति इट् इट ईटीति सिचोलोपः। अथ चितीक्षादशरथः तमुचे ब्रुवोवचिः आदेशस्य स्थानिवद्भावेन कर्त्तुः क्रियाफलविवक्षायामङ् न वचेः परस्मैपदित्वात् वच्यादिना सम्प्रसारणम्। पराक्रमज्ञः यतस्तस्य पराक्रमञ्जानाति राजा प्रियसन्ततिः प्रिया सन्ततिर्यस्य रामे व्यापादिते माभूत्सन्तानविच्छेद इति नम्रः प्रणतोभूत्वा अनुनिनीषुः अनुनेतुमिच्छुः तदनुनयमाह॥५१॥

भ० उच्चैरित्यादि। असौ परशुरामः उच्चैर्महाशब्देन राघवं राममाह्वत स्पर्द्धयामास आह्वानं कृतवान् स्पर्द्धायामाङ इति ह्वेञः संवक्ष्यस्यस्याल्लिपिति ङः। इदं मदीयं धनुः सवाणं कुरु अथैव बलं ज्ञात्वा युद्धं करिष्यामि एतावतैवापराजितोऽहमितिभावः। अन्ये तु इदं त्वदीयं धनुः सवाणं कुरु धनुषि वाणमारोप्य युद्धाय सज्जीभवेत्यर्थ इत्याहुः इदमिति हस्तनिर्द्दिष्टत्वादुक्तं मातियासीः मातिक्रम्य गच्छ मेत्यव्ययं निषेधे तद्योगेऽम्निषेधः यमरमनमेति इमसनौ। अथ चितीक्षादशरथस्तं जामदग्न्यमूचे वचोऽरे इतिब्रुञो वचादेशः स्थानिवद्भावात् कर्त्तुः क्रियाफलवत्त्वविवक्षायां संव्ययग्रहेति सेर्ञिः घञ्स्वपाद्योरिति प्रकृतेर्ञिः स किम्भूतः पराक्रमज्ञः परशुरामस्य पराक्रमं जानाति प्रिया सन्ततिः सन्तानो यस्य प्रियसन्तानः अतएव नम्रः प्रणतः सन् अनुनिनीषुः अनुनेतुमिच्छुः॥५१॥

अनेकशो निर्जितराजकस्त्वं पितॄनतार्पीर्नृपरक्ततोयैः। संक्षिप्य संरम्भमसद्विपक्षं कास्थार्भकेऽस्मिंस्तव राम रामे ॥५२॥

अनेइति। संरम्भं क्रोधं संक्षिप्य उपसंहर क्षिपेः लोटि मध्यमैकवचने रूपम् अन् एकमेकमिति विगृह्य सङ्ख्यैकवचनाच्चेति शस् पश्चान्नञ्समासः। अनेकशोऽनेकप्रकारमिति क्रियाविशेषणमेतत् निर्जितमपराजितं राजकं राज्ञां समूहो येन स निर्जितराजकः गोत्रोक्षेत्यादिना वुञ्। त्वं पुनः पितॄनतार्पीः प्रीणितवानसि कैः नृपरक्ततोयैः तृपप्रीणन इत्यस्मात् लुङ् सिच् हलन्तलक्षणा वृद्धिः। असद्विपक्षम् असन्नविद्यमानोविपक्षोयस्मिन् संरम्भे निर्जितराजकत्वात् रामोविपक्ष इति चेदाह कास्थार्भकेऽस्मिंस्तव राम रामे हे परशुराम अर्भके बालके रामे तव का आस्थाक आदरोऽस्ति नैवेत्यभिप्रायः॥५२॥ ज०

अनेकश इत्यादि। हे राम हे परशुराम संरम्भं क्रोधं संक्षिप्य संहर क्षिपोनुदि अनेकवारं निर्ज्जितं राजकं येन तथाभूतस्त्वं अतः क्रोधो न युक्तः नृपाणां रक्तानि रुधिराण्येव तोयानि तैस्त्वं पितॄन् अतार्पीः प्रीणितवान् एकविंशतिवारान् निःक्षत्रीकृत्य तद्रक्तैः पितृतर्पणकरणं तस्य प्रसिद्धं त्रिक्षतृपप्रीणने लुङमुपस्थशेति त्रिकल्पात् सिः वेमूर्द्धिनिरधादित्यादिकस्येमभावपक्षे अजवद्देति त्रिः। संरम्भं कीदृशं असन्नवर्त्तमानोविपक्षोयत्र तादृशं निर्ज्जितराजकत्वात् रामो विपक्ष इतिचेदाह अस्मिन् मत्पुत्रे रामे अर्भके भ०

बालके तव का आस्था आदरो यत्नो वा न कापीतिभावः। आस्थाचालम्बनास्थानयत्नापेक्षासु कथ्यते इति विश्वः। रामपदद्वये ननामसाम्यादपि क्रोधो नोचित इति व्यज्यते। अनेकश एकमेकं इति विगृह्य संख्यैकार्थाद्वीप्सायामिति चशस् पश्चान्नञ्समासः अनेकस्यापि संख्यावाचित्वात् तत एव चशस् इत्येके राजकमिति विकारसंघेति राज्ञः समूहार्थे कण्॥५२॥

अजीगणद्दाशरथं न वाक्यं यदा स दर्पेण तदा कुमारः। धनुर्व्यकार्षीद्गुरुबाणगर्भं लोकानलावीद्विजितांश्च तस्य॥५३॥

०भ० अजीग। दाशरथस्य दशरथस्येदन्दाशरथन्तस्येदमित्यण् वाक्यम्वचनं यदा स्वदर्पेण स्वमदेन हेतुना जामदग्न्यः नाजीगणत् न गणितवान् गणसङ्ख्यान इत्यस्मादन्तत्वान्न वृद्धिः चङि चेति द्विर्वचनम् ईचगण इति अभ्यासस्येकारः तदा कुमारो रामोधनुर्व्यकार्षीत् आकृष्टवान् कृष आकर्षणे स्पृशमृशेत्यादिना पसङ्ख्यानेन सिचि पक्षे रूपम् हलन्तलक्षणावृद्धिः षढोःकस्सीति कत्वम् कृतदारकर्मापि पुत्रः पितरि जीवति कुमार इति व्यपदिश्यते। गर्भयतीति गर्भः गुरुर्बाणोगर्भोयस्य धनुषः लोकांश्च स्वप्रभावाद्विजितान् तस्य परशुरामस्य अलावीत् छिन्नवान् लूना तेर्लुङि सिचि वृद्धौ रूपम्। समुच्छिद्यन्तामस्य लोका इति अमोघमस्त्रं मुक्तवानित्यर्थः ततःप्रभृति तस्य सर्व्वं तेजोऽपहृतम्॥५३॥

भ० अजीगणदित्यादि। यदा स जामदग्न्यः दाशरथं वाक्यं दर्पेण

दर्पात् न अजीगणत् न गणितवान् दशरथमेटमिति विकार मंघेत्यादिना णः। गणत्कसंख्याने वेङ्गणकथः खिच्चंङ्कीति खे रीङ् तदा कुमारौ युवराजौ बालको रामो धनुर्व्यकार्षीत् आक ष्टवान् कर्षोत्वा कृषि कृषमृषेति सिः अजवदेति शिः षढोः कःसे इति कः क्विलादिति षः। कीदृशं धनुर्गुरु महत् वाणो गर्भं इव मध्यव र्त्ती यत्र वाणो गर्भे यस्येति वा गुर्व्विति वाणविशेषणम्वा। ततस्तस्य जामदग्न्यस्य विजितान् वशीकृतान् लोकान् स्वर्गानस्तावीत् छिन्न वान् तत्र गमनं निषिद्धवानित्यर्थः लुर्त्रगिक्किदि टी॥५३॥

जिते नृपारौ सुमनीभवन्ति शब्दायमानान्यशनैर् शङ्कं। वृद्धस्य राज्ञोऽनुमते बलानि जगाहिरेऽनेकमु खानि मार्गान्॥५४॥

जितेइति। जिते नृपारौ परशुरामे बलानि सैन्यानि मार्गान् पथः जगाहिरे अवष्टब्धवन्ति। वृद्धस्य राज्ञोदशरथस्यानुमते सति गच्छतेति। जामजग्न्यसंरम्भादसुमनांसि सुमनांसि सन्ति सुमनीभवन्ति बलानि अरुर्मनइत्यादिना चावन्त्यस्य लोपे अस्य चावितीत्वे रूपम्। शब्दायमानानि अशनैः सुष्ठु शब्दं कुर्वा णानि एवञ्चितस्तथा जितो नृपारिरिति शब्दवैरेत्यादिना क्यङ् अशङ्कन्निर्भयञ्जगाहिर इति क्रियाविशेषणम्। अनेकमुखानि पृ थग्भूतानि पूर्व्वभयेन वक्रलीभूतलोद्दनीकानामव्कुलादक्रवचन मिति॥५४॥ अं॰म॰

जित इत्यादि। नृपाणां अरौ परशुरामे रामेण जिते सति वृद्ध भ॰

स राज्ञोदशरथस्यानुमते अनुमतौ सत्यां बलानि सैन्यानि अग्रहं यथा स्यात्तथा मार्गान् पथो जगाहिरे आक्रामन्ति गाहूङ्‌ वि लोडे। कीदृशानि पूर्व्वं जामदग्न्यभयात् असुमनांसि सुमनांसि भवन्ति च्विः अभूततद्भावे इति च्विः। मनश्चक्षुरिति सलो पे अकारस्य ईः अतनैरुच्चैः शब्दायमानानि जयशब्दं कुर्व्वाणानि शब्दसुखकष्टादेरिति क्यः घोजय्यरे इति दीर्घः। अनेकमुखानि पूर्व्वं भयात् वर्त्तुलीभूय सम्प्रति पृथग्भूतानि॥५४॥

अथ पुरुजवयोगान्नेदयद्दूरसंस्थं दवयदनिरयेण प्राप्तमुर्व्वीविभागं। क्रमरहितमचेतन्नीरजीकारित द्यां बलमुपहितशोभां तूर्णमायादयोध्यां॥५५॥

०भ इति भट्टिकाव्ये प्रकीर्णकाण्डे सीतापरिणयोनाम द्वितीयः सर्गः॥

ज०म० अथ। अथेत्यानन्तर्य्ये बलन्दाशरथम् तूर्णं शीघ्रम् त्वरत्य मलरेत्यादिना पचे इडभावः। ज्वरत्वरेति वकारोपधयोरूठ् रदाभ्यामिति नत्वम्। अयोध्यामायात् आगतम् आङ्पूर्व्वाद्यातेर्ल ङि रूपम्। पुरुर्महान्वेगोजवः तेन योगात् पूर्य्यते वर्द्धते इति पुरुः कुर्भ्रश्चेत्यधिकृत्य पृभिदिव्यधीत्यादिना कुप्रत्ययः। दूरसंस्थन्दूरे

भ० संस्थितं इति कः। उर्व्वीविभागन्नेदयत् अन्तिकङ्कुर्व्वत् अन्तिक शब्दात् समीपवाचिनः तत्करोतीति णिच् इष्ठवद्भावादन्तिक

वाढयोर्नेदसाधाविति नेदादेशः पश्चाण्णट् शतरि शप् श्यादेशः प्राप्तं विषयीकृतं चोर्व्वीविभागं भूविभागम् अतिरयेण अतिवेगेन द्रवयत् दूरीकुर्व्वत् पश्चाद्भागेन दूरशब्दात् पूर्व्वस्मिंश्च इष्ठवद्भावे च स्थूलदूरेत्यादिना यणादिपरलोपः पूर्व्वस्य च गुणः पश्चात्तथा एव लडादयः। क्लमरहितम् अपगतश्रमम् अचेतत् कियद्दूरमागता ऽहमित्यबुध्यमानम् चितीसंज्ञान इत्येतस्य शतरि रूपम्। अनीरजा नीरजाः कारितेति अरुर्मन इत्यादिना च्चावन्त्यलोपः। अस्य च्चाविति ईत्वम् नीरजीकारिता च्मा भूमिर्यस्यामयोध्यायाम् तां सिक्तसम्मृष्टभूतलामित्यर्थः। उपहितशोभाङ्क्वध्वजपताकाभिरारोपितशोभाम्॥५५॥

इति भट्टिकाव्यटीकायाञ्जयमङ्गलाख्यायाम्प्रकीर्णकाण्डे सीतापरिणयो द्वितीयः सर्गः॥

अथेत्यादि॥ अथानन्तरं बलं दशरथसैन्यं तूर्णं शीघ्रं अयोध्यां भं०
आयात् आङ्पूर्व्वाद्यातेर्घी। त्वरतेः क्ते श्विवावमवज्वरेति उठा सह वस्य ऊट् स्नुत्वाद्योदिति क्तस्य नत्वं। कीदृशं पुरुजवयोगात् प्रचुरजवयोगात् दूरसंस्थं नेदयदन्तिकं कुर्व्वत् लेःछत्याख्याने ञिः वाढान्तिकेति नेदादेशः अतिरयेण अतिवेगेन प्राप्तं उर्व्वीविभागं द्रवयत् दूरं कुर्व्वत् ञिः द्रवादेशः। क्लमरहितं अतिहर्षात् अपगतश्रमं अतएव अचेतत् कियद्दूरमागतमित्यजानत् चितीसंज्ञाने शतृः। कीदृशीमयोध्यां अनीरजा नीरजाः कारिता निर्धूलीकारिता च्मा भूमिर्यस्यां सिक्तसंमृष्टभूतलामित्यर्थः मनस्चुरिति चौ सलोपः उपहितशोभां ध्वजपताकादिभिः प्रापितदीप्तिं॥५५॥

इति भरतमल्लिककृतायां मुग्धबोधिन्यां भट्टिटीकायां श्रीराम परिणयो नाम द्वितीयः सर्गः॥

बधेन संख्ये पिशिताशनानां क्षत्रान्तकस्याभिभवेन चैव। आढ्यम्भविष्णुर्यशसा कुमारः प्रियम्भविष्णुर्न स यस्य नासीत् ॥१॥

ज०म० बधेनेत्यादि। संख्ये संग्रामे पिशिताशनानां राक्षसानां पिशित मांसम् अशनं येषामिति तेषां बधेन हननेन हनश्च बध इति अप् प्रत्यये बधादेशः कृत्प्रयोगे कर्म्मणि षष्ठी क्षत्रान्तकस्य परशुरा मस्य अभिभवेन पराजयेन च स्वरादौ पठ् चैवशब्दो निपातसमु
म दायः समुच्चये तेन हेतुभूतेन यशसा आढ्यम्भविष्णुः अनाढ्य आढ्यो भूतः कर्त्तरिभुव इति खिष्णुच् अरुर्द्विषदिति मुम् कुमारो यस्य न प्रियम्भविष्णुः यस्यापि प्राक् प्रियो न जातः पश्चादपि तथै व न प्रियीभूतः स नासीत् न बभूव ॥१॥

भ० बधेनेत्यादि। संख्ये युद्धे पिशिताशनानां राक्षसानां बधेन क्षत्रि याणामन्तकस्य परशुरामस्य अभिभवेन च हेतुना यशसा आढ्य म्भविष्णुः समृद्धोऽभवन् कुमारो रामो यस्य न प्रियम्भविष्णुः स ना सीदेव सर्व्वस्यैव प्रिय इत्यर्थः एवशब्दो नासीदित्यत्रान्वितः चैव शब्दः समुच्चये वा। अनाढ्य आढ्यो भवति इति प्रागप्रियोऽपि भूत्वा पश्चात् प्रियो भवति भुवोऽर्थे खिष्णुखुकञाविति वे खिष्णुः
भ० खित्यव्याजस्य इति मन् अरुर्द्विषदजन्तस्येति दीर्घः॥१॥

ततः सुचेतीकृतपौरभृत्यो राज्येऽभिषेक्ष्ये सुतमित्यनीचैः। आघोषयन् भूमिपतिः समस्तं भूयोऽपि लोकं सुमनीचकार ॥२॥

ततः। ततः प्रियम्भविष्णुताया अनन्तरं भूमिपतिर्दशरथो लोकं जं०म सुमनीचकार किमयं सम्यक् पालयिष्यति नवेति असुचेतसः पौरा भृत्याश्च जाताः ते सम्यक् पालनात् सुचेतसः कृता येन स सुचेतीकृतपौरभृत्यः भूयोऽपि पुनरपि लोकं समस्तं सुमनीचकार कथमित्याह राज्ये राजकर्मणि पालने रक्षणे सुतं रामं अभिषेक्ष्ये तदभिषेकङ्करिष्यामीति सिचेरभयपदित्वात्तङ् अनीचैर्महता ध्वनिना आघोषयन् घोषणाङ्कारयन् सुचेतीसुमनीशब्दौ अरुर्मन इत्यादिना साधू ॥२॥

तत इत्यादि। ततोऽनन्तरं अहं राज्ये राजकर्मणि सुतमभि भ० षेक्ष्ये अभिषिक्तं करिष्ये इति अनीचैरुच्चैराघोषयन् भूमिपतिर्दशरथः समस्तं लोकं भूयः पुनरपि सुमनीचकार असुमनसं सुमनसं कृतवान्। कीदृशः असुचेतसः सुचेतसः कृताः पौरा भृत्याश्च येन स तथा अभिषेककाले किमयं सम्यक् परिपालयिष्यति नवेत्याशङ्कया पौरभृत्यानामसुचेतस्त्वमासीत् सम्यक् पालनात् तेषां सुचेतस्त्वं कृतं रामस्य प्रियम्भविष्णुतया तदभिषेकमदृष्ट्वा पुनः पुनरसुमना लोक आसीत् रामाभिषेकाघोषणया पुनः पुनः सुमनसं चकार सुचेतीसुमनीशब्दौ पूर्ववत् मनश्चक्षुरित्यादिना सिद्धौ सिच्पयोगेऽञ् चरणे चङिति कङ्॥२॥

आदिक्षदादीप्तकृशानुकल्पं सिंहासनं तस्य सपादपीठं। सन्तप्तचामीकरवल्गुवज्रं विभागविन्यस्तमहार्घरत्नं ॥३

ज॰म॰ आदिक्षत्। तस्य रामस्य सिंहासनमादिक्षत् आदिष्टवान् एवं विधं कारयेति। दिशेः स्वरितेतो लुङि शलइगुपधादित्यादिना क्सः अकर्त्तृगामिक्रियाफलत्वात्तिप् आदीप्तकृशानुकल्पञ्ज्वलिताग्नितुल्यं तस्य कारणमाह सन्तप्तचामीकरवर्णानि उत्तप्तस्वर्णवर्णानि वज्राणि यस्मिन् तथा विभागेषु विन्यस्तानि अतिमहार्घाणि रत्नानि पद्मरागादीनि यत्र सपादपीठं सह पादपीठेन ॥३॥

भ॰ आदिक्षदित्यादि। दशरथस्तस्य रामस्य सिंहासनं आदिक्षत् आदिष्टवान् दिशोऽत्र अतिसर्ज्जने टो हशमोऽनिमिजुङ इति शक् शक्राजेति षङ् षढोः कःसे इति कः कीदृशं सम्यक् ज्वलिताग्नितुल्यं त्यादेशाने इति कल्पः पादपीठेन सहितं अग्नितुल्यस्वर्णशोभितहीरकं विशिष्टदेशार्पितमहामूल्यपद्मरागादिकं ॥३॥

प्रास्थापयत्पूगकृतान् स्वपोषं पुष्टान् प्रयत्नाद्दृढगात्रबन्धान्। सभर्मकुम्भान् पुरुषान् समन्तात्पत्काषिणस्तीर्थजलार्थमाशु ॥४॥

भ॰ ज॰म॰ प्रास्था। तीर्थजलार्थम्पुरुषान्प्रयत्नात् आदरेण समन्तात्

र्व्वासु दिक्षु आशु शीघ्रमास्थापयत् प्राहिणोत्। प्रपूर्व्वस्तिष्ठतिर्गमने वर्त्तते तस्य हेतुमण्यन्तस्य लङि रूपं पूगकृतान् अपूगाः पूगाः कृता इति श्रेण्यादिषु च्व्यर्थवचनमिति समासः सङ्घीकृतानित्यर्थः स्वपोषम्पुष्टान् स्वपुष इति णमुल् अमैवाव्ययेनेति समासः यथाविध्यनुप्रयोगश्च। दृढो गात्रबन्धो येषान्तान् संयतकायान् महाभारोद्वहनक्षमत्वात् सहेमकुम्भान् समुवर्णकलसान् पत्काषिणः पादौ कषितुं हिंसितुं शीलं येषामिति सुप्यजातौ णिनिः हिमकाषिहतिषु चेति पदादेशः पदातीनित्यर्थः। आशिति कृवापाजीत्यादिना उण् ॥४॥

प्रास्थापयदित्यादि। दशरथस्तीर्थजलार्थं समन्तात् सर्व्वासु भ०
दिक्षु आशु शीघ्रं पुरुषान् प्रयत्नात् आदरात् प्रास्थापयत् प्रपूर्व्वस्थाधातुर्गत्यर्थः घो ञिः प्रेरणे ष्ठीसीति पन् पूगकृतान् अभिधानात् अपूगाः पूगाः कृता इति च्व्यर्थे समासः संघीकृतानित्यर्थः स्वपोषं यथास्यात्तथा पुष्टान् स्वानां ज्ञातीनां पोषो यत्र पोषणक्रियायां पोषो घञन्तः गतार्थात् पुषेणम् तदनुप्रयोगश्चेति पाणिनीयादयः तन्मते स्वेन धनेन पुष्टानित्यर्थः दृढो गात्राणां बन्धो येषां भारोद्वहनक्षमत्वात् स्वर्णकलससहितान् पादकषणशीलान् कषबधं ग्रहादित्वात् णिन् पादचारिण इत्यर्थः। अत्र पादस्य पदादेश इति पाणिनीयादयः स्वमते पद्शब्दोऽस्ति पदंघ्रिश्चरणोऽस्त्रियामित्यमरः केन उभ्यते पूर्य्यते इति कुम्भो निपातनात् ॥४॥

उत्तांप्रचक्रुर्नगरस्य मार्गान् ध्वजान् बबन्धुर्मुमुचुः स्वधूपान्। दिशश्च पुष्पैस्सकरुर्व्विचित्रैरर्थेषु राज्ञा निपुणा नियुक्ताः ॥५॥

ज०म० उच्चान्। ये निपुणा अर्थेषु कार्य्येषु राज्ञा दशरथेन नियुक्ताः अधिकृतास्ते नगरस्य मार्गान् पथः उच्चान् सेकवतः प्रचक्रुः। उच्चणमुच्चा गुरोश्च हल इत्यकारः सा विद्यते येषामित्यर्श आदिभ्यो ऽच् इजादेश्च गुरुमत इत्यादिना आम्प्रत्यये प्रचक्रुरित्यनुप्रयोगो न घटते कृञ्चानुप्रयुज्यते इत्यनुशब्दस्य व्यवहितनिवृत्त्यर्थत्वात् अजान्बबन्धुः उच्छ्रायितवन्तः मुमुचुः धूपान् आकाशे घटिकादिभिर्धूपान्मुमुचुः प्रमुक्तवन्तः। दिशश्च पुष्पैश्चकरुः छादितवन्तः कृ विक्षेप इत्यस्य लिटि ऋच्छत्यृतामिति गुणः विविधैः नानाप्रकारैः ॥५॥

भ० उच्चानित्यादि। अर्थेषु प्रयोजनेषु राज्ञा नियुक्ता निपुणाः कर्म्मकुशला जना नगरस्य मार्गान् उच्चान्प्रचक्रुः सिक्तवन्तः उक्ष सेचने र्वीजादित्याम् भस्कृत्याम इतिसूत्रेणाम् इति पक्षेप्येवं रूपसिद्धौ अनुग्रहणं उपसर्गक्रियाविशेषणव्यवधानेऽपि तदनुप्रयोगज्ञापनार्थं इति रामानन्दाचार्य्येण व्याख्यातं तेनात्र तेनैव सोपसर्गस्य कृञो ऽनुप्रयोगः। क्रमदीश्वरेण तु सप्रादिकृभ्वस्तिभिर्व्येति सूत्रं कृत्वा अयमेव श्लोको निदर्शितः। केचित्तु नगरस्य उच्चां सेकं प्रचक्रुः भग्नान् मार्गान् ध्वजांश्च बबन्धुरित्याहुः। जयमङ्गलादिस्तु उच्चानिति पठित्वा उच्चणमुच्चा मास्त्येषामिति अर्श आदित्वाद् इति व्याख्यातं। ध्वजान् बबन्धुः उत्थापितवन्तः खे आकाशे धूपान् मुमुचुः त्यक्तवन्तः पुष्पैर्दिशश्चकरुः छादितवन्तः कृश विक्षेपे ऋतो णुः कित्वामिति णुः ॥५॥

मातामहावासमुपेयिवांसं मोहादपृष्ट्वा भरतं तदानीं। तत्कैकयी सोढुमशक्नुवाना ववार रामस्य वनप्रयाणं ॥६॥

माता। तत्पूर्व्वाक्रमभिषेकसंविधानं सोढुमशक्नुवाना असमर्था ज०म
सा कैकयी रामस्य वनप्रयाणम्ववार प्रार्थितवती राजा इत्य
र्थात्। सहेः शक्नोतावुपपदे शकधृषेत्यादिना तुमुन् तत्र नञा स
मर्थस्य प्रतिषेधेऽपि न दोषः प्रतिषेधस्य बहिरङ्गत्वात् शक्नोतेः
परस्मैपदित्वात् शानच् नास्ति ताच्छील्यवयोवचनेत्यादिना चानश्
स्वादित्वाच्छ्नुः अचिश्नुधात्वित्यादिना उवङ् किं कृतवतीत्याह तदा
नीम्प्रार्थनाकाले देशान्तरावस्थितत्वात् किमेवं क्रियते न वेति न
भरतम्पृष्टवती। देशान्तरावस्थितिन्दर्शयन्नाह मातामहावासमि
ति मातुः पिता मातामहः पितृव्यमातुलेत्यादिना निपातनात् डा
महच्। आवासः निलयम् आवसन्त्यस्मिन्निति अधिकरणे घञ्।
उपेयिवांसम् उपेयिवान् नाश्वाननूचानश्च इत्यादिना निपाति
तः मोहादज्ञानात् दूतप्रेषणेनापृष्ट्वा रामस्येति कर्त्तरि षष्ठी व
नाय प्रयाणङ्गमनमिति चतुर्थीति योगविभागात्समासः। गत्य
र्थकर्म्मणीत्यादिना चतुर्थी परत्वात्कृल्लक्षणया षष्ठ्या भवितव्य
मिति चेत् न पुनर्द्वितीयाग्रहणात्परामपि षष्ठीम्बाधित्वा द्विती
यैव यथा स्यादिति। यद्येवन्द्वितीयैव स्यात् न चतुर्थी नैष दोषः द्वि
तीयाग्रहणस्योपलक्षणार्थत्वात् तथा च वृत्तावुभयमुक्तं ग्राम
ङ्गन्ता ग्रामाय गन्तेति ॥६॥

मातामहेत्यादि। तदानीं तस्मिन् समये तत्पूर्व्वाक्रमभिषे भ०
कविधानं सोढुमशक्नुवाना असमर्था कैकयी मोहादज्ञानात
भरतं अपृष्ट्वा रामस्य वनप्रयाणं ववार राजानं प्रार्थितवती। भ
रतं किम्भूतं मातामहावासमुपेयिवांसं उपगतं अपृष्ट्वेत्यत्र हेतुर
यं एतेन भरतदोषपरिहारः कृतः मातृपितृभ्यां तत्पितरि डाम
हच् निपातनात् आवसन्त्यस्मिन् आवासो गृहं अधिकरणे घञ्

उपपूर्व्वाद्दिनः क्वसुः वसोर्धसेकाजितोम् खेःकितिर्घ इति घंः थि नाऽच्यणाविति यादेशः सहेश्चतृमि ह्रोढःभाविति हस्य ढः ढभा त्तथोरिति तस्य धः ष्टुभिरिति धस्य ढः। सहवहोदोढीति अत ओत्वं ढ्रोढ्लीति ढलोपः अकृनिहअतौ अक्रिवयस्ताच्छील्ये इति अतुः आनः वनाय वनस्य वा प्रयाणं वनप्रयाणं गत्यर्थमन्यढ इति चतु र्थी ढघेक्ततोति क्तप्रयोगात् ढे षी अनयार्व्विवचाधीनत्वात् चतु र्थ्या षष्ठ्या वा विग्रहः॥६॥

कर्णेजपैराहितराज्यलोभा स्त्रैणेन नीता विकृतिं लघिम्ना। रामप्रवासे व्यमृशन्न दोषं जनापवादं सन रेन्द्रमृत्युं॥७॥

म

ज॰म॰ कर्णे। कर्णे जपन्ति कर्णेजपाः सूचकाः मन्थरादयः स्तम्बकर्ण योरित्यच् तत्पुरुषे कृतिबहुलमिति सप्तम्या अलुक् तैराहितः आनायिता राज्यलोभो यस्याः सैवं स्त्रैणेन स्त्रिया अयं स्त्रीपुंसा भ्यान्नञ्स्नञाविति नञ् लघोर्भावो लघिमा पृथ्वादिभ्य इमनिच् टिलोपः तेन विकृतिमन्यथात्वन्नीता कैकयी रामप्रवासे सति दोष न्न व्यमृशत् नालोचितवती मृश आमर्शने इति तौदादिकस्य ल ङि रूपम् किंस्वरूपन्दोषम् जनापवादं लोकवैमुख्यं राज्यार्हो ज्येष्ठः पुत्रोऽनया प्रवाजित इति। नरेन्द्रस्य दशरथस्य मृत्युना सह वर्त्तमानम्॥७॥

भ॰ भ॰ कर्णजपैरित्यादि॥ कैकयी रामप्रवासे जनापवादरूपं दोषं न व्यमृशत् नालोचितवती मृशश्री मृश्नि राजार्होज्येष्ठोऽनया नि ष्काशित इति लोकापवादः किम्भूतं नरेन्द्रस्य दशरथस्य मृत्य

सा सहितं दोषामालोचने हेतुगर्भविशेषणमाह कर्णेजपैः पिशुनै र्मन्थरादिभिराहित आरोपितो राज्यस्य लोभो यस्याः कर्णे जपन्ति इति पचादित्वादच् अभिधानात् सप्तम्या अलुक्। परकीयबुद्ध्या दोषकर्तृत्वे हेतुमाह स्त्रैणेन स्त्रीसम्बन्धिना लघिम्ना लघुत्वेन विकृतिं प्रकृतेरन्यथात्वं नीता प्रापिता स्त्रिया अयं स्त्रैणः पुंस्त्रियोरिति नञ् लघोर्भावो लघिमा गुणादिमनुभावे इति इमन् ओमंतुकि दिति डिले टेर्लोपः ॥ ७॥

वसूनि देशांश्च निवर्त्तयिष्यन्रामं नृपः संगिरमाण एव। तयावजज्ञे भरताभिषेको विषादशङ्कुश्च मनो निचख्ने ॥ ८ ॥

वसूनि। रामं निवर्त्तयिष्यन् रामं निवर्त्तयितुं वसूनि द्रव्याणि देशांश्च सङ्गिरमाण एव प्रतिजानान एव दास्यामीति नृपो राजा कैकेय्या तदनङ्गीकरणादवजज्ञे अवज्ञातः ज्ञा इत्ययन्धातुरव पूर्वोऽवज्ञाने वर्त्तते तस्मात्कर्म्मणि लिट् गमहनेत्युपधालोपः तच वृतेर्हेतुमण्णन्तात्क्रियार्थोपपदे लट्। सङ्गिरणञ्च क्रिया गिरे सौदादिकादवाङ्ग इति अधिकृत्य समःप्रतिज्ञान इति तङ् शा नच् ऋत इत् आनेमुक्। इदञ्चापरमनुष्ठितन्तया भरतो राज्ये ऽभिषिच्यतामिति भरताभिषेको मनो मनसि निचख्ने नि खातः कर्म्मणि लिट् गमहनेत्यादिना उपधालोपः तथा विषादः शङ्कुरिव शल्यमिव निचख्ने ज्येष्ठत्वात् नायं समभिषिच्यत इति वि

पादः। संग्रामात्किल परिश्रान्तमागतन्दशरथङ्कैकेयी परिचचार तेन परितुष्टेनोक्तं द्विकन्ते दास्यामीति सा प्राह यदार्थयिष्यते तदा यूयन्दास्यथेति सा तदवसरमुद्भाव्य वरद्वयमार्थितवती एको रामस्य वनगमनं द्वितीयो राज्ये भरतो ऽभिषिच्यतामिति। ८॥

भ० वसूनीत्यादि। रामं निवर्त्तयिष्यन् निवारयितुं कैकय्यै वसूनि धनानि देशांश्च संगिरमाणः रामस्तिष्ठतु सर्व्वं दास्यामीति प्रतिजानान एव नृपो दशरथस्तया कैकय्या तदनङ्गीकारात् अवजज्ञे अनादृतः पूर्व्वप्रतिज्ञातस्य तदभिमतप्रदानस्यानिर्व्वाहात् ज्ञागबोधने अवपूर्व्वो ऽयमनादरे वर्त्तते कर्म्मणि ठीवृतेः प्रकरणेऽष्यस्मात् अनुः गिरतेस्तौदादिकात् समः प्रतिज्ञायामिति सं भरताभिषेकस्तस्मंश्रयितेन विषादरूपशङ्कुश्च मतो मनसि निचख्ने चिन्तितः। यद्वा दशरथस्य नृपस्य मनसि भरताभिषेको निचख्ने आरोपितः तत्प्रार्थनायाः पूर्व्वं प्रतिज्ञाभयेन तत्स्वीकारात् शङ्कुरिव यो विषादः सोऽपि निचख्ने तत्प्रभृति विषादावतारात् खनेः कर्म्मणि ठो वनगमजनेत्युङ्लोपः। पुरा परितुष्टेन राज्ञा कैकय्यै वरद्वयं देयमिति प्रतिश्रुतं तच्चेदानीमेकं रामस्य प्रवासमपरं पुत्रस्य राज्यं कैकयी प्रार्थयामासेति प्रसिद्धिः॥ ८॥

ततः प्रविव्राजयिषुः कुमारमादिक्षदस्याभिगमं वनाय। सौमित्रिसीतानुचरस्य राजा सुमन्त्रनेत्रेण रथेन शोचन्॥ ९॥

ज०म० ततः। कैकेयीप्रार्थनानन्तरं राजा कुमारं रामं प्रविव्राज

षिषुः प्रव्रजनमेनम्प्राजयितुमिच्छुः व्रजेर्हेतुमण्यन्तात्सन् अस्य कुमारस्य रथेन वनायाभिगममभिगमनम्। पच्छवृद्दिनिष्ठिगम स्वेत्यप् आदिषत् आदिष्टवान् अस्येति कर्त्तरि षष्ठी वनायेति गत्यर्थकर्म्मणीति चतुर्थी सौमित्रिसीतानुचरस्य लक्ष्मणसीतास हायस्य सुमित्राया अपत्यम् वाह्वादित्वादिञ् सहचरत्वेनाभ्यर्हि तत्वात् पूर्व्वनिपातः अनु पश्चाच्चरतीति अनुचरः भिक्षासेनाद्दा येषुचेति चकारस्यानुक्तसमुच्चयार्थत्वात् टः अनुचरस्यानुचरी च पुमान् स्त्रियां तावनुचरौ सौमित्रिसीते अनुचरौ सहायौयस्य। कालापिकास्ततोऽन्यत्रापि पठन्ति अनधिकरणोपपदे चरेष्टः इ त्यर्थः। नीयतेऽनेनेति नेत्रं लोचनं दाम्नीत्यादिना ष्ट्रन् सुम न्त्रनामा रथवाहको नेत्रमिव यस्य रथस्य तदग्रात्तस्य प्रवृत्तेः शोचन् परिदेवयमानो राजा ॥ ८ ॥

तत इत्यादि। केकयीप्रार्थनानन्तरं राजा शोचन् कुमारं रामं भ० प्रव्रज्यां कारयितुमिच्छुः अस्य रामस्य रथेन वनाभिगमनं आदि ष्टवान् इगुपधइत्यादिना सक्। व्रजेः प्रेरणे ण्यन्तात् वनायेति गत्यर्थमन्यठे इति कर्म्मणि चतुर्थी श्रीपतिदत्तादयस्तु नित्यं कर्म्म णि तुम्प्रयोगिनश्चतुर्थीत्याहुः वनं गन्तुमित्यर्थः कीदृशस्य राम स्य सीतालक्ष्मणसहायस्य सुमित्राया अपत्यं इति वाह्वादित्वात् ण्णः अनु चरतीति अनुचरः कर्म्मप्रतिरूपकोऽयमनुशब्दः तेन इन चरगष्टक् इति टक्। रेफेकेकौच परे इति निर्द्दिशता स्त्रीपुंसयो स्तन्मात्रकृतभेदयोरेकशेषः पुमान् भवतीति सूचितं तेन अनुचरश्च अनुचरी च अनुचरौ सौमित्रिसीते अनुचरौ यस्य स तथा। यद्वा सौमित्रिसीताभ्यामनुचर्य्यते यः स तथा घञ्जलनटोघे इति कर्म्मणि

अन्प्राग्भावस्य विवक्षाधीनत्वात् सौमित्रेः प्राग्भावः अभ्यर्हितस्य प्राग्भाव इति ये वदन्ति तन्मते यद्वा सहचरत्वेन सौमित्रेरभ्यर्हितत्वं कीदृशेन रथेन सुमन्त्रो नाम कश्चित् स नेत्रो नायको यस्येति तेन नेत्रं रथे च नायाश्च नेत्रो भेत्तरि भेद्यवदिति विश्वः। सुमन्त्रो नेत्रं चक्षुरिव यस्येति केचित् नीत्वः वासुमिति चः ॥९॥

केचिन्निनिन्दुर्नृपमप्रशान्तं विचुक्रुशुः केचन सास्त्रमुच्चैः। ऊचुस्तथान्ये भरतस्य मायां धिक्कैकयीमित्यपराजगाद ॥१०॥

ज०म० केचित्॥ राज्ञा वनगमने समादिष्टे सति केचिज्जना नृपन्निनिन्दुः कुत्सितवन्तः णिदि कुत्सायाम् अप्रशान्तं वृद्धभावेऽपि स्त्रीवशम्। केचन केचित्सास्रं सवास्पमुच्चैः सष्ठु विचुक्रुशुः सुतरामाक्रन्दितवन्तः तथान्ये भरतस्य मायां शाठ्यमूचुः उक्तवन्तः। तत्कृताऽयं प्रयोगो येनात्मस्मरणार्थं मातामहनिवासे स्थित इति। अपरा धिक्कैकयीं ययैवमनुष्ठितमिति जगाद गदितवान् धिगुपर्य्यादिषु त्रिष्विति धिग्योगे द्वितीया॥१०॥

भ० केचिदित्यादि। राज्ञि रामस्य वनगमनमादिष्टवति सति केचिज्जना नृपं निनिन्दुः णिदि कुत्सने कीदृशं अप्रशान्तं वार्द्धकेऽपि स्त्रीवशीभूतत्वात् शान्तिरहित केचन सास्त्रं सवास्पं उच्चैर्महाध्वनिना विचुक्रुशुः क्रन्दितवन्तः केचित् केचन इत्यत्र किमः स्यन्ताच्चिचणाविति विद्यानिवासस्त्रेण चिचणौ किम्वा असाकल्येतुचिचणाविति

कोपात् विभक्त्यन्तकिम: परमनयो: प्रयोग: अन्ये भरतस्य मातां प्राप्यं जप: मातरमेवं राज्यलोभाय नियुज्य स्वदोषहरणार्थं मा तामहगृहं गतवानिति मायार्थ: । अपर: कश्चित् केकर्यां धिगिति जगाद धिक्त्वमयेति द्वितीया धिगिति निन्दायां अपर इत्यत्र एकवचनात् अन्य एव लोक: केकयीं निन्दति वहवस्तु राजानं केकय्या: स्त्रीत्वेन स्वभावतोमन्दबुद्धित्वं नृपस्य तु तथाविधस्यापि स्त्रीवचनात्मतिभ्रंश इति महान् दोष इति व्यज्यते तेन प्रक्रमभ ङ्गोऽत्र न दोषावह: ॥१०॥

गतो वनं श्वोभवितेति राम: शोकेन देहे जनतानि मात्तं । धीरास्तु तत्र च्युतमन्यवोऽन्ये दधु: कुमारानु गमे मनांसि ॥११॥

गतो ॥ श्व आगामिनि दिवसे वनङ्गन्ता रामो भवितेति तास्ज नता जनसमूह: ग्रामजनबन्धुइत्यादिना ताल् देहे दग्धा कर्मणि लिट् अतएकहलित्येत्वाभ्यासलोपौ गत इति भूतकाल: श्वोभ वितेति भविष्यत्कालेन सम्बध्यमान: साधु: धातुसम्बन्धे प्रत्यया इति । ये तु तत्र धीरा: ते च्युतमन्यवो विगतशोका: सन्त: कुमा रानुगमे कुमारस्य पश्चाद्गमननिमित्तं मनांसि दधु: कृतवन्त: राममनुव्रजाम इति निमित्तात्कर्मसंयोगे सप्तमीति । मनां सीति कर्मणा योगात् ॥ ११ ॥ क०

गत इत्यादि । राम: श्वो भाविदिने वनं गतो भविता इति हेतो: भ० शोकेन जनता जनसमूहोऽत्यर्थं देहे दग्धा दहे: कर्मणि ठो नृफ

सेति अत एवं खिलोपश्च। अनद्यतनादित्वात्स्मनात्तः संघे क्लीत्वम भिधानात् भवितेति भवद्भूतभक्ष्ये इति भविष्यति डौ स्वःप्रभृति भ विष्यत्कालमात्रे अभिधानात् यद्दति न व्यर्थं तत्सम्बन्धात् गत इति धातुसम्बन्धे प्रत्यया इतिवचनात् भविष्यत्कालेऽपि साधुः अ न्ये तु तत्र ये धीरास्ते च्युतमन्यवो विगतशोकाः सन्तः कुमारस्य रा मस्य पश्चाद्गमने मनांसि दधुः धृतवन्तः धाञ्रूप्याकूपं अनुगम इति ढेनार्थादिति सप्तमो त्रिषयसप्तमो वः ॥ ११ ॥

प्रस्थास्यमानावुपसेदुषस्तौ शोशुच्यमानानिदमूच तुस्तान्। किं शोचतेहाभ्युदये वतास्मान् नियोगलाभे न पितुः कृतार्थान् ॥ १२ ॥

ज०म० प्रस्था। तौ रामलक्ष्मणौ प्रस्थास्यमानौ गमिष्यन्तौ समव प्रविभ्यःस्थ इति तङ् जनान् इदं वक्ष्यमाणमूचतुः उक्तवन्तौ ब्रु वीत्यर्थग्रहणात् वचेर्द्विकर्मकता उपसेदुषस्तौ ढौकितवतः ज नान् भाषायांसदवसेत्यादिना क्वसुः। शोशुच्यमानान् अत्यर्थं शोकङ्कुर्व्वतः भृशार्थे यङ् किमूचतुरित्याह किं शोचतेति हे जनाः कस्मादस्मान् शोचत परिदेवयध्वम् विधावपृर्व्वार्थप्रकाशने लोट् इहाभ्युदये वतशब्दो विस्मये तस्मिन् आश्चर्य्यभूते अभ्युदये वृद्धौ सत्याम्। कुत इत्याह पितुर्न्नियोगलाभेन वनगमना ज्ञालाभेन कृतार्थान् लब्धप्रयोजनान् कृतार्थत्वादशोच्या वय मित्यर्थः ॥ १२ ॥

प्रस्थास्यमानावित्यादि। प्रस्थास्यमानौ गमिष्यन्तौ तौ रामल- भ०
क्ष्मणौ उपसेदुषः उपसन्नान् जनानिदं वक्ष्यमाणं ऊचतुः। किम्भू
तान् शोशुच्यमान् पुनःपुनरतिशयेन शोचतः सूचसूचेत्यादिना
यङ् लेन्ः प्रस्थास्यमानाविति प्रतिज्ञानिर्व्वयेत्यादिना संपूर्व्वात्
तिष्ठतेर्म्भ्रं स्यमानः। उपसेदुष इति उपपूर्व्वात् सदेर्भाषमवदिति क
सुः वसोर्घमे इतीम् तृफलेति अतएत्वं खिलोपश्च वसोर्म्सः:धेमपी
ति उः किमूचतुरित्याह इहाभ्युदये वृद्धौ सत्यां किमस्मान् यूयं
शोचत विधिनिमन्त्रणेत्यचादिशब्दात् विधावपूर्व्वप्रकाशने गी व
न्तेति खेदानुकम्पासन्तोषविस्मयामन्त्रितेष्वपीति वर्द्धमानः अभ्युद
यः कृत इत्याह पितुर्नियोगलाभेन वनगमनाज्ञालाभेन कृता
र्थान् लब्धप्रयोजनान् अस्मानिति इयोरप्यस्मदो वहुत्वमिति परः
स्मते वाद्याध्यात्मिकभाववहुत्वविवक्षया सीतान्वितत्वाद्वा ॥१२॥

अस्राक्ष्ट योऽयस्य भयेष्वरक्षीद्यः सर्व्वदासानपुषत्स्वपो
षं। महोपकारस्य किमस्ति तस्य तुच्छेन यानेन वन
स्य मोक्षः ॥१३॥

अस्राक्ष्ट यः। अस्राक्ष्ट जनितवान् सृजेर्दैवादिकस्यात्मनेपदित्वात् ज०म०
लुङि रूपम् न तौदादिकस्य परस्मैपदित्वात् सृजिदृशोरित्यम्
यस्य भयेषु सत्सु अरक्षीत् पालितवान् रक्षपालन इत्यस्य लुङि
रूपम् यः सर्व्वदा सर्व्वकालं सर्व्वैकान्येत्यादिना दाप्रत्ययः य
सापुषत् स्वपोषन्धनेनापुषत् पुष्टवान् पुषेर्लुङि रूपम् पुषादित्वा
देवाङ् स्वपुष इति णमुल् अमैवाव्ययेनेति समासः यथाविध्यनु

प्रयोगश्च तस्य पितुः सम्बन्धिनो महोपकारस्य किमस्ति भोचः प्र त्युपकारो नैवेतिभावः केनेत्याह तुच्छेन अभारेण वनस्य यानेन यातेर्भावे ल्युट् वनस्येति शेषसामान्ये षष्ठी असम्बन्धायाम् षष्ठ्या गत्यर्थकर्म्मणि चतुर्थ्या बाध्यमानत्वात् ॥ १३ ॥

भ० अस्त्रष्टेत्यादि। योऽस्मान् अस्त्रष्ट जनितवान् सृष्टौ विसर्गे य श्च भयेषु अरचीत् रचितवां रूपं यः सर्व्वदा सर्व्वकाले अस्मान् स्व पोषं अपुषत् स्वेन धनेन पुष्टवान् स्वपोषमिति षणमाभीक्ष्ण्ये इत्यत्र वा शब्दस्य व्यवस्थावाचित्वात् षणम् तदनुप्रयोगस्त्वभिधानात् अपुष दिति शासत्विह्युदिति ङः सर्व्वदा इति सर्व्वैकात्काले दाप् तस्य पितुः सम्बन्धिनो महोपकारस्य तुच्छेन लघीयसा वनस्य गमनेन किं मोचः प्रत्युपकारोऽस्ति नास्त्येवेतिभावः वनस्येति ढघे कर्त्तरि कर्म्मणि षष्ठी ॥ १३ ॥

विद्युत्प्रणाशं स वरं प्रनष्टो यद्गोर्द्धशोषं तृणवद्विशुष्कः। अर्थे दुरापे किमुत प्रवासे न शासने ऽवास्थित यो गुरूणां ॥ १४ ॥

ज०म० विद्युत् ॥ अर्थे कार्य्यविशेषे दुरापेऽपि कष्टप्राप्येऽपि ईषत्कृच्छ्रे खित्यादिना खल गुरूणां यच्छासनमादेशः तस्मिन् योनावा स्थित नावस्थितवान् अवपूर्व्वात्तिष्ठतेर्लुङ् समवेत्यादिना तङ् स्थाघोरित्वंति किच्चमित्त्वघ्याह्रस्वादङ्गादिति सिचोलोपः स वरं विद्युत्प्रणाशं प्रनष्टः विद्युदिवोत्पत्त्यनन्तरमेव विनाशङ्गतः उ पमाने कर्म्मणि चेति चकारात् कर्त्तौर्जीवपुरुषयोरित्यतः

कर्त्तृग्रहणानुवृत्तौ कर्त्तृवाचिनि विद्युच्छब्दे उपपदे णमुल् उप मर्गादसमासे इत्यादिना णलम् चकेत्यथवा स ऊर्द्धशोषन्तृण वद्विस्पष्टः ऊर्द्धे शुषीत्यादिना णमुल् उभयत्रामेवेत्यादिना समा सः यथा विध्यनुप्रयोगस्य किमु प्रवासे किम्पुनः प्रवासविषये यच्छा सनन्तच तावदनवस्थितस्य सुतरामेव पूर्व्वोक्तं प्रयुज्यते ॥१४॥

विद्युदित्यादि। दुरापे दुःखेन प्राप्येऽर्थे प्रधावने गुहणां शास भ० ने श्राम्नाथां यो न अवास्थित स तस्मो स वरं विद्युत्प्रणाशं प्रनष्टो विद्युदिव उत्पत्त्यनन्तरमेव नष्टः चकमेत्यच वाशब्दस्य व्यवस्था वाचित्वात् कर्त्तुरुपमानात् नष्टोगतार्थो णमम् तदनुप्रयोगस्य भिधानात् प्राप्तवनेोप इति शान्तनभोषत्वं दुराप इति ईषद्दुःसोः खल्भावहे इति खल् अवास्थितेति अवपूर्व्वात्तिष्ठतेः प्रतिज्ञानिर्णय इति सं चाचिः स्थाहार्द्धिष्टीमेनणुरिति ङिःसस्य गुणाभावः झम् स्मादिति सेर्लोपः। शासनं राजदत्तार्थीलेख्यशास्त्राणां शास्त्रिसि ति विश्वः। वरं मनागिष्टे देवकस्थितप्रामास्त्र्ये वरः क्षेत्रे पुनर्वसु। मनागिष्टे भवेत् क्लीवमन्ये ताऽऽसादवत्मिति रन्तिदेवः यदा अथवार्थे तृणवदूर्द्धशोषं विशुष्क ऊर्द्धशुष्क इत्यर्थः ऊर्द्धात् एवेने तार्थोच तदनुप्रयोगस्याभिधानात् किमु सुप्रवासे सुकरप्रवास विषये यत् शासनं तच योनावास्थित स किं पुनः सुतरामेव पूर्व्वो क्तं युक्तं किमुतेति क्वचित् पाठः॥१४॥

पौरा निवर्त्तध्वमिति न्यगादीत्तातस्य शोकापनुदा भवेत। मा दर्शतान्यं भरतस्य मत्तो निवर्त्तयेत्याह रथं स्म सूतं॥१५॥

जय॰ पौराः॥ हे पौराः यथागतं निवर्त्तध्वम् विधौ लोट् इति तान्न्यगादीत् उक्तवान् रामः गदेरतो हलादेरिति वृद्धिः इट इटीति सिचो लोपः तातस्य पितुः शोकापनुदाः शोकस्यापहर्त्तारो भवेत नुदः शोकयोरित्यादिना कः भवतेर्विधौ प्रार्थनायां वा लिङ् मध्यमपुरुषबहुवचनम् भरतस्य मत्तो मत्तः मत्सकाशात् अस्मदः पञ्चम्यास्तसिल् प्रत्ययोत्तरपदयोश्चेति मदादेशः अन्यं भरतस्मा दर्शत मा द्रष्टारः स्थः अपि तु योऽहं स एव भरतः स च प्रतिष्ठितः राज्यं पालयिष्यतीत्येव न्यगादीत् दृशेर्माङि लुङ् इरितो वेत्यङ् ऋदृशोऽङि गुणः निवर्त्तय रथमिति सुतस्य सुमन्त्रमाहस्म लट् स्म इति लट् ब्रुवः पञ्चानामित्याहादेशः तिपो णल् ॥ १५ ॥

भ॰ पौरा इत्यादि। हे पौराः पुरवासिनो यूयं निवर्त्तध्वं निवृत्ता भवत विधिनिमन्त्रणेति विधौ लोट्। तातस्यास्मत्पितुः शोकापहर्त्तारो यूयं भवेत विधिनिमन्त्रणेति विधौ प्रार्थनायां लोट् यासुट् परस्मैपदेषूदात्तो ङिच्चेति याशब्दस्य इत्वं शोकापनुदा इति इगुपधज्ञाप्रीकिरः क इति इगुपधत्वात् नुदः कः मत्तोऽन्यं भरतं यूयं मा दर्शत अहमिव सोऽपि पालयिष्यतीति ध्वनिः। दृशिरीप्रेक्षणे मा योगे ठी इरनुबन्धात् प्रासुलिङ्ङादिति विकल्पितोऽङः दृशोर्णुरिति गुणः मत्त इति अन्यारभ्येति पञ्चमी तसेरिति तस् वाक्त्वात् त्यदाटेरकाविति न टेरकाविति न टेरद् इत्युक्तं रामो न्यगादीत् उक्तवान् हलादेः सेम इति वृद्धिः त्वं रथं निवर्त्तयेति सूतं सारथिं सुमन्त्रमाहस्म की स्मे गातीत इति स्मेन योगेऽतीते की पञ्चतिपूप्रभृतिवृत्तेरुषेति तिपो णप् ब्रुव आहादेशः ॥ १५ ॥

ज्ञात्वेङ्गितैर्गत्वरतां जनानामेकां उषित्वा रजनीं स पौरः। रक्षन् वने वासकृताद्भयात्तान् प्रातश्छलेनापजगाम रामः॥१६॥

ज्ञात्वा। निवर्त्तध्वमित्युक्ते ये तत्रानिवृत्ताः तेषां जनानां रामो गत्वरतां गमनशीलतां ज्ञात्वा गत्वरश्चेति निपातितः तैरिङ्गितै रभिप्रायसूचकैश्चेष्टितैः इङ्गतेर्भावे निष्ठा वनेवास इति सप्तमीति योगविभागात् समासः अथवा सवासिष्विति विभाषा सप्तम्या अलुक् तेन कृतात्सिंहादिभयात् रक्षन् पालयन् तान् पौरान् सपौरः पौरैः सह एकां रजनीं उषित्वा कालाध्वनोरिति द्वितीया उषित्वेति नक्त्वासेडिति किक्त्वप्रतिषेधात् गुणो भवति प्रातः प्रातःकाले छलेन सन्ध्यावन्दनादिव्याजेन अपजगाम गतवान्॥१६॥ ज॰म॰

ज्ञात्वेत्यादि॥ निवर्त्तध्वमित्युक्तेऽपि तत्रानिवृत्तानामिङ्गितैरभिप्रायबोधकैश्चेष्टितैर्गत्वरतां गमनशीलतां ज्ञात्वा रामः सपौरः पौरैः सह एकां रात्रिं उषित्वा तान् जनान् वने वासकृताद्भयात् रक्षन् प्रातश्छलेन सन्ध्यावन्दनादिव्याजेन अपजगाम इङ्गितैरिति इगिगत्यां भावे क्तः गत्वरतामिति त्वरप् मस्य तस्य रजनीमिति देशाध्वकालेति कर्म्मसंज्ञा उषित्वेति सेमचुधेत्यादिना किन्निषेधात् पुगन्तेति गुणः वनेवास इति अकालवाचिनः अथवा सवासिष्विति सप्तम्या अलुगिति परः। समते सरसिजमित्युदाहरता क्वचित् समासे विभक्तेरलुगिति सूचितं॥१६॥ भ॰

अस्नासुरस्नं करुणं रुदन्तो मुहुर्मुहुर्न्यश्वसिषुः कवोष्णं। हा राम हा कष्टमिति ब्रुवन्तः पराङ्मुखैस्ते न्यवृतन्मनोभिः ॥ १७ ॥

ज°म° अस्नासुः॥ ते पौरा राममपश्यन्तः करुणं रुदन्तो विलपन्तः रुदिर् इत्यस्य शतरि रूपम् अस्नम् अश्रु अस्नासुः मुक्तवन्तः ष्णै लौटादिकस्य परस्मैपदिनः सिचि यमिरमिनमातामित्यम् हलन्तलक्षणा वृद्धिः चोः कुःखरि चेति चर्त्वम् मुहुर्मुहुः भूयो भूयः कवोष्णमीषदुष्णमन्तःसन्तापात् कवञ्चोष्णे इति कोः कवादेशः न्यश्वसिषुः श्वसँ लुङ् ह्म्यन्तेत्यादिना वृद्धिप्रतिषेधः अतो हलादेर्लघोरिति विकल्पस्य प्राप्तत्वात् हा राम हा कष्टं कष्टमिति ब्रुवन्तः पराङ्मुखैः पुन गतो रामस्तेन गतैर्मनोभिरित्यभूतैः न्यवृतन् निवृत्तवन्तः द्युद्भ्यो लुङीति परस्मैपदविकल्पात् द्युतादित्वादङ् ॥ १७ ॥

भ° अस्नासुरित्यादि। ते पौरा राममपश्यन्तः करुणं रुदन्तो विलपन्तः अस्नं नेत्रजलं अस्नासुः स्रवन्तः रुदन्त इति रुदरोदे शतृः अस्नासुरिति ष्णै शौचे विसर्गे स्नां सिः यमरमनमातां सक् चेति सकारस्य रः ग्रजवर्ज्जेति अनिमत्त्वात् प्रिः अक्लमेति षङ् षढोः कः सि इति कः क्लित्वादिति षः अनुस्निहेरिति अम् कवोष्णं ईषदुष्णं अन्तःसन्तापात् कवञ्चोष्णे इति ईषदर्थे कवादेशः मुहुर्मुहुर्वारं वारं न्यश्वसिषुः निःश्वसितवन्तः ह्मयन्तक्षणेत्यादौ श्वसवर्जनात् श्वसेर्न प्रिः हा राम हा कष्टमिति ब्रुवन्तः ते पौराः पराङ्मुखैराम दिगनुसारिभिरपूर्णकामत्वात् परिभूतैर्म्मा मनोभिरुपलक्षिताः सन्तो निवृत्ताः वृते र्द्युतादित्वात् द्युद्भ्यो लुङीति ङः तेनैव लोपोऽ

तोऽदेतोरित्यकारलोपः। साधनहेतुविशेषणेति विशेषणे तृतीया हा रामेति हाशब्दयोगे षष्ठ्यर्थे द्वितीया अत्र तु तदभाव इति श्रीपतिः सामान्येन हाशब्दं प्रयुज्य रामः समुच्यते इति दौर्गाः न च मुहूर्त्ताविति हादियोगे द्वितीयानिषेधार्थं क्रमदीश्वरसूत्रं सम्मते हाशब्दवाच्येन कष्टेन नात्र रामस्य योगो विवक्षितः किन्तु पौराणामेव तद्योगाभावाच्च द्वितीया॥१७॥

सूतोऽपि गङ्गासलिलैः पवित्वा सहाश्वमात्मानमनल्पमन्युः। ससीतयो राघवयोरधीयन् श्वसन् कदुष्णं पुरमाविवेश॥१८॥

सूतो। सूतोऽपि सुमन्त्रः सहाश्वमश्वैः सह अनल्पमन्युः प्रवृद्ध- ज०
शोकः राघवयोः रामलक्ष्मणयोः सरूपाणामित्येकशेषः ससीतयोः सीतासहितयोः अधीयन् स्मरन् इक्स्मरणे इत्यस्य शतरि रूपं यणादेशः अधीगर्थेति कर्म्मणि षष्ठी श्वसन् कदुष्णम् ईषदुष्णम् कवञ्चोष्णे इति चकारात् कदादेशः गङ्गातटात्प्रतिनिवृत्य पुरमयोध्यामाजगाम आगतवान् गङ्गासलिलैः आत्मनो वाह्यमाभ्यन्तरञ्च पवित्वा पवित्रीकृत्य पूङश्चेति विकल्पेनेट् पूङः क्त्वा चेति कित्त्वप्रतिषेधात् गुणः॥१८॥

सूत इत्यादि। सूतः सारथिः सुमन्त्रोऽपि गङ्गाजलैः सहाश्वं आ- भ०
त्मानं पवित्वा पवित्रीकृत्य सीतासहितयो रामलक्ष्मणयोरधीयन् स्मरन् कदुष्णं श्वसन् पुरमयोध्यां आविवेश प्रविष्टवान् अनल्पमन्युः प्रवृद्धशोकः गङ्गासलिलैः पवित्वा इत्यनेन गङ्गापर्य्यन्तं तद्

मनं ध्वन्यते पूर्व्विमुदितम् इति विभाषित इम् मेमनुपेत्यादिना क्तिनिषेधात् पुर्पूक इति गुणः वसीतयोरिति सः सोवेति वक्ष ओरौ आदेशः। राघवयोरिति समार्थेनेत्यादिना कर्म्मणि षष्ठी अधीयन्निति अधीकम्मत्यो इणदिक इति वाक्यात् यिणोऽस्य यावितियादेशः कथिम स्यात् आतिदेशिककार्य्यमनित्यमितिन्यायात् तेनाच अध्वाँ रम्वपीति इयादेशः कदुष्णमिति कत्क गचेति कोः कदादेशः॥१८॥

प्रतीयुषा पूर्दद्दृशे जनेन द्यौर्भानुशीतांशुनिराकृतेव। राजन्यनक्षत्रसमन्वितापि शोकान्धकारच्युतसर्व्वचेष्टा॥१९॥

अ०म० प्रती। जनेन रामानुयायिना प्रतीय प्रतिनिवृत्य पूरयोध्या ददृशे दृष्टा कर्म्मणि लिट् प्रतीय इति ईङ्गताविलस्य रूपन्न पुनरिणः तस्य हि तुकि प्रतीत्येति स्यात्। पत्ततुकारसिद्ध इत्येकादेशस्यासिद्धत्वात् प्रतीयुषा सा ददृशे इति पाठान्तरम् प्रतिनिवृत्तेन सा पूर्ददृशे दृष्टेत्यर्थः। अस्मिन् पाठे तु उपेयिवानित्यादिना इणः क्वसौ रूपन्दृष्टव्यमत्रोपसर्गस्यातन्त्रत्वात्। शोकोऽन्धकार इव शोकान्धकारः तेन च्युता नीतानुष्ठेयकर्म्मणि चेष्टा परिस्पन्दो यस्यां पुरि सा तथोक्ता राज्ञोऽपत्यानि राजश्वशुराद्यत् राजन्याः क्षत्रियाः येषाभावकर्म्मणोरिति प्रकृतिभावः राजन्या नक्षत्राणीव तैः समन्वितापि द्यौः भानुशीतांशुविनाकृतेव द्यौराकाशः यथा नक्षत्रसमन्वितापि रात्रौ भानुचन्द्राभ्यां विना कृता रहिता अन्धकारच्युतसर्व्वचेष्टा तद्वत्सापि भानुचन्द्रस्थानीययोः राघवयोर्विरहात्॥१९॥

प्रतीत्यादि । अनेन रामानुयायिना प्रतीय प्रतिनिवृत्य सा पू भ०
र्य्योध्या ददृशे कर्म्मणि ठी प्रतीयेति इयङ्गत्यामित्यस्य रूपं न
लिणस्तनागमप्रसङ्गात् प्रतीयुषेति पाठे प्रतिपूर्व्वादिणः क्वसुः प्र
तीयिवःशब्दस्य वसोर्व्वः सेमपीति सेमवस्थानं प्रतीयुषा प्रतिनिवृ
त्तेन जनेनपूर्ददृशे इतियोजना कीदृशी पूः शोकोऽन्धकार इव तेन
ध्वता माध्विता सर्व्वेषां चेष्टा सर्व्वा वा चेष्टा यस्यां सा तथा। राज
न्याःक्षत्रिया नक्षत्राणीव तैः समन्वितापि पूः सूर्य्यचन्द्राभ्यां रहिता
द्यौराकाशमिव यथा नक्षत्रसमन्वितापि द्यौः सूर्य्यचन्द्राभ्यां निरा
कृता अन्धकारहतसर्व्वचेष्टा तद्वत् सापि सूर्य्यचन्द्रतुल्ययोराघव
योरभावादितिभावः । राजन्य इति राज्ञां समूह इति गर्गादि
त्वात् यञ्ः मन्वर्ण्णानित्यादिना नलोपनिषेधः ॥ १८ ॥

विलोक्य रामेण विना सुमन्त्रमच्योष्ट सत्वान्नृपति
श्च्युताशः। मधूनि नैषीद्व्यलिपन्न गन्धैर्मनोरमे न व्य
वसिष्ट वस्त्रे ॥ २० ॥

विलोक्य। रामेण विना सुमन्त्रं विलोक्य दृष्ट्वा नृपतिर्दशरथः ज०म
सत्वात् स्वभावादच्योष्ट च्युतः च्यवतेरकर्म्मकाल्लुङ् गतोऽपि मद
र्थनमतिक्रम्य आगच्छेद्राम इति अस्य या आशा सा च्युता यस्य
स च्युताशः सत्वात् च्युतश्च मधूनि पातुन्नैषीत् नेष्टवान् नेटीति
सिचि वृद्धिप्रतिषेधः। गन्धैश्चन्दनादिभिर्नालिपत् लिपेर्लिपि
सिचिह्वश्चेत्यङ् मनोरमे चेतोहारिणी वस्त्रे न व्यवसिष्ट न परिहि
तवान् वस आच्छादने इत्यस्मात् लुङ् अनुदात्तेत्वात्तङ्॥ २०॥
विलोकयेत्यादि। रामेण विना सुमन्त्रं विलोक्य नृपतिर्दशरथः

बलात् स्वभावात् व्यवसायाद्वा चयोऽष्ट च्युतः च्युतोऽकर्मकात् टी गतोऽपि रामः कदाचित् पौराणामनुरोधाद्वनमतिक्रम्य आगच्छेदित्याशा च्युता यस्य स तथा मधूनि नैषीत् इषुरच्छा यां टी गन्धैश्चन्दनादिभिर्न व्यलिपत् वाससाच्छादितैति कः मनो रमं वस्त्रद्वयं न च्चवसिष्ट न परिहितवान् वसलङ्ग्आच्छादने सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुषु इति विश्वः॥२०॥

आसिष्ट नैकत्र शुचा व्यरंसीत् कृताकृतेभ्यः क्षिति पालभाग्भ्यः। स चन्दनोशीरमृणालदिग्धः शोकाग्नि नागाद्युनिवासभूयं॥२१॥

ज०म० आसिष्ट। एकत्र स्थाने शुचा शोकेन नासिष्ट नोपविष्टः आसेरात्मनेपदिनो लुङ्। कृतानि चाकृतानि चेति क्तेन नञ् विशिष्टेनानञिति समासः असमापितेभ्य इत्यर्थः क्षितिपालभा जन्ते यानि दूतप्रेषणादीनि तेभ्यः क्षितिपालभाग्भ्यः व्यरंसीत् विरतः विमुखोऽभूदित्यर्थः जुगुप्साविरामप्रमादार्थानामुपसंख्या नमिति अपादानसंज्ञा रमेर्लुङ् व्याङ्परिभ्योरम इति तिप् यमिरमेत्यादिना सगिटौ। स एवम्भूतो राजा चन्दनोशीरमृ णालैः शोकाग्निप्रतीकारभूतैर्दिग्ध उपलिप्तोऽपि उद्वेगाग्निनैव द्युनिवासभूयन्देवत्वमगात् गतवान् दिहेर्निष्ठायान्दादेर्धातोर्घ इति घः झषस्तथोर्धोधः झलांजश्झशिति जश्त्वम् दिवि निवासो येषां ते द्युनिवासाः देवाः तेषां भाव इति भुवोभाव इति क्यप् ॥२१॥

आविष्ट इत्यादि। शुचा शोकेन एकत्र एकस्थाने न आविष्ट भ०
आसक्त उपविष्टे। क्षता क्षतेभ्यः क्षितिपालभागेभ्यः राजकर्त्तव्यदू
तसम्प्रेषणादिभ्यो व्यरंसीत् विरतवान् घे पं परानुरत्यादिना वि
पूर्व्वात् रमेः पं यमरमेति इमसनौ क्षतावयवसम्बन्धात् क्षतं अक्ष
तावयवसम्बन्धाचाक्षतं इति एकार्थत्वात् कर्म्मधारयः। अनञ्ःक्ता
न्तस्य तेन समञ्चेति कर्म्मधारय इति परः क्षितिपालं भजन्ते इति
ढाक्छजवद्धेति विण् स ईदृशो राजा चन्दनोशीरमृणालैलापोप
शान्तिसाधनैर्दिग्धो लिप्तोऽपि शोकाग्निनैव हेतुना द्युनिवासभूयं
देवत्वमगात् दिवि निवासो यस्य इति विग्रहः निवसन्त्यत्रेति घञ्
द्यौर्निवासोयस्येति वा उहस्युङिति उङ् तस्य भवनं भूहनः क्यवि
ति भुवोभावे क्यप् दिग्ध इति दिहोउपलेपे क्तः दादेर्घः ढभास्त
थोरिति तस्य धः झपञ्जशोरिति घस्य गः उशीरं वीरणमूलं ॥२१॥

विचुक्रुशुर्भूमिपतेर्महिष्यः केशान् लुलुञ्चुः स्ववपूंषि
जघ्नुः। विभूषणान्युन्मुमुचुः क्षमायां पेतुर्बभञ्जुर्वलया
नि चैव ॥२२॥

विचु॥ भूमिपते राज्ञो महिष्यः पत्न्यः अविमष्टाष्टिषच् इत्या अ०म०
णादिकः टिषच् विचुक्रुशुः रुदितवत्य इत्यर्थः हा स्वामिन्निति
तया केशान् लुलुञ्चुः उत्पाटितवत्यः स्ववपूंषि शरीराणि जघ्नुस्ता
डितवत्यः विभूषणानि हारादीनि उन्मुमुचुर्मुक्तवत्यः क्षमायाम्भु
वि पेतुः वलयानि अवैधव्यचिह्नानि बभञ्जुः चूर्णितवत्यः एते विल
ङ्गाः पेतुरेलाभ्यासलोपौ ॥२२॥

भ० विचुक्रुशुरित्यादि ॥ भूमिपतेर्दशरथस्य महिष्यः विचुक्रुशुः क्रन्दितवत्यः हाहा स्वामिन्निति नृपमाह्वतवत्यो वा यद्यपि कृताभिषेका महिषीत्यमरः सा चैकैव तथाप्युपचारात् पत्नीमात्रेऽपि तिसृणामेव कृताभिषेकत्वमिति केचित् केशान् लुलुञ्चुः उत्पाटितवत्यः स्यात्यपित्किदेति अकित्पक्षे उङ्गलोपाभावः स्ववपूंषि जघ्नुः ताडितवत्यः विभूषणानि हारादीनि उन्मुमुचुः त्यक्तवत्यः क्ष्मायां भुवि पेतुः नृपस्येति पतेरत एत्वं शिलीपश्च वलयानि अवैधव्यलक्षणानि बभञ्जुः सर्व्वत्र सा उम् ॥ २२ ॥

ताः सान्त्वयन्ती भरतप्रतीक्षा तं बन्धुता न्यक्षिपदाशु तैले। दूतांश्च राजात्मजमानिनीषून् प्रास्थापयन्मन्त्रिमतेन यूनः ॥२३॥

ज०म० ताः इं । बन्धुता बन्धुसमूहः ग्रामजनबन्धुसहायेभ्यस्तल् ता महिषीः सान्त्वयन्ती संस्थापयन्ती सान्त्वङ्करोतीति णिच् । तं दशरथं मृतं तैले न्यक्षिपत् निक्षिप्तवती आशु शीघ्रं माभूत्पूतिरिति क्षिपेर्लुङ् पुषादित्वादङ् कस्मात्न्यक्षिपदित्याह भरतप्रतीक्षा तेन संस्कारः कर्त्तव्य इति सा भरतप्रतीक्षते ईक्षिक्षमिभ्यां चेत्युपसङ्ख्यानात्मनः दूतान् प्रास्थापयत् प्रहितवती राजात्मजभरतमानिनीषून् आनेतुमिच्छून् अन्यथा कैकेयीवैमुख्याद्भरतेऽपि वैमुख्यात् दूता अपि नानेतुमिच्छन्ति तथापि मन्त्रिमतेन न स्वमतेन यूनः तेषाह्वानं समर्थत्वात् ॥ २३ ॥

भ० तादित्यादि ॥ बन्धुता बन्धुसमूहः ता महिषीः सान्त्वयन्ती

आश्वासयन्ती तं मृतं दशरथं शीघ्रं पूतिगन्धाशङ्कया तैले न्यधि पन् क्षिपन्तु दाहिमात् कुतो न्यक्षिपदित्याह भरतप्रतीक्षा भरतं प्रतीक्षन्ते इति पचादित्वादच् भरते प्रतीक्षा यस्या इति वा दूतांश्च मन्त्रिणां मतेन युक्त्या केकयीं प्रति क्रोधेन भरते वैमुख्याच्च नु स्वेच्छया प्रास्थापयत् प्रहितवती राजात्मजं भरतं आनिनीषून् आनेतुमिच्छून् ये स्वनएव भरतमानेतुमिच्छन्ति तत्प्रस्थापनं यु क्तमिति भावः यूनस्त्वरणात् शीघ्रगमनसामर्थ्यात् बन्धुतेति अन स्वलेति समूहार्थे तः सान्त्वयन्तीति सान्त्वस्क सान्त्वने शतृ ॥२३॥

सुप्तो नभस्तः पतितं निरीक्षाञ्चक्रे विवस्वन्तमधः स्फुरन्तं। आख्यद्दसन्मातृकुले सखिभ्यः पश्यन् प्रमादं भरतोऽपि राज्ञः ॥२४॥

सुप्तो। भरतोऽपि मातृकुले वसन् सखिभ्यो मित्रेभ्यः आख्यत् ज०म कथितवान् ख्यातेर्लुङ् अस्यतिवक्तीत्यादिनाऽङ् क्रियाग्रहणङ्क र्त्तव्यमिति सम्प्रदानसंज्ञायाञ्चतुर्थी। किमाख्यदित्याह अहं सुप्तः सन् नभसो नभस्तलात् आकाशात्पतितं विवस्वन्तमादित्यं स्फुरन्तञ्चलन्तन्निरीक्षाञ्चक्रे निरीक्षितवान् ईक्षेरिजादेरित्याम्। उत्तमविषये सुप्तप्रमत्तावस्थायां चित्तव्याक्षेपात् परोक्षे लिट् पश्यन् विलोकयन् राज्ञो दशरथस्य प्रमादमनिष्टम् ॥२४॥

सुप्त इत्यादि ॥ भरतोऽपि मातृकुले वसन् सन् राज्ञो दशर भ० थस्य प्रमादं अनिष्टं पश्यन् वितर्कयन् सखिभ्यो मित्रेभ्य आख्यत्

कथितवान् वक्तव्येति ङः तादर्थ्ये चतुर्थी यदभिप्रेत्य धात्वर्थस्तच्च चतुर्थीति परः किमाख्यदित्याह सुप्तोऽहं नभसः आकाशात् पतितं अधः स्फुरन्तं विवस्वन्तं सूर्य्यं निरीक्षाञ्चक्रे दृष्टवानस्मि अस्मदि चित्तस्य विक्षेपे ठीति परः स्वमते नियमाभावात् भवत्येव सुप्तस्य तादृशसूर्य्यदर्शनेन चित्तविक्षेपार्थोऽपि गम्यत एव ईक्षङ् दर्शने विजादीत्याम्॥२४॥

अशिश्रवन्नात्ययिकं नमेत्य दूता यदार्थं प्रयियासयन्तः। अचिक्षिष्ट जाताञ्जिहिषस्तदासावत्कण्ठमानो भरतो गुरूणां॥२५॥

ज॰म॰ अशि। दूता एत्य आगत्य भरतमातृकुलमित्यर्थः। आङ्पूर्व्वादिणः क्त्वाप्रत्ययस्य ल्यपि तुकि च रूपम्। यदा तं भरतमर्थं वचनमशिश्रवन् श्रावितवन्तः अर्थयतेऽनेनेति णिच् घञ् च श्रृणोतेर्ण्यन्तात् लुङि चङि द्विर्वचनम् स्रवतिश्रृणोतीत्यभ्यासस्येत्वम्। आत्ययिकम अत्ययो विनाशः स प्रयोजनमस्येति तदस्य प्रयोजनमिति ठञ् पिता ते आनस्त्वां द्रष्टुमिच्छतीति आत्ययिकं वचनं तमिति गतिबुद्धीत्यादिना कर्म्मसंज्ञा श्रृणोतेः शब्दकर्म्मत्वात् अर्थमिति कर्त्तुरीप्सिततममित्यनेन प्रयियासयन्तः प्रयातुमिच्छन्तं भरतं प्रयोजितवन्तः सन्नन्तण्यन्तोऽयं तदा असौ भरतोजाताञ्जिहिषः जाता अञ्जिहिषा गमनेच्छा यस्य सः अहि गतौ इदितोनुम् तस्मादंहितुमिच्छतीति सन् इट् अजादेर्द्वितीयस्येति द्विशब्दो द्विरुच्यते नकारस्य नन्द्रा इति प्रतिषेधः अभ्यास

कार्य्यम् अनुस्वारपरसवर्णौ अःप्रत्ययादित्यकारप्रत्ययः टाप् आं
हिष्ट गतवान् तस्मादेवात्मनेपदिनो लुङ् उत्कण्ठमानः स्मरन्
मठिकठिशोक इत्यस्मादात्मनेपदिनो रूपम् अनेकार्थत्वाद्धातू
नाम्। गुरूणाम्पितामहादीनां अधीगर्थेति कर्म्मणि षष्ठी ॥ २५ ॥

अभिश्रवन्नित्यादि। दूता एत्य आगत्य अर्थात् भरतमातृकुलं भ॰
तं भरतं अत्ययरूपं अर्थं वस्तु यदा न अभिश्रवन् आवितवन्तः
प्रयियासयन्तः भरतं गमनेच्छां कारयन्तः तदा असौ भरतः
जाता अञ्जिद्विषा गमनेच्छा यस्य तादृशः सन् गुरूणां पित्रादी
नां उत्कण्ठमानः स्मरन् आंहिष्ट गतवान् अभिश्रवन्निति श्रुश्रव
णे ञिःप्रेरणे इति ञिः ञिश्रीत्यङ् धुर्द्विस्वङीति द्विः खेः सन्वत् सुश्रु
स्रुद्रु प्रुप्लुच्यङाम्वेति खेरुकारस्य इत्वं ञिण्यन्तेजुङ्तोरिति ञिः
यत्वायवायाव इति आव् ञ्यञ्जुङः स्वःञेर्लोपः घोऽञौञेरिति प्र
योज्यस्य कर्त्तुः कर्म्मत्वं आत्ययिकमिति अत्ययो विनाशः विकारश्च
घेति ष्णिकः। अर्थोऽभिधेये शब्दानां धनकारणवस्तुषु। प्रयोजने नि
वृत्तौ च विषये च प्रयुज्यते। कश्चित्तु अर्थयते अनेनेत्यर्थं वचनं
आत्ययिकं अनर्थसम्बन्धीत्यर्थः अर्थमित्यत्र अमुमिति पाठे अमुं
भरतं प्रयियासयन्तः आत्ययिकं राज्ञोमरणं। एत्येति व्यादनञ
इति आङ्पूर्व्वादिणः क्त्वायप् स्वस्यतन्पितीति तम् प्रयियासयन्त
इति यातेः सनन्तात् ञिः शतृः आंहिष्टेति अहिङ्गतौ इदित्वान्नुम्
जाताञ्जिद्विषःइति अंहेः सन इम् नाजन्तादेरादिर्द्विरिति स्वादौ
नवद्वाये इति च निषेधात् आदिनकारस्य न द्वित्वं षंश्याद इति
नः कठिङ् आध्याने इष्टानवाप्तौ तद्वाप्तयेऽभिलाष उत्कण्ठे
त्यन्ये। गुरूणामिति समार्थैनेत्यादिना कर्म्मणि षष्ठी ॥२५॥

बन्धूनशङ्किष्ट समाकुलत्वादासेदुषः स्वेष्ववशादपायं। गोमायुसारङ्गगणाश्च सव्यङ्नानासिषुर्भीममभूरासिषुश्च ॥२६॥

ज०म० बन्धू। दुःस्वप्नदर्शनेन अकस्माच्च पितृदूतागमनेन स्वेष्ववशात् चेतसि समाकुलत्वाद्भरतो बन्धूनशङ्किष्ट शङ्कितवान् उत्प्रेक्षितवानित्यर्थः शङ्कतेरात्मनेपदिनो लुङि रूपम् कीदृशान् आसेदुषः अपायं विनाशं गतवतः भाषायां सदवसेत्यादिना क्वसुः अतएवकहलित्येत्वाभ्यासलोपौ। अस्यबन्धुः कश्चित् व्यसनमापन्नोऽभूदिति गच्छतस्तस्य गोमायुसारङ्गगणाः शृगालमृगगणाश्च सव्यगमनुकूलमायासिषुः नागताः यातेर्लुङि यमरमनिमगिटौ शृगालाः प्रदक्षिणङ्गताः मृगाश्च सव्यमित्यर्थः। भीममुद्वेगकरमरासिषुः रसिताः रसेः परस्मैपदिनो लुङ् अतोहलादेरिति वृद्धौ रूपम् न रामः तस्यात्मनेपदित्वात्।२६॥

भ० बन्धूनित्यादि। दुःस्वप्नदर्शनात् अकस्मात् पितृदूतागममाच्च स्वेष्ववशात् चेतसि समाकुलत्वात् गच्छन् भरतो बन्धून् अपायं विनाशं आसेदुषः प्राप्तान् अशङ्किष्ट शङ्कितवान् शकिङ्शासशङ्कयोः गच्छतस्तस्य गोमायुसारङ्गगणाः शृगालहरिणसमूहाः सव्यगमनुकूलं नायासिषुः नागतवन्तः शृगालाः प्रदक्षिणं गता इत्यर्थः। यातेश्चौ यमरमनतोम्यसनो अनुस्विदेरिति अन् उम् भीमं भयानकं यथास्यात्तथा अरासिषुः शब्दं कृतवन्तः रसशब्दे ष्वमादेः षेम इति सिः अन्तउच्। चातके हरिणे पुंसि सारङ्गः शवले त्रिषु

ति इत्यादौ रभसः। प्रप्रीणातेर्ण्यन्तादङ्ग: औणादिक इति नाव्यादिं केचिदाहुः ॥२६॥

स प्रोषिवानेत्य पुरं प्रवेक्ष्यन् शुश्राव घोषं न जनौघजन्यं। आकर्णयामास न वेदनादान्न चोपलेभे वणिजां पणायाः ॥२७॥

सप्रो। स भरतः प्रोषिवान् मातामहकुलात् प्रोषितः सन् भाषायामित्यादिना क्वसुः यजादित्वात्सम्प्रसारणम्द्विर्वचनम् वसेकाजाद्घसामिति इट् पुरमयोध्यामेत्य आगत्य प्रवेक्ष्यन् गृहमित्यर्थात् पुरम्प्रविष्टः घोषं शब्दम् शुश्राव न श्रुतवान् जनौघजन्यञ्जनसमूहेन जन्यमुत्पाद्यं तद्धि प्रविचारयतीति जनेर्यत् तथा वेदध्वनीनाकर्णयामास न श्रुतवान् प्रातिपदिकाद्धात्वर्थ इति णिच तदन्तात् लिड्आमि अपामन्तेत्यथादेशः न चोपलेभे नोपलब्धवान् वणिजां पण्यजीविनाम्पणायाम् पणलाभान् कर्थश्चिदुपद्रवहारस्योच्छिन्नत्वात् पणन्ते इति वणिजः पणेरिज्यादेश्च व इत्यौणादिकः पणन्त इति पणाः नित्यम्पणः परिमाण इत्यप् व्यवहर्त्तव्याः। ईयन्ते प्राप्यन्ते वणिग्भिरित्ययाः लाभाएरजिति इणः कर्म्मणि अच् पणानामयाः पणायाः ताम्। पणायामिति पाठान्तरं वणिजां वस्तूनि संव्यवहारविषयाणि नोपलेभे संव्यवहारकुशलाः साधव इति गुपादिषु स्तुत्यर्थपनिना साहचर्य्यात् पणेरपि तदर्थादेवायप्रत्ययः अःप्रत्ययादित्यकारः टाप् वणिजां प्रलापानिति तृतीयः पाठः वणिक्प्रसार कलहानित्यर्थः ॥ २७ ॥

भ० सइत्यादि। स भरतः प्रोषिवान् मातामहकुले कृतप्रवासस्ततः प्रत्यागत्य पुरमयोध्यां प्रवेक्ष्यन् प्रवेशं करिष्यन् जनसमूहजन्यं घोषं शब्दं न शुश्राव। प्रोषिवानिति वसपूर्व्वाद्वसेर्निवासे इत्यस्मात् क्वसुः यजस्वपाद्योरिति जिः दित्वं वसोर्घसेकाजितीम् प्रवेक्ष्यन्निति विशः प्रवेशे स्यतृः जन्यमिति हृद्वोःकभाव इत्युक्तेः कर्त्तरि घ्यण जनौघा

१ ज्जातमित्यर्थः किम्बा तत्रानीयया इति ण्यन्ताज्जनेः कर्म्मणि यः वेदध्वनिं न आकर्णयामास न श्रुतवान् कर्णतकभिदि वणिजां पणा पजीविनां पणायाः क्रयविक्रयव्यवहाराम् न च उपलम्भे ददर्श पणव्यवहारे स्तुतौ कमश्चतेत्यादिना आयः आत्याद इति अः स्त्रीत्वञ्च पणायामिति पाठे पण्यते इति पणाः घञ्जलनटोघं इत्यल् आयोलाभः इमाम् व्यवहर्त्तव्यलाभानित्यर्थः वणिगापणायामिति पाठे वणिजामापणा निषद्या तत्रायानित्यर्थः आपणस्तु निषद्यायामित्यमरः॥२७॥

चक्रन्दुरुच्चैर्नृपतिं समेत्य तं मातरोऽभ्यर्णमुपागतास्राः। पुरोहितामात्यमुखाश्च योधा विवृद्धमन्युप्रतिपन्नमन्याः॥२८॥

ज०म० चक्रन्दुः। तं भरतं गृहगतमभ्यर्णं समीपीभूतं समेत्य कौशल्याद्या मातरः कौशल्याद्याः नृपतिमुच्चैरत्यर्थं चक्रन्दुः क्रन्दितवत्यः हा स्वामिन् हा राजन् क गतोऽसीति उपागतस्रास्त्रमस्रम् अश्रुजलं यासां ताः एवंविधाः युध्यन्त इति योधाः पचादित्वादच्। ते च तं समेत्य नृपतिञ्चक्रन्दुः पुरोधीयत इति पुरोहितः निधा

ऽधातेर्हिः। अमाशब्दः सहार्थे सह राज्ञा कार्य्येषु भवतीत्यमात्यः अमेहक्कतसिभ्यस्त्य इति निपातात् पुरोहितामात्यौ मुखम्प्रधानं येषां योधानान्ते पुरोहितामात्यमुखाः अमात्यस्याजाद्यदन्तत्वेऽपि पुरोहितस्याभ्यर्हितत्वात्पूर्व्वनिपातः विवृद्धमन्युना शोकेन प्रतिपूर्णे मन्ये गलशिरे येषामिति ॥२८॥

चक्रन्दुरित्यादि। तं भरतं अभ्यर्णं समीपवर्त्तिनं समेत्य प्राप्य मातरः कौशल्यादयो नृपतिं चक्रन्दुः तमुद्दिश्य सशब्दं रुरुदुरित्यर्थः उपागतं अस्रं नेत्रजलं यासां तास्तथा अभ्यर्णमित्यभिपूर्व्वस्यार्द्दधातोः क्तान्तस्य रूपं क्षुब्धवाढेत्यादिना निपातितं युध्यन्ते इति योधाः पचादित्वादच् तेऽपि तं समेत्य चक्रन्दुः पुरोऽग्रे धीयते स्थाप्यते इति पुरोहितः धाञोहिः अमाशब्दः सहार्थे सह राज्ञा कार्य्येषु भवति अमात्यः त्यबाद्यपिरेति त्यः पुरोहितामात्यौ मुखं प्रधानं येषां योधानां ते तथा ते जना योधाश्चेति वा विवृद्धेन मन्युना शोकेन प्रतिपूर्णा मन्या येषां यासां वा इान्तशान्तपूर्णेति निपात्यते पश्चाद्ग्रीवा शिरा मन्या इत्यमरः॥२८॥ भ०

दिदृक्षमाणः परितः ससीतं रामं यदा नैक्षत लक्ष्मणञ्च। रोरुद्यमानः स तदाभ्यपृच्छद्यथावदाख्यच्च य वृत्तमस्मै ॥२९॥

दिदृ। स भरतो यदा ससीतं रामं लक्ष्मणञ्च परितः सर्व्वतो दिदृक्षमाणः द्रष्टुमिच्छन् ज्ञाश्रुस्मृदृशांसन इति तङ् इच्छा ज०म०

चेति सनः किस्त्वं सुजिहृच्चोरित्यम् न भवति नैचत न दृष्टवान् तदा रोरुद्यमानः अत्यर्थं रुदन् यत्कि त्वयम् अभ्यपृच्छत् पृष्टवान् ऐचताभ्यपृच्छदिति भूतमामान्यविवक्षया लङ् अन्यथा कवेः परोक्षत्वात् लिट् स्यात् अथैतस्मिन् प्रस्तावे यथावत् यादृशं वृत्तमतन्तथावत् आख्यन् कथितवन्तः पुरोहितामात्यमुख्या अस्मै भरताय। ख्यातिरस्यतीत्यादिना अङ् आतोलोपः॥ २८ ॥

भ० दिदृक्षमाण इत्यादि। स भरतः सीतं रामं लक्ष्मणञ्च परितः सर्व्वतः दिदृक्षमाणः द्रष्टुमिच्छन् यदा न ऐचत तदा रोरुद्यमानो भृशं रुदन् अभ्यपृच्छत् पृष्टवान् अथानन्तरं यादृशं वृत्तं तादृशं तस्मै भरताय आख्यन् कथितवन्तः अर्थात् पुरोहितामात्यमुख्या योधाश्च दिदृक्षमाण इति दृशः सन् पूर्व्वान्निमीति गुणनिषेधः सुद्दृशनतुक्षा इति सं ईक्षङ्दर्शने घो रुदे भृं चस्य चेत्यादिना यङ् प्रच्छोऽभूजीपे घो ग्रहस्वपाद्योरिति जिः ख्यातेर्व्वस्येति ङः तादर्थ्ये चतुर्थी यदभिप्रेत्य धात्वर्थ इति चतुर्थीति परः॥२८।

आबद्धभीमभ्रुकुटीविभङ्गः शोच्यीयमानारुणरौद्रनेत्रः। उच्चैरुपालब्ध स केकयीञ्च शोके मृजश्चापि रतं न्यमार्क्षीत्॥३०॥

ज०

ज०म० आबद्ध। स भरत उच्चैर्महता ध्वनिना केकयीञ्च मुहुर्मुहुर्भूयो भूय उपालब्ध उपालब्धवान् उपाङ्पूर्व्वोलभिरुपालम्भे वर्त्तते तस्मादात्मनेपदिनो झलोझलीति सिजूलोपे धलउ

ले रूपम् शोके च मग्नो अविरतमजस्रं न्यमाङ्क्षीत् निमग्नः मस्जे र्लुङि मस्जिनशोर्झलीति नुम् तत्रापि मस्जेरन्त्यादिनियमात् नुम् संयोगादिलोपः हलन्तलक्षणा वृद्धिः हल्ग्रहणं समुदायप्रति पत्त्यर्थमित्युक्तम् कीदृशः आबद्धभीमभृकुटीविभङ्गः भ्रमेश्चडुरि त्यौणादिको डुः कुटं स्त्रीलिङ्गं भावे कृपादिभ्य इतीः तदन्तात् कृदि कारादिति ङीष् भ्रुवोः कुटी कौटिल्यं भृकुटी इको ह्रस्वोऽङ्यो गालवस्येति ह्रस्वः तस्या विभङ्गो विरचनम् आबद्धः कृतः प्रय त्नेनायासप्रवृत्तेन भीमोभयानको भृकुटीविभङ्गो येन यस्य वेति शोश्वीयमाने अत्यर्थं शूयमाने अरुणे लोहिते रौद्रे भयानके नेत्रे यस्य सः श्वयतेर्यङि विभाषा श्वेरिति वा सम्प्रसारणम् तमुपाल म्भमाह ॥ ३० ॥

आबद्धेत्यादि। स भरतः उच्चैर्यथा स्यात्तथा मुहुर्वारं वारं कै भ० कयीं उपालम्भ निर्भर्त्सितवान् शोकेऽविरतं न्यमाङ्क्षीत् निमग्नः कीदृशः आबद्धः कृतोभयङ्करोभृकुटीविभङ्गोयेन स तथा पुनः किम्भूतः शोश्वीयमानेऽत्यर्थविवृद्धे अरुणे रक्ते रौद्रे भयानके ने त्रे यस्य स तथा भ्रुवोः कुटीकौटिल्यं वेत्यस्य स्थाणेऽमे इत्यत्र व्यव स्थितविभाषायोः वा शब्दस्तेन सञ्ज्ञातिरिक्तस्थाने क्वचित् समासे ह्रस्वः स्यादिति देवीदासचक्रवर्त्तिना व्याख्यातं तेनात्र पाक्षिको भ्रु वो ह्रस्वः मनोषादित्वाद्वा टुओश्विगतिवृद्ध्योः सूचसूत्रेति यङ् खेणुः योऽज्यरे उपाङ्पूर्वाल्लभेर्गर्हायां टीतन् असस्वाऽङ्गमी ति सेर्लोपः टुमस्जोशशुद्धौ ग्यांसिः अनिमित्वात् व्रजवदेति व्रिः स्यादेः सोलोपः चक्तिति कङ् क्रिलादिति षः नुणरध इति नुण् कोर्नुरित्यनुस्वारः अपेज्जमोरिति ङः ॥ ३० ॥

नृपात्मजौ चिक्लिशतुः ससीतौ ममार राजा विधवा भवत्यः। शोच्या वयं भूरनृपा लघुत्वं कैकय्युपज्ञं वन वह्ननर्थं ॥३१॥

ज०म० नृप। नृपात्मजौ रामलक्ष्मणौ ससीतौ सीतया सह चिक्लिशतुः क्लिष्टौ ममार मृतो राजा म्रियतेर्लुङ्लिङोश्चेति नियमात्तङो भावः विधवाः धवो भर्त्ता तेन विना भवत्यो जाताः शोच्याः शोचनीया वयम् अयशोभाजनत्वात् ऋहलोर्ण्यत् शङ्क्या इति पाठान्तरम् शङ्कनीया वयम् एतत्कृतोऽयमप्रयोग इति भूरनृपा न विद्यते नृपोयस्यामिति नञोऽस्त्यर्थानामिति बहुव्रीहिः लघुत्वं राज्यप्रार्थनालक्षणं कैकय्युपज्ञम् कैकय्याः प्रथमतो ज्ञातम् नान्यस्य कस्यचित्पूर्व्वं ज्ञातम् उपज्ञायत इत्युपज्ञम् आतश्चोपसर्ग इति स्त्रियामङ् लक्षणा षष्ठी कैकय्या उपज्ञेति समासः। उपज्ञोपक्रममिति नपुंसकता वन कष्टमङ्गनर्थमङ्गदोषं क्लेशमरणाद्यनिष्टानां सम्भवात् भरतकृत एवायमप्रयोग इत्येतत्परिहरन्नाह ॥ ३१ ॥

भ० नृपात्मजावित्यादि। सीतासहितौ नृपात्मजौ रामलक्ष्मणौ चिक्लिशतुः दुःखितौ क्लिशुङ्उपतापे राजा ममार मृङ्प्राणत्यागे इति नियमात् पं धवो भर्त्ता तेन विहीना भवत्यो जाताः मातृगणं सम्बोध्योक्तं कैकय्युपालम्भोऽयं वयं शोच्याः अयशोभाजनत्वात् शोकार्हाः तेभ्याःशक्यार्थे इति अर्हार्थे घ्यण् इमन्तत्वात् चजोः कुघिण्ण्यतोरिति सेम्कवर्ज्जमात् न कत्वं किम्वा आवश्यकत्वविवक्षया नावश्यके इति निषेधः शङ्क्या इति पाठे एतत्कृतोऽयं प्रमाद इति लोकैः

गङ्क्या वितर्कणीया भूरनृपा राजशून्या लघुत्वं राज्यप्रार्थनरूपं नीचकर्म्म कैकय्युपज्ञं कैकय्याः सकाशात् प्रथमत उपलब्धं नान्यतः केनापि दृष्टमित्यर्थः उपज्ञायत इत्युपज्ञा क्विप्। उपज्ञोपक्रमा न्तस्य तदादित्वप्रकाशने इत्यमरवचनात् नपुंसकत्वं लिङ्गस्य लो काश्रयत्वात् बह्वनर्थं बहवोऽनर्था दोषा यत्र तत्तथा वत इति खेदे ॥३१॥

नैतन्मतं मत्कमिति ब्रुवाणः सहस्रशोऽसौ शपथा नशप्यत्। उद्वाश्यमानः पितरं सरामं लुठन् सशो को भुवि रोरुदावान्॥३२॥

नैतत्। यदेतत्कैकय्यनुष्ठितं मतमभिप्रायः न मत्कृतम्मत् नाह ज०४ मस्य ग्रामणीर्न प्रभुरिति अस्मच्छब्दात्स एषां ग्रामणीरिति कन् प्रत्ययोत्तरपदयोश्चेति मपर्य्यन्तस्य मादेशः नास्मन्मतादनुष्ठि तमनयेत्यर्थः इत्येवं ब्रुवाणः सहस्रशो बहुवारानसौ भरतः शप थान् सम्प्रत्ययकारणवचनानि अशप्यत् कृतवान् अनेकार्थत्वा द्धातूनां शपदैवादिकस्य उभयपदिनो लुङि रूपम् उद्वाश्य मानः आक्रन्दन् वाशृशब्दे दैवादिकः अनुदात्तेत् पितरं सरा मं हा तात हा रामेति लुठन् भुवि लुठन् लुटविलोडने दैवा दिकः परस्मैपदी सशोक इति शायपरिहारार्थम् रोरुदावान् अत्यर्थं रोदनं कुर्व्वन् यङन्तात् अःप्रत्ययादित्यकारः अतो लोपः यस्य हलः स्त्रियामतष्टाप् सा विद्यते यस्येति मतुप्॥३२॥

स्वदोषं परिहरन्नाह। नैतदित्यादि। यदेतत् कैकय्या कृतं भ

तत्र मत्कं मत्स्वामिकं मत्कर्तृकं मतं अहमस्य प्रभुरित्यर्थे विकार संघेत्यादिना कः इति ब्रुवाणोऽसौ भरतः सहस्रशो बहुवारान् अपथान् अत्ययकारणानि अयथन् उक्तवान् अपथोऽत्र आक्रोशे आक्रोशोभाषणं धातूनामनेकार्थत्वात् अपि च करोत्यर्थो वा सरामं पितरं उद्दाश्यमानः हा राम हा तातेति आक्रथन् छद्मा ध्वस्तमर्व्वं भुवि लुथन् लुटविलोडने रोरुदावान् अत्यर्थरोदनेर्युक्तः रुदेर्यङन्तात् मंस्थाद इति अप्रत्ययः ततोवतुः हनुमाह भशोक इति सहस्रशब्दात् सङ्ख्यैकार्थादिति वत्तम्॥३२॥

तं सुख्ययन्तः सचिवा नरेन्द्रं दिधक्षयन्तः समुदूह्य रागात्। अन्त्याहुतिं हावयितुं सविप्राश्चिचीपयन्तोऽध्वरपात्रजातं॥३३॥

ज०म० तं सु। सचिवा अमात्याः कार्य्येषु सचन्ते समवयन्तीति सचेरिवन्निर्त्योणादिक इवन् तम्भरतं सुख्ययन्तः सुखकुर्व्वाणाः तत्करोतीति णिच् नरेन्द्रन्दशरथं समुदूह्य उद्वाहितवन्तः शिबिकायामारोप्य वहिरन्तर्भावितण्यर्थोऽत्र द्रष्टव्यः यजादित्वात्सम्प्रसारणम् आरात् नातिदूरे दिधक्षयन्तः दग्धुमिच्छन्तं भरतं प्रयोजितवन्तः दहेः सनि दादेर्द्धातोर्घः भषभावश्चर्त्वे प्रयोजकव्यापारे णिच् अन्ते विनाशे भवा या आहुतिः दिगादित्वाद्यत् तामन्त्याहुतिं हावयितुमग्नौ प्रक्षेपयितुं सविप्राः ब्राह्मणैः सहिताः सचिवाश्चिचीषयन्तः चेतुमिधातुमिच्छन्तः प्रयोजितवन्तः किन्तत् अध्वरपात्रजातं यज्ञोपयोगिपात्राणां स्रुवादीनां समूहम्॥३३॥

तमित्यादि। विप्रप्रहिताः सचिवाः अमात्याः तं भरतं सुन्वन्तः अभि-
षवं कुर्वन्तः नरेन्द्रं दशरथं समुद्दधुः बहिरन्तर्भावितण्यर्थात्
शिविकायामारोप्य उद्धारितवन्त इत्यर्थः विप्राणां बहुना-
मौचित्यात् वहेर्णौ प्राप्ते ठोऽव्ययपरैति जिः प्रहणपाध्योरिति प्रत-
र्त्तेर्जिः सुन्वयन्त इति शः कृत्याख्याने जिरिति सुखमयन्ताम् जिः आ-
रात् समीपे दिधक्षयन्तो दग्धुमिच्छां कारयन्तः दहेः सनन्तात्
जिः सनः अन्त्यास्तिं प्लावयितुं अग्नौ प्रक्षेपयितुं अध्वरपात्रजातं
यज्ञोपयोगिस्रुवादिसमूहं चिचीषयन्तः चेतुमिच्छां कारयन्तः
अन्तकाले भवोऽन्त्यः ढपक्कादिति ढ्यः सचिः सेवा विद्यतेऽस्य सचि-
वः गोतृणेत्यादिना केशादित्वाद्वः सचन्ति कार्य्येषु समवयन्तीत्यर्थे
सचिवा निपातनाद्वा ॥ २३॥

उदक्षिपन् पट्टदुकूलकेतूनवादयन् वेणुमृदङ्गकां-
स्यं। कम्बूंश्च तारानधमन् समन्तात्तथानयन् कुङ्कुम-
चन्दनानि॥ २४॥

उद। पट्टदुकूलविरचितान् केतून् ध्वजान् उदक्षिपन् उच्छ्रितव-
न्तः ये नियुक्ताः क्षिपेस्तौदादिकस्य ग्रहणम् वेणुमृदङ्गकांस्यं वंश-
मुरजकांस्यतालमवादयन् वादितवन्तः वदेर्ण्यन्तस्यैव प्रयोगः
जातिरप्राणिनामित्येकवद्भावः न पुनस्तूर्य्याङ्गत्वात् तत्र हि प्राणि-
नान्तूर्य्याङ्गानां द्वन्द्वैकवद्भावः यथा मार्दङ्गिकपाणविकमिति
वृतृवदिहनिकमिकषिभ्यः सः इत्यौणादिकः कंसशब्दः तदर्थाय
हितं कंसीयं त्रपुणा हठद्रव्यं प्रकृतिविकारभावे ढः तस्य विकार

इति कंसीयपरशव्ययोर्यञञौ लुक्चेति कस्य लुक् यञ् च प्रत्ययः कम्बून् शङ्खान् तारान् उच्चैस्तरध्वनीन् अधमन् शब्दितवन्तः पाघ्रेत्यादिना धमादेशः तथा कुङ्कुमचन्दनानि आनयन् आनीतवन्तः सर्व्वत्र लङि रूपं अन्येष्टिं दर्शयन्नाह॥ ३४॥

भ० उदक्षिपन्नित्यादि। अर्थात् तत्र नियुक्तास्ते जनाः पट्टदुकूलरचितान् केतून् ध्वजान् उदक्षिपन् उत्क्षिप्तवन्तः क्षिपस्तौदादिकः। कार्पासं बादरं प्रोक्तं दुकूलाद्यन्तु वाल्कलं। कौषेयं कृमिजञ्चापि राङ्कवं मृगरोमजमित्यमरमाला। वेणुमृदङ्गकांस्यं अवादयन् वादितवन्तः अप्राणिजातित्वात् समाहार इति कालापाः तूर्य्याङ्गत्वात् इति वामनताः। सर्व्वो द्वन्द्वः समाहार इति प्राञ्चः। स्वमते इतरेतरयोगे च समाहारे च वा द्विधेति सामान्येन द्विविधो द्वन्द्व उक्तः तत्र क्वचिदितरेतरः क्वचित् समाहारः अभिधानात् बोद्धव्यः यदुक्तं कृत्तद्धितसमासानामभिधानं नियामकमिति कम्बून् शङ्खान् तारान् उच्चतरध्वनीन् अधमन् शब्दायितवन्तः ध्मादानपाघ्रेति ध्माधम तथा कुङ्कुमचन्दनानि आनयन् सर्व्वत्र घी॥ ३४॥

आज्याक्षिनासावदनं सरुक्कं कृत्वा जिने प्राक्शिरसं निधाय। संश्चित्य पात्राणि यथाविधानमृत्विग्जुहाव ज्वलितं चिताग्निं॥३५॥

अ॰म॰ आज्या॥ अजिने कृष्णसारचर्म्मणि प्राक् पूर्व्वं शिरोमूर्द्धा यस्येति तं प्राक्शिरसं शवन्निधाय स्थापयित्वा पश्चात् आज्याक्षिनासावदनं प्राण्यङ्गत्वादेकवद्भावः द्वन्द्वस्चेत्यादिसूत्र

स्यागन्तारं मयतेराचेति प्रकृतेराकारे नावेत्यौणादिकं रूपम् सरुक्मं समुवर्णङ्कृत्वा सञ्चित्य विन्यस्य अङ्गप्रत्यङ्गेषु पात्राणि स्रुगादीनि यथाविधानं यादृशं विधानमुक्तं गृह्यशास्त्रे। ऋत्विग्याजकः ऋतौ यजतीति ऋत्विग्दधृगित्यादिना निपातितः ज्वलितश्चिताग्निं चयनं चितं तदर्थमग्निं जुहाव जुहोतिस्म॥ ३५॥

श्रोत्रेत्यादि। प्राक् पूर्व्वस्यां दिशि शिरो यस्य तादृशं शरीरं भ० अजिने कृष्णसारचर्म्मणि निधाय संस्थाप्य श्रोत्राक्षिनासावदनं सरुक्मं सुवर्णयुक्तं कृत्वा यथाविधानं विधानमनतिक्रम्य पात्राणि स्रुवादीनि सञ्चित्य अङ्गेषु निधाय ऋत्विक् याजकः ज्वलितं चिताग्निं जुहाव एतेनान्त्येष्टिरुक्ता ऋतौ यजतीति ऋत्विक् चास्मिति क्विप् चकिति कङ् श्रोत्रेत्यादिप्राण्यङ्गत्वात् द्वन्द्वैकत्वं क्लीवत्वञ्च नित्यं भजते इति परः। स्वमतेऽत्र वेणुमृदङ्गकांस्यमितिवत् समाहारो द्वन्द्व इतरेतरोऽपि दुर्निवारः। यथा ग्रीवाकुचिललाटेषु नित्यं स्वेदः प्रशस्यते। गण्डे चुम्बं ललाटाक्षिकचोरुभगमूर्द्धसु इत्यादि दर्शनात् परमतं हेयं॥ ३५॥

कृतेषु पिण्डोदकसञ्चयेषु हित्वाभिषेकं प्रकृतं प्रजाभिः। प्रत्यानिनीषुर्विनयेन रामं प्रायादरण्यं भरतः सपौरः॥ ३६॥

कृते। पिण्डोदकदानास्थिसञ्चयेष्वनुष्ठितेषु प्रजाभिः प्रकृतं ज०म० प्रस्तुतमभिषेकमादिकर्म्मणि क्तः हित्वा त्यक्त्वा जहातेस्क्त्वीति

छिरादेश: रामम्प्रत्यानिनीषु: प्रत्यानेतुमिच्छु: विनयेन प्रसादनया न भयादरण्यं वनम्प्रायात् गतवान् भरत: सह पौरै: अयोध्याम वैर्जनै: मयैकेन प्रसाद्यमान: कदाचिन्नागमिष्यतीति॥ ३६॥

भ० कृतेष्वित्यादि। पिण्डोदकदानान्त्यिमस्त्वयनेषु कृतेषु पश्चात् प्रजाभि: प्रकृतं प्रस्तुतमभिषेकं छित्वा विनयेन रामं प्रत्यानिनीषु: प्रत्यानेतुमिच्छुर्भरत: पौरै: सह अरण्यं प्रायात् जगाम यातेर्ण्या रूपं प्रकृतमिति आरम्भे क्त: छित्वेति छाकोरित: आत्मनोविनयज्ञापनार्थं मयैकेन प्रसाद्यमान: कदाचित् नागच्छेदित्याशङ्कया पौरै: सह गमनं पिण्डोदकपदेन दाने लक्षणा बहुधाऽस्मिन्नस्य यनं पिण्डोदकानां सङ्ख्या इति केचित्॥ ३६॥

शीघ्रायमाणै: ककुभोऽश्नुवानैर्जनैरपन्थानमुपेत्य सृप्तै:। शोकाद्भृशैरपि भृष्यकासाञ्चकार नागेन्द्ररथाश्वमिश्रै:॥३७॥

ज०म० शीघ्रा। जनैर्हेतुभूतैर्भूष्यकासाञ्चकार शोभतेस्म कर्त्तु: क्रियाफलयोगेऽपि नात्मनेपदम् आमात्ययवदित्यत्र पूर्व्वग्रहणानुवृत्ते: चकासेश्च परस्मैपदित्वादिति विधिनियमौ स्थितौ शीघ्रायमाणै: अशीघ्रै: शीघ्रैर्भवद्भिर्झटिति गच्छद्भिरित्यर्थ: भृशादित्वात् क्यङ् ङित्वात्तङ् ककुभोऽश्नुवानै: दिशोव्याप्नुवद्भि: अश्नोते: सौवादिकस्य आत्मनेपदिनो रूपम्। अपंथानमुपेत्य सृप्तै: वक्रत्वाद्मार्गमपि गत्वा गतै: स्वकपुरित्यादिना समासान्त: प्राप्तोनञस्त

स्पुरणादिति प्रतिषिद्धः सन् पयोविभाषेति विकल्पितः शोकाद्वैतो रभूषैरनलंकारैरपि चकासाञ्चकार भूः भूमिः भूषेति गुरोश्च हल् इत्यकारप्रत्ययः चकासृदीप्ताविति धातु कास्मेकाज् य इत्यनुप्रयोगार्थमित्याम् नागेन्द्ररथाश्वमिति द्वन्द्वे एकवद्भावः अल्पाच्तरस्य न पूर्वनिपातः बहुष्वनियम इति वचनात् तेन सेनाङ्गत्वात् तत्रकवद्भावेन मिश्रैर्युक्तैः पूर्वसदृशेत्यादिना तृतीया समासः॥ ३७॥

श्रीभ्रायमाणैरित्यादि। शोकाद्रूषारहितैरपि जनैर्भूश्चका भ० साञ्चकार चकासृदीप्तौ विजादिदयेत्यादिनाम् भस्त्रन्त्वामः भू षेति येनकात् मरोरिति भः किम्भूतैः शीभ्रायमाणैः अशीघ्रैः शीघ्रै र्भवद्भिः कार्य्यवशात् द्रुतं गच्छद्भिरित्यर्थः भृशादिभ्यस्त्वर्थे इति क्यः घोऽज्य्यरे इति घः क्रित्त्वात्मं ककुभोदिशः अश्नुवानैर्व्याप्नुव द्भिः अशूङ्व्याप्तिसंहत्योः वहुत्वात् अपन्थानमपि व्याप्य स्वगतैः विकल्पितमप्रत्ययान्तं नागेन्द्रा हस्तिश्रेष्ठा रथा अश्वाश्चेति पर मते सेनाङ्गत्वात् समाहारद्वन्द्व एव स्वमते इतरेतरद्वन्द्वोऽपि लभ्यते मिश्रैर्युक्तैः ॥ ३७॥

उच्चिक्यिरे पुष्पफलं वनानि सस्नुः पितृन् पिप्रियुरा पगासु। आरेमुरित्वा पुलिनान्यशङ्कं च्छायां समा श्रित्य विशश्रमुश्च॥ ३८॥

उच्चि। ते जनाः गच्छन्तः पुष्पफलं पुष्पाणि फलानि चेति जाति भ०म० रप्राणिनामित्येकवद्भावः उच्चिक्यिरे चयितवन्तः शिलाजक्

कर्त्तुः क्रियाफलयोगात् विभाषा चेरिति धातोः कुत्वमेरनेकाच इति यणादेशः उच्चिच्यिर इति पाठान्तरं युक्तम् बभानीति चेतु त्वेनाकथितकर्म्म वनानि विघट्टयन्तः फलानि जगृहुरित्यर्थः ततः सस्नुः स्नातवन्तः स्नातेर्लिटि उस्यपदान्तादिपररूपम् पितॄन् पिप्रियुः उदकाञ्जलिना तर्पितवन्तः प्रीणातेर्लिटि इयङा देशः आपगासु नदीषु एतत्कूला पुलिनानि सैकतानि इत्वा आरेटुः आरटिताः आरेमुरिति पाठान्तरं शोकापनोदनार्थं क्लिश्यन्तमपि कालमारमन्तिस्म व्याङ्परिभ्योरम इति परस्मैपदम् अशङ्कं विस्रब्धं छायां समाश्रित्य विशश्रमुः विश्रान्ताः ॥ ३८ ॥

भ० उच्चिच्यिर इत्यादि। ते जना वनानि पुष्पाणि फलानि च उच्चिच्यिरे चिञ्चयने ठो याच्ञार्थदुहचिप्रच्छीति द्विकर्म्मकत्वं चेःकिर्व्वेति किः अर्धारिति यत्वं वनानि विघट्टयन्तः पुष्पफलं जगृहुरित्यर्थः परमते अप्राणिजातित्वात् समाहारद्वन्द्वः स्वमतं मृदङ्गकांस्यमित्यत्रोक्तं आपगासु नदीषु सस्नुः स्नातवन्तः पितॄन् पिप्रियुः तर्पितवन्तः प्रीञ्तर्पणे अर्धारितीयादेशः पुलिनानि सैकतानि इत्वा गत्वा आरेमुः शोकापनोदार्थं क्रीडन्तिस्म घे पमित्यादिना पं आरेटुरिति पाठे शोकात् शब्दं चक्रुरित्यर्थः। रटपरिभाषणे तृफलेति अत एत्वं खिलोपश्च अशङ्कं निःशङ्कं यथा स्यात्तथा छायां समाश्रित्य विशश्रमुः ॥ ३८ ॥

संप्राप्य तीरं तमसापगाया गङ्गाम्बुसम्पर्कविशुद्धिभाजः। विगाहितुं यामुनमम्बु पुण्यं ययुर्निरुद्धश्रमवृत्तयस्ते ॥३९॥

संप्रा। तमसापगायाः तमसाख्याया आपगायाः नद्याः ज०च अत्यविचमितमिनमिरभिलभितपिपतिजनिपणिभ्यो ऽसच् य स्याः स्मरणात्पापं ताम्यति सा तमसा तरसा इति पाठान्तरं तच तरसा वेगेन आपगाया अर्थात्तमसाया नद्या गङ्गाम्बु सम्प र्कात् विशुद्धिं पवित्रतां भजते या तस्यास्तीरं कूलं सम्प्राप्य गत्वा ते जना निरुद्धश्रमवृत्तयः ययुः गताः गङ्गति गम्गम्यद्योरित्यौ णादिको गन् विगाहितुं विगाहिष्यामह इति कृत्वा यामुनमम्बु यमुनाया इदं यमुनासम्बन्धि जलं पुण्यम्पुण्य[illegible]तुत्वात् पुण्ययुक्त त्वाद्वा॥३९॥

संप्राप्येत्यादि। ते जनास्तमसापगायास्तमसानामनद्यास्तीरं भ० कूलं संप्राप्य निरुद्धश्रमवृत्तयः सन्तः यामुनं यमुनासम्बन्धि पुण्यं पावनं अम्बु जलं विगाहितुं ययुः तरसेति पाठे वेगेनेत्यर्थः यमु नाशब्दात् विकारसंघेत्यादिना इदमर्थेऽण्‌ णित्त्वेऽविरिति वृद्धिः तमसापगायाः कीदृश्याः गङ्गाजलसम्पर्कात् अतिशयितशुद्धिं भ जते या तस्याः ढाङ्गजसहवहेति विण्॥३९॥

ईयुर्भरद्वाजमुनेर्निकेतं यस्मिन् विशश्राम समेत्य रामः। च्युताशनायः फलवद्विभूत्या व्यस्यन्नुदन्यां शिशिरैः पयोभिः॥४०॥

ईयुः। भरद्वाजमुनेर्निकेतं आश्रममीयुः गताः इणोयणिति ज०म यत्वम् अभ्यासस्य दीर्घइणःकितीति दीर्घत्वं यस्मिन्निकेते रामो विशश्राम विश्रान्तः समेत्य मिलित्वा तमीयुर्जना इति योज्यम् फलवद्विभूत्या फलवतां वृक्षाणां सम्पदा हेतुभूतया च्युताश

पाथोऽपगतबुभुक्ष: अशनायेत्यादिना निपातित: ध्नन् उदन्यां वारयन् अर्थर्द्दैवादिकस्य रूपम् उदन्यां पिपासां शिशिरै: शीतलै: पयोभि: ॥ ४० ॥

भ० ईयुरित्यादि। ते भरद्वाजमुनेर्निकेतमीयुर्गता इत्यर्थ: इण गतौ ठौ यिणोऽचणाविति यादेश: खःकितिर्ध इति दीर्घ: य स्मिन् निकेते राम: समेत्य संगत्य विशश्राम विश्रान्त: कीदृश: स फलवतां वृक्षाणां विभूत्या समृद्ध्या च्युताशनाय: अपगतबुभुक्ष: अशनमिच्छात् क्य इत्यादिति क्य: धनोदकागन इत्यादिना अन्ता र्थेङा तत: संख्याद इत्य: स्त्रीत्वञ्च च्युता अशनाया यस्य स तथा शिशिरै: शीतलै: पयोभिर्ज्जलैरुदन्यां पिपासां ध्नन् अपनयन् अस्युदर्चैपि शत: उदकस्य उनङ् पामार्थे पूर्ववत् पयोभिरिति पिःङ्यपानि चास्मिति अम् ॥ ४० ॥

वाचंयमान् स्थण्डिलशायिनश्च युयुक्षमाणाननिशं मुमुक्षून्। अध्यापयन्तं विनयात् प्रणेमु: पद्गा भरद्वाजमुनिं सशिष्यं ॥ ४१ ॥

ज०म० वाचं। ते भरद्वाजमुनिं सशिष्यं शिष्यै: सह वर्त्तमानमपणेमु: प्रणमन्तिस्म विनयात् विनयेन अतएव पद्गा: पदातय: पादाभ्यां गच्छन्तीति अन्येष्वपि दृश्यत इति ड: हिमकाषिहतिषुचेति चकारस्य अनुक्तसमुच्चयार्थत्वात् गमोत्तरपदे पदादेश: प दिति योगविभागाद्वा कीदृशम् अध्यापयन्तमपाठयन्तम् कान्

वाचंयमान् मौनव्रतान् वाचियमो व्रत इति खच् वाचंयमपुरन्दरौचेति निपातनात्पूर्व्वपदस्य ममन्तता स्थण्डिलशायिनः भूमिशायिनः स्थण्डिलाच्छयितरि व्रत इति णिनिः युयुक्षमाणान् योक्तुमिच्छतः योगाभ्यासनिष्ठानित्यर्थः अनिशमविच्छेदेन मुमुक्षून्मोक्षाभिलाषिण इत्यर्थः अतएव योगाभ्यासमिच्छून्॥ ४१॥

वाचंयमानित्यादि। ते जनाः ऋषिश्च भरद्वाजमुनिं प्रणेमुः नमी भ॰
म्बन्नतौः तृफलेति अतएत्वं खिद्योपस्य प्रामन्नोष इति पत्वं मादिलात् विनयात् विनयं विधाय यवर्थे पञ्चमी हेतौ वा कीदृशाः पन्नाः एतेन यानस्था अपि ये तेऽपि विनयात् पद्भ्यां पद्भ्यां गच्छन्तीति हनजनादिति डः पादसमानार्थोऽयं पच्छब्दः अध्यापयन्तं पाठयन्तं ओओङोऽओतो इति आङ्पीलीरीत्यादिना पन् कामित्याह वाचंयमान् मौनव्रतिनः तृभृवृदृजीत्यादिना आवन्तवाचाशब्दात् यमः खः खित्यव्याजेति मन् खस्य परे तु वाक्शब्दोपपदेन साधयन्ति स्थण्डिलशायिनः तृणाच्छादितभूमिशायिनः ग्रहादित्वात्मिन् व्रतेणिन्निति परः युयुक्षमाणान् योक्तुमिच्छून् योगाभिलाषिण इत्यर्थः युजोऽङ्समाधौ सन् शानः शानेऽतोमन् अनिशं निरन्तरं मुमुक्षून् मोक्षाभिलाषिणः मुचस्रपञ्चोमोचे सन् सनभिक्षाशंसउः इभृजुषस्त्रिषिणिति शासेः क्यप् शास्तुङिति इत् क्विलादिति षः॥४१॥

आतिथ्यमेभ्यः परिनिर्व्विशद्भ्योः कल्पद्रुमा योगबलेन फेलुः। धामप्रथिम्नो मदिमान्वितानि वासांसि च श्रामिमवन्त्युदूरुः॥४२॥

ज०म० आति। अतिथ्यर्थमातिथ्यमन्नपानादि अतिथेर्य्यः एभ्यो भरताादिजनेभ्य इति सम्प्रदाने चतुर्थी परिनिर्व्विवप्सो निर्व्वप्तुमिच्छो दातुमिच्छोरित्यर्थः निपूर्वो वपिर्दाने वर्त्तते धामप्रथिम्नः धाम्ना तेजसा प्रथिमा पृथुत्वं यस्य तेजसोवहिर्निर्गतत्वात् शरीरस्य पृथुत्वं जायते तस्य भरद्वाजमुनेर्योगबलेन समाधिबलेन युजसमाधावित्यस्य रूपम् कल्पद्रुमाः फेलः फलिताः भक्ष्यान्नपानादिकमित्यर्थः तृफलभजत्रपश्चेत्येत्वमभ्यासलोपश्च वासांसि च वस्त्राणि उदूढः उदवहन्तिस्म यजादित्वात्सम्प्रसारणं म्रदिमान्वितानि मृदुत्वमुपगतानि द्राघिमवन्ति दैर्घ्ययुक्तानि पृथुमृदुदीर्घशब्देभ्यस्तस्य भाव इत्यर्थे पृथ्वादिभ्य इमनिच् पृथुमृदुशब्दयो ऋतोरहलादेरिति रादेशः दीर्घशब्दस्य प्रियस्थिरेत्यादिना द्राघादेशः पश्चान्मतुप् ॥ ४२ ॥

भ० आतिथ्यमित्यादि। आतिथ्यं अतिथ्यर्थमन्नपादिकं एभ्यो भरतादिभ्यः परिसर्व्वतो निर्व्वप्तुं दातुमिच्छोर्म्मुनेर्योगबलेन समाधिबलेन कल्पवृक्षाः फेलुः अर्थात् अन्नपानादिकं तृफलेति अतएत्वं खिल्लोपश्च विकारमंघेत्यादिना तादर्थ्ये अतिथेः ण्यः निःपूर्व्वो वपिर्दाने वर्त्तते युज्यीङ्समाधौ घञि चजोःकगाविति जस्य गत्वं तस्य मुनेर्धामप्रथिम्नो हेतोस्तेजोवाऽऽधिक्यात् ते कल्पद्रुमा वासांसि उदूढः उदवहन्तिस्म चकारः समुच्चये वहेर्ज्ञोप्रापणे व्यथ यहेति जिः कीदृशानि म्रदिमान्वितानि मृदुत्वेन युक्तानि द्राघिमा दैर्घ्य विद्यते येषान्तानि गुणादिमनभावे इति पृथुमृदुदीर्घशब्देभ्य इमन् पृथुमृदुऋशेति पृथुमृदुशब्दयोः ऋकारस्य रः वाढान्तिकेति दीर्घस्य द्राघादेशः ओमंश्वढिदिति ढित्वे टेर्लोपः

द्राघिमशब्दात् सोऽस्मप्पादित्यस्त्यर्थे वतुः तेजसां प्रथिमा यस्य इति मुनिविशेषणं केचिदाहुः ॥४२॥

आज्ञां प्रतीषुर्व्विनयादुपास्थुर्जगुः सरागं ननृतुः सहावं। सविभ्रमं नेमुरुदारमूचुस्तिलोत्तमाद्या वनिताश्च तस्मिन् ॥४३॥

आज्ञां। तस्मिंस्तपोवने तिलोत्तमाद्या दिव्यस्त्रिय आगता आज्ञामादेशं मुनेः प्रतीषुः प्रतीष्टवत्यः चेटीभवत्य इत्यर्थः प्रतिपूर्व्वे इषिर्ग्रहणे वर्त्तते तस्य लिटि रूपम् विनयादुपास्थुः उपस्थिताः पादप्रक्षालनादिदाने उपस्थानं कृतवत्यः उपपूर्व्वात्तिष्ठते र्लुङि सिच् गातिस्थेति सिचो लुक् सिजभ्यस्तविदिभ्यश्चेति झेर्जुस् उस्यपदान्तादिति पररूपम् जगुः सरागं सरङ्गं गीतवत्यः ननृतुः सहावं सशृङ्गारचेष्टं नर्तितवत्यः सविभ्रमन्नेमुः सविलासप्रणताः उदारमूचुः अग्राम्यमुक्तवत्यः ॥ ४३ ॥ ज०म०

आज्ञामित्यादि। धामप्रथिम्नः किमित्याह तस्मिन् वने तिलोत्तमाद्या वनिता अप्सरस आगत्य मुनेराज्ञां प्रतीषुर्गृहीतवत्यः प्रतिपूर्व्व इषिर्ग्रहणे अयं रूपं विनयात् उपास्थुः भरतादीनां उपासनां चक्रुः उपपूर्व्वात्तिष्ठतेरयं रूपं भूस्थापिवेति सेर्लुक अनुस्मिद्धेरिति अन् उस् उस्येपीत्यालोपः सरागं मालवादिरागयुक्तं यथा स्यात्तथा जगुः गीतवत्यः गैगाने ठौ सहावं शृङ्गारचेष्टायुक्तं ननृतुः नृत्यञ्चक्रुः हावाः क्रियाः शृङ्गारभावजा इत्यमरः। भ०

सविभ्रमं नेमुः प्रणामं चक्रुः। विभ्रमस्त्वरया काले भूषास्थानविपर्य्ययः। चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमोऽथवा। विलास इत्यन्ये उदारमग्राम्यमूचुः वनिताः। वनितात्यर्थानुरागायाञ्च योषितीति कोषः चकारः पूर्व्वापेक्षया॥ ४३॥

वस्त्रान्नपानं शयनञ्च नाना कृत्वावकाशे रुचिसंप्रक्लृप्तं। तान् प्रीतिमानाह मुनिस्ततः स्म निवद्धमाद्ध्वं पिवतात्त शेध्वं॥ ४४॥

ज०म० वस्त्रा। ततोवनितोपस्थानानन्तरमवकाशे प्रदेशे यथाभिमतं वस्त्रान्नपानं सर्व्वो द्वन्द्वोविभाषैकवद्भवतीत्येकवद्भावः शयनमित्यधिकरणे ल्युट् नाना कृत्वा पृथक् कृत्वा रुचिसम्प्रक्लृप्तं यस्य यावदभिरुचितन्तत्तथैव सम्पादितम् कृपारोलः प्रीतिमान्मुनिस्तान् भरतादीनाह स्म उक्तवान् किमाह निवद्धं परिधत्त वस्त्राणि वस आच्छादन इत्यस्य विधौ लोट् झलाञ्जशझशीति सकारस्य दकारः आद्ध्वं उपविशत आसः पूर्व्ववत् दादेशः अत्त खादत अन्नादिकं अदभक्षणे इत्यस्मात् लोट् पानादिकम्पिवत पिवतेः पाघ्रादिसूत्रेण पिवादेशः शेध्वम् स्वपत शयने सर्व्वत्र विधौ लोट्॥ ४४॥

भ० वस्त्रान्नपानमित्यादि। ततोवनितोपस्थानानन्तरं धामप्रथिम्नोहेतोर्व्वा अवकाशे यथायोग्यस्थाने वस्त्रं अन्नं पानं शयनञ्च रुचिसंप्रक्लृप्तं यस्य यथारुचिस्तथैव सम्पादितं अतएव नानाविधं कृत्वा प्रीतिमान् मुनिस्तान् भरतादीन् आहस्म उवाच किमित्यादि इत्याह निवद्ध्वं वस्त्राणि परिधत्त वसकुलस्तृतौ स्तृतिराच्छादनं शपश्लो

रिति यस्य इत्वं निरईकारपाठे धेयलोपोवेति पाक्षिकः यलोपः सर्व्वच विधौ गो आध्वं उपविशत शिलायङ् उपवेशे पूर्व्ववत् पिवत पयःप्रभृतिकमर्थात् पापाने स्वादानेति पिवादेशकरणान्न गुणः किम्वा पिवादेशोऽयमदन्तः तेन पुर्घूङ इत्यस्य न विषयः लोपो ऽतोदेचोरित्यकारलोपः अत्त भचयत अद्लोभचणे शेध्वं श यनं कुरुत शोङ्शेरेणुः वस्त्रमिति वसेस्त्रासुसिति त्रः अन्नमिति गोक इति सूत्रे अन्नव्यवस्थनेति ज्ञापकात् न जग्धादेशः अदोज ग्धिरनोदने इति परस्त्रत्वं पानमिति कर्म्मणि आधारे वा अनट् शयनमित्याधारेऽनट् ॥ ४४ ॥

ते भुक्तवन्तः सुसुखं वसित्वा वासांस्युषित्वा रजनीं प्रभाते। द्रुतं समध्वा रथवाजिनागैर्म्मन्दाकिनीं रम्य वनां समीयुः ॥ ४५ ॥

ते भुक्त। ते भरतादयः सुसुखमिति क्रियाविशेषणम् भुक्तवन्तः अ०म० सक्तो वासांसि वसित्वा परिधाय रजनीमुषित्वा रजनीं रात्रीं वसतिचुधोरिट् कालाध्वनोरिति द्वितीया द्रुतं शीघ्रं प्रभाते मन्दाकिनीन्नदीं समीयुः सम्भूय गताः समध्वा अविच्छिन्नाध्वानः सङ्गता अध्वन इति प्रादिसमासः उपसर्गादध्वन इति समासा न्तष्टच् रथवाजीति द्वन्द्वैकवद्भावः तेन सहिता नागा इति शाक पार्थिवादित्वात्समासः अन्यथा सेनाङ्गत्वात्समुदायस्यैकवद्भावः स्यात् रम्यवनां रमणीयकाननां रमणीयजलाम् वा ॥ ४५ ॥

तइत्यादि। सुसुखं यथास्यात्तथा भुक्तवन्तः कृतभोजना भर भ०

तादृशो वासांसि वस्त्राणि वसित्वा परिधाय रजनीं उषित्वा स्थित्वा प्रभाते समध्वा अध्वानं सङ्गताः सन्तः रथवाजिनागैर्द्रुतं शीघ्रं रम्यवनां मन्दाकिनीं समीयुः सङ्गतवन्तः इणध्यां रूप मन्दाकिनी चित्रकूटवर्त्मनि नदीविशेषोनर्मदेति प्रसिद्धा गङ्गामात्रे मन्दाकिनीति केचित् रम्याणि वनानि यत्र वनं काननमीरयोरिति त्रियः वसित्वेति वसङ्लस्तुताविल्यस्य रूपं उषित्वेति ऐवसौनिवासे जुधवसपुजार्थाच्चेति इम् ग्रहस्वपाद्योरिति जिः रजनीमिति द्वे शाध्वकाम्नेति कर्म्मत्वं समध्वा इति गेरध्वन इत्यः न्वोर्न्नोपीतीति इति नस्य लोपः यर्योर्लोप इत्यकारलोपः रथाश्च वाजिनाश्चा स्व नागा हस्तिनश्चेतीतरेतरद्वन्द्वः परं तु भनाङ्गानां बहुत्वं समाहार इति रथश्च वाजी च नागश्चेत्येकवचनेन विग्रहं वदन्ति स माहारविधेरनित्यत्वमित्यन्ये आदौ रथवाजिशब्दाभ्यां समाहारस्ततो रथवाजिना सहिता नागाः रथवाजिनागाः शाकपार्थिवादित्वादिति केचित् ॥ ४५ ॥

वैखानसेभ्यः श्रुतरामवार्त्तास्ततोविशिञ्ज्ञानपतत्त्रिसंघं। अभ्रंलिहाग्रं रविमार्गभङ्गमानंशिरेऽद्रिं प्रति चित्रकूटं ॥ ४६ ॥

जं·म व्याख्या। ततो मन्दाकिनीगमनानन्तरं वैखानसेभ्यस्तृतीयाश्रमिभ्यः चित्रकूटे रामोस्तीति श्रुतरामवार्त्ताः चित्रकूटनामानमद्रिं पर्व्वतं प्रति लक्षणेत्थम्भूताख्यानेत्यादिना कर्म्मप्रवचनीयसंज्ञा कर्म्मप्रवचनीययुक्त इति द्वितीया तं लक्ष्यीकृत्य आनं

हिरे जग्मुः अंहतेर्लिटि द्विर्वचनं हलादिः शेषः अत अादेरिति दीर्घः तस्मान्नुट् द्विहल इति नुट् विश्रिग्धानपतत्रिसंघं कूजत्प क्षिगणं अभ्रंलिहाग्रं अभ्रस्पृक्शिखरम् वहाभ्रेलिह इति खश् अरुर्द्विषदित्यादिना मुम् रविमार्गभङ्गं उच्चैस्तरत्वात् रवेर्मार्ग भङ्गोयस्मिन्नद्राविति ॥ ४६ ॥

वैखानसेभ्य इत्यादि। ततो मन्दाकिनीगमनानन्तरं वैखानसे भ० भ्योवानप्रस्थेभ्यः श्रुता रामवार्त्ता यैस्ताहृशा भरतादयश्चित्रकू टमद्रिं प्रति लघीकृत्य अानंहिरे गतवन्तः अहिङ्गतौ ठी इदि त्वान्नुम् द्विलं स्यान्तादाद्यदाद्यश्चोरिति खरान् बोर्नुरित्यनुस्वा रः होऽज्झम इति हस्य झयत्वात् धिक्समयेति प्रतियोगे द्वितीया। वैखानसो वनेवासी वानप्रस्थश्च तापस इति वैजयन्ती अद्रिं किं भूतं विश्रिग्धानः पतत्रिणां पक्षिणां संघः समूहो यत्र एताहृशं शिजिकिङ्कस्फुटध्वनौ अभ्रंलिहाग्रं अभ्रस्पृक्शिखरं परन्तपवत् खः वाऽहल्याद्गुणाभावः उच्चैस्तरत्वाद्रवेर्मार्गभङ्गो वर्त्मविघातो य स्मिन् ॥ ४६ ॥

दृष्टोर्णुवानान् ककुभो वलौघान् वितत्य शार्ङ्गं कव चं पिनह्य। तस्थौ सिसंग्रामयिषुः शितेषुः सौमित्रिर विभुवमुज्जिहानः ॥४७॥

दृष्टे। बलौघान् दृष्ट्वा सौमित्रिस्तस्थौ स्थितः अभ्यासस्य अन र्धर्वाः खय इति खः शेषः कीदृशः ककुभो दिश ऊर्णुवानान् अाच्छादयतः ऊर्णोतेरादादिकस्योभयपदिनः शानचि उवङा

देशे च रूपम् शार्ङ्गं शृङ्गस्य विकारं धनुर्वितत्य आरोपितगुणं कृत्वा वाप्यपीत्यनुनासिकलोपः कवचं पिनह्य बद्ध्वा नहबन्धन इत्यस्य ल्यपि अपिशब्दाकारलोपम्। वष्टि भागुरिरल्लोप मवाप्योरुपसर्गयोः। धाञ्कृञोस्तनिनह्योश्च बहुलत्वेन शौनकि रिति। सिसंग्रामयिषुः संग्रामयितुमिच्छुः संग्रामयुद्ध इति चौ रादिकोणिच् तदन्तस्य सनि प्रथमस्यैकाचोद्विर्वचनम् शितेषुः तीक्ष्णशरः अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् अचतुरेत्यत्र निपातितः उज्जिहानः ऊर्ध्वनयन् ओहाङ्गतावित्यस्य जुहोत्यादिकस्य भृञामितीत्वम्॥४७॥

भ० इहेत्यादि। ककुभो दिश ऊर्णुवानान् आच्छादयतोवलोघान् सैन्यसमूहान् दृष्ट्वा सौमित्रिर्लक्ष्मणः कवचं पिनह्य बद्ध्वा शृङ्गविकारं शार्ङ्गं धनुर्वितत्य सज्यं कृत्वा आकर्षणेन विस्तार्य वा अक्षिभ्रुवमुज्जिहान उत्क्षिपन् सिसंग्रामयिषुः युद्धेच्छुः सन् तस्थौ ण्वातोडैः किम्भूतः शितस्तीक्ष्ण इषुः शरो यस्य स तथा शो यनिशाने च्छाशोर्वेति ङिः ऊर्णुवानानिति ऊर्णुञ्च्छादने शानः अ भ्रोरित्युव वितत्येति तनदुञ्विस्तृतौ वनतनात्यमिमामिति नस्य लोप. ल्यप्यतन्पिति पिनह्येति अपिपूर्वोणह्नोबन्धे वातोऽवाप्योरित्यपेरलुक् सिसंग्रामयिषुरिति संग्रामङ्कयुद्धे सन् उः अक्षिभ्रुवमिति अक्षिणी च भ्रुवौ च अक्षिभ्रुवमिति निपातनात् उज्जिहान इति ओहाङ्गतौ शानः ह्लादोरिदिः पृश्नादेरिति खेङिः॥४७॥

शुक्लोत्तरासङ्गभृतोविशस्त्रान् पादैः शनैरापततः समन्यून्। औचिष्ट तान् वीतविरुद्धबुद्धीन् विवन्दिषून् दाशरथिः स्ववर्ग्यान्॥४८॥

शुक्तो। दाशरथिस्तान् स्ववर्ग्यान् स्ववर्गे भवान् अशङ्केयत् जं०म स्वाविति यत् आत्मीया अपि कदाचित् दुष्टबुद्धयो भवन्तीत्या ह वीतविरुद्धबुद्धीन् औहिष्ट ऊहितवान् ऊहतेरात्मनेपदिनो लुङि आट वृद्धिः तदेवाविरुद्धबुद्धित्वन्दर्शयन्नाह शुक्तोत्तराश शभृतः शुक्तो य उत्तरासङ्ग उत्तरीयं तं विभ्रतीति क्विप् विश स्तान् निरायुधान् पादैरापतत आगच्छतो मुक्तवाहनत्वात् शनैर्न त्वरया प्रमन्यून् प्रकृष्टशोकान् आगतशोकान् वा विवन्दिषून् वन्दितुमिच्छून् ॥ ४८ ॥

शुक्तेत्यादि। दाशरथिस्तान् स्ववर्ग्यान् वीतविरुद्धबुद्धीन् विगत भ० दुष्टमतीन् औहिष्ट ज्ञातवान् ऊहङ् वितर्के वर्गात् भवार्थे यत्। कदाचिदात्मीया अपि दुष्टचेतसः स्युरतउक्तं वीतेति इयः कः वीतविरुद्धबुद्धित्वं कुतो ज्ञातमित्याह शुक्तेति शुक्तोय उत्तरासङ्ग उत्तरीयं तं विभ्रति इति क्विप् युद्धे शुक्तोत्तरासङ्गोनिषिद्धः विश स्तान् निरायुधान् शनैर्मन्दं यथास्यात्तथा पादैरापतत आग च्छतस्त्यक्तवाहनत्वात् समन्यून् सशोकान् विवन्दिषून् वन्दितु ॥ ४८ ॥

समूलकाषं चकषूरुदन्तोरामान्तिकं बृंहितमन्युवे गाः। आवेदयन्तः क्षितिपालमुच्चैःकारं मृतं रामवि योगशोकात् ॥ ४९ ॥

समू। ते रामान्तिकं रामसमीपमासाद्यकषुः पिष्टवन्तः जं०म समूलकाषं समूलङ्कषित्वा भूमेरधोभागमुत्खात्य निर्मूलसमूल

योः कष इति कषेर्णमुल् कषादिषु यथाविध्यनुप्रयोगः रुदन्तः रोदनं कुर्व्वन्तो वृंहितमन्युवेगा विरूढ़शोकवेगा रूढ़िरूढ़ावित्यस्य रूपम् रामवियोगशोकात् कारणात् क्षितिपालन्दशरथमुच्चैः कारं कृत्वा मृतं निधनं गतं आवेदयन्तः कथयन्तः अव्ययं यथाभिप्रेताख्यान इति कृञोणमुल् एतद्यथाभिप्रेताख्यानमिति णोच्चैराख्यातुमभिप्रेतत्वात् उच्चैरावेदयन्ति ॥ ४८ ॥

भ० समूलकाषमित्यादि। ते रुदन्तो रामान्तिकं रामसमीपदेशं समूलकाषं यथास्यात्तथा चकषुः पिष्टवन्तः भूमौ स्वशरीराघातात् समूलस्य साधोभागस्य रामसमीपदेशस्य काषः पेषणं यस्मादिति कषणक्रियाविशेषणं काषोघञन्तः समूलघातवत् चणम्वा। केचित्तु समूलं भूमेरधोभागमपि कषित्वा पिष्ट्वा पुनः पिष्टवन्त इति व्याख्याय चणमन्तस्य पूर्व्वकालत्वमाहुः अन्येतु णमन्तस्यान्न पृथगर्थाभावमाहुः तेन समूलकाषञ्चकषुः समूलं चकषुरित्यर्थः। कषवधे धो रूपं समूलमिति साकल्येऽव्ययीभावः मूलसहितमित्यर्थोवा किम्भूतास्ते वृंहितमन्युवेगा विरूढ़शोकवेगा रूढ़िरूढ़ौ रामवियोगहेतुकात् शोकान्मृतं क्षितिपालं उच्चैःकृत्वा आवेदयन्तो ज्ञापयन्तः उच्चैःकारमिति अव्ययात् कृञोऽनिष्टकथने चणम् कारं विज्ञं किम्वा उच्चैर्यथास्यात्तथावेदयन्तः किम्भूतं क्षितिपालं कारं रामवियोगे प्राणवियोगकारित्वेनैव विशालं कृकङ्विधाने इत्यस्मात् कभावेऽमो इति वचनात् कर्त्तरि घञ्॥ ४८ ॥

चिरं रुदित्वा करुणं सशब्दं गोत्राभिधायं सरितं समेत्य। मध्येजलाद्राघवलक्ष्मणाभ्यां प्रत्तं जलं ह्यञ्जलमन्तिकेऽपां॥ ५०॥

चिरं। चिरं महान्तं कालं करुणं समन्यु सशब्दं प्रतिकृत्य रुदित्वा रुदोव्युपधाद्धलादेरिति किच्चे विकल्पिते रुदविदेत्यादिना कित्त्वम् सरितं समेत्य नदीं सम्भूय गत्वा मध्येजलात् जलस्य मध्यात् तस्मादा उत्थाय अवतीर्य्य ल्यब्लोपे पञ्चमी पारेमध्ये षष्ठ्यावेत्यव्ययीभावः अपञ्चम्या इति प्रतिषेधात् अत्र भवति नाव्ययीभावादिति लुक्प्रतिषेधश्च राघवलक्ष्मणाभ्यां अपामन्तिके समीपे जलं प्रत्तम् दत्तं अच उपसर्गात्तः गोत्राभिधायं नामाभिधायं द्वितीयायाञ्चेति णमुल् द्व्यञ्जलमिति अञ्जलिपरिच्छिन्नं जलमञ्जली द्वौ विगृह्य तद्धितार्थे समासः द्वित्रिभ्यामञ्जलेरिति टच् ताभ्यांप्रत्येकमञ्जलिप्रदानात् द्वावञ्जली प्रमाणमस्येत्यस्मिन्वाक्ये प्रमाणप्रत्ययस्य प्रमाणे लुक् द्विगोर्नित्यमिति लुक् ततः समासान्तो न प्राप्नोति अतद्धितलुकीत्यधिकारात्॥ ५०॥ ज०म०

चिरमित्यादि। चिरकालं करुणं सशोकं सफूत्कारं रुदित्वा क्रन्दित्वा सरितं नदीं समेत्य सम्भूय गत्वा मध्ये अवतीर्य्य जलमध्यादाकृष्य वा रामलक्ष्मणाभ्यां अपां अन्तिके जलसमीपे तटे द्व्यञ्जलं अञ्जलिद्वयपरिच्छिन्नं जलं गोत्राभिधायं यथास्यात्तथा प्रत्तं प्रदत्तं डुदाञ्दाने क्तः ग्यचश्चवेति पचे तादेशः मध्येजलादिति मध्ये इत्यव्ययं हलेपाणीप्राध्वमित्यादौ तद्ग्रहणात् जलस्य मध्ये मध्येजलमित्यव्ययीभावः यवर्थे पञ्चमी अन्यारभेत्यादिना सामान्यतोयवर्थे पञ्चम्युक्ता तेन सर्व्वस्मात् कारकाकारकात् यवर्थे पञ्चमी दुर्निवारा परैस्तु कर्म्माधाराभ्यां यवर्थे पञ्चमी भूरिप्रयोगार्थमुक्ता क्वचिदन्यत्रापीति तैरुक्तत्वात् वोपदेवेनापि सामान्यतोयवर्थे पञ्चमीमुक्ता आगम्हादोश्वरः प्रेत्यादावना भ०

दीव्यतेऽसकामित्यत्र शैलमारुह्य आसने उपविश्य इत्यर्थ इति व्याख्यातं तेन कर्म्माधाराभ्यां यवर्थं पञ्चम्या भूरिप्रयोगो ज्ञापितः वात्कर्म्मोऽतोयादिति पीवर्ज्जनात् न मः मध्ये समेत्य जलादुत्थाय जलं प्रत्तमिति केचित् द्व्यञ्जलमिति द्वयोरञ्जल्योः समाहार इति द्विचिभ्यामञ्जलेर इत्यप्रत्ययः यचोर्लोपइतीकारलोपः तत्परिच्छिन्नत्वादभेदोपचारात् जलमपि द्व्यञ्जलमुक्तं ताभ्यामेकैकाञ्जलिदानादञ्जलिद्वयं जलं दत्तमित्यर्थः केचित्तु अतद्धितार्थे द्विगौ द्विचिभ्यामञ्जलेर इत्युक्ता द्वावञ्जली प्रमाणमस्येति वाक्यं दूषयन्ति प्रमाणार्थस्य तद्धितवाच्यत्वात् गोत्राभिधायमिति गोत्रस्य नाम्नोऽभिधायोऽभिधानं यत्र दानक्रियाविशेषणं अभिपर्व्वात् धाञोघञि यन्ञिणदिति यन् किम्वा गोत्रमभिधाय गोत्राभिधायं द्वितीयान्तात् धातोश्चणमभिधानात् केचित्तु आत्मीयैर्धृताभ्यां नीताभ्यां रामलक्ष्मणाभ्यां अपामन्तिके चिरं रुदित्वा तदनु मध्ये मध्यभागसमीपे सरितं समेत्य नाभिपर्य्यन्तं जलं गत्वेत्यर्थः जलं प्रत्तं कीदृशं जलं जलात् अदेःकर्म्मणि क्विप् जलस्य जडस्य अदनीयं भावे क्विपि अडस्य अदनीयं भोजनं यस्मादिति वा लोकान्तरं प्राप्तस्यापि दशरथस्य जडत्वं त्यक्तरामत्वात् प्रेतत्वाद्वा मनीयादित्वात् डस्य पाक्षिकं लत्वं गोत्राभिधायमित्यस्य रुदित्वेत्यनेन वा सम्बन्ध इत्याहुः ॥५०॥

अरण्ययाने सुकरे पिता मां प्रायुङ्क्त राज्ये वत दुष्करे त्वां। मागाः शुचं वीर भरं वहामुमाभाषि रामेण वचः कनीयान् ॥५१॥

अर। अरण्याय यानं अरण्ययानं तस्मिन् सुकरे सुखसाध्ये पिता मां प्रायुङ्क्त नियुक्तवान् युजेरौधादिकस्य लङि रूपम् कर्त्रभिप्राये प्रोपाभ्यां युजेरित्यात्मनेपदं राज्ये दुष्करे दुःखसाध्ये त्वां प्रायुङ्क्त एवञ्च सति हे वीर शुचं शोकम्मागाः माकार्षीरित्यर्थः इणोगा लुङि गातिस्थेति सिचोलुक् वत इति खेदे किन्तु भरममुं पितुर्नियोगं भृभरण इत्यस्मात् ऋदोरप् वह सम्पादय विधौ लोट् एवं वचः रामेण कनीयान् अनुजो भ्राता भरतः आभाषि भाषितः कर्म्मणि लुङ् ब्रुवीत्यर्थग्रहणात् द्विकर्म्मकता अल्पशब्दादीयसुनि युवाल्पयोरित्यादिना कनादेशः॥ ५१॥ न०म०

अरण्ययानइत्यादि। रामेण कनीयान् भरतोवच आभाषि कथितः ब्रुवेरर्थग्रहणात् याञ्चार्थदुहचीत्यनेन द्विकर्म्मकत्वं गौणे याचादय इति गौणकर्म्मोक्तं अल्पशब्दाद्गुणादेष्ठेयसू इति ईयसुः युवाल्पोकन्वेति कनादेशः किं तद्वच इत्याह पिता सुकरे सुखसाध्ये अरण्ययाने वनगमने मां प्रायुङ्क्त दुष्करे दुःखसाध्ये राज्ये राजकर्म्मणि त्वां प्रायुङ्क्त नियुक्तवान् युजेर्श्ना रुधादित्वात् श्नम् युजिरउञ्ज्वच इति मं नणोम्नेऽणाविति नादेशः चङिति कङ् अपेश्नमोः ईषद्दुःसोःखलिति सुञः खल् विकारसंघेत्यादिना राज्ञः कर्म्मार्थे ज्ञः मन्वर्ज्जानित्यादिना भावकर्म्मयवर्ज्जमात्न्वोर्लोपौ ताविति राज्ञोनस्य लोपः वत खेदे एवं सति हे वीर शुचं शोकं मागाः न लभस्व इणोगाभ्यां भूस्थापिवेति सेर्लुक् अमुं भरं पितृनियोगरूपं त्वं वह सम्पादय विधौ मो भरोऽतिशय आरयोरिति कोषः॥ ५१॥ भ०

कृती श्रुती वृद्धमतेषु धीमांस्त्वं पैतृकं चेद्वचनं न कुर्य्याः। विच्छिद्यमानेऽपि कुले परस्य पुंसः कथं स्यादिह पुत्रकाम्या ॥ ५२॥

ज०म० कृती। वृद्धानां पण्डितानां मतेषु श्रुतानि कृतानि चानुष्ठितानि येनेति श्राद्धमनेनेत्यधिकृत्य इष्टादित्वादिनिः क्तस्येन्विषयस्येति कर्म्मणि सप्तमी स्वमते भावक्तान्तादस्त्यर्थे इन् स त्वमेवंविधः धीमान् पैतृकं पितुरागतं पितुर्य्यच्चेति चकाराद्दृतञ्ञि ईमुमक्तान्तात्कः चेद्यदि वचनं न कुर्य्याः मध्यमपुरुषैकवचने लिङि रूपम् तदा विच्छिद्यमाने कुले वंशे परस्यापि अन्यस्यापि पुंसः अपिश ब्दोभिन्नक्रमः कथं स्यादिह लोके पुत्रकाम्या आत्मनः पुत्रेच्छा नैवेत्यर्थः पुत्रशब्दात्काम्यच्चेति काम्यच् तदन्तादप्रत्ययः टाप्॥ ५२॥

भ० कृतीत्यादि। कृती त्वं पैतृकं पितुरागतं चेद्यदि न कुर्य्याः न करिष्यसि तदा कुले वंशे विच्छिद्यमानेऽपि परस्य उत्तरकालीनस्य श्रेष्ठस्य अन्यस्य वा पुंसः कथं इह लोके पुत्रकाम्या आत्मनः पुत्रेच्छा स्यात् भवन्तं दृष्ट्वा अग्रिमस्य लोकस्य वचनाकरणेन पुत्रेष्यश्रद्धाप्रसङ्गात् त्वं कथम्भूतः वृद्धमतेषु पण्डितमतेषु कृती श्रुती च वृद्धमतानि कृतानि येन स वृद्धमतेषु कृती वृद्धमतानि श्रुतानि येन स वृद्धमतेषु श्रुती क्तेनाढ इति कर्म्मणि सप्तमी क्तेनाढेइति ज्ञापकात् क्तान्तात् कर्त्तरीन्प्रत्ययोबोध्यः किम्वा कृतं करणं अनुष्ठानं श्रुतं श्रवणं कृश्रुभ्यां भावे क्तः ततोऽस्त्यर्थे नेकाजादितीन् वृद्धमतेष्विति विषयसप्तमी धीमान् प्रशस्तबुद्धियुक्तः पैतृकमिति पितृशब्दादागतार्थे ठघेकादिति कण् कुर्य्या इति भव्ये वा फलहेत्वोरिति स्त्रौ कुरुक्षोपोऽन्ये इत्युपोलोपः पुत्रकाम्येति स्वेःकाम्यक् स्वेच्छायामिति काम्यक् संस्यादः ॥ ५२॥

अस्माकमुक्तं वक्र मन्यसे चेद्यदीशिषे त्वं न मयि स्थिते च। जिह्रेष्यतिष्ठन् यदि तातवाक्ये जहीहि शङ्कां व्रज शाधि पृथ्वीं॥ ५३॥

अस्मा। अस्माकमुक्तं अस्मत्सम्बन्धिवचनं यदि वक्र मन्यसे आद्रियसे पितृतुल्योभ्राता अस्यानुमतः कथमेतं न कुर्य्यामिति यदि च मयि स्थिते नेशिषे न प्रभुत्वङ्करोषि प्रभुत्त्वमहं तदा आकर इति ईशेरादादिकस्य ईशःस ईतीडागमः गुरुवचनमनतिक्रमणीयं विशेषतस्तातवाक्यं तस्मिन्नतिष्ठन् वचनमकुर्व्वाणः यदि जिह्रेषि लज्जसे ह्री द्विर्व्वचनं एतन्निश्चित्याह जहीहि शङ्कां त्यज विकल्पम् व्रज गच्छ अयोध्यां शाधि पालय पृथ्वीं जहातेश्चेति इत्वं विकल्पितं ईहल्यघोरितीत्वम् शासेः शाहाविति शाभावः तस्याभीयत्वेनासिद्धत्वात् ऊझल्भ्योहेर्द्धिः॥ ५३॥ ज०म०

अस्माकमित्यादि। अस्माकमुक्तं वचनं चेद्यदि वक्र मन्यसे आद्रियसे यदि वा मयिस्थिते त्वं न ईशिषे प्रभुत्वं न करोषि तातस्य वाक्ये अतिष्ठन् पितृवचनमकुर्व्वाणो यदि जिह्रेषि लज्जसे तदा पृथ्वीं शाधि पालय एवंसति मम पितुश्च वचनं कृतंस्यात् अतो व्रज गच्छ अयोध्यां शङ्कां स्वायशोभयं जहीहि त्यज अस्माकमिति स्वभावक्तेति कर्त्तरि षष्ठी सम्बन्धे इत्यन्ये गौरवे वक्त्वमभिधानात् अहमपि तव पितृतुल्य इति वक्त्वेन बोध्यते उक्तमिति भावे क्तः मन्योङ्बोधे ईशल्ङ्ऐश्वर्य्ये सध्वोरस्येमिति इम् ह्रीलिलज्जे श्वोह्वाक्लित्यागे विधौ गौ आद्योरित्यादिना ङो शासुल्लुशासने शस्येधिशाधीति शाधि॥ ५३॥ भ०

वृद्धौरसीं राज्यधुरां प्रवोढुं कथं कनीयाननुमन्स्येय। मा मां प्रयुंक्थाः कुलकीर्त्तिलोपे प्राह स्म रामं भरतोऽपि धर्म्यं ॥ ५४ ॥

ज०म० वृद्धौ। भरतः प्राह धूर्व्वहनशीला धूर्वयनशीलादित्यर्थः धर्म्ये कार्य्यत्वाद्धुर्व्वीं धुरां भ्राजभासेति क्विप् राल्लोप इति वलोपः राज्यस्य सप्ताङ्गस्य धूर्धात्री प्रकृतिरिति विग्रहः ऋक्पूरित्यकारप्रत्ययः परवल्लिङ्गमिति धूरिति स्त्रीलिङ्गम् ततष्टाप् कीदृशीं वृद्धौरसीं वृद्धोज्येष्ठः औरसः पुत्रोयस्यां उरसा निर्म्मित इति छन्दसो निर्म्मित इत्यनुवृत्तौ उरसोऽण् चेत्यण् तां तिष्ठति रामे प्रवोढुं कथमनुमन्स्येय कनीयान् सन् नैवेत्यर्थः शकधृषेत्यादिना वहेः सहावुपपदे तुमुन् गर्हायां लडपिजात्वोरित्यनुवृत्तौ विभाषा कथमि लिङ्चेति लिङ् मन्तेरनुपूर्व्वस्य आत्मनेपदित्वात् सीयुट् इटोत् लिङः सलोपोऽनन्त्यस्य अन्तामा मां प्रयुंक्थाः मा नियोजय माङि लुङ् श्नसोरल्लोप इति सिचोलोपः कुलकीर्त्तिलोपे लोपयतीति लोपः पचाद्यच् रघुवंशस्य या कीर्त्तिः तस्या लोप इति समासः पूर्व्वैरनाचरितत्वात् एवञ्च धर्म्यं धर्म्मादनपेतं भरतोऽपि प्राह स्म उक्तवान् पुनश्चाह ॥ ५४ ॥

भ० वृद्धौरसामित्यादि। रामस्य धर्म्यवचनानन्तरं भरतोऽपि धर्म्यं धर्म्मादनपेतं वचो रामं प्राह स्म प्रोवाच विकारसंघेत्यादिना अनपेतार्थे धर्म्मात् यः किं प्राह स्म इत्याह कनीयानहं अनुजोऽहं राज्यधुरां प्रवोढुं कथं उत्सहेय उत्साहं करिष्यामि कथमाक्षीपवेति पचे स्त्री राज्ञोधूः राजधुरा धुरोऽनक्षस्यादिति अः

स्त्रियामतश्चाप्। धूश्च स्यात् भारचिन्तयोरिति कोषः। कीदृशीं वृद्धां ज्येष्ठश्चासौ रमः पुत्रोयस्यां तां उरमा निर्म्मित इति कवैकादि निष्पन्नः ज्येष्ठपुत्रसम्बन्धिनीं राज्यधुरामित्यर्थः वयं त्वमि सम्भव बोढ़ोढ़ीत्योन्तं अतएव कुलकीर्त्तिलोपे धूर्व्वहे मां मा प्रयुंक्था न नियोजय लोपयतीति लोपः पचादित्वादच् यद्वा लोपोनाशः युजेर्माटीरेति टो युजिरउद्रव इति मं श्चयस्यात्मनेपदेति वेर्लुक् माधोगे ऽन्निषेधः ५४ ॥

ऊर्ज्जस्वलं हस्तितुरङ्गमेतदमूनि रत्नानि च राज भाञ्जि। राजन्यकं चैतदहं क्षितीन्द्रस्त्वयि स्थिते स्या मिति शान्तमेतत् ॥५५॥

ऊर्ज। एतद्धस्तितुरङ्गं सेनाङ्गत्वाद कवद्भावः ऊर्ज्जस्वलं बल वत् ऊर्जनमूर्क् सम्पदादित्वात् क्विप् सा विद्यते यस्येति ज्योत्स्नात मिस्रेत्यादिना वलच् असुगागमश्च अमूनि च रत्नानि राजभा ञ्जि राजगृह्याणि एतच्च राजन्यकं क्षत्रियसमूहः क्षितीन्द्रो राजा अहं त्वयि स्थिते स्यामिति भवामीति शान्तमेतत् अलीकमेतत् स्यामिति निमन्त्रणे नियोगकरणे लिङ् ॥५५॥　जं०म

ऊर्ज्जस्वलमित्यादि। एतदूर्ज्जस्वलं बलवद्धस्तितुरङ्गं अमूनि राजयोग्यानि रत्नानि एतच्च राजन्यकं क्षत्रियसमूहः एवं सर्व्वं निवेद्यात्मानं निराकरोति त्वयि स्थिते अहं क्षितीन्द्रः स्यां भवेयं इत्येतत् वचनं शान्तं अलीकं अनुचितमित्यर्थः अस्तेर्निमन्त्रणे नियोगकरणे प्रार्थने वा स्यो ऊर्ज्जक्जीवने बले चास्त्विति च ऊर्ज्जोविद्यतेऽस्य इति ज्योत्स्नातमिस्रेत्यादिना रजसादित्वादसुः　भ०

हस्तिनश्च तुरङ्गाश्च इति समाहारद्वन्द्वः राजन्यशब्दात् विकारसं घत्यादिना संघार्थे कण्॥ ५५ ॥

इति निगदितवन्तं राघवस्तं जगाद व्रज भरत गृहीत्वा पादुके त्वं मदीये। च्युतनिखिलविशङ्कः पूज्यमानोजनौघैः सकलभुवनराज्यं कारयास्मन्मतेन॥ ५६॥

इतिभट्टिकाव्ये प्रकीर्णकाण्डे श्रीरामप्रवासोनाम तृतीयः सर्गः ॥

ज०म० इति। इति एवं निगदितवन्तं उक्तवन्तं तं भरतं राघवोरामो जगाद उक्तवान् किमित्याह हे भरत मदीये पादुके उपानहौ गृहीत्वा त्वं व्रज गच्छ विधौ लोट् अस्मदस्यदादित्वे त्यदादीनिचेति वृद्धिसंज्ञायां तस्मिंदमर्थे वृद्धाच्छः प्रत्ययोत्तरपदयोश्चेति मदादेशः ततश्च पूज्यमानोजनौघैर्जनसमूहैः च्युतनिखिलविशङ्कः अपगताशेषविकल्पः सकलभुवनराज्यं सर्व्वच भूमंडले राज्यङ्कारय अनुष्ठापय पादुके इति योज्यं अस्मन्मतेन अस्माकमभिप्रायेण अत्र मदादेशो न भवति अस्मदोवहुवचनान्तस्य विवक्षितत्वात् नत्व एकवचन इति वर्त्तते ननु कथं मदीय इत्यत्र मदादेशः वहुवचनान्तत्वादिति विरोधः पादुके रामस्यैव तर्ह्यस्मन्मतेन इत्यत्रापि एकवचनं आवयोरामलक्ष्मणयोर्मतेनेति षष्ठीसमासेन दोषः॥ ५६॥

इति भट्टिकाव्य टीकायाञ्जयमङ्गलायाम्प्रकीर्णकाण्डे रामप्रवासो नाम तृतीयः सर्गः।

भ० इतीत्यादि। इत्येवं निगदितवन्तं भरतं राघवोरामोजगाद किं जगादेत्याह हे भरत मदीये पादुके गृहीत्वा त्वं व्रज गच्छ

अयोध्यामित्यर्थात् विधौ गौ विकारस्वंघेति इदमर्थे ईयः युष्म दस्मदोस्त्वात्वावित्यादिना मदीयमदादेशः च्युतनिखिलविग्रहः अपगताशेषविग्रहः जनौघैर्जनसमूहैः पूज्यमानस्त्वं सकलभुवन राज्यं अस्मन्मतेन कारय पादुकं इत्यर्थात् किम्वा अस्मन्मतेन प्रयोज्यकर्त्रा राज्यं कारय घोऽञ्ञेरिति प्रयोज्यकर्त्तुः पाक्षिक कर्मत्वं अत्र साधनङ्गलिति तृतीया अस्मन्मतमेव राज्यं करोतु त्वत्क्रियमाणरक्षणेनेतिभावः किम्वा रामो राज्यमकारयदिति वत् स्वार्थे ञिः चुर्भ्योञिरित्यत्र योगविभागात् किम्वा हे अस्मन्मते अस्मत्सदृशबुद्धे राज्यं न कारय न घातय शत्रुभिरित्यर्थः शीघ्रं गत्वा राज्यं रक्षेति भावः कञ्जगिच्छिंसे इत्यस्मात् ञिः प्रेरणे आत्व घोरामलक्ष्मणयोरिव मतिर्यस्य तस्य सम्बोधनं एतेन राज्यरक्ष णे राममतितुल्यमतित्वं दर्शितं किम्वा अस्मन्मतेन राज्यं कारय ज्ञापय लोकानित्यर्थात् स्वयं अहं राज्यं न करोमि किन्तु रामा ज्ञया करोमीति पादुकाग्रहणविनयेन लोकान् ज्ञापय इति भावः ज्ञकङ्विज्ञाने इत्यस्मात् प्ररणे ञिः राज्ञाभावः कस्य वा राज्यं अस्माकं मतं अस्मन्मतं तेन सीतालक्ष्मणसहितत्वेन बहुत्व विवक्षया न मदादेशः॥ ५६॥

इति भरतसेनकृतायां मुग्धबोधिन्यां प्रकीर्णकाण्डे रामप्रवासो नाम तृतीयः सर्गः।

## निवृत्ते भरते धीमानत्रेरामस्तपोवनं। प्रपेदे पूजितस्तस्मिन् दण्डकारण्यमीयिवान्॥ १॥

निवृत्तइत्यादि। धीमान् बुद्धिमान् अत्र स्थिते मयि कदा जनः चिद्भरतः पुनरेष्यतीत्येवम्बुद्धिमानयमः अत्रेर्महर्षेस्तपोवनं प्रपेदे

गतः तस्मिंश्च तपोवने अर्घ्यपाद्यादिभिः पूजितः दण्डकोनाम ऋषिर्भार्गवकन्यामहरत् तच्छापात्पांशुवर्षेणाक्रान्तः सबन्धुराष्ट्र विनाशो यस्मिन् स्थाने तत्त्वोपलक्षितं अरण्यमभूत् तदीयिवान् गतवान् उपेयिवानित्यत्र उपसर्गस्यातन्त्रत्वात्केवलादपीणः क्वसुः ॥ १ ॥

भ० निवृत्त इत्यादि। भरते निवृत्ते सति रामोऽत्रेर्महर्षेस्तपोवनं प्रपेदे गतवान् तत्र वने मुनिभिः पूजितः सन् दण्डकारण्यमीयिवान् गतः इणः क्वसुः वसोर्द्धेमकाजितोम् खाकिति धः श्रियः स्यणी दण्डकनाम्नः कस्यचिद्राज्ञोऽपराधेन ब्रह्मशापात् तद्देशे अरण्यमुत्पन्नं दण्डकारण्यमिति प्रसिद्धिः ॥ १ ॥

अटाट्यमानोऽरण्यानीं ससीतः सहलक्ष्मणः। बला
द्बुभुक्षुणाक्षिप्य जह्रे भीमेन रक्षसा॥ २ ॥

ज०म० अटा। महदरण्यमरण्यानी इन्द्रवरुणेत्यादिना हिमारण्ययोर्महत्त्वे ङीषानुकौ तां अटाट्यमानः अत्यर्थमटन् रामः सूचिसूत्रीत्यादिना यङ् ससीतः सहलक्ष्मणः वोपसर्ज्जनस्येति विकल्पेन सभावः बलात् बलवत्तया जह्रे हृतः गृहीत इत्यर्थः कर्म्मणि लिट् उत्क्षिप्य उत्थाप्य हस्ताभ्यां केनापि रक्षसा वैश्रवणशापात् तुम्बुरुनाम्ना गन्धर्व्वेण राक्षसीभूतेन विराधाख्येन बुभुक्षुणा भोक्तुमिच्छुना भीमेन भयानकेन भियः षुक् इत्यौणादिकषुगभावपक्षे रूपम् ॥ २ ॥

भ० अटाट्यमान इत्यादि। बुभुक्षुणा भोक्तुमिच्छुना भीमेन भयानकेन रक्षसा राक्षसेन उत्क्षिप्य हस्ताभ्यामुत्थाप्य रामो जह्रे गृहीत

इत्यर्थः कर्मणि ठो किम्भूतः सीतया लक्ष्मणेन च सहितोरामः अरण्यानीं महारण्यं अटाट्यमानः पुनःपुनरतिशयेन वा अटन् गच्छन् सूत्रसूचेति यङ् केचित्तु गत्यर्थाद्लुपेति नियमात् अत्रापि वक्रनाविवक्षेत्याहुः तन्मते पथोऽभावात् सूचसंयोगेन वक्रं गच्छन्नित्यर्थः महदरण्यं अरण्यानी नारीसखीत्यादिना निपातः महःसांवेति महच्छब्दस्य विकल्पेन सादेशः ॥ २ ॥

अवाक्शिरसमुत्पादं कृतान्तेनापि दुर्दमं। भंक्त्वा भुजौ विराधाख्यं तं तौ भुवि निचख्नतुः ॥ ३ ॥

अवाक्। तं विराधाख्यं राक्षसं कृतान्तेनापि यमेनापि दुर्दमं दुःखेन दम्यत इति खल् तौ रामलक्ष्मणौ भुवि निचख्नतुर्निखातवन्तौ कीदृशम् अवाक्शिरसं अधोमस्तकं अवाक् शिरो यस्येति ऊर्द्ध्वपादौ यस्येति उत्पादम् भुजौ भंक्त्वा मोटयित्वा जान्तनशांविभाषेत्यनुनासिकलोपाभावपक्षे रूपम् ॥ ३ ॥ ज०

अवाक्शिरसमित्यादि। तौ रामलक्ष्मणौ तं विराधाख्यं राक्षसं भुजौ भंक्त्वा भुवि निचख्नतुः निखातवन्तौ हनगमित्युङ्लोपः किम्भूतं अवाक्शिरसं अधोमस्तकं ऊर्द्ध्वपादं ऊर्द्ध्वौपादावस्येति बहुव्रीहिः कृतान्तेन यमेनापि दुर्दमं दुःखेन दमनीयं ईषद्दुःसारिति खल् भंक्त्वेति भञ्जोऽनिम् इति विभाषितकित्त्वात् पक्षे नलोपाभावः ॥ ३ ॥ भ०

आजिहिपातां रघुव्याघ्रौ शरभङ्गाश्रमं ततः। अध्यासितं श्रिया ब्राह्म्या शरण्यं शरणैषिणां ॥ ४ ॥

ज॰म॰ आजि। ततोविराधवधानन्तरं रघुव्याघ्रौ शरभङ्गनाम्नो मुनेराश्रमं आजिहिपातां गतवन्तौ ओहाङ्गतौ लुङि रूपं अध्यासितं आश्रयीकृतं श्रिया लक्ष्म्या ब्राह्म्या ब्रह्मसम्बन्धिन्या ब्रह्मण इयमित्यण् ब्राह्मो जाताविति निपातनात् टिलोपः टिड्ढाणञित्यादिना ङीप् शरणं अवस्थानं साधु अनुकूलं शरण्यं तत्र साधुरिति यत् शरणैषिणां शरणन्त्राणमेषितुं शीलं येषाम् ॥ ४ ॥

भ॰ आजिहिपातामित्यादि। ततोविराधवधानन्तरं रघुव्याघ्रौ रघुवंशश्रेष्ठौ शरभङ्गनाम्नोमुनेराश्रमं आजिहिपातां अधिगतौ टौ ब्राह्म्या ब्रह्मसम्बन्धिन्या श्रिया लक्ष्म्या अध्यासितं आश्रयीकृतं ब्रह्मणा इदं ब्रह्म विप्रस्य तपःप्रभावा इयमिति ष्णः शरणं त्राणं एषितुं शीलं येषां तेषां शरण्यं शरणं अवस्थाने त्राणे वा साधु अनुकूलं विकारसंघेति साध्वर्थे यः शरणं वधरचित्रोः शरणं रक्षणे गृहे इति विश्वः ॥ ४ ॥

पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः। शरभङ्गः प्रदिश्यारात् सुतीक्ष्णमुनिकेतनं ॥ ५ ॥

ज॰म॰ पुरो। शरभङ्गो रामस्य पुरः अग्रतः वपुः शरीरं ज्वलने अग्नौ जुहवाञ्चकार कुटिलात्तस्य भीह्रीभृहुवामिति आम् आमि

सुभाने द्विर्व्वचनम् किं इत्येत्याह प्रदिश्य कथयित्वा किं आरात् समीपे सुतीक्ष्णनाम्नो मुने: केतनं आश्रमम् तत्र वासमुपकल्पये ति तव किमर्थमत्रावस्थानमिति चेदाह ॥ ५ ॥

पुर इत्यादि। शरभङ्ग आरात् समीपे सुतीक्ष्णनाम्नोमुने: के भ॰ तनं आश्रमं प्रदिश्य तत्र वासं कल्पयेति कथयित्वा रामस्य पुरो ऽग्रत: ज्वलनेऽग्नौ वपु: शरीरं जुहवाञ्चकार हुतवान् पश्यास्मा भोष्ट्रीति पश्याम् शिलादृले क्रादीरेदि: भस्सन्नामः प्रक्षेपमात्र स्य धात्वर्थस्य विवक्षितत्वात् ज्वलनइत्यस्य होमसम्बत्वात् वैयर्थ्यं न वाच्यं ॥ ५ ॥

यूयं समैष्यथेत्यस्मिन्नासिष्महि वयं वने। हृष्टास्थ स्वस्ति वो यामः स्वपुण्यविजितां गतिं ॥ ६ ॥

यूयम्। अपि नाम यूयं समैष्यथ आगमिष्यथ आङ्पूर्व्वं इण् आगमने वर्त्तते एत्येधत्यूट्स्विति वृद्धि: इत्यस्मात्कारणात् अस्मिन्वने वयमासिष्महि स्थिता: आसेर्लुङि रूपम् अस्मदोद्वयो श्चेति चकारस्यानुक्तसमुच्चयत्वादेकत्वे बहुवचनम् अस्मदागम ने किन्ते फलमिति चेदाह हृष्टास्थ अधुना हृष्टा भवथ अस्ते र्मध्यमपुरुषबहुवचने श्नसोरल्लोप इत्यकारलोप:। स्वस्ति कल्याणं व: युष्मभ्यम् नम:स्वस्तीत्यादिना चतुर्थी बहुवचनस्य वसादेशो स्वपुण्येन विजितां लब्धां गतिञ्जन्म याम: प्रजाम: राम रूपेण विष्णुरवतीर्ण: तं दृष्ट्वा यास्याम इत्यत्र वयं स्थिता इति ॥ ६ ॥

भ० यूयमित्यादि। न केवल सुतीक्ष्णमुनिर्केतनं प्रदिश्य एतदपि प्रदिश्येति योज्यं यूयं समेष्यथ समागमिष्यथ इति हेतोरस्मिन् वने वयमाधिष्महि आङ्पूर्व्वे इण् आगमनं वर्त्तते आमेष्यामिः वयमिति एकत्वेऽपि बहुत्वविवक्षा परं तु एकत्वं वा बहुत्वमस्मदो ऽविशेषेण इत्याहुः यूयं दृष्टाः स्थ लोपोऽस्यन्यस्यामित्यकारलोपः स्वस्ति वः कल्याणं युष्मभ्यं नमःस्वस्तीत्यादिना चतुर्थी दीर्घोषी णामित्यादिना वसादेशः वयं स्वपुण्येन विजितां लब्धां गतिं या मागच्छामः विष्णुरूपे त्वयि दृष्टे शोभना गतिर्भविष्यतीत्याशया एतावन्तं कालं तिष्ठाम इति भावः ॥६॥

तस्मिन् कृशानुसाद्भूते सुतीक्ष्णमुनिसन्निधौ। उवास पर्णशालायां भ्रमन्ननिशमाश्रमान् ॥७॥

ज०म० तस्मिन्। तस्मिन् शरभङ्गे कृशानुसाद्भूते कार्त्स्न्येनाग्नीभूते विभाषा सातिकार्त्स्न्ये इति सातिः रामः सुतीक्ष्णस्य मुनेः सन्निधौ समीपे पर्णशालायांपर्णकुट्यामुवास उषितवान् तत्र कृता धिवासस्य वृत्तिमाह भ्रमन्ननिशमाश्रमान् पर्य्यटन् सदा तपोव मानि मुनीनुपासितुम ॥ ७ ॥

भ० तस्मिन्नित्यादि। तस्मिन् शरभङ्गे कृशानुसाद्भूते कार्त्स्न्येनाग्नी भूते सति रामः सुतीक्ष्णमुनेः सन्निधौ समीपे पर्णशालायां पर्णकु ट्यां उवास वसेर्णोनिवासे ठो व्ययप्रेति जिः कार्त्स्न्यायत्त्योरिति षत्वात् क्लिादित्यादौ सादर्शनात् न षत्वं अनिशं निरन्तरं आश्रमान् भ्रमन् पर्य्यटन् अर्थान्मुनीनुपासितुं ॥७॥

वनेषु वासतेयेषु निवसन् पर्णसंस्तरः। शय्योत्थायं
मृगान् विध्यन्नातिथ्येयो विचक्रमे॥ ८॥

वनेषु। वासतेयेषु वसतौ साधुषु पथ्यतिथीत्यादिना ढञ्। नि
वसन् शयानः संस्तीर्य्यत इति संस्तरः च्छदादयः पर्णानि संस्तरो
यस्येति पर्णसंस्तरः शय्योत्थायं शय्याया उत्थाय उत्पूर्वा
त्तिष्ठतेरपादाने परीप्सायामिति णमुल् शय्यते अस्यामिति
शय्या संज्ञायामित्यादिना क्यप्। त्वरया मुखधावनादीन्यपि
न कृत्वा मृगान्विध्यन् ताडयन् ग्रहिज्यादिना सम्प्रसारणम्
तत्रापि नात्मार्थं लुब्ध इत्याह आतिथेयः अतिथौ साधुः पूर्व्ववत्
ढञ् विचक्रमे विहरतिस्म वेः पादविहरण इति तङ्॥ ८॥

वनेष्वित्यादि। वासतेयेषु वसतौ निवासे रात्रौ वा साधुषु वने
षु निवसन् वासं कुर्व्वन् शयानोवा पर्णसंस्तरः पत्ररचितशय्यः
सन् शय्योत्थायं शय्यायास्त्वरया उत्थाय मृगान् विध्यन् ताड
यन् विचक्रमे विहरतिस्म तत्रापि नात्मार्थं वध इत्याह आति
थेयः अतिथौ साधुः ढधेकादिति वसत्यतिथिभ्यां साध्वर्थे धेय
यर्योर्लोपइतीकारलोपः शय्योत्थायमित्यभिधानात् पञ्चम्य
न्तात् त्वरायां णम् किम्वा शय्याया उत्थानं यस्मै इति मृगवेध
नक्रियाविशेषणं एतेन शयनोचितकालेऽपि मृगताडननिमित्तं
शय्योत्थानं गम्यते तेन च सुतरां त्वरापि अस्मिन् पक्षे भावे घञ्
यम् ञ्णिदिति यन् उदः सःस्थास्तम्भोरिति सलोपः शेरतेऽस्यामि
ति शय्या शीव्रजयजेति क्यप् शीङोङ्य्येऽणो व्यध्योताडे शतृ
ग्रहस्वपाद्योरिति जिः वेःपद्भिरिति विपूर्व्वात् क्रमोमं॥ ८॥

ऋग्यजुषमधीयानान् सामन्यांश्च समर्चयन्। बुभुजे देवसात्कृत्वा शूल्यमुख्यञ्च होमवान्॥ ९॥

ज०म० ऋग्य। ऋक् यजुश्च ऋग्यजुषम् अचतुरित्यादिना निपातितम् द्वन्द्वाच्चुदषहान्तात्समाहारे टच् ऋग्वेदं यजुर्वेदञ्च अधीयानान् पठतः इङोऽधिपूर्व्वस्य लटि शानचि रूपम् नलोकेति षष्ठीप्रतिषेधः सामन्यांश्च सामसु साधून् द्विजान् तत्र साधुरिति यत् येचाभावकर्म्मणोरिति प्रकृतिभावः समर्चयन् पूजयन् शूल्यमुख्यञ्च मांसमन्नुभुजे भुक्तवान् शूले उखायाञ्च स्यात्तां संस्कृतम् शूलोखाद्यत् भुजोऽशन इति तङ् किङ्कृत्वा देवसात्कृत्वा देवेभ्यो दत्वा तदधीनङ्कृत्वा देयेत्राचेति चकारात्सातिश्च होमवान् होमोविद्यते यस्येति कृताग्निकार्य्य इत्यर्थः॥ ९॥

भ० ऋग्यजुषमित्यादि। ऋग्यजुषं ऋग्वेदं यजुर्वेदञ्च अधीयानान् पठतो मुनीन् सामन्यान् सामवेदकुशलांश्च समर्चयन् सम्यक् पूजयन् शूल्यं शूलपाचितं उख्यं स्थालीसंस्कृतं च मांसं देवसात्कृत्वा देवाय देयं कृत्वा बुभुजे भुजोऽशने इति सं होमवान् कृताग्निकार्य्यः नित्यं होमोविद्यते ऽस्येति मोऽङमग्नुपादिति वतुः ऋक्यजुर्श्चेति चक्राद्‌वृदमहारिति अः अधीङ्ग्ध्ययने शानः सुर्ध्वारितीयः सामशब्दात् ढधेकादिति साध्वर्थे ष्णः सन्वर्ज्जेत्यादिना नलोपाभावः अर्चक् पूजे चुरादिर्न्यन्तात् शतृः देवशब्दात् देयेत्राचेति चकारात् चसात् ढधेकादिति शूलोखाभ्यां तत्र संस्कृतेऽर्थे यः॥ ९॥

वसानस्तन्त्रकनिभे सर्व्वाङ्गीने तरुत्वचौ। काण्डीरः खाड्गिकः शार्ङ्गी रक्षन् विप्रांस्तनुत्रवान्॥ १०॥

वक्षा। असौ रामो वनेष्वानभ्र भ्राम्यवानिति वक्ष्यमाणेन श्लोके अ०म
न सम्बन्धः वसानः परिदधानः वसआच्छादने इत्यस्मात् शानच्
तरुलत्वचौ वल्कले प्रत्यये तन्नकः तन्नादचिरापहृतइति कन् तन्नि
भे तन्तुल्ये सर्व्वाङ्गीणे सर्व्वाङ्गाणि व्याप्नुवत्यौ तत्सर्व्वेत्यादिना खः
काण्डीरः काण्डोऽस्यास्तीति काण्डाण्डादीरन्नीरचौ खड्गिक. ख
ड्गोऽस्यास्तीति अतइनि ठनौ खाड्गिक इतिपाठान्तरम् तत्र खड्गः
प्रहरणमस्येति तदस्यप्रहरणमिति ठक् शार्ङ्गी सधनुः तनुत्रवान्
तनुं शरीरन्त्रायतइति तनुत्रम् आतोऽनुपसर्गे कः संसर्गे मतुप्
पिनद्धकवचइत्यर्थः स एवम्विधो विप्रान् ब्राह्मणान् रक्षन्॥१०॥

वसानइत्यादि। असौ रामो वनेष्वानभ्र इति वक्ष्यमाणश्लो भ०
केनान्वयः कीदृशः तरुलत्वौ वसानः परिदधानः वसलुङ्कृतौ
शानः कीदृशौ तन्नकनिभे नूतनवस्त्रतुल्ये तन्नात् पटोपकर
णात् अचिरोद्धृतं वस्त्रं तन्नकं ढघेकादिति विकारसंघेत्यादिना
आदिशब्दात् अचिरोद्धृतार्थे तन्नशब्दात् कः तन्नकश्च नवाम्ब
रे इत्यमरः सर्व्वाङ्गीणे सर्व्वाङ्गं व्याप्नुवत्यौ ढघेकादिति तद्व्या
प्नोतीत्यर्थे ईनः काण्डीरः प्रशस्तकाण्डयुक्तः गोतृणमेधेत्यादिना
अस्त्यर्थे ईरः खाड्गिकः खड्गेन युध्यतेऽसाविति ढघेकादिति ष्णिकः
शार्ङ्गी शृङ्गस्य विकारः शार्ङ्गं धनुः विकारसंघेति ष्णः शार्ङ्गं विद्य
तेऽस्येति नैकाजादिति इन् तनुं शरीरं त्रायते इति तनुत्रं कवचं
ह्नजनादिति डः तद्युक्तः एवम्भूतः सन् विप्रान् रक्षन्॥१०॥

छित्वाश्रितं गवीनानि फलैर्य्येष्वाश्रितम्भवं। तेष्वसौ
दन्दशूकारिर्व्वनेष्वानभ्र निर्भयः॥११॥

ज०म० हित्वा। आश्रितास्तृप्ता गावो येषु भवन्ति तृणप्रायत्वात् अषड्क्षादिसूत्रेण खः पूर्व्वपदस्य च मान्तत्वन्निपात्यते तान्यरण्यानि हित्वा येषु वनेषु फलैराश्रितम्भवमाश्रितस्य भवनन्तन्निर्व्वर्त्तते आश्रितेभुव इत्यादिना भावे खच् तेष्वानभ्र अभ्रभ्रेति गत्यर्थो धातुः लिटि अत आदेरिति दीर्घे तस्मान्नुड्द्विहल इति नुट् दन्दशूकाहिः व्यालानां हन्ता नुपमइत्यादिना इंशेर्य्यङ् तद न्ताच्चजपेत्यादिना ऊकः ॥११॥

भ० हित्वेत्यादि। आश्रितङ्गवीनानि वनानि हित्वा त्यक्त्वा तेषु वनेषु असौ आनभ्र भ्रमतिस्म अभ्र गत्यां ठी स्यान्तादिति खेगान आश्रितास्तृप्ता गावो यत्र तदाश्रितगु आङ्पूर्व्वात् ऽस्नातिस्तृप्त्यर्थः परे तु तृप्त्यर्थं ऽश्रितम्यादौ दीर्घ इत्याहुः ततः स्वार्थे ईनः मकारागमो निपातनात् गोतृप्ता तृणवाकुन्द्या त्तत्याग। कश्चित्याह येषु च फलैः राश्रितम्भवं आश्रितेन तृप्तेन भूयते भावघेत्वाश्रिताद्भुव इति खः दन्दशूकानां व्यालानामहिर्हन्ता निर्भयोभयरहितः ॥ ११ ॥

युग्मकं।

व्रातीनव्यालदीप्रास्त्रः सुत्वनः परिपूजयन्। परिषद्वलान्महाब्रह्मैराट नैकटिकाश्रमान् ॥ १२ ॥

ज०म० व्राती। तेषु वनेषु भ्रमन् नैकटिकाश्रमानाट गतवान् अटे रभ्यासस्यात आदेरिति दीर्घत्वं ग्रामस्यान्तिके क्रोशमात्रन्यक्त्वा यतयोभिक्षवो ये निवसन्ति ते नैकटिकाः निकटे वसतीति ठक् तेषामाश्रमांस्तपोवनानि कीदृशः व्रातीनव्यालदीप्रास्त्रः नानाजातीयाः अनियतवृत्तयः शरीरमायास्य ये जीवन्ति ते व्रातास्तेषां च स्कर्म्म तदपि व्रातन्तेन जीवन्ति इति व्रातीनाः व्रातेन जीवतीति

खञ् तेषां व्यालाहिंस्राः उपघातकाः तेषु दीप्तास्त्रः ज्वलदायुधः सुञ्जोतीति योगविभागात्वः सुत्वनः सुतवतः परिपूजयन् सोमपायिनइत्यर्थः सुयजोर्ङ्वनिप् तुक् नमंयोगादित्यल्लोपान पर्षद्वला निति पर्षच्छेदने अस्मात्पर्षत छिन्नतीति ऋत्पणमादिरित्यत्र पर्षे वाकृल्लकादौणादिकोदिः पर्षत् तत्र यदि रजःकृष्यामुतिपर्षदा वलजिति तदा पर्षत् विद्यते येषां सुत्वनामिति वलच् अत्र परि षोदतीति परिषत् क्विबन्तो यदा परिषदप्येषा गुणग्राहिणो तदा परिषद्वलं●हायोयेषामिति वहुव्रीहिः महाव्रह्मैर्महाब्राह्मणैः कुमहद्भ्यामन्यतरस्यामिति टच् तैः सहाट ॥ १२ ॥

व्रातीनेत्यादि। ग्रामानैकटिकाश्रमान् आट अटगतौ ठो निकटे वसन्ति नैकटिका ढधेकादिति ष्णिकः तेषां मुनीनामाश्रमान् तपोवनानि किम्भूतः नानाजातीया अनियतवृत्तयः शरीरक्लेशेन ये जीवन्ति ते व्रातास्तेषां यत् कर्म्म तदपि व्रातमिति रूढं तेन जीवन्तोति व्रातीनाः पूर्व्ववदीनः तेषां मध्ये ये व्याला उपघातकास्तेषु दीप्तानि अस्त्राणि यस्य स तथा। व्यालोभुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनीति विश्वः। सुत्वनः सोमपान् परिपूजयन् षुञ् अभिषवे त्रासुसिति क्वनिप् ह्रस्वस्यतनपितीति तन् आश्रमान् कीदृशान् महाब्रह्मैर्महद्भिः ब्रह्मभिर्ब्राह्मणैः परिषद्वलान् सभायुक्तान् देशाद्ब्रह्मणःकुमहद्भ्यांतुवेति षः परिषीदन्त्यत्रेति क्विप् परिषत् सभा गोतृणत्यादिना रजआदित्वादलः नवाचरपादस्यापीष्टत्वात् न चात्र श्लोके छन्दोभङ्गः पर्षद्वलानिति पाठे पर्य्युपसर्गस्य इकार लोपोनिपातनात्। आस्थानं संसदास्थानीपर्षत् परिषदीसमे इतिरभसः। केचित्तु ब्राह्मणवाचके महच्छब्दविशेषणस्य विरुद्धार्थत्वात् महाब्रह्मैर्महातपोभिरुपलक्षितान् सुत्वनः विशेषणे तृती

या नच देशाद्ब्राह्मण इति सूत्रे ब्राह्मणवाचकोऽब्रह्मशब्द इति नि
यम इत्याह॥१२॥

परेद्यव्यद्यपूर्व्वेद्युरन्येद्युश्चापि चिन्तयन्। वृद्धिक्षयौ
मुनीन्द्राणां प्रियम्भावुकतामगात्॥१३॥

ज०म० परे। परेद्यवि परस्मिन् आगामिनि दिवसे इत्यर्थः अद्येत
स्मिन्नहनि पूर्व्वेद्युः पूर्व्वस्मिन्नहनि अन्येद्युरन्यस्मिन्नहनि चिराति
क्रान्ते चिरगामिनि दिवसे परेद्यवीत्यादिषु दिवसेषु मुनीन्द्राणां
वृद्धिक्षयौ उदयापचयौ चिन्तयन् प्रियम्भावुकतां पूर्व्वमप्रियाभाव
नियुक्तत्वादतथाभूतः सन् प्रियोभवतीति प्रियम्भावुकः आढ्यसुभ
गेत्यधिकृत्य कर्त्तरि भुवः खिष्णुच्खुकञाविति खुकञ् तद्भावः
तामगात् गतः अर्थान्मुनीन्द्राणामेव परेद्यव्यद्यादयः शब्दाः
सद्यःपरुदित्यादिना निपातिताः॥१३॥

भ० परेद्यवीत्यादि॥ परेद्यवि परस्मिन्नहनि पूर्व्वेद्युः पूर्व्वस्मिन्न
हनि अन्येद्युः अन्यस्मिन्नहनि च मुनीन्द्राणां वृद्धिक्षयौ धनशरी
रादिगतापचयापचया चिन्तयन् स्मरन् रामः प्रियम्भावुकतां
अगात् प्राप्तवान् अप्रियोऽपि प्रियोभवतीति भुवोघखिष्णुखुकञा
विति च्व्यर्थे खुकञ् परेद्यवि अद्यचेति कुतःकाकुह इत्यादिना
निपातनात् पूर्व्वान्यान्यतरेति पूर्व्वान्याभ्यां एद्युस्॥१३॥

आतिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगवं। प्रात
स्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन्रविं॥१४॥

आति। अपन्मस्वमिति सामर्थ्यलभ्यं सन्ध्याकालोधिकरण भ०म०
क्तेनात्यन्तसंयोगे द्वितीया सम्यग्ध्यायन्त्यस्यामिति आतस्योप
सर्ग इत्यङ् किमवधिं सन्ध्यामित्याह प्रक्रान्तामायतीगवम् आय
त्यः आयन्त्यो भवन्ति यस्मिन् काले गावः अस्मिन्नायतीगवं तिष्ठ
द्गुप्रभृतीनि चेत्यव्ययीभावसमासत्वात्साधुः नाव्ययीभावादिति
यस्मिन् काले सप्तम्या अभावः आङ्पूर्व्वादिणः शतरि इणो
यणिति यणि ङीपि च रूपं आयतीति गावोऽपि गोचरात् गोष्ठ
मायान्ति दिवसस्यार्द्धनाडिकावशेषे सन्ध्यापि तदैव प्रवर्त्तते
कियन्तमेवन्नपन्नित्याह आतिष्ठद्गु इति तिष्ठन्ति गावोयस्मिन्
काले दोहाय गावोहि रात्रिप्रथमयामस्य नाडिकायामतीतायां विश्रान्ताः सत्यः उत्थाप्य दुह्यन्ते आतिष्ठदित्याङ्मर्य्या
दाभिविध्योरित्यव्ययीभावः तिष्ठद्गुप्रभृतीनि चेति चकारस्या
नुक्तसमुच्चयार्थत्वादव्ययीभाव एव पुनः समासान्तरन्न भवति प्रा
तस्तरामिति प्रातरित्यव्ययम्प्रभातवाचि प्रकर्षविवक्षायान्तरप्
तदन्तात्किमेतीत्यादिना आम् अतिप्रभाते पतत्रिभ्यः कुक्कुटा
दिभ्यः प्रथमम्प्रबुद्ध उत्थितः पञ्चमीविभक्तेइति पञ्चमी रवि
मादित्यम्प्रणमन् यदा चरति तदा प्रियम्भावुकतामगादिति
पूर्व्वेण योज्यम्॥ १४॥

आतिष्ठदित्यादि। प्रियम्भावुकतां अगादिति पूर्व्वेणान्वयः भ०
तिष्ठन्ति स्थिरीभवन्ति गावोयस्मिन् स तिष्ठद्गु कालः रात्रेः प्रथ
मनाडिका तत्र हि विश्रान्ता गावः पश्चादुत्थाप्य दुह्यन्ते आयन्ति
गोष्ठं गावोयस्मिन् काले स आयतीगवकालः अर्द्धास्तमितभा
स्करः प्रायशस्तत्रैव गवामयनात् आङ्पूर्व्वादिणः शतृ तिष्ठद्गवा

यतीगवशब्दो कालेऽव्ययीभावे निपातितो आयतीगवकाले प्रक्रान्तां आरब्धां सन्ध्यां व्याप्य तिष्ठत्कालं यावत् जपन् अर्थाभ्यर्कं अन्यारभ्येत्यादिना आङ्योगे पञ्चमी लुक्परादित्यादिना पञ्चमीलुक् सन्ध्यामिति सदाध्वादीनि द्वितीया आयतीगवमिति चोपूर्व्वेति सप्तम्यामः प्रातश्च ।मिति प्रभाते तत्रिभ्यः कुक्कुटादिभ्योऽपि प्रबुद्धोऽधिकप्रबो त्रान तेभ्योऽपि प्राग् स्थितः सन् रविं प्रणमन् अधिकभावविवक्षायां पञ्चमी आनधानात् पञ्चिशब्देभ्य प्रबुद्ध इत्यन्ये किमेत्याद्येति चतरां॥ १० ॥

युग्मकं।

ददृशे पर्णशालायां राक्षस्याभीकयाथ सः। भार्य्योढं तमवज्ञाय तस्थै सौमित्रयेऽमकौ॥ १५॥

ज०ग० ददृशे। पर्णानां शालायां स्थितः स रामः राक्षस्या ददृशे दृष्टः कीदृश्या अभीकया कामुक्या अनुकाभिकेत्यादिना निपातितः दृशेः कर्मणि लिट् अथ दर्शनानन्तरं भार्य्योढं ऊढभार्य्यमूढा भार्य्या यस्येति आहिताग्न्यादिषु दर्शनात् निष्ठान्तस्य परनिपातः अवज्ञाय अनादृत्य सभार्य्यत्वात् अमकौ राक्षसी पापामी कुत्सायामव्ययसर्व्वनाम्नामकच् सौमित्रयं लक्ष्मणाय श्लाघह्नुङित्यादिना सम्प्रदानसंज्ञा तस्थै स्वाभिप्रायमैथुनायाविष्कृतवती प्रकाशनस्थेयाख्ययोश्चेति प्रकाशने तङ्॥ १५॥

भ० ददृश इत्यादि। अभीकया कामुक्या राक्षस्या सूर्पणखया पर्णशालायां स रामो ददृशे कर्म्मणि ठी अथ दर्शनानन्तरं

भार्य्योढं कृतविवाहं तं रामं अवज्ञाय सभार्य्यत्वादनादृत्य अदृढो राक्षसी सौमित्रये लक्ष्मणाय तस्मै स्वस्थित्वा मैथुनाभिप्रायं प्रकाशयामास इत्यर्थः प्रतिज्ञानिर्णयप्रकाश इति सं यमौदित्वेत्यादिना चतुर्थी असकाविति त्यादिव्यामेत्यादिना ऽदृष्टेः पूर्व्वोऽक् परमते अतिज्ञाता निन्दिता वा असौ असकौ तथाच। कृपायां निन्दनेऽज्ञाने नीतौ दानेन मानिते। प्रायोऽगम्यस्वरात् पूर्व्वः सर्व्वनामतिङव्ययादिति। ऊढा भार्य्या येन स तथा अन्याहितादित्वात् पक्षे परनिपातः॥ १५॥

दधाना बलिभं मध्यं कर्णजाहविलोचना। वाक्
त्वचेनातिसर्व्वेण चन्द्रलेखेव पक्षती॥ १६॥

दधा। सा तस्मा अर्थयाञ्चक्र इति वक्ष्यमाणेन सम्बन्धः कीदृ अ०म
शी मध्यं स्तनजघनयोरन्तरम्बलिभम्बलयोऽस्मिन् सन्तीति तुन्दिबलिवटेर्भः दधाना धारयन्ती कर्णजाहविलोचना कर्णजाहङ्कर्णमूलसमीपमित्यर्थः तस्य पाकमूलइत्यादिना जाहच् कर्णजाहयोर्विश्रान्ते विलोचने यस्या इति सप्तम्युपमानेत्यादिना उपपदलोपो बहुव्रीहिः वाक्त्वचेन वाक् त्वक्चेति प्राण्यङ्गत्वादेकवद्भावः द्वन्द्वाच्चुदषहान्तादिति टच् अतिसर्व्वेण अतिक्रान्तेन सर्व्वम् अत्याद्य इति सः एकविभक्तिचापूर्व्वनिपात इति सर्व्वशब्दस्योपसर्जनत्वेऽपि पूर्व्वनिपातो न भवति अपूर्व्वनिपात इति प्रतिषेधात् वाक्त्वचेन वाङ्मयेन माधुर्य्येण मार्द्दवेन चासाधारणेनोपलक्षितेनेत्यर्थः इत्थम्भूते तृतीया चन्द्रलेखेव पक्षती तनु

त्वात् पक्षोऽर्द्धमासः तस्य मूले प्रतिपदि पक्षान्तिः ॥ १६ ॥

भ० दधानेत्यादि। सा तं प्रार्थयाञ्चक्रे इति चतुर्थश्लोकेनान्वयः व लिभं वलियुक्तं मध्यं दधाना ।तृणमेधेत्यादिनेभः कर्णस्य मूलं कर्णजाहः तत्र विलोचनं यस्याः सा तथा कर्णान्तायतनेत्रत्यर्थः अतिसर्व्वेण माधुर्य्यसौन्दर्य्याभ्यां सर्व्वमतिक्रान्तेन ताकल्यचेन उ पलक्षिता वाक लक इति द्वन्द्वैकवद्भावः ऽत्यः विशेषणतृती या पक्षतौ पक्षमूले प्रतिपदि चन्द्रलेखेव द्रष्टुं सुष्ठुत्वात् ॥ १६ ॥

सुपाद् द्विरदनासोरुर्मृदुपाणितलाङ्गुलिः। प्रथिमानं दधानेन जघनेन घनेन सा ॥ १७ ॥

ज०म० सुपा। शोभनौ पादौ यस्याः असौ सुपात् सङ्ख्यासुपूर्व्वस्येति पादान्तलोपः पादोऽन्यतरस्यामिति यदा ङीप् नास्ति तदेत्थं रूपम् द्विरदनासोरुर्द्विरदनासे इव करिपोतकरादिव ऊरु र्यस्याः उपमानपूर्व्वोवहुव्रीहिः ऊरूत्तरपदादौपम्ये इति ऊङ् रद्यते अनेनेति रदः दन्तः पुंसिसंज्ञायामिः करणे द्वौ रदौ य स्येति द्विरदः मृदुपाणितलाङ्गुलिः तलञ्च अङ्गुलिश्चेति द्वन्द्वः तत्र घ्यन्तात्न्याचतरयोः अल्पाच्तरस्य पूर्व्वनिपातः पाण्योस्तला ङ्गुलिः पाणितलाङ्गुलिः मृदुः पाणितलाङ्गुलिर्यस्या इति योज्यं प्रथिमानम्पृथुतान्दधानेन धारयता घनेन उपचितेन जघनेनो पलक्षिता सा राक्षसी ॥ १७ ॥

भ० सुपादित्यादि। शोभनौ पादौ यस्याः सा संख्यासुपमानादिति पादस्य पाद्भावः द्विरदनासेव हस्तिशुण्डेव ऊरुर्यस्याः सा तथा

रामलक्षणेत्यादिना ङप् स्तद् पाणिनलभ्याङ्गुलिय यस्याः सा तथा ये तु अल्पाचः पूर्व्वनिपातं तथा प्राण्यङ्गत्वे समाहारं वदन्ति तन्मते प्रथमं तलाङ्गुलिशब्दयोः समाहारद्वन्द्वः तदनु पाणिना सह षष्ठीसमासः तदनु मृदुना वङ्कश्रोणिः प्रथिमानं महत्त्वं दधानेन निविडेन जघनेनोपलक्षिता। पश्चान्नितम्बः स्त्रीकट्याः क्लीवे तु जघनं पुरदृत्यमरः॥१७॥

उन्नसं दधती वक्त्रं शुद्धदल्लोलकुण्डलं। कुर्व्वाणा पश्यतः शंयून् स्रग्विणी सुहसानना॥१८॥

उन्न। उच्यते अनेनेति वक्त्रम् सर्व्वधातुभ्य ष्ट्रन्नौणादिकष्ट्रन् उ०स०
तच वक्त्रशब्दो मुखैकदेशे वर्त्तमानोऽपि कविभिः समुदाये प्रयुज्यते वक्त्रमुखमुन्नसन्दधती नाभ्यस्ताच्छतुरिति नुम् न भवति उन्नता नासिका यस्मिन्निति अञ्नासिकायाः संज्ञायान्नसञ्चेत्यधिकृत्य उपसर्गाच्चेत्यच् नासिका च नसादेशमापद्यते शुद्धदत् शुद्धाः शुक्ला दन्ता यस्मिं तच्छुद्धदत् अग्रान्तशुद्धेत्यादिना दन्तादेशः लोले चञ्चले कुण्डले यस्मिन् तत् लोलकुण्डलं पश्यतो जनान् शंयून् विद्यमानसुखान् कुर्व्वाणा शं सुखमस्यास्तीति कंशम्भ्यांबभयुस्तितुतयस इति युस् सिद्धात्यदसंज्ञा अनुस्वारः अपश्यता वा शंयून् कुर्व्वाणा पश्यतान्तु पीडाकरी स्रग्विणी मालावती अस्मायेत्यादिना विनिः सुहसानना हसनं हसः समहृसोर्वैत्यप् शोभनहसनमाननं यस्याः सा॥१८॥

भ॰ ऊनसमित्यादि। ऊर्द्धनासिकं वक्त्रं मुखं दधती उपसर्गाच्चेति कायो नसादेशः वक्त्रत्रीहाविति परे समते नसास्यस्य रूपं तथा च रभसः लपनं वदनं तुण्डमाननं नासिका नसा। नसा नासा च नासिकेति कोषान्तरं। उच्यते ग्रनेनेति वक्त्रं चात्त्विति चः वक्त्रं कीदृशं शुद्धदत् शुद्धाः दन्ता यस्येति दन्तस्य ददादेश इति परे समते दतृशब्दोऽस्ति लोले चञ्चले कुण्डले यत्र मुखे तत्तथा सा किम्भूता पश्यतोजनान् संयुन् मुखिमः कुर्व्वाणा शंकभ्यांययुतसु तिरभा इति मत्वर्थे युः रुक्मिणी मालावती रूपंधाममयादिन्वेति मत्वर्थे त्रिन् शोभनो स्त्रेशो यत्र नातृशमाननं यस्याः सा तथा॥ १८॥

प्राप्य चञ्चूर्य्यमाणासौ पतीयन्ती रघूत्तमं। अनुका प्रार्थयाञ्चक्रे प्रियाकर्त्तुं प्रियम्वदा॥ १९॥

ज॰भ॰ प्राप्य ढौकित्वा चञ्चूर्य्यमाणा गर्हितमाचरन्ती प्राणिनो हन्त्याद्‌इति चरेर्लुपसदेत्यादिना भावगर्हायां यङ् चरफलोश्चेत्यभ्यासस्य नुक् उत्परस्यातइत्युत्तम् हलिचेति दीर्घत्वं पतीयन्ती आत्मनः पतिमिच्छन्ती सुप आत्मनः क्यच् अनुका अभिलाषुका अनुकेत्यादिना निपातितः रघूत्तमं लक्ष्मणमार्थयाञ्चक्रे मार्थितवती प्रियाकर्त्तुमनुलोमयितुं पतिर्मे स्यादिति सुखप्रियादानुलोम्यइति डाच्। प्रार्थनामाह॥ १९॥

प्राप्येत्यादि। असौ राक्षसी रघूत्तमं लक्ष्मणं प्राप्य प्रियाकर्त्तुं प्रार्थयाञ्चक्रे प्रार्थितवती किं कुर्व्वती चञ्चूर्य्यमाणा गर्हितं पुनःपुनश्चरन्ती गत्यर्थात् गृलुपसदचरेति गर्हार्थे यङ् चरफ

कोट्योर्ङौ गमुरिति वेगुंन् उकुउकारस्य वेनयतयीति दीर्घः प
तीयन्तो आत्मनः पतिमिच्छन्तो कास्यायदेति क्यः बोऽव्य
रे इति दीर्घः किम्भूता सा अमुका कामुको प्रियम्वदा प्रियं वद
तीति प्रियवशाद्वयेत्यादिना खः खित्यव्याजेति मन् प्रियाकर्त्तु
मिति कपचनिथ्यचेत्यादिना आनुकूल्याय डाप्॥ १९॥

कुलकं॥

सौमित्रे मामुपायंस्थाः कम्रामिच्छुर्व्वशम्वदां। स
भोगीनां सहचरीमशङ्कः पुरुषायुषं॥ २०॥

सोमि। हे सौमित्रे इच्छुरेषणशीलः विन्दुरिच्छुरिति निपा जं०म०
तितः अशङ्कः निर्व्विकल्पः सन् किम्भावयिष्यतीति मामुपायंस्थाः
परिणय आशंसायाम्भूतवच्चेति लुङ् उपाद्यमः स्वकरणे इति तङ्
विभाषोपयमनइत्यकित्त्वपचे रूपम् कम्राम् नमिकम्पीत्यादिना
रः वशंवदां अहन्ते वशेति वदन्तीम् सम्भोगीनां सम्भरीराय
हितां अवैधव्यादिलक्षणयोगात् आत्मन्विश्वजनेत्यादिना खः स
हचरीं सहगामिनीं भिक्षासेनादायेषु चेति चकारस्यानुक्तसमुच
यार्थत्वात् टप्रत्ययः कियन्तङ्कालं पुरुषायुषम्पुरुषस्यायुर्यावत्
अचतुरेत्यादौ निपातितः अत्यन्तसंयोगे द्वितीया चरणक्रियायाः
अत्यन्तसंयोगात् यथा मासमुषित इति॥ २०॥

सोमित्रेइत्यादि। एतत् प्रार्थयाञ्चक्रे इति पूर्व्वेणान्वयः हे सौ भ०
मित्रे त्वं इच्छुः सन् अशङ्कः सन् मामुपायंस्थाः परिणय अभिधा
नात् आशंसायां टौ उपयमो विवाह इति मं यमः सूचनेवाद्

दारे इति येर्विभाषितकित्त्वात् पक्षे नमलोपाभावः कीदृशीं मां कामां कामयमानां रूपवतीमित्यन्ये हिंसदोपेत्यादिना रः वशम्बदां अहं ते वश्येति वदन्तीं प्रियवशादित्यादिना खः सुभोगीनां सुभोगाय हितां विकारसंघेत्यादिना ईनः भुज्यतेऽनेनास्मिन् वेति भोगः शरीरं मैथुनाद्युपभोग इत्यन्ये पुरुषस्यायुर्जीवितकालः निपातनात् अत स्वार्थे ष्णो वा पुरुषायुषं कालंव्याप्य सहचरीं सहचरेति हनचरगष्टक् कर्म्मप्रतिरूपकोऽयं सहशब्दः किम्वा पचादित्वादन् नदादित्वादीप् सदाभ्यादीति द्वितीया इच्छतीति इच्छुः विन्दिच्छू इति निपातः॥ २०॥

तामुवाच स गौष्ठीने वने स्त्रीपुंसभीषणे। असूर्य्यंपश्यरूपा त्वं किमभीरुररार्य्यसे॥ २१॥

ज॰म॰ ताम्। रावणीं लक्ष्मण उवाच उक्तवान् किमित्याह गौष्ठीने वने गोष्ठं भूतपूर्व्वं यस्मिन्वने इदानीन्नामापि न ज्ञायते गोष्ठात् खञ् भूतपूर्व्वइति खञ् स्त्रीपुंसभीषणे स्त्री च पुमांश्चेति स्त्रीपुंसौ अचतुरेत्यादौ निपातितौ तयोर्भीषणइति षष्ठीसः विभेतेर्णिचि हेतुभयेषुक् तदन्तात् कृत्यल्युटोबहुलमिति कर्त्तरि ल्युट् तस्मिन्नभीरुः सती किमित्यरार्य्यसे अत्यर्थमटसि अर्त्तेः सूचिसूत्रीत्यादिना यङ् यङि चेतिगुणः ननद्राइति प्रतिषेधस्य प्रतिषेधो यकारपरस्य स द्वित्वनिषेध इति रेफोद्विरुच्यते भयशीला भीरुः भियः क्रुक्लुकनौ क्रियाशब्दत्वादूङुतइति ऊङ् न भवति अमनुष्यत्वाच्च तथाहि लक्ष्मणेनामानुषीयमिति ज्ञाता तथाच भट्टा इ

र्थयन्नाह असूर्य्यम्पश्यरूपा अतिगोपनीयतया सूर्य्यमप्यनिषिद्ध दर्शनन्न पश्यतीति असूर्य्यललाटयोरित्यादिना खश् पाघ्रेत्यादि ना पश्यादेशः असूर्य्यम्पश्यं रूपं यस्या इति सः सा न पश्यतीति रूपमपि न पश्यतीत्युक्तम् ॥ २१ ॥

तामित्यादि । तां राघवं लक्ष्मण उवाच किमित्याह त्वं वन भ॰ किमर्थमभीरुः सती अरार्य्यसे अत्यर्थं भ्रमसि ऋगतौ सूचश्चेति यङ् स्याद्यर्त्त्यूर्त्तोर्णुरिति गुणः मा अन्तादेरादिर्द्विरिति निषेधात् आद्यचरस्य न द्विः स्यादानवर्द्धे ये इति वर्ज्जनात् रेफसहितस्य यस्य द्वित्वं खेराद्यच इति खेर्यलोपः घोऽनित इति खेर्दीर्घः वने क्रिमुति गोष्ठीने भूतपूर्व्वं गोष्ठं यस्मिन् सम्प्रति गोसञ्चारोऽपि नास्ति अतएव स्त्रीपुंसयोर्भीषणे भयजनके गावस्तिष्ठन्ति अस्मिन्निति गोष्ठं निपातनात् विकारसंघेत्यादिना भूतपूर्व्वेऽर्थे गोष्ठात् नीनः स्त्री च पुमांश्च स्त्रीपुंसौ निपातनात् ण्यन्तभीधातोर्नन्द्यादित्वादनः भीर्भीषवेति भीषादेशः भीषिषिन्तीति सूचनिर्द्देशात् भीषधातुरप्यस्तीति केचित् कीदृशी असूर्य्यपश्यरूपा सूर्य्यमपि न पश्यति असूर्य्यपश्यं घटीखारीत्यादिना खश् स्यादानेति दृशः पश्यादेशः असूर्य्यपश्यं रूपं यस्याः सा तया दृशिना सम्बद्धस्य नञः सूर्य्येण सह समासो गमकत्वात् नबिभेतीति अभीरुः कुक्काभिय इति क्रुः क्रियावचनस्य भीरुशब्दस्य मनुष्यजातित्वाभावात् उतोऽयुङ् रज्ज्वादेरिति सूत्रेण उप् प्रत्ययः ॥ २१ ॥

मानुषानभिलष्यन्ती रोचिष्णुर्दिव्यधर्म्मिणी । [illegible]
सुरायमाणे स्वतन्त्रा कथमञ्चसि ॥ २२ ॥

ज०म० मानु। मनोरपत्यानि मानुषाः मनोर्जातावञ्यतौ षुक् तान भिलषन्तौ कामयन्तौ रन्तुमिच्छन्तौ वाञ्छायेत्यादिना क्यन् रो चिष्णुः रोचनस्वभावा अलंकृञीत्यादिना इष्णुच् अतएव दिव्य धर्मिणी दिविभवा दिव्याः देवाः राक्षसा अपि देवयोनित्वात् तेषान्धर्म्मः स्वभाव सोऽस्या अस्तीति धर्म्मशीलेत्यादिनेनिः अप्स रायमाणा अप्सरा इवाचरन्तौ राक्षसभावं त्वामनुमिति भावः उ पमानादाचार इत्यधिकारे कर्त्तुः क्यङ् सलोपश्च ओजसोऽप्सर सोनित्यमिति वचनात् इह वने स्वतन्त्रा कथमस्यसि भ्रमसि स्व आत्मा तन्त्रः प्रधानं यस्याः अपराधीनत्वात् अनयोक्त्या राक्षसी त्वन्द्यामयति ॥ २२ ॥

भ० मानुषानित्यादि। त्वं स्वतन्त्रा सती इह वने कथमस्यसि भ्रम सि स्वं तन्त्रं प्रधानं यस्याः सा तथा तन्त्रं कुटुम्बे कृत्ये स्यात् कार णेऽपि परिच्छदे। शास्त्रे प्रधाने सिद्धान्ते तन्त्रवाये गदोत्तम इति विश्वः। मनोरपत्यानि मानुषाः मनोरुयषणाविति परसूत्रे णापत्यार्थे यण् स्वमतेऽभिधानात् तानभिलषन्तौ कामयमाना क्रमक्रमेति पचे श्यन् रोचिष्णुर्दीप्ता भ्राजभूसहेति इष्णुः दि विभवानां गन्धर्व्वादीनां योधर्म्मस्तद्युक्ता नैकाचाजादितीमुदिव्ये ति ढघेक्कादिति भवार्थे यः उदरसुद्धिति सूत्रस्य पदान्तविषयत्वं उवर्णे परे तस्य अपदान्तत्वासम्भवात् द्युभ्यामित्यादौ दान्तत्वम भीति दान्तत्वादुत्वं नदन्तमाविति पदनिषेधात् अत न उत्वं अ प्सरस इव आचरन्तौ घान्ज्यादिति ज्यः सलोपश्च ओऽज्यरे इति दीर्घः॥ २२॥

उग्रंपश्याकुलेऽरण्ये स्वान्तोनत्वविवर्ज्जिता। कामुक प्रार्थनापट्वी पतिवत्नी कथन्न वा ॥ २३ ॥

उपम्। उपगम्यन्तीत्युपगम्यश्चाः पापाश्रयत्वात् शबराद्यः अ॰म॰ उपगमश्चेत्यादिना खञ् निपात्यते तैराकुले व्याप्ते अरण्ये पति वत्नी जीवत्पतिः कथञ्चन प्रकारेण न वा नैवं भवसीत्यर्थः अन्त र्व्वत्यतिवतोर्नुगित्यत्र पतिर्व्विद्यते अस्या इति मतुप् सिद्धः जीव त्पत्यामतुपो वत्वन्निपात्यते नुकञ्चेणैव विधीयते ङीप्प्रत्यय स्तुगित्वादेव सिद्धः शालीनत्वविवर्जिता अधृष्टतया वर्जिता शा लाप्रवेशमर्हतीति शालीनकौपीने इति खञ् निपात्यते अधृष्टे भिधेये प्रवेशशब्दस्य लोपः तस्य भावः शालीनत्वं कामुकः का मशीलः लषपतेत्यादिना उकञ् तस्य प्रार्थनायामद्धी चतुरा वेतोगुणवचनादिति ङीष् ॥ २३ ॥

उपंपश्याकुलेइत्यादि। कथं वा त्वं पतिवत्नी सभर्तृका न भव भ॰ सि पतिमत्वे ईदृक् स्वातन्त्र्यासम्भवात् नारीसखीत्यादिना पतिश ब्दात् मतोर्वत्वादेशो निपातितः शालां प्रवेष्टुमर्हति शालीना अधृ ष्टा विकारसंघेत्यादिना ईनः शालीनाया भावः शालीनत्वं पुम्वत् स्युक्तपुंस्कइति पुम्वत् शालीनत्वविवर्ज्जिता धृष्टेति फलितार्थः अ रण्ये कामुकस्य प्रार्थनायां दक्षा धृष्टत्वाभुक्तमगमेति ज्ञुकः अर ण्ये किम्भुते उपंपश्यन्ति उपंपश्याः सिंहव्याघ्राद्यः पापाश्रय त्वात् शवराद्योवा तैराकुले व्याप्ते घटीखारीत्यादिना उपश ब्दाद्दृशः खश् ॥ २३ ॥

राघवं पर्णशालायामिच्छामुरकसं पतिं। यः स्वा मी मम कान्तावानौपकर्णिकलोचनः ॥ २४ ॥

ज०म० राघवं। रामम्पर्णशालायामवस्थितम्पतिमिछ अनुरहसं विवेकप्राप्तमनुगतोरहइति विगृह्य अव्ययतप्राद्रहस इत्यच् योराघवो ममापि स्वामी प्रभुः स्वामिन्नैश्वर्य्यइति निपातितम् कान्तावान् सभार्य्यः प्रवृत्तसम्भोगोऽसौ नार्हमिति दर्शयति तमेव रूपशौर्य्याभ्यां वर्णयन्नाह औपकर्णिकलोचनः कर्णयोः समीपमुपकर्णं समीपार्थे अव्ययीभावः तत्र प्रायभव इति उपजानूपकर्णोपनीवेठक् औपमपि शब्दद्वयमयोग्यत्वतं औपकर्णिके लोचने यस्य कर्णान्तायतलोचनइत्यर्थः ॥ २४ ॥

भ० राघवमित्यादि। पर्णशालायां स्थितं रामं पतिमिच्छ विविनिमन्त्रणेति आमन्त्रणे गी अनुगतं रहोविजनस्थानं रतं वा यस्य तं तस्मान्ववाद्रहमइति अः यो ममापि स्वामी ईश्वरः तस्मिन् सति मदरणं न युक्तमिति कान्तावान् एतेन स्त्रीमुखाभिज्ञोऽपि अहन्तु तपस्वीति ध्वनिः कर्णयोः समीपं उपकर्णं तत्र भवइति ठधकादित्यादिना ष्णिकः तादृशे लोचने यस्य स कर्णायतनेत्रइत्यर्थः एतेन रूपवत्वं दर्शितं ॥ २४ ॥

वपुश्चान्दनिकं यस्य कार्णवेष्टनिकं मुखं। संग्रामे सर्व्वकर्म्माणौ पाणी यस्यौपजानुकौ ॥ २५ ॥

ज०म० वपुः। यस्य राघवस्य वपुः शरीरञ्चान्दनिकञ्चन्दनेन सम्पद्यते प्राप्तशोभं भवति मुखञ्च कार्णवेष्टकिकं कर्णवेष्टकाभ्या कुण्डलहाराभ्यां कार्णवेष्टकिकम्मत् उभयत्र सम्पादिनीति ठक् पाणीहस्तौ संग्रामे युद्धे सर्व्वकर्म्माणौ धनुःखड्गादिव्यापार

कर्माणि व्याप्तृतः तत्सर्व्वादेरिति खः औपजानुकौ आजानुकौ आ जानुलम्बावित्यर्थः अत्र ठक् इसुसुक्तान्तात्कः ॥ २५ ॥

वपुरित्यादि। यस्य रामस्य वपुश्चान्दनिकं चन्दनेन राजितं भ० इति ठघेकादिति ष्णिकः यस्य मुखं कर्णवेष्टनाभ्यां कुण्डलाभ्यां राजितं इति पूर्व्ववत् ष्णिकः एतेन विलासित्वं दर्शितं यस्य पाणी हस्तौ संग्रामे युद्धे सर्व्वस्मिन् कर्म्मणि धनुः खड्गादिव्यापार रूपे कुशलौ विकारसंघेति ईनः सर्व्वादेःपथ्यङ्गकर्म्मपत्रपात्रात्त द्व्याप्नोतीत्यर्थे ईनः इति परः तन्मते सर्व्वकर्म्मणि व्याप्तृतः इत्य र्थः व्यापनमत्र तत्करणद्वारैव एतेन वीरत्वं औपजानुकौ उप जानु जानुसमीपे भवौ तावत्प्रलम्बावित्यर्थः एतेन महापुरुषल क्षणं ठवेकादिति कण् तमिक्षेति योजना॥ २५ ॥

बद्धोदुर्व्वलरक्षार्थमसिर्येनौपनीविकः। यश्चापमा श्मनप्रख्यं सेषुं धत्तेऽन्यदुर्व्वहं ॥ २६ ॥

बद्धो। येन असिः खड्गः औपनीविकः नीवीसमीपे प्रायेण ज०म० भवतीति स हि नीवीमाप्य वर्त्तमानः पार्श्वयोस्तोर्द्धन्निबद्धः कि मर्थं दुर्व्वलरक्षार्थन्दुर्व्वलरक्षायै इदमित्यस्मिन्नर्थे चतुर्थी तद र्थेत्यादिना सः तत्रार्थेन नित्यसमासः सर्व्वलिङ्गता च यश्चाप ञ्चनुर्द्धत्ते धारयति आश्मनप्रख्यं अश्मनो विकार इत्यण् अश्चि ति प्रकृतिभावे प्राप्ते अश्मनोविकार उपसङ्ख्यानमिति टिलोपः पाक्षिकः विभाषाङिश्योरित्यतो मण्डूकप्लुत्या विभाषाग्रहणान

वृत्तेः अन्यत्रात्मन एव भवति आत्मनेन प्रख्या सादृश्यमस्य तदा त्मनप्रख्यमुपघटितमिव सेषु सशरं अन्यदुर्व्वहं दुःखेनोह्यतइति खल् रामादन्येन दुर्व्वहमित्यर्थः॥ २६॥

भ॰ बद्धइत्यादि। येन रामेण अभिर्व्वद्ध औपनीविकः नीवीसमीपे भवः वामपार्श्वाधोभागस्थायीत्यर्थः। स्त्रीकटीवस्त्रबन्धेऽपि नीवी मूलधनेऽपिचेत्यत्र स्त्रीपदमुपलक्षणं अत्र वा लक्षणा उपनीविस्थ त्वात् ठञ्चेकादिति ष्णिकः यस्यापं धत्ते अश्मैवात्मनः प्रस्तरः वि कारमंधेत्यादिना स्वार्थे ष्णः मनवर्म्मेत्यादिना अविकारष्णेऽन न्तस्य नलोपनिषेधः तत्प्रख्यं तत्सदृशं अश्मनि जातं अश्ममयं इति केचित् मेषु शरयुक्तं अन्यदुर्व्वहं रामादन्येन दुःखेन उह्यतेइति ईषद्दुःसारिति खल् दुर्व्वलानां रक्षैव अर्थः प्रयोजनं यस्य खड्ग बन्धनस्य चापधारणस्य च तत्तथा तमिच्छतीति योजना॥२६॥

जेता यज्ञद्रुहां संख्ये धर्म्मसन्तानसूर्व्वने। प्राप्य दारगवानां यं मुनीनामभयं सदा॥२७॥

ज॰म॰ जेता। यज्ञाय द्रुह्यन्तीति यज्ञद्रुहो राक्षसाः सत्सूद्विषेत्यादि ना क्विप् तेषां संग्रामे जेता तृजन्तोऽयम् ततश्च तृन्प्रयोगे कर्म्मणि षष्ठी धर्म्मसन्तानसूः पूर्व्ववत् क्विप् धर्म्मरत इत्यर्थः वने वर्त्तमा नानाम्मुनीनां वानप्रस्थादीनामित्यर्थः तेषाम्भार्य्याग्निपरिग्रहात् यानि दारगवानि दाराश्च गावश्चेति दारगवानि अचतुरेत्या नादि निपातितानि दारयन्तीति दाराः दारजारौ कर्त्तरि णि लुकेतिघञ् तेषाञ्च येनाभयं सदा दत्तमिति योऽयम् येषामेव प्राप्तिक्रिया तेषामेवाभयमिति समानकर्तृकत्वम्॥ २७॥

जेतेत्यादि। यस्माय द्रुह्यन्ति यस्माद्रुहो राक्षसाः तासमिति क्विप् तेषां जेता संख्ये युद्धे धर्मसन्तानं सूते इति क्विप् यं प्राप्य वने सम्बन्धिनां दारगवादीनां सदा अभयं भयाभावः दाराश्च गावश्च दारगवानि निपातनात् दारयन्तीति दाराः कभावेऽमीद्रति कर्त्तरि घञ् पूर्व्वकाले इति सूत्रे व्याख्यानात् विष्णुं नत्वा स्तौति इत्युदाहरता एककर्तृकयोर्धात्वोः प्राक्काले क्त्वा भवतीति लभ्यं अत्र च येषां प्राप्तिस्तेषामेव यदभयं तदभाव उक्त इति समानकर्तृत्वमस्त्येव ग्रामान्नागच्छतीतिवत् क्रियानिषेधेऽपि अन्तरङ्गस्य क्रियाश्रितकार्य्यस्य निवृत्तेः केचित्तु स्थितानामित्यध्याहरन्ति तमिच्छेति योजना ॥ २७ ॥ भ०

ततोवावृत्यमानासौ रामशालां न्यविक्षत। मामुपायंस्त रामेति वदन्ती सादरं वचः ॥ २८ ॥

ततः। ततो लक्ष्मणवचनानन्तरमसौ राक्षसी वावृत्यमाना रामं वृण्वाना वावृतुवरणइति दैवादिकः आत्मनेपदी रामशालां रामस्य पर्णकुटीरं न्यविक्षत प्रविष्टा विशेः शलइगुपधादनिटः क्सः नेर्विशइति तङ् मामुपायंस्त रामेति हे राम अहं प्रार्थये भवान् मामुपायंस्त परिणयत्विति वाक्यभेदेन योज्यम् आशंसायाभूतवच्चेति लुङ् उपाद्यमः स्वकरणे इति तङ् विभाषोपयमनम इत्यकित्त्वपक्षे रूपम् इत्येवं वचः सादरं वदन्ती ॥ २८ ॥ ज०म०

ततइत्यादि। ततो लक्ष्मणवचनानन्तरं असौ राक्षसी वावृत्य भ०

माना रामं वृण्वती रामस्य शालां गृहं न्यविशत विशशाप्रवेशे वि पराजोति सं तन् हशषोऽनिमिज्ङ इति सक् वावृत्यमानेति वा वृत्युङ् आशंसायां सम्भक्तावरणे च वावृतधातुः यित्वाद्दैवादिकः ङित्वादात्मनेपदो हे राम भवान् मां उपायंस्त परिणयतु इति वचः सादरं वदन्ती उपयमोविवाहे इति सं आशंसायां टो अभिधानात् मास्मेनघोष्यावीति योगविभागात् अन्यत्रापि घीष्याविति देवादामचक्रवर्त्ती २८

अस्त्रीकोऽसावहं स्त्रीमान् स पुष्यतितरां तव। पतिरित्यब्रवीद्रामस्तमेव व्रज मा मुचः॥ २९॥

ज०म० अस्त्री। असौ लक्ष्मणोऽस्त्रीकः न विद्यते अस्य स्त्रीति नद्यृतश्चेति कप् न कपीति ह्रस्वप्रतिषेधः अहं पुनः स्त्रीमान् सभार्य्यः प्रशंसायाम्मतुप् स एव लक्ष्मणः पुष्यतितराम् अतीव पुष्यति लक्ष्मणस्तव पतिः तिङश्चेति तरप् किमेदित्याम् तस्मात्तमेव लक्ष्मणं व्रज गच्छ मा मुचः मा त्याक्षीः मुचेर्लुङ् लृदित्वादङ् इति एवमब्रवीद्रामः उक्तवान् आदादिकस्य ब्रूञोलङि ब्रुवईडिति ईटि रूपम् ॥ २९ ॥

भ० अस्त्रीकइत्यादि। इति रामस्तामब्रवीत् किमित्याह असौ लक्ष्मणः अस्त्रीकः न विद्यते स्त्री यस्य इति वृतःकः अहं स्त्रीमान् प्रशस्तस्त्रीयुक्तः अतः स एव तव पतिः पुष्यतितरां त्वामित्यर्थात् पुष्यैात्पुष्णा किमेत्याद्येति उत्कर्षे चतरां भविष्यत्सामीप्ये की अभिधानात् किम्वा यावत्पुराभ्यां भव्ये इत्यस्य योगविभागात् तच भव्ये इति सामीप्ये सप्तमी तुष्यतीति क्वचित् पाठः तस्मात्तमेव

लक्ष्मणमेव व्रज मा मुचः मा त्याक्षीः मुचुव्रपत्रोमोचणे लुदित्वात् व्रासुलिङ्घुदिति ङः ॥ २८ ॥

**लक्ष्मणं सा वृषस्यन्ती महोक्षं गौरिवागमत्। मन्मथायुधसम्पातव्यथ्यमानमतिः पुनः ॥ ३० ॥**

लक्ष्मण। लक्ष्मणं पुनर्भूयोऽगमत् लक्ष्मणं प्रति गता यथा गौर्वृषस्यन्ती मैथुनेच्छावती महोक्षम्महावृषं वृषस्यन्तीत्युपमानविशेषणमेतत् तेन वृषं लब्धुमिच्छन्तीति क्यच् अश्ववीरेत्यादिना असुक् तद्यश्ववृषयोर्मैथुनेच्छायामिति तदुदागमनं महोक्षमिति अचतुरादिसूत्रेण निपातितम् मन्मथस्यायुधानि शराः आयुध्यन्ते एभिरित्यायुधानि घजर्थे कविधानमिति कः तेषां सम्पातः संश्लेषः तस्मात् व्यथ्यमाना पीड्यमाना मतिर्मनो यस्याः ॥ ३० ॥ ज०म०

लक्ष्मणमित्यादि। सा राक्षसी लक्ष्मणं पुनरगमत् यथा गौर्महोक्षं महावृषभं गच्छति महांश्चासौ उक्षा चेति जातमहद्वृद्धादुक्षणदति षः कीदृशी वृषस्यन्ती वृषोऽत्र शुक्रलवचनः मैथुनाय वृषं शुक्रलपुरुषं इच्छन्ती कामुकीत्यर्थः गोपक्षे वृषं वृषभं इच्छन्ती क्योम्वयाद्यश्वेति क्यः धनोदकाश्वेत्यादिना सन् क्यविधानं खेच्छायां सनागमस्तु याभार्थे तेन मैथुनविषयखेच्छावगम्यते केचित्तु प्रकृत्यर्थत्यागेन मैथुनेच्छामात्रे वृषस्य अश्वस्येति क्यवन्तरूपं अतएव विरथहयानश्वस्यन्तीति नैषधप्रयोगः तत्र हि हयान् मैथुनायेच्छन्तीत्यवगम्यते प्रकृत्यर्थपुरस्कारे हयमश्वाम भ०

श्यापत्तेरित्याहुः अन्ये तु वृषस्याश्वस्य इत्यव्युत्पन्नमेव धातुद्वयं मैथुनेच्छायां वर्त्तत इत्याहुः कुसुमायुधस्य कामस्य सम्पातेन संश्लेषेण व्यथ्यमाना मतिर्म्मनो यस्याः सन्ताप इति पाठे कामेन यः सन्ताप इति व्याख्येयं मन्मथायुधेति क्वचित् पाठः आयुध्यन्ते एभिरिति कृगृश्नेतिकरणे कः छन्दोऽकभाव इत्युक्तेः मन्यतेऽनयेतिकरणे क्तिः ॥ ३० ॥

तस्याः सासद्यमानाया लोलूयावान् रघूत्तमः। असिं कौक्षेयमुद्यम्य चकारापनसं मुखं ॥ ३१ ॥

ज०म० तस्याः। सासद्यमानायाः समीपे गर्हितं सीदन्त्याः प्रविशन्त्याः लुपसदेत्यादिना यङ् रघूत्तमो लक्ष्मणः मुखमपनसमपगतनासिकञ्चकार उपसर्गाच्चेत्यच् नासिका च नसादेशमापद्यत तच्च संज्ञायामिति नानुवर्त्तते किं कृत्वा कौक्षेयमसिमुद्यम्य उत्क्षिप्य कुक्षौभव इति दृतिकुक्षीत्यादिना ढञ् कौक्षेयः लोलूयावान् अत्यर्थं लवनक्रियायुक्तः लुनाति लोलूया यङन्तादप्रत्ययादित्यकारः सा विद्यते यस्येति मतुप् ॥ ३१ ॥

भ० तस्याइत्यादि। रघूत्तमो लक्ष्मणः कौक्षेयं कुक्षौ कोषे भवं विद्यमानं तीक्ष्णलौहभवं वा असिं खड्गं उद्यम्य उत्क्षिप्य राक्षस्याः सासद्यमानायाः समीपे गर्हितं सीदन्त्या उपविशन्त्याः मुखं अपनसं अपगतनासिकं चकार लोलूयावान् अतिशयच्छेदनयुक्तः तत्कर्तृत्वात् सूत्रस्थेत्यादिना लूञ्ञ्यञ् दित्वं खर्नुः संस्यादः सोऽङ् मञ्चपादनुः गत्यर्थाद्वलुपेति सदेर्गर्हार्थे यङ् ढघेकादिति कुक्षेर्भ

वाच्य ण्येयः कुक्षौ लीयमानोदार्थादिकारे टेयन्निति केचित् कुचिः खड्गपिधाने स्यात् तीक्ष्णलोहे तथोदरे इतिकोषः अपनयं वज्र ममितिवत् ॥ ३१ ॥

अहं सूर्पणखा नाम्ना नूनं नाम्नायिषि त्वया। द
ण्डोऽयं चेत्रियैः येन मय्यपातीति साब्रवीत् ॥ ३२ ॥

अहम्। सा राक्षसीत्यब्रवीत् अहं सूर्पणखेति नाम्ना नूनम वश्यन्त्वया नाम्नायिषि न ज्ञातास्मि म्नादृत्यस्मात्कर्म्मणि लुङ् स्यसिजित्यादिना अजन्तत्वात् चिण्वदिट् आतोयुगिति युक् स्वाङ्गाच्चेति ङीषि प्राप्ते नखमुखात्संज्ञायामिति प्रतिषेधः पूर्व्व पदात्संज्ञायामिति णत्वम् अज्ञाने कारणमाह येनायन्दण्डो नासाछेदनलक्षणो मय्यपाति पातितः पातेः कर्म्मणि लुङ् चि णादेशः अत उपधाया इति वृद्धिः चिणोलुक् चेत्रियैः पर क्षेत्रे चिकित्स्यः परक्षेत्रे जन्मान्तरशरीरे यदि शक्यश्चिकित्सितुं तदा नासिकायाः सम्भवात् चेत्रिये च परक्षेत्रे चिकित्स्य इति निपातनम् ॥ ३२ ॥ ज०म०

अहमित्यादि। सा राक्षसी इत्यब्रवीत् किं तदित्याह नाम्ना सू र्पणखाहं नूनं निश्चितं त्वया नाम्नायिषि न ज्ञाता कर्म्मणि टौ च्लिः सिः हनग्रहदृशश्च इति मिण् यमज्ञिणदिति यन् नाम्नेति भेदके तृ तीया सूर्पणखेति नाम्ना उपलक्षितेति केचित् सूर्पवत् नखायस्याः सा सूर्पणखा पूर्व्वपदस्थात् पुःसंज्ञायां णत्वमिति परे स्वमते पूर्णो दान्ते इत्यादौ वाशब्दस्य व्यवस्थावाचित्वात् नखमुखान्मात् सं ज्ञायामीपनिषेध इति परे स्वमते पातृशोनादीत्यादिना स्वाङ्गा दीप् प्रत्ययोविभाषित ईपोऽभावपक्षे आप् पक्षे तादृशसंज्ञाया भ०

अभावात् न ईप् ईपि सति तु वा का चतिः तत्र वाशब्दोव्यवस्था वाची वा अज्ञाने हेतुमाह येनायं दण्डोनासाच्छेदनरूपो मयि त्वया अपाति निपातितः ण्यन्तात् पतेः कर्म्मणि टो चत्रियः ज न्मान्तरशरीरे चिकित्स्यः एतज्जन्मनि नासाया अनुत्पत्त्या शरी रान्तर एव तत्सम्भवात् विकारसंघेत्यादिना चेत्रशब्दात् जन्मा न्तरशरीरे चिकित्स्येऽर्थे इयः चेत्रादियः परचेत्रेचिकित्स्ये इति पर सूत्रं तत्र परचेत्रे जन्मान्तरशरीरे ॥ ३२ ॥

पर्य्यशाप्सीद्दिविष्ठासौ संदर्श्य भयदं वपुः। अपिस्फ वच्च बन्धूनां निनङ्क्षुर्विक्रमं मुहुः ॥ ३३ ॥

ज०म० पर्य्य। असौ राचसी पर्य्यशाप्सीत् आक्रुष्टवती शपेरनिटः सिचि हलन्तलचणा वृद्धिः शपउपालम्भन इति तङ् न भवति उपलम्भनं हि वाचा शरीरस्पर्शनम् दिविष्ठा नभसि वर्त्तमाना तत्पुरुषे कृतिवहुलमिति सप्तम्या अलुक् अम्बाम्बेति षत्वम् भयदं रौद्रम्वपुः शरीरं सन्दर्श्य दर्शयित्वा बन्धूनां विक्रमं शौर्य्य मुहुः पुनः पुनः अपिस्फवत् स्फीतीचकार अर्त्तिह्रीत्यादिना णावित्यनुवृत्तौ स्फायोव इति वकारः स्फायतेश्चङि णिलोपः ह्र स्वदिर्व्वचनादि अभ्यासस्य खयः शेषः चर्त्वमित्यस्य सन्वद्भावे नि नङ्क्षुः नष्टुमिच्छुरित्यर्थः नशेः सनि मस्जिनशोर्झलीति नुम् ॥ ३३ ॥

भ० पर्य्यशाप्सीदित्यादि। असौ राचसी दिविष्ठा सती नभस्था सती भयदं भयजनकं वपुः सन्दर्श्य पर्य्यशाप्सीत् आक्रुष्टवती ब न्धूनां खरादीनां विक्रमं मुहुर्व्वारं वारं अपिस्फवच्च वर्द्धयामास

च रामादीनां भयार्थं विवर्द्धं कथयामासेत्यर्थः निनङ्क्षुः अन्तर्द्धातुमिच्छुः नशेः सनि नृपुरधामुचामिति पुन् मस्जिनशोरिति पङ् पढोः कः से प्रपोऽजभ्याकोऽपि व्यांमिः अनिमत्वात् प्रजवदिति विः दिवि तिष्ठतीति हलजनादिति ङः सप्तम्या अलुक् षत्वञ्चाभिधानात् संपूर्व्वात् स्थेर्ण्यन्तात् क्लीयप् अपिस्फवदिति स्फायीङ् वृद्धौ त्रिःप्रेरणे पातिस्फायोर्लन्वङोत्वाविति वङ् त्रिश्रीत्यङ् द्वित्वं खेःसम्वत् त्यज्जुक्तःस्वः अपिस्फुरदिति क्वचित् पाठः तत्र प्रकाशितवतीत्यर्थः अपुस्फुरदिति क्वचित् पाठः तत्र प्रकाशितवतीत्यर्थः अपुष्फरदिति पाठेऽपि तथा स्फुरस्फूर्त्तौ चले णौ जीर्णाऽजेति पचे उकारस्यात्वं ॥ ३३ ॥

खरदूषणयोर्भ्रात्रोः पर्य्यदेविष्ट सा पुरः। विजिग्राहयिषू रामं दण्डकारण्यवासिनोः ॥ ३४ ॥

खर। खरदूषणयोर्भ्रात्रोर्दण्डकारण्यवासिनोः पुरः अग्रतः ज०म० पर्य्यदेविष्ट परिदेवनङ्कृतवतीति देवृदेवनइत्यस्यात्मनेपदिनः सेटो लुङि रूपम् परिदेवने कारणमाह विजिग्राहयिषू रामं विग्राहयितुं योधयितुमिच्छुः ग्रहेर्ण्यन्तस्य सनन्तस्य रूपम् रोरीति रेफलोपः ढ्रोलोप इति दीर्घत्वम् किम्पर्य्यदेविष्टेत्याह ॥ ३४ ॥

खरदूषणयोरित्यादि। रामं विजिग्राहयिषुः विग्राहयितुं ख म० रादिभिः सह योधयितुमिच्छुः सा राक्षसी खरदूषणयोर्भ्रात्रोः पुरोऽग्रतः पर्य्यदेविष्ट क्रन्दितवती देवृदेवने किम्भूतयोः

दण्डकारण्यवासिनो: दण्डकनामारण्ये वसत इति ग्रहादित्वा णिनि वस्तुं शीलमनयोरित्यन्ये यद्वेर्ग्रहणत्वात् सनन्त:पुर इति पूर्व्वाधरावरा इति पूर्व्वशब्दस्य पुरादेश: अतएव अम् तद्योगे समार्थेनेत्यादिना षष्ठी ॥ ३४ ॥

कृते सौभागिनेयस्य भरतस्य विवासितौ। पित्रा दौर्भागिनेयौ यौ पश्यतं चेष्टितं तयो:॥ ३५ ॥

ज॰भ॰ कृते। भरतस्य कृते कार्य्यनिमित्तं राज्ये अभिषेक्तव्यमिति सुभगा कैकयी तस्या अपत्यं सौभागिनेय: स्त्रीभ्यो ढक् कल्या ण्यादीनामिनङ् तत्र सुभगादुर्भगा चेति पद्यते हृद्भगेत्युभय पदवृद्धि: पित्रा यौ विवासितौ निष्काशितौ दौर्भागिनेयौ कौश ल्यासुमित्रा च दुर्भगे तयोरपत्ये रामलक्ष्मणौ तयोश्चेष्टितच्चा साहंदनम्पश्यतम् विधौ प्रार्थनायां वा लोट् थसस्तम् ॥ ३५ ॥

भ॰ कृतेइत्यादि। इति पर्य्यदविष्ट इति पूर्व्वेणान्वय: सौभागिनेय स्य सुभगापुत्रस्य भरतस्य कृते निमित्तं यौ दौर्भागिनेयौ दुर्भ गापुत्रौ रामलक्ष्मणौ पित्रा दशरथेन विवासितौ राज्यान्निराकृ तौ तयोश्चेष्टितं नासाच्छेदनरूपं युवां पश्यतं विधौ लोट् कृते इत्य व्ययं निमित्तार्थे वर्त्तते किवन्तकृत्शब्दात् चतुर्थीत्येके कृतश ब्दात् सप्तमीत्येके वाक्यार्थतोऽव्यावाद्येरित्यादिना आवन्तत्वात् सुभगादुर्भगाशब्दाभ्यां अपत्यार्थे स्त्रीभ्य: नितेमिरिति द्विपदे वृद्धि: कल्याणीसुभगेत्यादिना स्येयस्य इनेयादेश: यथोर्लोप इत्यालोप:॥ ३५॥

मम रावणनाथाया भगिन्या युवयोः पुनः। अयं तापसकाद्ध्वंसः क्षमध्वं यदि वः क्षमं ॥ ३६ ॥

मम। रावणो नाथः प्रभुर्यस्याः मम विशेषणं युवयोर्भगिन्या ज०म० अयन्तापसकात् कुतापसात्कुत्सायाङ्कन् ध्वंसो नासिकाविना शः यदि वः युष्माकङ्क्षणाङ्क्षमं युक्तम् क्षन्तुमित्यर्थात् युष्मदि गुरावेकेषामिति बहुवचनन्तयोर्ज्येष्ठत्वात् तर्हि क्षमध्वं उपे क्षध्वं रावण एव शास्यतीति भावः पुनरप्युत्तेजयितुमाह ॥ ३६ ॥

ममेत्यादि। रावणोनाथोयस्यास्तादृश्या मम युवयोर्भगिन्या युवयो रेव पुरोऽयतः यूयं तापसकात् क्षुद्रतपस्विनः सका शात् ध्वंसोनाशश्च्छेदनरूपोयत्तः अत्र यदि वोयुष्माकं क्षमं क्ष न्तुं योग्यं तदा यूयं क्षमध्वं रावण एव शास्यतीति भावः विका रमंघेत्यादिनाल्पार्थे कुत्सार्थे वा कः युष्मदोर्द्वित्वे बहुत्वविवक्षा क्षममिति क्षमायोग्यं सामान्यतः प्रयुक्तं। युक्ते योग्ये हिते क्षम मिति कोषः क्षममव्ययमित्यन्ये पुनरिति पाठे मम पुनरिति योज्यं ॥ ३६ ॥

असंस्कृत्रिमसंव्यानावनुप्त्रिमफलाशिनौ। अभृत्रि मपरीवारौ पर्य्यभूतां तथापि मां ॥ ३७ ॥

असम्। संस्कारेण वापेन भरणेन च निर्वृत्तं संस्कृत्रिममु भ० त्रिमभृत्रिमञ्च ड्वितः क्त्रिः क्त्रेर्मम्नित्यम् संपर्य्युपेभ्य इति सुट् सम्पूर्व्वस्य क्वचिदभूषणेऽपीष्यते संस्कृत्रिमञ्च विद्यते येषामिति न् समासः असंस्कृत्रिमाणि संव्यानानि परिधानानि उत्तरी

याणि ययोः वल्कलवाससावित्यर्थः अकृत्रिमाणि फलानि अश नमाहारो ययोः तौ वन्यफलाहारौ न शालिभोजनौ परित्रि यतेऽनेनेति घञ् उपसर्गस्य घञीति दीर्घः मृगाणाममनुष्य त्वात् अभृत्रिमः परीवारो अनुजीविलोकोययोस्तौ मृगपरि वारौ तथापि मामपर्य्यभूतामपरिभूतवन्तौ लुङि रूपम्॥ ३७॥

भ॰ असंस्कृत्रिमसंव्यानावित्यादि। तौ असंस्कृत्रिमसंव्यानौ तन्त्वा दीनां संस्कारेण जातं संस्कृत्रिमं संपरे सुमिति सुम् न विद्यते संस्कृ त्रिमं संव्यानमुत्तरीयं ययोर्वल्कलमात्रसत्त्वात् वपनेन जातं उप्त्रिममनुप्त्रिमं वन्यं तादृशं फलमशनमाहारो ययोः अथवा नन्द्यादित्वात् कर्त्तरि अनः फलाशिनाविति क्वचित् पाठः भरणे न पोषणेन जातोभृत्रिमः परीवारोऽनुजीविजनो ययोः सर्व्वत्र ड्वितस्त्रिमक् यहस्तपाठोरिति जिः परिवृणोतीति कर्त्तरि घञ् व्यतीहारे त्रिःपूर्व्व इत्यत्र व्यतीहार इति दीर्घनिर्द्देशात् क्वचित् घञन्ते उपसर्गस्य दीर्घत्वं सूचितं तेनात्र परिकारस्य दीर्घत्वं तौ यद्यपि ईदृशौ तथापि मां पर्य्यभूतां परिभूतवन्तौ भूरुयेति सेलुक॥ ३७॥

श्वःश्रेयसमवाप्तासि भ्रातृभ्यां प्रत्यभाणि सा। प्राणि वस्तव मानार्थं प्रजाश्वसिद्धि मा रुदः॥ ३८॥

ज॰म॰ श्वःश्रे। श्वःशब्दः प्रशंसामाह शोभनं श्रेयइति वाक्ये अशो वसीयः श्रेयसइत्यच् मयूरव्यंसकादित्वात् श्वःश्रेयसकल्याणम वाप्तासि प्राप्स्यसि भविष्यदनद्यतने लुट् मारयावस्ताविति उक्तव ति ताभ्यां भ्रातृभ्यामत्यभाणि प्रतिभणिता सा कर्म्मणि लुङ् प्राणि

यस्तव मानार्थम् तव मानखण्डनमभूदिति जीवाव: अन प्राणने अनच् रुदादिभ्य: सार्व्वधातुक इति इट् अनितेरिति णत्वं त स्माद्व्रज यथास्थानं गच्छ आश्वसिहि उद्वेगन्त्यज विधौ प्रार्थनायां वा लोट् मा रुद: माङ्लुङ् इरितो वेत्यङ् यदा नाङ् तदा मारोदीरिति ॥ ३८ ॥

स्व:श्रेयसमित्यादि। भ्रातृभ्यां खरदूषणाभ्यां सा राक्षसी प्रत्युत्तरं प्रापिता किमत इत्याह स्व:श्रेयसं कल्याणं अवाप्नासि प्राप्स्यसि मत्पुत्रवधेनेत्यर्थात् आत्मरूपं श्वोभवं श्रेय: स्व:श्रेयसं श्वोऽवसीयस् स्व:श्रेयसेति निपातितं तत्र मानार्थं सम्मानार्थं आवां प्राणिव: जीवाव: अनच्च प्राणने रुभ्योयदतीम् प्राग्वन्नोण इति पक्षे णत्वं तस्माद्व्रज गच्छ स्वस्थानमित्यर्थात् आश्वसिहि आश्वासं लभस्व उद्वेगं त्यज इत्यर्थ: प्रार्थनायां गौ रुदादित्वात् पूर्व्ववदिम् त्वं मा रुद: मा रोदी: लघिररुदरोदे इरित्वात् आसुलिदृ्युदिति पक्षे ङ: ॥ ३८ ॥ भ०

जक्षिमोऽनपराधेऽपि नरान्नक्तन्दिवं वयं। कुतस्त्यं भीरु यत्तेभ्यो द्रुह्यद्भ्योऽपि क्षमामहे ॥ ३९ ॥

जक्षि। वयं अनपराधेऽपि नक्तञ्च दिवा च नक्तन्दिवम् अचतुरेति निपातितम् नरान् जक्षिमो भक्षयाम: जक्षभक्षहसनयोरिति भक्षार्थस्य रुदादिभ्य इतीट् अस्मदोर्द्वयोश्चेति द्वित्वे वयमिति बहुवचनं यतएवं हे भीरु सम्बुद्धौ गुणो न भवति संज्ञापूर्व्वकोविधिरनित्य इति कुतस्त्यकुतएतदागतम् अव्ययत्वात् त्यप् अमेहकतसित्रेभ्य इति त्यप् तेभ्यो नरेभ्यो द्रुह्यद्भ्योऽपि द्रोह अ०म०

कुर्व्वाणेभ्योऽपि चमामहे नैवेत्यर्थः क्रुधद्रुहेति सम्प्रदानत्वम् चमेर्गम्यमानोमन्त्रर्थस्तस्यामृषार्थत्वात् चमध्वं यदि वः चममि त्यस्य प्रतिवचनम्॥ ३८ ॥

भ० जचिमइत्यादि। अनपराधे अपराधाभावेऽपि वयं नराम् नक्तं दिवं रात्रौ च दिवा च जचिमः भचयामः जचइलुघभचश सयोर्घित्वात् हृदादिः अस्मदोद्वित्वञ्चत्वविवचा अन्यराजसयो गादझत्वं नक्तन्दिवमिति अचिभ्रुवादित्वान्निपातितं स्वार्थिकत्वा त्तेन दिवाशब्देन समाहारोदन्दोवा हे भीरु द्रुह्यद्भ्योऽपि द्रोहं कुर्व्वद्भ्योऽपि तेभ्यो नरेभ्योवयं चमामहइति यत्तत् कुतस्त्वं कुत आगतं तवाद्यचिरेत्यादिना त्यः यदभिप्रेत्य धात्वर्थस्तत्र चतु र्थीति परः स्वमत तादर्थ्यविवचयैव भीरु इति तस्मादर्श्वेति पचे ऊप् सम्भुदीति ह्रस्वः ह्रस्वकरणात्र गुणः॥ ३८ ॥

तौ चतुर्द्दशसाहस्रवन्तौ निर्ययतुस्ततः। पारश्वधि कधानुष्कशाक्तीकप्रासिकान्वितौ ॥४०॥

ज०म० तौच। ततोनिगदनादुत्तरकालन्निर्य्ययतुः निर्गतवन्तौ च तुर्द्दशसहस्राणि परिमाणमस्य बलस्य प्रतिवचनमित्यस्मिन्नि ... शतमानविंशतिकसहस्रवसनादण् प्राग्वतः सङ्ख्यायाः संव त्सरे ... युत्तरपदवृद्धिः चतुर्द्दशसाहस्रम्बलं ययोः तौ यथा पार श्वधिकधानुष्कयाष्टीकप्रासिकान्वितौ परश्वधः प्रहरणमेषा मिति परश्वधात् ठञ्चेति ठञ् तथा धनुः प्रहरणमेषां यष्टिः प्रहरणमेषामिति शक्तियष्ट्योरीकक् प्रासः कुन्तः प्रहरणमि

त्यौत्सर्गिकष्ठक् तच धनुषष्ठक् ह्रस्वत्वात्मकः ततः येनाङ्गेला त्कृतैकवद्भावः तेनान्वितावनुगतौ ॥ ४० ॥

तावित्यादि। ततोवचनानन्तरं तौ खरदूषणौ निर्ययतुः निर्गतौ चतुर्द्दश सहस्राणि परिमाणमस्य चतुर्द्दशसहस्रं विका रसंघेत्यादिना तदस्य परिमाणमित्यर्थे णः सुपद्मालादिना त्परपदं वृद्धिः चतुर्द्दशसाहस्रं बलं ययोः तौ तथा परश्वधैः प रशुभिर्युध्यन्ते पारश्वधिकाः धनुर्भिर्युध्यन्ते धानुष्काः शक्तिभिर्यु ध्यन्ते शाक्तीकाः प्रास्यन्ति तमिति प्रासोलगुडः कर्म्मणि घञ् प्रा सैर्युध्यन्ते प्रासिकाः एभिरन्वितौ अनुगतौ ठघेकादिति ष्ठिक कण्ष्णीकाः ॥ ४० ॥ भ०

अथ सम्पततोभीमान् विशिखैरामलक्ष्मणौ। वज्र मूर्द्धादिमूर्द्धांश्च त्रिमूर्द्धांश्चाहतां मृधे ॥ ४१ ॥

अथा। अथैतस्मिन्प्रस्तावे रामलक्ष्मणौ मृधे संग्रामे विशिखैः शरैरहतां हतवन्तौ हन्तिः परस्मैपदी तस्माल्लङि तसस्ताम् तस्य ङिले अनुदात्तेत्यादिना अनुनासिकलोपः कान् राक्षसान् विशेषणोपादानात् विशेष्यप्रतिपत्तिः प्रकृतत्वाद्वा सम्पततोऽभि पततः वज्रमूर्द्धावक्रशिरसः तथा द्विमूर्द्धांस्त्रिमूर्द्धांश्च द्वित्रिभ्यां षमूर्द्धइति समासान्तः षः अतएव भीमान् भयानकान् त्रिमू र्द्धांश्चेत्यत्र नश्छव्यप्रशानिति रुः पूर्व्वस्य अनुनासिकः विसर्जनीय स्य सः सुलभम् ॥ ४१ ॥ ज०म०

अथेत्यादि। निर्गमानन्तरं सम्पततः सम्मुखतः सम्मुखमागच्छ तो राक्षसान् अर्थात् रामलक्ष्मणौ मृधे युद्धे विशिखैर्मार्गणैरा भ०

इतां वनतनाद्यनिमामिमिति मस्य लोपः वङ्मूर्द्धावङ्गमस्तकाम्
एवं द्विमूर्द्धान् त्रिमूर्द्धान् द्वित्रिमूर्द्ध्न इति षः श्वोर्लोपोताविति नस्य
लोपः वङ्गशब्दोविपुलार्थस्तत्संख्यादिसंख्यार्थकोवा अतएव भी
मान् भयङ्कराम्॥ ४१॥

तैर्वृक्णरुग्नसंभुग्नक्षुण्णभिन्नविपन्नकैः। निमग्नोद्विग्न
संह्रीणैः पप्रे दीनैश्च मेदिनी॥४२॥

ज०म० तैरि। तैः राक्षसैर्मेदिनी पप्रे पूरिता प्रापूरण इत्यस्मात्कर्म
णि लिट् वृक्णैः छिन्नैः रुग्णैः भग्नहस्तपादैः सम्भुग्नैः वक्रीकृतदेहैः
क्षुण्णैः सम्पिष्टशरीरैः भिन्नैः विदारितैः विपन्नकैः नष्टैः अनुकम्पा
यां कन् निमग्नैः परिभूतैः उद्विग्नैर्भीतैः संह्रीणैर्लज्जितैः वयम
पीदृशीन्दशां प्राप्ता इति दीनैः हा मातः हा भ्रातरित्येवम्भाष
माणैः तत्र व्रश्चिरुजिभुजिमस्जिविजिभ्योनिष्ठायामोदितश्चेति
नत्वम् चो.कुरिति कुः क्षुदिभिदिपदिभ्योरदाभ्यामिति दस्य
च नः संह्रीणइति नुदविदेत्यादिना दीक्षये इत्यस्य स्वादय
श्रोदित इत्योदितश्चेति नत्वम्॥ ४२॥

भ० तैरित्यादि। तैराक्षसैर्मेदिनी पप्रे परिता पृलिपूर्त्तौ कर्मणि ठो
कीदृशैः वृक्णैः छिन्नैः व्रश्चेःकङ्चेति कस्य नत्वं कङ्च चस्य कत्वे तस्मि
न्सिद्धस्य शस्य सत्वे स्कादेःसोलोपः यङ्स्तपाद्योरिति जिः रुग्णैर्भग्न
हस्तपादैः रुजोभङ्गे ओदित्वात् स्वभ्यादेरिति कस्य नः अस्य
गत्वविधानं समस्य देर्भिर्भुवनस्य भारमित्यत्र व्याख्यातं संभुग्नैर्व
क्रीकृतैः भुजोभ्रौवक्रणे पूर्ववत् क्षुण्णैः संपिष्टदेहैः क्षुदिरसंपेषणे

दान्तत्वात् सत्वाचोरिति कस्य दस्य च नः पूर्वोऽदान्तेत्यादिना पूर्व्वस्य णत्वे ष्टुभिरिति परस्य नस्य णत्वं भिन्नैर्विदारितैः विपन्नकैर्मृतैः विपूर्व्वपदिर्मरणे वर्त्तते स्वार्थे कुत्सायां वा कः निमग्नैर्भीत्या गुप्तैः रुधिरप्रवाहे मग्नैर्व्वा उद्विग्नैर्भीतैः ओविजीभयचलनयोः संक्लीर्णैः योद्धुमसामर्थ्यात् लज्जितैः ह्रीलिलज्जायां ह्रीघ्रात्त्वोन्दतीति कस्य नः दीनैः सुतादिदुःखान्वितैः ओदीङ्क्षये ॥ ४२ ॥

केचिद्वेपथुमासेदुरन्ये दवथुमुत्तमं। सरक्तं वमथुं केचिद्भ्राजथुं न च केचन ॥ ४३ ॥

केचित्। तेषाम्मध्ये केचित् वेपथुं कम्पम् टुवेपृकम्पने आसेदुः प्राप्ताः अन्ये दवथुमुपतापमुत्तममत्यन्तं टुदु उपतापे केचिद्वमथुश्छर्द्दनं सरक्तं सशोणितं टुवमुउद्गिरणे भ्राजथुं शोभां नैव केचन न केचिदपि टुभ्राजृदीप्तौ सर्व्वत्र ट्वितोऽथुच् ॥ ४३ ॥ ज०म०

केचिदित्यादि। तेषां मध्ये केचिद्राक्षसा वेपथुं कम्पं आसेदुः प्रापुः वेपट्टुङ्चलने अन्ये दवथुं उपतापं उत्तमं महान्तं आसेदुः टुदुउपतापे केचित् वमथुं रक्तेन सह छर्दिमासेदुः टुवमउद्गिरणे केचन भ्राजथुं दीप्तिं नासेदुः टुभ्राजृङ्दीप्तौ सर्व्वत्र ट्वितोऽथुर्भावे इति अथुः ॥ ४३ ॥ भ०

मृगयुमिव मृगोऽथ दक्षिणेर्म्मा दिशमिव दाहवतीं मरावुदन्यन्। रघुतनयमुपाययौ त्रिमूर्द्धा विषभृदिवोग्रमुखं पतत्त्रिराजं ॥ ४४ ॥

ज॰म॰ मृग। अथैतस्मिन् राक्षसविध्वंसनप्रस्तावे त्रिमूर्द्धः त्रिशि रानाम राक्षसः रघुतनयमुपाययौ उपागतः मृगयुमिव लुब्ध कमिव मृगान् यातीति मृगयुः मृगय्वादयश्चेत्यौणादिककुप्रत्य यान्तः दक्षिणेर्म्मा दक्षिणे ईर्म्म व्रणं यस्येति दक्षिणेर्म्मा लुब्धयो गइत्यनिच् यथा मृगो लुब्धकव्रणितदक्षिणाङ्गः तमेव मरणा योपयाति दिशमिव दाहवतीं यथा दिशन्दावाग्निधुतामरीं नि र्जले देशे मृग उदन्यन् उदकपानाभिलाष उपयाति उदकमि च्छति सुपआत्मन इति क्यच् उदकस्योदन्भावः अशनायेत्यादि ना निपातितम् तदन्ताल्लट् शतृप्रत्ययः विषभृदिव यथा विष धरः सर्प उग्रमुखभीषणमुखम्पतत्त्रिराजं गरुडमुपयाति तद्व त्तमिति राजाहःसखिभ्यष्टच् ॥ ४४ ॥

भ॰ मृगयुमित्यादि। अथ रक्षोवधानन्तरं त्रिमूर्द्धस्त्रिशिरानाम राक्षसो रघुतनयं रामं उपाययौ उपागतः यथा दक्षिणेर्म्मा व्या धेन व्रणितदक्षिणाङ्गोमृगस्तमेव मृगयुं व्याधं याति तद्वत् मृगं यातीति मृगयुर्निपातनात् दक्षिणेऽङ्गे ईर्म्म व्याधघातव्रणं यस्य स दक्षिणेर्म्मा दक्षिणादीर्म्मादन् व्याधव्रणितदक्षिणाङ्गे मृगे इति पर सूत्रं स्वमते ईर्म्मन् शब्दोऽप्यस्ति किम्वा दक्षिणे ईर्म्म व्रणं यस्येति धर्म्मादनित्यस्य योगविभागादन् लुब्धकयोगस्त्वभिधानात् व्रणो ऽस्त्रियामीर्म्ममरुरित्यमरः यथा वा उदकपानाभिलाषी मृगो मरौ निर्जलदेशे दाहवतीं दिशं उपयाति उदकं पातुमिच्छती ति धनोदकाशनेति क्ये उनङ् शतृः यथा वा विषभृत् सर्प उग्रमु खं भीषणवदनं पतत्त्रिराजं गरुडं उपयाति ॥ ४४ ॥

शितविशिखनिकृत्तकृत्स्नवक्त्रः क्षितिभृदिव क्षिति कम्पकीर्णशृङ्गः। भयमुपनिदधे स राक्षसानामखिल कुलक्षयपूर्व्वलिङ्गतुल्यः॥ ४५ ॥

इति भट्टिकाव्ये चतुर्थः सर्गः॥

शित। त्रिमूर्द्धा राक्षमानां भयमुपनिदधे उपनिहितवान् कीदृशः शितविशिखैस्तीक्ष्णविशिखैः निकृत्तानि छिन्नानि कृत्स्नानि सर्व्वाणि वक्त्राणि मुखानि यस्य सः क्षितिभृदिव भूधर इव कीदृशः क्षितिकम्पकीर्णशृङ्गः क्षितेर्भूमेः कम्पेन कीर्णानि क्षिप्तानि शृङ्गानि यस्य क्षितिभृतः अखिलस्य सर्व्वस्य कुलस्य क्षये विनाशे यत् पूर्व्वलिङ्गन्तेन तुल्यः असावप्यखिलराक्षसक्षयस्य पूर्व्वलिङ्गतुल्यः ॥ ४५ ॥ ज०म०

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे रामप्रवासश्चतुर्थः सर्गः॥ ४ ॥

शितेत्यादि। शितविशिखैस्तीक्ष्णवाणैर्न्निकृत्तानि छिन्नानि कृत्स्नानि सर्व्वाणि वक्त्राणि मुखानि यस्य स त्रिमूर्द्धा राक्षसानां भयमुपनिदधे उपनिहितवान् क्षितिभृदिव पर्व्वत इव क्षितिकम्पात् कीर्णानि विक्षिप्तानि शृङ्गाणि यस्य स तथा त्रिमूर्द्धा किम्भूतः अखिलकुलक्षयपूर्व्वलिङ्गतुल्यः अखिलस्य कुलस्य क्षयः तस्य यत्पूर्व्वलिङ्गं पूर्व्वचिह्नं भाविक्षयसूचकउत्पातस्तत्तुल्यः केचित्तु अखिलकुलस्य क्षये पूर्व्वलिङ्गं आदिचिह्नं त्रिमूर्द्धैतादृशः पर्व्वत इत्याहुः ॥ ४५ ॥ भ०

इति सदयगौराङ्गमल्लिकात्मजश्रीभरतसेनकृतायां भट्टिटीकायां मुग्धबोधिन्यां प्रकीर्णकाण्डे त्रिमूर्द्धवधोनाम चतुर्थः सर्गः॥ ४ ॥

निराकरिष्णू वर्त्तिष्णू वर्द्धिष्णू परितोरणं। उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ ॥१॥

ज॰म॰ निरा। खरदूषणौ रणम्परितः समन्तात अभित इत्यादिना द्वितीया चेरतः भ्रान्तौ निराकरिष्णू शत्रुनिराकरणशीलौ वर्त्तिष्णू अभिमुखं वर्त्तनशीलौ न पलायनशीलौ वर्द्धिष्णू मायया महाप्राणोद्भावनशीलौ उत्पतिष्णू नभउत्पतनशीलौ सहिष्णू शस्त्रप्रहारसहनशीलौ सर्व्वचालङ्कृञीत्यादिना इष्णुच् ॥१।

भ॰ निराकरिष्णू इत्यादि। खरदूषणौ रणं परितः सर्व्वतश्चेरतुः चरगत्यां ठोधिकृमसर्य्यति परितोयोगे द्वितीया निराकरिष्णू शत्रुनिराकरणशीलौ वर्त्तिष्णू वर्त्तनशीलौ अर्थात् प्रतियोद्धुंसम्मुखं रणं परित इति वा अनुपञ्जनीयं वर्द्धिष्णू मायया वर्द्धनशीलौ उत्पतिष्णू आकाशादुत्पतनशीलौ सहिष्णू प्रतियोद्धृशस्त्रघातादिसहनशीलौ सर्व्वत्र त्रिभ्राजभूसहेत्यादिना कर्त्तरीष्णुः शीलार्थता तु छघेकृत्यश्चेति सूत्रे शीलार्थे तृन्नित्युक्तं किन्तु तृणविधायकसूत्रे शीलार्थता नोक्ता अतएव तृणादयः कतिचित् प्रत्ययाः शीलार्थेऽपि भवन्तीति सूचनात् किम्वा अभिधानाच्छीलार्थतानुक्तावपि न क्षतिः निराकुरुतः शत्रूनित्यादिवाक्यं विधेयं ॥१॥

तौ खड्गमुषलप्रासचक्रवाणगदाकरौ। अकार्ष्टामायुधच्छायं रजःसन्तमसं रणे ॥२॥

ज॰म॰ तौख। रणे रणभूमौ रजःसन्तमसे सन्ततन्तमः सन्तमसं अव

समन्धेभ्यस्तमसइत्यच् रजसा सन्तमसं अस्मिन् इति रजः सन्तमसन्तस्मिन् रजसा कृतान्धकारे तौ खरदूषणौ आयुधच्छायमायुधवाहुल्यमकार्ष्टाम् कृतवन्तौ आयुधानाञ्छायेति छाया वाहुल्य इति नपुंसकत्वे ह्रस्वत्वं खड्गादीनाम्बाणानान्द्वन्द्वैकवद्भावं कृत्वा पश्चात्तेन सहिता गदेति शाकपार्थिवादित्वात्सः अन्यथा समुदायस्य जातिरप्राणिनामित्येकवद्भावेन नपुंसकलिङ्गता स्यात् वाणगदमिति खड्गमुषलप्रासचक्रवाणगदाः करे येषामिति समासे प्रहरणार्थेभ्य इत्यादिना करशब्दस्य परनिपातः॥ २॥

तावित्यादि। खरदूषणौ रणे युद्धे आयुधानां वहूनां छायामकार्ष्टां कृतवन्तौ रणपदं रणभूमिवाचकमित्यन्ये समन्धकमः सन्तमसं समवान्धात्तमसइति अः रजसा सन्तमसं यत्र रणे आयुधानां वाहुल्यात् छायाशब्दस्य नपुंसकत्वमभिधानात् कीदृशौ खड्गादयः करे ययोस्तौ अकार्ष्टामिति कृञ्ःसि व्रजवदेति व्रिः ॥ २॥ भ॰

अथ तीक्ष्णायसैर्व्वाणैरधिमर्म्म रघूत्तमौ। व्याधं व्याधममूढौ तौ यमसाच्चक्रतुर्द्द्विषौ॥ ३॥

अथ। अथैतस्मिन् संग्रामे रघूत्तमौ रामलक्ष्मणौ कर्तृभूतौ कर्म्मभूतौ द्विषाविति सत्सूद्विषेत्यादिना क्विप् यमसाच्चक्रतुः यमाधीनौ कृतवन्तौ तदधीनवचनइति साति: तीक्ष्णायसैर्वाणैः तीक्ष्णमायसम्फलं येषामिति व्याधं व्याधं विद्धा विद्धा आभीक्ष्ण्ये णमुल् तत्र समानकर्त्तृकयोः पूर्व्वकालइति वर्त्तते अभीक्ष्ण्ये द्वे भवत इति जं॰

द्विर्वचनं अधिमर्म्मेति विभक्त्यर्थेऽव्ययीभावः असूढौ सावधानौ रामलक्ष्मणौ मर्म्मविधमेवाह॥ ३॥

भ० अथेत्यादि। तयोर्विक्रमानन्तरं रघूत्तमौ कर्त्तभूतौ तीक्ष्णाय सैस्तीक्ष्णफलैर्वाणैरधिमर्म्म जीवितस्थाने व्याधं व्याधं विद्धा विद्धा तौ द्विषौ खरदूषणौ कर्म्मभूतौ चममात् यमाधीनौ चक्रतुः रघूत्तमौ किम्भूतौ असूढौ रणपण्डितौ किम्वा खरदूषणौ असूढौ अस्त्रवर्षेऽप्यसम्भ्रान्तौ मर्म्मवेधं सावधानौ वा रणपण्डितावपि वा तीक्ष्णमायसमयोविकारः फलं यत्र मर्म्म विध्यतीति कारकार्थेऽव्ययीभावः व्यधाताड इत्यस्मात् णमाभीक्ष्ण्ये इति णम् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धं कारस्थायत्थोः सम्प्रयुक्तादावित्य धीनत्वे चमात् किम्वा इयत्रा बेति इ थेऽर्थे यकारात् चमात् वा मुसित्यादिना चिपः क्विप्। ३॥

हतवन्धुर्जगामासौ ततः शूर्पणखा वनात्। पारे समुद्रं लङ्कायां वसन्तं रावणं पतिं॥४॥

ज०म० हत। असौ शूर्पणखा हतवन्धुः आपादितभ्रातृवधा ततोवना द्दण्डकारण्यात्रावणम्पतिं प्रभुं शरणञ्जगाम गतवती पारे समुद्रं समुद्रस्य पारइति पारेमध्यषष्ठ्यावेत्यव्ययीभावः तत्सन्नि योगेन पूर्व्वपदस्यैकारान्तत्वम्पञ्चात्सप्तमी नाव्ययीभावादित्यभा वःसमुद्रस्य पारे स्थितायां लङ्कायां वसन्तं रावणमिति॥४॥

भ० हतवन्धुरित्यादि। असौ शूर्पणखा हतवन्धुः सती परेण व्यापादितभ्रातृवधा सती ततोवनात् दण्डकारण्यात् रावणं पतिं प्रभुं जगाम पारेसमुद्रं समुद्रपारे स्थितायां वसन्तं पारेसमुद्रमित्य

व्ययीभाव एत्वञ्च निपातनात् चीमग्रीर्व्वेति सप्तम्याम: प्रतीति पाठं रावणं प्रति लक्षीकृत्य जगाम ॥ ४ ॥

संप्राप्य राक्षससभं चक्रन्द क्रोधविक्लवा। नामग्रा हमरोदीत् सा भ्रातरौ रावणान्तिके ॥ ५ ॥

सम्प्रा। सा शूर्पणखा राक्षससभं संप्राप्य ढौकित्वा राक्षसानां सभेति सभाराजेत्यादिना नपुंसकता चक्रन्द क्रन्दनङ्कृतवती क्रोधविक्लवा क्रोधविवशा भ्रातरौ खरदूषणावरोदीत् रोदितवती नामग्राहन्नाम गृहीत्वा भ्रातरौ खरदूषणाविति नाम्ना दिशिग्रहोरिति णमुल् अत्र नामग्रहणविशिष्टाया रोदनक्रियाया व्याप्तुमिष्टत्वाद्रुदिः सकर्म्मकः रावणान्तिके रावणसमीपे सप्तम्यधिकरणे चेति चकाराद्दूरान्तिकार्थेभ्यइति सप्तमी तयोः किञ्जातमिति रावणेन पृष्टाह ॥ ५ ॥ ज०म०

संप्राप्येत्यादि। सा शूर्पणखा राक्षससभं संप्राप्य चक्रन्द राक्षसानां सभा राक्षससभं क्लीवत्वमभिधानात् क्रोधेन विक्लवा व्याकुला सती भ्रातरौ खरदूषणौ नामग्राहं नाम गृहीत्वा रावणस्यान्तिके समीपे अरोदीत् रुदेर्ष्यां ध्यां रुदायस्त्रिसेरितीम् पूर्व्वं क्रन्दनमुक्तं अत्र नामग्रहणमुक्तमिति भेदः अस्रुविमोचनमात्रे रुदिरकर्म्मकः शब्दयुक्तक्रन्दने तु सकर्म्मकः इति प्राञ्चः भ्रातरौ चक्रन्द आजुहाव क्रदि आह्वाने नामग्राहमरोदीदित्यन्वय इति केचित् नामग्राहमिति नाम्नोग्रहणमभिधानात् किम्वा हा खर भ०

कायोध्यायाः पुनरुपगमोदण्डकायां वने व इति भवभूतिः दण्डकानिति पाठे दण्डकारण्यमन्निवेशानित्यर्थः केचित्तु दण्डकाशब्दः स्त्रीलिङ्गबहुवचनान्त एव इत्युक्ता दण्डका इति शसन्तं पठन्ति अध्यवात्तामिति अधिपूर्व्वाद्दसेष्टीतां थांसिः सत्यरे इति सस्य तः अनिमत्वात् शिः रचसां मध्ये प्रकाण्डकौ प्रशस्तौ एकार्थत्वात् कर्म्मधारयोवा समासे विशेषणमपि परं स्यात् प्रशंसावचनैश्चेति परसूत्रं यद्यपि प्रकाण्डमद्धतल्लजावित्यमरेणोक्तं दृश्यते च गो प्रकाण्डमित्यादावजहल्लिङ्गता तथापि कप्रत्यये सति स्वार्थिकाः प्रकृतितोलिङ्गवचनान्यतिवर्त्तन्तेऽपीति न्यायात् पुंस्त्वं वस्तुतस्तु पुंलिङ्गोऽपि प्रकाण्डशब्दोऽस्ति निगडाङ्कौ तलप्रकाण्डकाण्डा इति पुनपुंसकवर्गे हेमचन्द्रः उद्धप्रकाण्डौ द्वौ प्रशंसायामिति हलायुधः भूमिं वर्द्धयत इति नन्द्यादित्वादनः॥ ६॥

विग्रहस्तव शक्रेण वृहस्पतिपुरोधसा। सार्द्धं कुमारसेनान्या शून्यस्त्वासीति कोनयः॥ ७॥

विग्र। वृहस्पतिः पुरोधा मन्त्री यस्य शक्रस्य तेन कार्य्येषु पुरा धीयत इति पुरोधाः पुरःपूर्व्वाद्धाञः सर्व्वधातुभ्य असुन् तथा कुमारः कार्त्तिकेयः सेनानीर्यस्य सेनानयतीति सत्सूद्विषेत्यादिना क्विप् तेन शक्रेण सह सार्द्धं तव विग्रह आसीत् इदानी कार्य्यनिपुणाभावात् शून्यस्त्वासि तासस्त्योर्लो परति सकारलोपः तस्मात्कोनयः नय एव न भवतीत्यर्थः तदेव दर्शयन्नाह॥ ७॥ ज॰म॰

भ० विग्रहइत्यादि। प्रकोप ग्राहं तव विपत्तिविरोधस्तथापि त्वं शून्यः कार्य्याकार्य्यविचाररहित एवासि इति कोमयः न कापि नीतिस्तवेत्यर्थः किम्भूतेन वृहस्पतिपुरोधसा वृहतां देवानां गुरुत्वात्पतिः वृहस्पतिर्मनीषादित्वान्निपातः स पुरोधाः पुरोहितो यस्य कुमारः कार्त्तिकेयः सेनानीः सेनापतिर्यस्य सेनां नयतीति क्विप् कव्याद्यनेकाच इति सत्वं लोपोऽव्ययोरिति अत्रेः सो स लोपः॥ ७॥

यद्यहं नाथ नायास्यं विनसा हतबान्धवा। नाभ्यास्यस्त्वमिदं सर्व्वं प्रमाद्यंश्चारदुर्व्वलः॥ ८॥

ज०भ० यदी। विनसा विगता नासा यस्याः नासैव नासिकेति केषः इति शुत्वे रूपम् तस्या नसादेशस्य विधीयमानत्वात् अत्र सम्भव एव नास्ति विनसेति पाठान्तरम् तत्र विगता चासौ नासिका च विनासिका तत इत्यभूतलक्षणायान्तृतीयायां पद्दन्नोमास इत्यादिना नसादेशः विगतया नासिकयोपलक्षितेत्यर्थः विगता नासिका अस्या इति वज्रव्रीहिणा व्याख्याने अज्नासिकेत्यादिना अज् नसादेशस्य प्राप्तुतः तस्य संज्ञाविषयत्वात् उपसर्गाच्चेत्यसंज्ञायां विधीयमानो न भवति वेर्ग्रोवक्तव्यइति ग्रादेशो वाधकः हे नाथ यद्यहं विनसा हतबान्धवा नायास्यमागतानाभविष्यम् तदा तदिदं सर्व्वमात्मोर्व्वधम्नायाकेदम नाभ्यास्यः न ज्ञातोऽभविष्यः क्रियातिपत्तौ लिङ् अज्ञाने कारणमाह प्रमाद्यन् विषयेषु प्रमादङ्कुर्व्वन् चारदुर्व्वलः चारहीनः चाराहि चचूरा ज्ञाहार्य्याकार्य्यज्ञानाय लोके चरतीति चरः पचाद्यच् चर एव चारः प्रज्ञादित्वादण्॥ ८॥

यदीत्यादि। हे नाथ विनसा हतबान्धवा च सती यद्यहं माया भ०
स्यां तदा त्वमिदं सर्व्वं पूर्व्वोक्तं नाप्नास्यः याभ्यामभ्यर्थामभवे यो
ऽज्ञाने हेतुमाह प्रमाद्यन् विषयेषु अनवधानतां गच्छन् यन्यो
प्रमादोति प्रमादित्वाद्दीर्घः प्रमादोऽनवधानता शरीरे दुर्ब्बलो
हीनः राजा परैर्जगत्कृत्स्नं प्राप्नुयाल्लोकसम्मतैरिति हि प्राप्तं
विनसा इति विगता नासा नासिका यस्याः सा विनसा केचित्तु वि
गतया नासिकया उपलक्षिता विशेषणे तृतीया पादहस्तेति सूत्रा
देश इत्याहुः बन्धुरेव बान्धवः चर एव चारः स्वार्थे ष्णः॥ ८॥

करिष्यमाणं विज्ञेयं कार्य्यं किन्नु कृतं परैः। अप
कारे कृतेऽप्यज्ञो विजिगीषुर्नवा भवान्॥ ९॥

करि। परैः शत्रुभिरपचयचिकीर्षया करिष्यमाणकार्य्यं वि ज०म०
ज्ञेयम् किन्तु कृतमेव यत्तदवश्यमेव विज्ञेयमित्यर्थः त्वन्तु नः परै
रपकृतोऽपि अज्ञोऽविदितस्वरूपः अतोविजिगीषुर्नवा भवान्
सुप्तो न राज्यं सम्भावयतीत्यर्थः॥ ९॥

करिष्यमाणमित्यादि। परैः शत्रुभिः करिष्यमाणमपि कार्य्यं भ०
विज्ञेयं अर्थाज्जिगीषुणा किन्तु कृतं तदवश्यमेव विज्ञेयमित्यर्थः
परैः कृतेऽपि अपकारे भवान् अज्ञः अतो भवान् नवा विजिगीषुः
ज्ञेर्गिःसनयोरिति गिः जानातीति ज्ञः कृगृज्ञाप्रीति कः उत्येभ्यो
त्यादिना आकारलोपः आदन्तात् डेनेष्टसिद्धौ कृगृज्ञाप्रत्यय
ग्रायकेण इगुपधादित्यस्य उपपदस्यैव विषयः कृगृज्ञा इत्य
स्य तु उपपदेऽनुपपदे च विषय इति ज्ञापितं वाक्यस्य आक्षेपे
प्रश्ने वा॥ ९॥



वृतस्त्वं पात्रेसमितैः खट्वारूढः प्रमादवान्। पान
शौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मनाः ॥ १० ॥

ज०म० वृत:। अत्यन्तङ्गामिनीति अवारपारेत्यादिना खः तस्य भावोऽत्यन्तीनत्वं नैवात्यन्तीनामत्यन्तगामिनीं श्रियन्नेता न प्रापणशील: तृन्निति ताच्छीलिकस्तृण् नलोकेति षष्ठीप्रतिषेधः यद्यपि महोदयं राज्यमाप्तवानसि तथापि न चिरकालमित्यर्थः यतस्त्वमुन्मनाः भ्रान्तचित्तः यत पानशौण्डः पाने प्रसक्तः सप्तमी शौण्डैरिति सः अतएव प्रमादवान् अतोऽपि खट्वारूढः उत्पथप्रस्थित: खट्वाक्षेप इति द्वितीया सः तत एव पात्रेसमितैः भोजन एव सन्निहितैः अनुजीविभिर्वृतः पात्रेसमितादयश्चेति क्षेपे सः ॥ १० ॥

भ० वृतइत्यादि। त्वं श्रियं आत्यन्तीनत्वं अत्यन्तगामित्वं न नेता न प्रापयिष्यसि नीञ्आदिकर्म्मकात् तृण् ढघेत्यत्येत्यादौ शीलार्थे तृणवर्ज्जनात् न षी अत्यन्तशब्दात् ढघेकादिति तद्गामिन्यर्थे णीनः तत्वेत्वजात्याख्यइतिपुम्वत् हेतुमाह पात्रेसमितैर्भोजनपात्र एव समितैः सन्निहितैः कार्य्यान्तरानक्षमैरनुजीविभिर्वृतोवेष्टितः अत्र क्षेपे समासो विभक्त्यलोपश्चाभिधानात् खट्वारूढः विपथप्रस्थितः क्तेन क्षेपे खट्वाया द्वितीया तत्पुरुष इति परे स्वमते समासे सति मण्डपादिवत् स्वभावादर्थान्तरे वृत्तिः प्रमादवान् अनवधानतायुक्तः यतः पानशौण्डः पाने प्रसक्तः अतएव उन्मना उद्भ्रान्तचित्तः ॥ १० ॥

अध्वरेष्वग्निचित्वत्सु सोमसुत्वत आश्रमान्। अत्तुं महेन्द्रियं भागमेति दुश्च्यवनोऽधुना ॥ ११ ॥

अध्व। तथ्येवभूतेऽधुना दुश्च्यवन इन्द्रः आश्रमानेति आग भ०म च्छति आङ्पूर्ब्बस्येणः एत्येधत्यूठ्स्विति वृद्धिः सोमसुत्वतः सोमं सुनोतीति सोमेसुञ इति क्विप् सोमसुतः सन्ति येष्वाश्रमेष्विति मतुप् तसौ मत्वर्थ इति भत्वे तकारस्य जस्त्वन्न भवति झयइति मतोर्व्वत्वम् किमर्थमेतीत्याह अत्तुम्भक्षयितुम्महेन्द्रियम्भागं महे न्द्रोदेवता अस्येति महेन्द्राद्घाणौ चेति घः क्व अध्वरेषु यज्ञेषु अग्निचित्वत्सु अग्निश्चितवन्तोऽग्निचितः आहिताग्नयः अग्नौचेरिति क्विप् ते सन्ति येष्विति पूर्ब्बवन्मतुप् ॥ ११ ॥

अध्वरेष्वित्यादि। तत्रैव प्रमादात् अधुना इदानीं दुश्च्यवन भ० इन्द्रः अध्वरेषु यज्ञेषु महेन्द्रियं महेन्द्रदैवतं भागं अत्तुं भक्षयि त्तुं आश्रमानेति आगच्छति स भागोराक्षसग्राह्यएवासीदिति भावः कीदृशेषु अग्निचित्वत्सु अग्निं चितवान् अग्निचिन्मुनिः चास्मिति चेःक्विप् ह्रस्यतन्पिति ततोऽस्त्यर्थे मोऽन्मन्नपादतुः मह न्तसाविति पदत्वनिषेधात् न चपोऽवेजव कीदृशान् सोमसुत्वतः सोमं सुतवान् सोमसुत्यजमानः तद्युक्तान् पूर्ब्बवत् क्विबादि सो मोलतासवनं सन्धानं महेन्द्रोदेवता अस्येति विकारसंघेत्यादि ना इयः ॥ ११ ॥

आमिक्षीयं दधिक्षीरं पुरोडाश्यं तथौषधं। हविर्ह्यैयङ्गवीनञ्च नाप्युपघ्नन्ति राक्षसाः ॥ १२ ॥

ज०म० आमि। दध्ना सहितं शृतं पय आमिक्षा तस्यै हितमामिक्षीयं विभाषाहविरपूपादिभ्य इति छयतो दधि च क्षीरञ्चेति विभाषा वृत्तेत्यादिना व्यञ्जनत्वादेकवद्भावः पुरोडाशाय हितमौषधन्नीवारतण्डुलादि पुरोडाशमपूपादित्वाद्यत् ओषधिरेवौषधम् ओ[?]षधेरजाताविव्यण् तण्डुलानामजातित्वात् स्वार्थिकास्तु प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति नपुंसकलिङ्गता हविः क्षयतइति हविः अर्चिशुचीत्यौणादिक इस् हैयङ्गवीनं घृतं ह्यो गोदोहस्य विकार इत्यर्थे हैयङ्गवीनसंज्ञायामिति निपातनात्खञ् प्रियं स्वादयस्तु तानि नाप्युपभुञ्जन्ति राक्षसाः त्वय्युदासीने सति इदानीञ्चार्य्यप्रदर्शनेन प्रोत्साहयितुमाह ॥१२॥

भ० आमिक्षीयमित्यादि। अधुना राक्षसा अपि एतानि वस्तूनि न उपभुञ्जन्ति अपिशब्दः पूर्व्वापेक्षया कानि आमिक्षायै हितं दधि दुग्धञ्च व्यञ्जनत्वं समाहार इति परः स्वमतेऽभिधानात् आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः हितार्थे ईयः तथा पुरोडाशाय हितं औषधं नीवारतण्डुलादि पुरोदश्यते इति पुरोडाशो ऽन्नविकारः पिष्टकादिः निपातनात् ततोहितार्थे यः ओषधिश्च ब्दात् स्वार्थे ष्णः औषधं क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति क्लीवत्वं हविर्हव्यञ्च ऊदाने चामुषिषितीस् ह्योगोदोहस्य विकारो हैयङ्गवीनं निपातनात् तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतमित्यमरः ॥१२॥

युवजानिर्धनुष्पाणिर्भूमिष्ठः खविचारिणः। रामो यमद्रुहोहन्ति कालकल्पशिलीमुखः ॥१३॥

एव। युवतिः यौवनवती जाया यस्य युवजानिः जायाया निङ् अ०म० वलिलोपः स्त्रियाःपुंवदिति पुंवद्भावात् स्त्रीप्रत्ययो निवर्त्तते धनु ष्याणिः पाणौ धनुर्यस्य प्रहरणेत्यादिना परनिपातः भूमिष्ठः भूमौ तिष्ठतीति भूमिष्ठः नाकाशचरः सुपिस्थ इति कः अम्बाम्बे त्यादिना षत्वम् कालकल्पशिलीमुखः मृत्युतुल्यशरः रामो राच सान् हन्ति खविचारिणः आकाशचरणशीलान् सुप्यजाताविति णिनिः॥ १३॥

युवजानिरित्यादि। भूमिष्ठोऽपि रामः खविचारिणोऽपि यस्य भ० हृष्टो राक्षसान् हन्ति भूमौतिष्ठतीति हनजनादिति डः षत्वं मनी षादित्वात् खे आकाशे विचरितुं शीलं येषां ते तथा सुबन्तोपपदे ताच्छील्येणिन्निति परः स्वमते खे विचरन्तीति ग्रहादित्वाण्णिन् य स्माय द्रुह्यन्तीति क्विप् क्रोड्शो रामो युवजानिः युवती जाया यस्य स तथा बहुब्रीहौ जायाया इङ्जानस्येति परः स्वमते जाया समानार्थो जानिशब्दोऽस्ति जनी सीमन्तिनीवध्वोरित्यनुशास नात् जनीशब्दस्य स्वार्थिकण्यन्तस्य जानिरिति रूपम्वा पुम्वत् स्त्युक्तपुंस्क इति पुम्वद्भावः धनुः पाणौ यस्य स तथा षत्वविधानं गवाक्षजालैरित्यत्र व्याख्यातं ईषदूनः कालः कालकल्पोयमतु ल्यइत्यर्थः तादृशः शिलीमुखोवाणो यस्य स तथा त्यादेशोनेइति कल्पः॥ १३॥

मांसान्योष्ठावलोप्यानि साधनीयानि देवताः। अ श्नन्ति रामाद्रक्षांसि बिभ्यत्यश्नुवते दिशः॥ १४॥

मांसा। ओष्ठावलोप्यानि ओष्ठाभ्याञ्छेदार्हाणि शक्यानि अ० वा अर्हार्थे शक्यार्थे वा कृत्यः कत्यैरधिकार्थवचन इति सः।

साधनीयानि यज्ञस्य साधनाय हितानि तस्मै हितमिति छः साव नीयानीति पाठान्तरम् तत्र सवनं स्नानं तद्योगात्स्नानकोऽपि तथोच्यते तत्र भवः सावनो यज्ञः तस्मै हितानीति छः तानि मांसानि देवता अश्नन्ति भुञ्जते न राक्षसाः रक्षांसि किन्तु रामादिभ्यः ति वानपुंसकस्येति मतुर्जुमभावपक्षे रूपं दिद्रोऽश्नुवते व्याप्नुवन्ति ॥ १४ ॥

भ० मांसानीत्यादि। इदानीं देवता मांसानि अश्नन्ति रक्षांसि तु रामादिभ्यति दिद्रोऽश्नुवते व्याप्नुवन्ति पलायन्त इत्यर्थः कीदृशानि मांसानि ओष्ठावलीय्यानि छेत्तुं शक्यानि लुपूर्वे दने तेन्याः शक्यार्थे इति शक्यार्थे घ्यण् साधनीयानि स्वर्गादेः साधनाय यज्ञाय हितानि सुरसतायाः साधनं घृतादि तेन संस्कृतानि वा अश्नन्तीति अशभोजने आद्योरित्यालोपः बिभ्यतीति ञिभी लि भीत्यां सतः क्नादेरेरिदिः दः शतुर्नुन् साविति पक्षे नुणोऽभावः अश्नन्तमिति केचित तदा अन्तोऽदेरित्यत् अशूङ् व्याप्तिसंघ त्योः अश्नोरित्युत् सान्ताऽदनतः ॥ १४ ॥

कुरु बुद्धिं कुशाग्रीयामनुकामीनतां त्यज। लक्ष्मीं परम्परीणां त्वं पुत्रपौत्रीणतां नय ॥ १५ ॥

अ०म० कुरु। कुशाग्रीयाह्रुशाग्रमिव सूक्ष्मां कुशाग्राच्छ इति इवार्थे छः स्थूलबुद्धिर्माभूदित्यर्थः अनुकामीनतान्त्यज यथेच्छगामिता त्यज अवारपारेत्यादिना खः परम्परीणाम्परांश्चापरांश्च अनुभवतीत्यर्थे परापरशब्दात् परोवरेत्यादिना खः परादेशश्च

तां लक्ष्मीं क्रमायातामवसूपुत्रपौत्रीणतामनय पुत्रांश्च पौत्रांश्चानु भवतीति खः तस्य भावः पुत्रपौत्रानुगामिनीं कुर्वित्यर्थः ॥ १५ ॥

कुशैरित्यादि। त्वं बुद्धिं कुशाग्रीयां कुशाग्रमिव सूक्ष्मां कुरु वि भ०
कारसंबैति कुशाग्रादिवार्थं ईयः अनुकामीनतां कामस्य अभि
लाषस्य अनु पश्चाद्गामितां यथेष्टाचरणं त्यज अनुकामात्तद्गा
मिन्यर्थे ढघेकादितीनः परम्परीणां क्रमादायातां लक्ष्मीं पुत्र
पौत्रीणतां पुत्रपौत्राधीनतां नय प्रापय परश्च परतरश्च
इति द्वन्द्वे परम्परादेशो निपातनात् ततस्तदनुभवतीत्यर्थे पूर्व्वेण
ईनः ॥ १५ ॥

सहायवन्त उद्युक्ता बहवोनिपुणाश्च यां। श्रियमा
शासते लोलां तां हस्तेकृत्य माश्वसीः ॥ १६ ॥

सहा। याश्च श्रियन्त्वदीया शौर्योपात्तां सहायवन्तः ससहा जं०म०
या उद्युक्ता उत्साहवन्तो निपुणाः कुशलाश्चाशासते इच्छन्ति
आङःशासुइच्छायामित्यादादिकस्यात्मनेपदिनो रूपम् आत्म
नेपदेष्वनत इत्यदादेशः तां हस्तेकृत्य स्वीकृत्य माश्वसीः
आश्वासमाकार्षीः चञ्चलत्वात् यदाह लोलामिति श्वसजागृ
श्वसजागृणीति वृद्धिप्रतिषेधः इटईटीति सिचोलोपः नित्यं
हस्ते पाणाविति गतिसंज्ञायां समासे ल्यबादेशः तां लोलतान्त
र्गयत्नात् ॥ १६ ॥

सहायवन्त इत्यादि। सहायवन्तः प्रशस्तसहाययुक्ता उद्यु भ०
क्ता उद्योगिनो बहवोनिपुणाः कर्म्मकुशला यां श्रियं आशासते

इच्छन्ति तां श्रियं हस्तेकृत्य स्वीकृत्य भास्वतीः आस्वास साका
र्दीः यतोलोलां चञ्चलां आङःशासइच्छायां अदादिरात्मने
पदी हस्तेशब्दः सप्तम्यन्तप्रतिरूपकोऽव्ययः स्वीकारे वर्त्तते हस्ते
पाणावुपयमने इत्यादिना समासः ल्यादेशः कोऽयम् आङःशास
ध्योभिः इसादेः सेम इत्यादौ समवर्ज्जनान्न सिः ॥ १६ ॥

लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात्। अन्ति
केऽपि स्थिता पत्युश्छलेनान्यं निरीक्षते ॥ १७ ॥

ज०म० लक्ष्मीः। त्वय्येवं न मन्तव्यम् अन्यैः प्रार्थितापि न मामपरि
त्यजतीति यतः छलेन व्याजेन अन्यन्निरीक्षते किमर्थं पुंयोग
माशंसुः अभिलषन्ती सनाशंसभिक्ष उः कुतूहलात् कौतुकात्
यदि सत्यादन्तिके अदूरेऽपि स्थिता पत्युः दूरान्तिकार्थैरित्या
दिना षष्ठी कुलटेव बन्धकीव शकन्ध्वादिषु दर्शनात्पररूपम्
युवजानिरित्युक्तत्वात्पत्यलाभनायाह ॥ १७ ॥

भ० लक्ष्मीरित्यादि। लोलतां दर्शयति लक्ष्मीः पत्युरन्तिके स्थिता
ऽपि सततं दूरस्था कुतूहलात् अन्यं पुरुषं छलेन व्याजेन निरी
क्षते केनापि छिद्रेण गन्तुमित्यर्थः यतः पुंयोगमाशंसुः अभिलष
न्ती एकेन पुंसा तृप्तिर्नास्तीत्यर्थः अतएव कुलटा इव असतीव कु
लान्यटति पचादित्वादच् मनीषादित्वादकारलोपः सनभिक्षा
शंसउरिति आङ्पूर्व्वशंसेरुः ॥ १७ ॥

योषिद्वृन्दारिका तस्य दयिता हंसनादिनी। दूर्व्वा
काण्डमिव श्यामा न्यग्रोधपरिमण्डला ॥ १८ ॥

पोषित। पोषितामौ वृन्दारिकाचेति वृन्दारकेत्यादिना स०स०
सः रूपेण प्रियेत्याह दयिता प्रिया प्रशस्तले कारणमाह हंस इव गन्तुं शीलं यस्याः कर्त्तर्य्युपमान इति णिनिः दूर्व्वाकाण्डमिव श्यामा दूर्व्वाखण्डवत्तदिव श्यामा न्यग्रोधपरिमण्डला उपमानानीत्यादिना सः॥ १८॥

योषिद्वृन्दारिकेत्यादि। प्रलोभनार्थमिदमुच्यते तस्य राम भ०
स्य दयिता प्रिया योषिद्वृन्दारिका योषितां स्त्रीणां मध्ये वृन्दारिका रूपवती हंसवन्नदतीति हंसनादिनी कर्त्तर्य्युपपदाणिनिरिति परः स्मृते ग्रहादित्वात् हंसनादिनीशब्दः पारिभाषिकोऽप्यस्ति यथा गत्या नितम्बिनी या तु हंसशीलानुगामिनी। मत्तकोकिलसंशब्दा सा ज्ञेया हंसनादिनी। दूर्व्वाकाण्डमिव तन्वा श्यामाङ्गीत्यर्थः दूर्व्वाकाण्डवत् श्यामवर्णेनेति व्याख्यानं पुराणविरुद्धं तत्र गौरत्वकथनात् श्यामा न्यग्रोधपरिमण्डलाशब्दौ रूढौ यथा शीते सुखोष्णसर्व्वाङ्गी ग्रीष्मे तु सुखशीतला। तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते। स्तनौ सुकठिनौ यस्या नितम्बे च विशालता। मध्ये क्षीणा भवेद्या सा न्यग्रोधपरिमण्डला अग्निपुराणे स्त्रीपुरुषलक्षणाध्याये न्यग्रोधपरिमण्डललक्षणमुक्तं यथा प्रसारितभुजस्येह मध्यभागद्वयान्तरं। उच्छ्रायेण समं यस्य न्यग्रोधपरिमण्डलइति केचित्तु दूर्व्वाकाण्डमिव न्यग्रोधपरिमण्डला न्यग् रुणद्धीति न्यग्रोधं अधःप्रसृतं परितोमण्डलं नितम्बमण्डलरूपं यस्याः दूर्व्वाकाण्डमपि अधः प्रसरति नोपरिष्टादित्याहुः अन्ये तु न्यग्रोधस्य वटस्य इव परिमण्डलं परिणाहो नितम्बभागे यस्याः एकदेशधर्म्मेणापि समुदायोपमानतादर्शनादित्याहुः

श्यामा अप्रसूतेति केचित् अप्रसूताङ्गनायाञ्च श्यामा सोमलता मधौ। चित्रताम्रारिवाग्गुञ्जा निशाक्षष्णा प्रियङ्गुष्विति विश्वः ॥१८॥

नास्यं पश्यति यस्तस्या निंस्ते दन्तच्छदं न वा। सं शृणोति न चोक्तानि मिथ्याऽसौ विहितेन्द्रियः ॥१९॥

ज॰म॰ नास्य। तस्या आस्यमुखं यो न पश्यति दन्तच्छदं ओष्ठश्छाद्यते अनेनेति घः छादेर्घेऽद्व्युपसर्गस्येति ह्रस्वः दन्तानाञ्छदं नवा निंस्ते न चुम्बति णिसिचुम्बन इत्यादादिकआत्मनेपदी इदितो नुम् धातोः उक्तानि उदितानि न संशृणोति समोगमित्यादिना तङ् न भवति अकर्म्मकादित्यधिकारात् मिथ्यासौ विहितेन्द्रियः वृथैव तस्य वेधसा विहितानि इन्द्रियाणि चक्षुरादीनि ॥१९॥

भ॰ नास्यमित्यादि। यस्तस्या आस्यं मुखं न पश्यति नवा दन्तच्छदं ओष्ठं निंस्ते चुम्बति निसिम्लङ् चुम्बने नवा तस्या उक्तानि भाषितानि संशृणोति असौ पुरुषः विहितेन्द्रियो विधात्रा कृतेन्द्रियोमिथ्या प्रयोजनाभावात् तस्य चक्षुरादीनि मिथ्येति भावः वृथेति क्वचित्पाठः वृथाविहितानि इन्द्रियाणि यस्य स तथा दन्ताश्छाद्यन्तेऽनेनेति छादेस्त्वमन्क्वीपघेस्व इति ह्रस्वः घेस्वरत्युक्तेर्नाम्न्यतिकेति संज्ञायां घप्रत्ययोबाध्यः ओष्ठाधरौ तु रदनच्छदावित्यमरः ॥१९॥

सारोऽसाविन्द्रियार्थानां यस्यासौ तस्य तन्वमुः। मन्ये कान्तान्तरैः सार्द्धं मन्येऽयं धिङ्गमञ्जमुं॥२०॥

सारी। इन्द्रियार्थानाममध्ये सारोऽसौ इयिता इन्द्रियार्थः ज०म०
रूपाद्यतिशययोगात् यस्यासौ संपद्यते तस्य मन्दथुः आनन्द
येतसः तस्मै शयनीये यस्य कान्तान्तरैरवनीभिः सार्द्धं निमज्ज
थुं शयनं सर्व्वत्र द्विषोऽप्युत् तस्य धिक् कुत्सितमहं मन्ये उभयत्र
सर्व्वतसोरित्यादिना धिग्योगे द्वितीया तया सार्द्धं शोभनमित्य
र्थादुक्तम्भवति ॥२०॥

सार इत्यादि। इन्द्रियस्य अर्था विषयाः शब्दस्पर्शवनिता भ०
इयस्तेषां मध्ये असौ सीतैव सारः श्रेष्ठा यस्य असौ सीता विद्यते
तस्यैव मन्दथुरानन्दः कान्तान्तरैः सार्द्धं तस्मै शय्यायां निमज्ज
थुं निमज्जनं शयनं धिक् तथैव सार्द्धं युज्यत इत्यहं मन्ये उभ
यत्र द्विताऽप्युर्भावे धिक्समयेति द्वितीया ॥ २० ॥

न तं पश्यामि यस्यासौ भवेन्नोद्वेजया मतेः। त्रैलो
क्येनापि विन्दस्वं तां क्रीत्वा सुकृती भव ॥ २१ ॥

मतम्। सर्व्वथा न तम्पश्यामि जानामि जगति यस्य सम्बन्धि ज०
न्याः मतेश्चेतसः उद्वेजया उत्कम्पिकाऽसौ न भवेत् चित्तक्षोभज
निकेत्यर्थः उद्वेजयतीति अनुपसर्गाल्लिम्पेति कर्त्तरि शः तद्योगे
कर्म्मणि षष्ठी तस्मात् त्रैलोक्येनापि त्रयस्त्रैते लोकास्तेषां त्रिलो
काः तएव त्रैलोक्यमातुर्व्वर्ण्यादित्वात्स्वार्थे ष्यञ् स्वार्थिका अपि
वर्त्तन्त इति नपुंसकत्वम् तेनापि तां क्रीत्वा लब्ध्वा विन्दस्व सुकृती
भव पण्डितो भव आत्मीया भव पाण्डित्यमस्य त्रैलोक्याभावे

षापि स्त्रीरलङ्कृता सम्यमिति विन्दतीति तेनैव सूत्रेण ग्रः अन्या अपि स्त्रियः सन्तीति चेदाह ॥ २१ ॥

भ० नतमित्यादि। असौ सीता यस्य मतेरुद्देजया चोभजनिका न भवेत् तं पुरुषं नाहं पश्यामि त्रैलोक्येनापि तां कृत्वा त्वं निन्दा त्वाभवान् सुकृती च भव सुकृती पुण्यवान् शोभनः कृती पण्डितो वा तत्क्रयणादेव तव लाभवत्वं पुण्यवत्वं पाण्डित्यञ्च सफलं अन्यथा निष्फलमिति भावः एजृकम्पे एजेरुदः ग्र इति परः स्वमते माहिमातीत्यादिना अगरित्यस्य नञा निर्दिष्टस्य व्यभिचारात् ग्रः त्रिदशपत्नी लाभे पूर्व्वेण ग्रः मृत्वादित्वान्नुण् त्रिलोक्येव त्रैलोक्यं स्वार्थे ष्यञः स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपीति वाक्यात् क्लीबत्वं ॥ २२ ॥

नैवेन्द्राणी न रुद्राणी न मनावी न रोहिणी। वरुणानी न चाग्नायी तस्याः सीमन्तिनी समा ॥ २३ ॥

ज०म० नैव। तस्यास्तु सीतायास्तुल्यार्थैरतुलोपमाभ्यामिति षष्ठी न काचित्सीमन्तिनी स्त्री तुल्या समा सीमन्तः केशविन्यास इति परङ्गप त्वम् अन्यत्र सीमान्तः स विद्यते यस्य इति इनिः इन्द्राणी इन्द्र भार्य्या न सम्यक् किम्पुनरन्या तथा रुद्राणी रुद्रभार्य्या वरुणानी वरुणभार्य्या इन्द्रवरुणेत्यादिना आनुक् मनावी मनुभार्य्या मनो रौवेत्यौकारः अग्नायी अग्निभार्य्या वृषाकप्यग्निकुसितकुसिदेत्यादिना ऐरिति सर्व्वत्र पुंयोगादाख्यायामिति ङीष् रोहिणी चन्द्रभार्य्या रोहितशब्दात् वर्णादनुदात्तेत्यादिना ङीप्नकारश्च

वरुणानी न आग्नायीत्यत्र प्रतिषेध एकः पूर्व्वेण योज्यः द्वितीयः परेणेति नचाग्नायीति पाठान्तरम्॥ २२॥

नैवेत्यादि। काऽपि सीमन्तिनी स्त्री तस्याः सीतायाः समा तुल्या न सर्व्वत्र नञ्समस्तन्यादिषु नञ्समस्तत्व उपपद्यते इन्द्राणी इन्द्रस्य पत्नी तस्याः समा न एव निश्चये इन्द्रवरुणभवेत्यादिना पत्याईप् आनङ्च रुद्राणी रुद्रस्य पत्नी पार्व्वती समा न पूर्व्ववत् ईप् आनङ्च मनावी मनोः पत्नी ऽतद्रूपा न समा नारीसखीत्यादिना निपातः रोहिणी चन्द्रस्य भार्य्या न समा पूर्व्वेण निपातः वरुणानी वरुणस्य पत्नी न समा इन्द्रवरुणेतीप् आनङ्च अग्नायी अग्नेः पत्नी न समा वृषाकप्यग्नीतीप् ऐङ्च केचित्तु इन्द्राणी न समा कीदृशी प्रशस्तसीमन्तयुक्ता एवं रुद्राण्यादावित्याहुः सीमन्तः कथ्यते स्त्रीणां केशमध्ये च पद्धतिरिति हलायुधः सनीपादित्वात्साधुः तस्या इति समार्थैनेत्यादिना षष्ठी॥ २२॥ भ०

प्रत्यूचे राक्षसेन्द्रस्तामाश्वसिहि बिभेषि किं। त्यज नक्तञ्चरि क्षोभं वाचाटे रावणोह्यहं॥ २३॥

प्रत्यू। राक्षसेन्द्रो रावणः राक्षसीम्प्रत्यूचे प्रतिवचनमुक्तवान् आश्वसिहि खेदन्त्यज रुदादीत्यादिना इट् बिभेषि किं किमर्थं त्वापसकात् हे नक्तञ्चरि मद्विषये क्षोभं रोषन्त्यज वाचाटे वक्तृभाषिणि आलजाटचौ वक्तृभाषिणि यस्माद्रावणोऽहम् अनेनात्मोत्कर्षमावेदयति तमेव स्फुटयन्नाह॥ २३॥ ज०म०

प्रत्यूचेइत्यादि। स राक्षसेन्द्रो रावणः तां शूर्पणखां प्रत्यूचे भ०

श्रुत्वा रमाह आशंकिर्हि वेदं त्यज रक्षो वदति हम् किं विभेषि तापसकात् हे नरकासुरि लोभं दुःखं मयि रोषं वा त्यज ईं बाधा देव ब्रह्मनिम्नभाषणशोले हि यस्मात् अहं रावणः प्रसिद्धनामाण्वा दात् उत्कर्षः सूचितः वाचोऽक्रमर्थे वाग्मिवाचाटवाचाला इति नि पातः आचाटोबहुगर्ह्यवागित्यमरः रवणस्य विश्रवसोऽपत्यं रा वणः विश्रवसो विश्रवणरवणावपत्यणं इति परः स्वार्थे सर्व्वभू तानि रावयति आक्रन्दयति रावणः नन्द्यादित्वादनः किम्वा हिंसनधर्म्मत्वात् रावणः हिंसार्थरधातोरनटि रवण ततः अस्य शीलं इत्यर्थे छिकारसंघेत्यादिना णः अत्रापि वा नन्द्यादित्वा दनः ततः स्वार्थे णः रुलच्वनौ रुक्वधे गत्यां ॥ ८३ ॥

मामुपास्त दिदृक्षावान् याष्टीकव्याहतोऽहरिः । आ
त्मलाभाभिमुखो दूरात् काक्षेणानादरेक्षितः ॥ ८४ ॥

ज०म० माम् । मामुपास्त सेवितवान् हरिरिन्द्रः दिदृक्षावान् द्रष्टुमि च्छावान आत्मदर्शनेच्छावानित्यर्थः दूरादेव याष्टीकैः वेत्रग्राहि भिर्व्याहतोऽपसारितः कर्त्तृकरणकृतेति सः यष्टिः प्रहरणम स्यामिति प्रक्रियस्योरीकक् आत्मलाभे किमभिधास्यतीत्युत्सुकः तदुन्मुखः तत्परः सप्तमीति योगविभागात्सः अनादरेक्षितः अव ज्ञावलोकितः काक्षेण कुदृष्ट्या कापथ्यक्षयोरिति कुशब्दस्य कादेशः यदि तत्पुरुष इत्यनुवर्त्तते तदा कुत्सितमक्षमिति विग्रहः अक्षशब्दस्येन्द्रियसामान्याभिधायित्वेऽपि ईक्षितशब्दो पपदत्वाच्चक्षुषि वर्त्तते अथ तत्पुरुषइति नानुवर्त्तते सामान्ये

नादेशस्तदा कुत्सितमक्षि यस्येति वक्रग्रीवो वक्रग्रीवोपलक्षणो रिति पक्ष्काचेण मयेत्यर्थः॥ २४॥

मामित्यादि। हरिरिन्द्रो मामुपास्त सेवितवान् श्रीमत्ता रूपं यष्ट्या प्रहरतीति याष्टीकः द्वारि नियुक्तः यष्टिप्रहारकपुरुषः ढषेकादिति ष्णीकः तेन व्याहतस्ताडितोऽपि दिदृक्षावान् द्रष्टुं इच्छावान् मदाशाया लाभनिमित्तं उन्मुखः ऊर्द्ध्वमुखः दूरात्समीपगमनायोग्यत्वात् मया तु काचेण कुदृष्ट्या अनादरेणावज्ञया ईक्षितः अवलोकितः कुत्सितमक्षं काक्षं इन्द्रियसामान्यवाचिनोऽच शब्दस्यात्र प्रकरणाच्चक्षुरेवार्थः कुत्सितमक्षि यस्येति वा समासान्तः षः स्वाङ्गे इति षः काक्षे इति कोः कादेशः तत्र अक्ष इति इन्द्रियवाचकस्यादन्तस्य हतसमासान्तस्य अक्षिशब्दस्य च ग्रहणं ईषदक्षं काक्षं इति वररुचिः तदा कटाक्षे तात्पर्यं कोरीषदर्थे इति कादेशः॥ २४॥ भ०

विद्यग्नोदग्रधाराग्रः कुलिशोऽमम वक्षसि। अभिन्नं शतधात्मानं मन्यते बलिनं बली॥ २५॥

विद्य। विद्यग्नानि अवसन्नानि कुण्ठितानि उदग्राणि महान्ति धाराग्राणि यस्य स कुलिशो वज्रः मम वक्षसि पतितः सन् बली आत्मानमभिन्नं शतधा शतप्रकारं सङ्ख्यायाविधार्थे धा बलिनं मन्यते अहो बलवानहमस्मि येन शतधा भग्न इति तस्य देवतारूपत्वात् बलमस्त्येव आत्मानं बलिनं मन्यत इवेत्युत्प्रेक्षा॥ २५॥ अ०म०

भ० वहन्निनित्यादि कुलिशीवम् आत्मानं बलिनं मन्यते कुमद त्याह मम वक्षसि शतधा शतप्रकारेण अभिन्नं केवलं विरुग्णानि भग्नानि उदग्राणि महान्ति धारायाणि यस्य तादृशः बली वस्तु तोबलवानपि मद्वक्षस्थभङ्गादेव बलं जानाति असुरसमूहविदा रणाद्‌पोद्‌मेव तस्याधिकमुत्कर्षस्थानमित्यर्थः तस्य वताहूपत्वा न्मननमस्त्येव उत्प्रेक्षामात्रं वा मन्यत इव इत्यर्थः रुश्यायाधाच् प्रकारे ॥ २५ ॥

कृत्वा लङ्काद्रुमालानमहमैरावतं गजं। बन्धनेऽनु पयोगित्वान्नतं तृणवदत्यजं ॥ २६ ॥

ज०भ० कृत्वा। एत्यालीयतइत्यालानं अधिकरणे ल्युट् विभाषा ली यतइत्यालम् लङ्काद्रुमा आलानानि यस्यैरावताख्यस्य गजस्यत कृत्वा नतन्नम्रमुखन्तृणमिव मत्वा सोऽहमत्यजम् त्यक्तवान् बन्ध नेऽनुपयोगित्वात् प्रयोजनाभावात् ॥ २६ ॥

भ० कृत्वेत्यादि। लङ्काद्रुम एवालानं बन्धनस्तम्भो यस्य तथाभूतं ऐरावतं गजं कृत्वा नतं नम्रं तं अहं तृणवत् अत्यजं अथवा तं गजं तृणवत् न अत्यजं अपि तु अत्यजमेवेति शिरश्चालने नञ् कुत इत्याह बन्धनेऽनुपयोगित्वात् स्वयमेव वशीभूतत्वात् अनु पादेयत्वाद्वा आलीयतेऽस्मिन्नित्यालानं आधारेऽनट् मिथ्यार्थ ण्यान्ताल्लीङ्श्लेषणे च ल्युट् इति पक्षे ऐरावान् समुद्रः तत्र जात इति ढधिकादिति ष्णः ॥ २६ ॥

आक्षेपुरूपिकां पश्य मम सद्गत्नकान्तिभिः। ध्वस्ता न्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा ॥ २७ ॥

आहो। अहोपुरुषस्य भावः मनोज्ञादित्वाद्वुञ् आहोपुरुषिका जं०म०
कार्य्यसिद्धावपि तत्साधने वृत्तिः तामम शूर्पणखे पश्य मद्रत्नका
न्तिभिः ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः पूर्णचन्द्रस्य सन्निधिः सदा
सन्निधानस्य पुनस्तेन कृत्यं रत्नप्रभाभिरेव तत्कृत्यस्य कृतत्वात्
॥ २७ ॥

आहोइत्यादि। ममाहोपुरुषिकां पश्य मद्रत्नकान्तिभिः मद्र भ०
त्नानां प्रभाभिर्ध्वस्तान्धकारे नाशितध्वान्तेऽपि मत्पुरे सदा पूर्ण
न्दोः सन्निधिः एतेन प्रयोजनाभावेऽपि भीत्या पूर्णीभूत्वा चन्द्रस्ति
ष्ठति देवैरपि भीत्या नासौ पीयते चन्द्रप्रभाणि च रत्नानि मम
सन्तीति सूचितं अहमेव पुरुषोत्तमेति सम्भावनायामाहोपुरुषि
का निपातनात् आहोपुरुषिकादर्पाद्या स्यात्सम्भावनात्मनीत्य
मरः। अहोपुरुषस्य भाव आहोपुरुषिका इति केचित् तदा विका
रसंघेतिभावे कण् स्त्रीत्वमभिधानात् काप्यनादीरकइति अत
इत्वं सरेति कुतःककुहेत्यादिना निपातितं ॥ २७ ॥

हृतरत्नश्च्युतोद्योगो रक्षोभ्यः करदो दिवि। पूतक्र
तायीमभ्येति सत्रपः किन्न गोत्रभित् ॥ २८ ॥

हृत। हृतोऽर्थः श्रवश्रादिरत्नो गोत्रभिदिन्द्रः अतएव च्युतो जं०म
द्योगः दिवि वर्त्तमानोऽपि रक्षोभ्यः करदः राजग्राह्यं वित्तम्प्र
यच्छन् पूतक्रतायीं शचीं पूतक्रतोरैच्चेति ङीष् पुंयोगादाख्यायामि
ति सत्रपः सलज्जः किमभ्येति न ढौकते ॥ २८ ॥

हृतेत्यादि। गोत्रभित् इन्द्रो दिवि वर्त्तमानोऽपि सत्रपः सलज्जः भ०

सन् पूतक्रतायीं स्वभार्य्यामपि नाभ्येति नाभिमुख्येन गच्छति अपि तु तथैव सचपले हेतुमाह सधा इतरथः इतं रतं यस्य स तथा गलितोद्योगः राक्षसेभ्यः करदः करं राजग्राह्यभागं ददातीति डः पूतक्रतोरिन्द्रस्य पत्नी पूतक्रतायी वृषाकप्यग्नि इत्यादिना ईप् ऐङ्च गोत्रान् पर्व्वतान् योभिनत्ति सोऽतिबली यान् इति साभिप्रायं पदं ॥ २८ ॥

अतुल्यमहसा सार्द्धं रामेण मम विग्रहः। त्रपाकरस्तथाप्येष यतिष्ये तद्विनिग्रहे ॥ २९ ॥

ज०म० अतु। तदेवंविधस्य मम अतुल्यमहसा अतुल्यतेजसा रामेण सह विग्रहस्त्रपाकरः कृञोहेत्वित्यादिना टः तथापि त्वत्प्रार्थनया एष च यतिष्ये तद्विनिग्रहे विविधनिग्रहविषये तस्य यतिष्ये यत्नं करिष्यामि वर्त्तमानसामीप्ये वर्त्तमानवद्वेति विकल्पेन लटो विधानात् ऌडुदाहृतः ॥ २९ ॥

भ० अतुल्येत्यादि। यद्यपि अतुल्यमहसा असदृशतेजसा रामेण सार्द्धं मम विग्रहस्त्रपाकरः तथापि तस्य विविधनिग्रहे एषोऽहं यतिष्ये यत्नं करिष्ये त्वत्प्रार्थनयेति शेषः त्रपां लज्जां करोतीति स्तकुटः निग्रह इति विषयसप्तमी निमित्तमात्रेऽपि सप्तमी लोकोपचारादित्यन्ये ॥ २९ ॥

उत्पत्य खं दशग्रीवो मनोयायी शिलास्वभृत्। समुद्रसविधावासं मारीचं प्रति चक्रमे ॥ ३० ॥

उत्प। उत्पेत्युत्पत्याकाशमुत्पत्य मारीचमति चक्रमे ययौ ज०म
मारीचोऽराचमच गत इत्यर्थः मनुपसर्गादिति क्रमेरात्मनेपदं मना
वदाशु यातुं शीलमस्येति कर्त्तर्य्युपमान इति णिनिः शिताखभृत्
गृहीततीक्ष्णखड्गहस्तः समुद्रस्य सविधे समीपे आवासोयस्य
मारीचस्य मह विधेन सविधमिति व्युत्पत्तिमात्रं शब्दस्तु समीप
वाची॥ ३०॥

उत्पत्यादि। एवमुक्त्वा दशग्रीवो रावणः खमाकाशं उत्पत्य भ०
मारीचं प्रति लक्षीकृत्य चक्रमे गतः वागेरिति सं द्वितीयानिमि
त्तकस्य प्रतिशब्दस्य गित्वाभावात् मन इव शीघ्रं यातीति मनो
यायीति कर्त्तर्य्युपमाने उपपदे णिनिति परः खमते गोत्रादि
त्वाणिन् व्याघ्रयायी श्वायेति वाक्यं कुर्व्वता क्वचिदुपमानव्यञ्ज
कशब्दाभावेऽप्युपमानं गम्यते इति सूचितं तेन मन इव यायीत्य
र्थो गम्यते शितं तीक्ष्णमस्त्रं विभर्त्तीति क्विप् समुद्रस्य सविधे समी
पे आवासो यस्य तं। सदेशाऽभ्याससविधसमर्य्यादसवेशवदित्य
मरः॥ ३०॥

सम्पत्य तत्सनीडेऽसौ तं वृत्तान्तमशिश्रवत्। चक्षु
नाथ श्रुतार्थेन तेनागादि दशाननः॥ ३१॥

सम्प। असौ दशग्रीवः तत्सनीडे मारीचस्य समीपे अत्रापि सह ज०म०
नीडेनेति व्युत्पत्तिमात्रम् समेत्य यात्वा तं वृत्तान्तं शूर्पणखा
कथितमशिश्रवत् श्रावितवान् शृणोतेर्ण्यन्तस्य लुङि रूपम् तेन
मारीचेन श्रुतार्थेन चक्षुना सममशोखेन दशाननः अभादि
उक्तः कर्म्मणि लुङ्॥ ३१॥

भ॰ संपत्येत्यादि। असौ रावणः तस्य मनीडे समीपे संपत्य संगत्य तं मारीचं वृत्तान्तं शूर्पणखोक्तं अभिश्रवत् श्रावितवान्। समीपे निकटासन्नसन्निकृष्टसनीडवदित्यमरः। अथ अनन्तरं भुतार्थेन तेन मारीचेन वक्रुना भीतेन दशाननोऽगादि उक्तः कर्म्मणि टो ॥ ३१ ॥

अन्तर्द्धत्स्व रघुव्याघ्रात्तस्मात्त्वं राक्षसेश्वर। यो रणे दुरुपस्थानो हस्तरोधं दधद्धनुः ॥३२॥

ज॰म॰ अन्त। हे राक्षसेश्वर त्वन्तस्माद्रघुव्याघ्रादन्तर्द्धत्स्व अन्त र्हितोभव व्यवहितो भवति यावत् दधातेर्लोटि आभ्यस्तयोरि त्याकारलोपः अभ्यासस्य दधस्तथोश्चेति भष्भावः अन्तर्द्धौ येनेत्यपादानसंज्ञा यस्मात्स रामः रणे दुरुपस्थानः दुःखेन उपस्थीयते उपगम्यत इति आतोयुचेति युच यतोहस्तरोधन्द धद्धनुः हस्तेन रुध्वा सदैव योधनुर्धत्ते स कथन्दुरुपस्थानो न भवति हस्तशब्दे तृतीयान्त उपपदे सप्तम्याञ्चोपपोडरुधकर्ष इति णमुल् चकारेण तृतीयायाः समुच्चितत्वात् तृतीयाप्रभृतीन्य न्यतरस्यामिति सः तदेव दुरुपस्थानत्वं स्फुटयन्नाह ॥ ३२ ॥

भ॰ अन्तरित्यादि। हे राक्षसेश्वर तस्माद्रघुव्याघ्रात् त्वं अन्तर्द्ध त्स्व स यथा न पश्यति तथा व्यवहितोभव अन्तःपूर्व्वधाञोगीस्वः क्रादोरेदिः झभखयेत्यादिना खेर्द्धस्वः धस्य दश्य झमात्तसेति दस्य धः आदोरालोप्यदत्यालोपः झपझसोरिति धस्य तः यतो ऽपायेत्यादिना अन्तर्द्धौ पञ्चमी हेतुमाह योरामोदुरुपस्थानः

द:खेनोपस्थीयते उपगम्यते शत्रुभि: समीपगमनमेवाशक्यं किं पुन र्युद्धमिति भाव: श्रातोऽनोऽदरिद्रइति श्रन: यतोहस्तरोधं सदा धनुर्दधाति हस्तेन रुद्धा हस्तरोधं श्रासक्तौ हतीयायाञ्चाद्युधोणम् इति पर: येन सदा स्थिरतरं धनुर्दधातीत्यर्थ: केचित्तु हस्तं रु द्धेत्यर्थे स्वाङ्गात् दृधेर्णम् तेनान्यकर्म्मनिवृत्तिर्हस्तस्य गम्यत इत्या हु: क्षमते हस्तं रुणद्धि कार्य्यान्तराद्व्यावर्त्तयतीति ढात् पच् धनु र्व्विशेषणं॥ ३२॥

भवन्तं कार्त्तवीर्य्यो योऽहीनसन्धिमचीकरत्। जि गाय तस्य हन्तारं स राम: सार्व्वलौकिक:॥ ३३॥

भव। य: कार्त्तवीर्य्य: कृतवीर्य्यस्यापत्यं सहस्रबाहु: भवन्तं अं०क हीनसन्धिमचीकरत् हीनेन दुर्व्वलेन य: सन्धि: तम्भवन्तङ्का रितवान् तेन हीनत्वं बलान्निर्ज्जित्य कारित इति दूरुपस्थानमु क्तम् हृक्रोरन्यतरस्यामिति द्विकर्म्मता तस्य कार्त्तवीर्य्यस्य योह न्ता परशुराम: कृत्प्रयोगे कर्म्मणि षष्ठी तेन हि तस्याग्निहोत्रधे नुमपहृत्य गच्छत: परशुना बाहुसहस्रञ्छिन्नम् तस्य हन्तारं सरामो जिगाय जितवान् जयतेर्लिटि धातुजकारस्य संलिटोर्जे रिति कुत्वम् सार्व्वलौकिकं सर्व्वलोके विदितं लोकसर्व्वलोकाभ्यां ठञ् अनुशतिकादित्वादुभयपदवृद्धि: सार्व्वलौकिक इति पाठा न्तरम् तच राम इति योज्यम्॥ ३३॥

भवेत्यादि। दूरुपस्थानत्वं स्फुटीकुर्व्वन्नाह य: कार्त्तवीर्य्योऽर्ज्जु भ० नोभवन्तं हीनसन्धिं भग्नसन्धिं अचीकरत् कृतवान् कृञ:स्वार्थे

ञिः पुर्व्वोञ्जिर्त्था इत्यस्य योगविभागात् कपिपुरादेरन्यस्माद पि स्वार्थे ञिर्त्था भवतीति बोध्यं तेन रामो राज्यमकारयदित्या दिप्रयोगाः यद्वा हीनजनेन सह सन्धिं सन्धानं मिलनं कारया मास यद्भयात् भवता हीनजनोऽप्याश्रितइत्यर्थः घोऽञोऽञिरिति प्रयोज्यकर्त्तुः कर्म्मता कृतवीरस्यापत्यं कार्त्तवीर्य्यः गर्गादित्वात् ष्यः तस्य कार्त्तवीर्य्यस्य हन्तारं परशुरामं म रामोजिगाय अ र्णि.मन्त्रोः सार्व्वलौकिकं सकलक्षत्रियनाशेन सर्व्वलोकविदि तम् प्रथमान्तपाठे रामविशेषणं तत्र विदितइत्यर्थे ठञ्कादिति ष्णिकः णिर्त्तञिरिति सुभगादित्वात् उभयपदवृद्धिः ॥ ३३ ॥

यमास्यदृश्वरी तस्य ताडका वेत्ति विक्रमं । शूरंमा न्योरणाच्चाहं निरस्तः सिंहनर्दिना ॥ ३४ ॥

ज०म० यम । तस्य रामस्य विक्रमन्ताडका वेत्ति ज्ञातवती वर्त्तमान सामीप्य इति भूते लट् कीदृशी यमास्यदृश्वरी तच्छरताडिता यममुखन्दृष्टवती मृतेत्यर्थः दृशः क्वनिप् वनोरचेति ङीरेफौ अहमपि शूरम्मन्यः शूरमात्मानम्मन्यमानः आत्ममाने खश्च सिंहनर्द्दिना रामेण सिंहइव नर्दतीति कर्त्तर्य्युपमान इति णिनिः रणान्निरस्तः वहिष्कृत इत्यर्थः ॥ ३४ ॥

भ० यमास्येत्यादि । तस्य रामस्य विक्रमं ताडका वेत्ति जानाति अहञ्च वेद्मि सा किम्भूता यमास्यदृश्वरी यममुखं दृष्टवती मृतेति यावत् आसुयिति दृशः क्वनिप् नवनसादन इति ईप् रश्च अहं किम्भूतः शूरम्मन्यः आत्मानं शूरं मन्यमानः मन्यात्मार्थेइति

स्य्रिस्यात् स्त्ने दिवसुतुदेत्यादिना यन् तेन सिंहनर्द्दिना र
णात् निरस्तः निराकृतः सिंह इव नर्द्दतीति मनोयायीतिवत्
वेत्तीति लोकान्तरस्था ताड़का इदानीमपि जानातीत्यभिप्रा
येण वर्त्तमाने क्तो वर्त्तमानसामीप्ये भूतेऽपि कीत्यन्ये रणादिति
हेतौ पञ्चमी रणभूमेः सकाशात् बहिष्कृत इति वा ॥ ३४ ॥

न त्वं तेनान्वभाविष्ठा नान्वभावि त्वयाऽप्यसौ। अनु
भूतोमया चासौ तेन चान्वभविष्यहं ॥ ३५ ॥

नत्वमित्यादि। तेन रामेण त्वन्नान्वभाविष्ठाः त्वमनेन नानु जं०म
भूतः कर्म्मणि लुङ् थासि स्यसिजित्यादिना चिण्वदिट् एवं नान्व
भावि त्वयाऽप्यसौ नानुभूतः येनैवमुच्यते अत्र चिण्भावकर्म्मणो
रिति चिण् अनुभूतोमया चासौ चशब्दः पुनरित्यर्थे मया पुनर
सावनुभूतः न शक्तोजेतुमिति तेन रामेण चान्वभविष्यहमनु
भूतोऽहम् तेन सह योद्धुमक्षम इति अत्र चिण्वद्भावो न कृतः
किन्तु लुङि उत्तमपुरुषैकवचने वलादिलक्षण इट् तेन वृद्ध्यभा
वात् गुणएवेति ॥ ३५ ॥

नत्वमित्यादि। त्वद्वचने कोग्रहः मत्प्रसिद्धैव सदूरीभविष्य भ०
ति इत्याशङ्कायामिदमुत्तरं तेन रामेण त्वं न अन्वभाविष्ठा
न अनुभूतः कथं त्वत्तोऽस्य भयं स्यात् अनुपूर्व्वोभूधातुः सक
र्म्मकः कर्म्मणि थास् हनग्रहदृशश्चइति पक्षे सिण् त्वयापि असौ
रामो न अन्वभावि न अनुभूतः तेन तत्रावज्ञा न युक्ता कर्म्मणि
टो तत् असौ मया अनुभूतः तत्रापि तत्त्वज्ञोऽहमिति मद्वचनं

सुखायेति भावः तेनाप्यहमन्यमविषि अनुभूतः तेन मद्गमनं व्यर्थं पराजितस्य मम दर्शनेन तस्यावस्थाप्रसङ्गात् कर्म्मणि टी इण् मिणोरभावपक्षे इम् ॥ ३५ ॥

अध्यङ् शस्त्रभृतां रामोन्यञ्चस्तं प्राप्य मद्विधाः। सक
न्याशुल्कमभनङ्मिथिलायां मखे धनुः ॥ ३६ ॥

ज०म० अध्यङ्। शस्त्रभृताम्मध्ये रामोऽध्यङ् अधिकः अध्यञ्चेत्याधिक्ये वर्त्तत इति ऋत्विगित्यादिना क्विन् तस्मिन् लुप्ते अनुनासिकलोपे उगिदचामिति नुम् तस्यानुस्वारपरसवर्णत्वे कृते च हल्ङ्यादिसंयोगान्तलोपो नकारस्य क्विन्प्रत्ययस्य कुरिति कुत्वेन ङकारः तन्तादृशम्प्राप्य मद्विधा न्यञ्चो हीनाः निशब्दोऽत्राधोभावे वर्त्तते न्यञ्च इति पूर्व्ववत् क्विन् अनुनासिकलोपः नुम् हल्लोपोनास्ति अहल्त्वात् कुत्वञ्च नास्ति अपदसंज्ञत्वात् यो मिथिलायामहद्धनुरभनक् भग्नवान् सोऽस्मादपि कारणात् शस्त्रभृतामध्यङ् भञ्जेर्लङि श्नान्नलोपः हल्ङ्यादिलोपः कुत्वञ्च कन्याशुल्कङ्कन्यामूल्यन्तद्धि यो रौद्रन्धनुरारोपितगुणङ्करोति तस्मै कन्या दीयत इति मूल्यीकृत्य स्थापितम् ॥ ३६ ॥

भ० अध्यङित्यादि। शस्त्रभृतां मध्ये रामा अध्यङ् आधिक्येन पूजितः कर्म्मणि क्विप् हसुङ्लोपोऽणाविति प्राप्तनलोपस्य नेदित्पूजार्थांच्चोरिति प्रतिषेधः विच्प्रत्ययोवा चक्तिति अञ्चोः पृथक् ग्रहणात् लुप् प्राक्कङ् मोर्मुः अपेक्षमनोः स्यानास्य लुप् अध्यङ् अधिकोवा अधिपूर्व्वोऽञ्चतिराधिक्ये वर्त्तते तं प्राप्य मद्विधा मत्स

कारकाः पुरुषा न्यक्षः निम्नदेशोऽधोभागे न्यक्षन्ति अधोगच्छन्तीति न्यक्षा होना इत्यर्थः कुत इत्याह सरामोमिथिलायां मखे यज्ञे धनुरभनक् भग्नवान् भञ्जेर्व्यां रुधादित्वात् नम् नशे नलोपः श्नसञ्झादिर्घेरिति हिलोपः चक्तिति कङ् कन्याशुल्कं कन्यापणं धनुरारोपे सति कन्या देयेति मूल्येन स्थापितं ॥ ३६ ॥

संविद्रः सहयुध्वानौ तच्छक्तिं खरदूषणौ। यज्वानश्च ससुत्वानोयानगोपोन्मखेषु सः ॥ ३७ ॥

संवि। नाहमेव रामशक्तिमवैमि अपितु खरदूषणावपि संविद्रः ज्ञातवन्तौ वर्त्तमानसामीप्यइति भूते लट् सकर्मकत्वात् समोगमीत्यादिना तङ् न भवति तच्चाकर्म्मकादिति वर्त्तते सह युध्वानौ सह तेन युद्धवन्तौ सहेचेति युधेः क्वनिप् यज्वानश्चाहिताग्नयः ससुत्वानः सोमयाजिसहिताः सुयजोङ्वनिप् संविद्रन्तीति वचनविपरिणामेन योज्यम् यानगोपोत् अरक्षीत् मखेषु सरामः लुङि रूपन्तथा मखद्रुहोराक्षसाः यतोरामस्य शक्तिं ज्ञातवन्तः ॥ ३७ ॥ ज०म०

संविद्रइत्यादि। न केवलमहमेव वेद्मि खरदूषणावपि तस्य शक्तिं संविद्रः ज्ञातवन्तौ ताडका वेत्तीतिवत् की सहयुध्वानौ तेन सह युद्धवन्तौ चासुमिति क्वनिप् यज्वानश्चाहिताग्नयश्च विदन्ति पूर्व्वेण क्वनिप् बाहुल्यात्र जिः ससुत्वानः सुत्वभिः कृतसोमपानैः सहिताः पूर्व्वेण क्वनिप् स्वखतनप्पितीति तन् तेषां ज्ञाने हेतुमाह मखेषु यज्ञेषु सयानगोपोत् अरक्षीत् तेषां यज्ञे भ०

राघवहननात् तेऽपि जानन्तीत्यर्थः गुपूरक्षणे वा रेइति आयो ऽभावः पक्षे ध्यांसिः वेमूदिति पक्षे इम्॥ ३७॥

सुखजातः सुरापीतो नृजग्धोमान्यधारयः। अधिलङ्कं स्त्रियोदीव्य मारब्धा बलिविग्रहं॥ ३८॥

ज॰म॰ सुख। यतएवन्दरूपस्थानः स तस्माद्बलिना रामेण विग्रहमारब्धाः माकार्षीः रभेराङ्पूर्व्वात् माङि लुङ् थास् झलोझलीति सिज्लोपः झषस्तथोर्धोधः झलाञ्जशझशि किङ्कार्य्यमित्याह अधिलङ्कं लङ्कायामधि विभक्त्यर्थेऽव्ययोभावः स्त्रियादीव्य क्रीड लोटि रूपम् दिवःकर्म्मचेति कर्म्मसंज्ञायां वामुशसोरितीयङ् कीदृशः सुखजातः जातं सुखमस्येति वहुव्रीहिः क्तान्तत्वपानत्वात् यदाह सुरापीतः पीतमदिरः नृजग्धः भुक्तमानुषः निष्ठायामदोजग्धिः पूर्व्ववद्बहुत्वम् एषु वाहिताग्न्यादिदर्शनात्परनिपातः मान्यन्धारयतीति मान्यधारयः अनुपसर्गात् लिम्पत्यादिना शः॥ ३८॥

भ॰ सुखेत्यादि। रामादुरूपस्थान एव अतस्तेन बलिना सह विग्रहं युद्धं मारब्धाः माकार्षीः आङ्रभेष्टो थास् झसस्वादिति सिलोपः ढभास्तथोरिति थस्य धः अधिलङ्कं लङ्कायामधिकृत्य स्त्रियोदीव्य स्त्रीभिः क्रीड कारकार्थेऽव्ययीभावः दिवसुतुइत्यादिना दिवः श्यन् व्यंनच्तयोति घः हेर्लोपः दिवोधेवेति करणे द्वितीया कीदृशः सुखं जातमस्य सुरा पीता येन सा मनुष्योजग्धोभक्षितोयेन स तथा एषु अग्न्याहितादित्वात् क्ता

न्तस्य परनिपात इति परः स्वमते पूर्व्वपरनिपातयोर्विवक्षा धीनत्वं दैवकर्मेऽन्वय इत्युक्तेः जग्धोऽदोयपि चेति जग्धादेशः माल्यानि धारयतीति धाद्दिमातीति यः ॥ ३८ ॥

तं भीतङ्कारमाक्रुश्य रावणः प्रत्यभाषत । यातयामं विजितवान् सरामं यदि किन्ततः ॥ ३९ ॥

तंभी । तम्मारीचम्भूर्व्वोक्तन्निराकुर्व्वन् रावणः प्रत्यभाषत प्रत्युक्त वान् लङि रूपम् भीतङ्कारमाक्रुश्य भीतङ्कृत्वा भीतोऽसीति कर्म्म ण्याक्रोशे कृञः खमुञ् यातयामङ्गतवयसं यदि विजितवान् रामोदाशरथिः किन्ततः किं तापसः शूरः ॥ ३८ ॥ ज०

तमित्यादि । भीतङ्कारं त्वं भीतोऽसीत्युक्त्वा आक्रुश्य तं मारीचं रावणः प्रत्यभाषत प्रत्यूचे भीतंकारमिति कर्म्मण्याक्रोशे कृञो भाषणार्थे क्त्वा णम् खिदश्चेति परः स्वमते तमाक्रुश्य प्रत्यभाषत तं किम्भूतं भीतं भययुक्तं पुनः किम्भूतं कारं घोरणे दृश्य स्यान इत्यादेर्विज्ञापयितारं कृकङ्विज्ञाने इत्यस्मात् अन्तात् कभावेऽसीति कर्त्तरि घञ् किम्वा णम्नेत्यस्य योगविभागात् आक्रोशे णम् मनीषादित्वात् पूर्व्वपदस्य दीर्घान्तत्वं किं प्रत्यभाषतेत्याह स राघवोयातयामं वृद्धं रामं जामदग्न्यं विजितवान् ततः किं नहि वृद्धजयेन शौर्य्यं ज्ञायते । यातयामस्तु जीर्णे स्यात् परित्यक्तोज्झितेऽपि चेति विश्वः ॥ ३९ ॥ भ०

अघानि ताडका तेन लज्जाभयविभूषणा। स्त्रीजने यदि तच्छ्लाघ्यं धिग्लोकं क्षुद्रमानसं ॥ ४० ॥

ज०म० अघा। तेन रामेण ताडका अघानि व्यापादिता हन्तेः कर्मणि लुङ् लज्जा भयं च विभूषणं यस्याः स्त्रीलाक्षणिकम् एवं विधाया अनेन रामेण यदि गर्ह्यमपि हननं स्त्रीजने श्लाघ्यं श्लाघनीयम् कृत्यानाङ्कर्त्तरिवेति तृतीया तं धिक् तं लोकं क्षुद्रमानसं हीनमानसम् ॥ ४० ॥

भ० अघानीत्यादि। लज्जा भयञ्च विभूषणं यस्याः सा ताडका तेन रामेण अघानि मारिता हन्तेः कर्मणि टो रतनोर्थगिणो वधेर्घाञ्चितिर्वेति घत्वं स्त्रीजने तत्कर्म यदि श्लाघनीयं तदा क्षुद्रमानसं हीनचित्तं लोकं धिक् धिक्समयति द० ॥ ४० ॥

यद्वेद्वेनर्द्दिनमसौ शरैर्भीरुमभाययत्। कुब्रह्मयज्ञके रामो भवन्तं पौरुषं न तत् ॥ ४१ ॥

ज०म० यद्वे। असौ रामोयद्भवन्तम्भीरुं शरैरभाययत् भायितवान् षुगात्मनेपदे न भवतः भयहेतोरभावात् अत्र हि शरेभ्यो भयम् नतु रामात् तत् किम्पौरुषम्पुरुषकारः किमसौ पुत्रादित्वादण् गेद्देनर्द्दिनद्वैद्वण्व नर्द्दिनं पात्रसमितादित्वात्सः कुब्रह्मयज्ञकं कुत्सिता ब्रह्माणः कुब्रह्माः कुःपापार्थे इति सः कुमहद्भ्यामन्यतरस्यामिति समासान्तष्टच् तेषां कुत्सितो यज्ञः तस्मिन्निति

कुत्सायाङ्कन् तेन भूरमन्योऽहं रणान्तेन निरस्त: इत्यपुष्कल मुक्तम्॥ ४१॥

यन्नइत्यादि। असौ राम: कुब्रह्मायप्तके यन्नवन्तं परैरभा ययत् अत्रासयत् तदपि न पौरुषं कथमित्याह भीरुं भयशीलं अतएव गेहेनर्दिनं स्वगृहएव नर्द्दतीति सप्तादित्वाणिन् पात्रे समितादित्वात् क्षेपे समासोविभक्त्यलोपश्चेति पर: अभावयदिति भियोऽन्यकात् घौ स्मिभ्योर्घाद्धवे औ मश्चेत्यस्य भोर्भीष् वेत्यस्य च नात्र विषय: यत: परेभ्य एवात्र भयं विवक्षितं नतु प्रयोजकात्कर्त्तु: कुत्सितोब्रह्मा ब्राह्मण: कुब्रह्मा: ईषाद्ब्रह्मण: कुमहद्भ्यान्तुवेति पक्षे ष: तस्य कुत्सितोयज्ञ इति निन्दायां विकारसंघेत्यादिना क: अतएव प्रयोजनाभावात्तत्र समथा राक्षसा न गच्छन्ति पुरुषस्य भाव: कर्म्म वेति पूर्व्वेण ष्ण:॥ ४१॥ भ०

चिरकालोषितं जीर्णं कीटनिष्कुषितं धनु:। किं चित्रं यदि रामेण भग्नं क्षत्रियकान्तिके॥ ४२॥

चिर। यदि रामेण क्षत्रियकान्तिके कुत्सितक्षत्रियसमीपे भग्नन्धनु: किन्तच्चित्रमाश्चर्य्यं क्षत्रिया जनकादय: तस्य कुत्साया ङ्कन् क्षत्रियकस्यान्तिके दूरान्तिकार्थयोगे षष्ठीसमासं विधाय पश्चात्सप्तम्यधिकरणे चेति चकाराद्दूरान्तिकार्थेभ्यश्चेति सप्तमी किमिति न चित्रमित्याह चिरकालमुषितमिति कालाध्वनोरिति द्वितीयां विधाय अत्यन्तसंयोगेचेति द्वितीयासः जीर्णं स्थि ज०म

रकालोषितत्वात् जृष्वयोर्हानौ निष्ठा श्युकः इति इटि हलन्तात् कित्त्वात् इतः इको हलि चेति दीर्घः रदाभ्यामिति निष्ठानत्वम् कीटैर्घुणैर्निष्कुषितस्मात् कुषेस्तेरिस्ताधिकरणः निष्कुषितं निरःकुष इत्यनुवर्त्तमाने इण्निष्ठायामितीट्॥ ४२॥

भ० चिरेत्यादि। क्षत्रियकान्तिके कुत्सितानां क्षत्रियाणां जनकादीनां निकटे यदि रामेण धनुर्भग्नं तदपि किं चित्रं कथं न चित्रमित्याह चिरकालोषितं चिरकालं व्याप्य स्थितं सदाध्वादिव्याप्ताविति द्वितीया तया समासः ततएव जीर्णं जृजरायां हानौ क्तः ऋदिरणावितीर् र्वोरुपधाया इति दीर्घः लूल्वादिभ्य इति नकारः कीटैर्घुणैर्निष्कुषितं अन्तःखादितं नेमडीत्यादौ निष्कुषवर्ज्जनात् इमनुबन्धविधानं गवाक्षजालैरभिनिष्पतन्त्य इत्यत्र व्याख्यातं ईदृशधनुर्भङ्गश्लाघयैव क्षत्रियाणां कुत्सा॥ ४२।

वनतापसके वीरौ विपक्षे गलितादरौ। किं चित्रं यदि सावज्ञौ मम्रतुः खरदूषणौ॥ ४३॥

ज०म० वन। वने तापसोवनतापसः कुत्सायां कन् तस्मिन् तापसके रामे सावज्ञत्वाद्गलितादरौ विपक्षे किमयङ्करिष्यतीत्यवज्ञयैव योधितवन्तौ खरदूषणौ यदि मम्रतुः मृतौ कोदोषः किञ्चित्रं म्रियतेर्लुङ्लिङोश्चेति नियमात् लिट्यात्मनेपदन्न भवति॥ ४३॥

भ० वनेत्यादि। खरदूषणौ यदि ममतुः तदापि किञ्चित्रं नैवाश्चर्य्यमित्यर्थः तपःशीलस्तापसः वने कुत्सितस्तापसो वनतापसको रामस्तस्मिन विपक्षे किमयं करिष्यतीति मत्वा गलितादरौ

वीरावपि मावशौ विपक्षादराभावात् युद्धेऽपि मावद्धेलौ ऋङ् श्रीऋोमिति नियमात् मवग्नःपमे इति ञितोऽन्यत्वात् थाः पर स्मैपदं ॥ ४३ ॥

त्वञ्च भीरुः सुदुर्व्बुद्धे नित्यञ्च रणकाम्यसि। गुणां स्त्वापकुषेऽस्माकं स्तौपि प्रत्रूंश्च नः सदा ॥ ४४ ॥

त्वञ्च। हे दुर्बुद्धे त्वम्पुनः भीरुश्च भवसि नित्यञ्च रणकाम्यसि ज०म० आत्मनोऽनिशं रणमिच्छसि आत्मेच्छायां काम्यच् अस्माकञ्च सतो गुणानपकुषे अपनयसि ऋुङ् अपनये आदादिकः ङित्वात्तङ् शत्रूंश्च नोऽस्माकं स्तौषि स्तौतेः उतोवृद्धिर्लुकि हलि ॥ ४४ ॥

त्वञ्चेत्यादि। हे दुर्व्बुद्धे मारीच त्वं भीरुश्च भवसि रणकाम्यसि च आत्मनो रणमिच्छसि च त्वंःकाम्यक्खेच्छायां भीरोर्युद्धेच्छाऽनुचितैव युद्धे पराजयोऽवश्यं एवमस्माक गुणांश्चापकुषे शौर्य्यादीन् अपनयसि ऋुङ् त्वचौर्य्ये सदा नोऽस्माकं शत्रून् स्तौपि एुञ् स्तुतौ रपिद्वस्तुतोऽद्देर्भिः ॥ ४४ ॥

शीर्षच्छेद्यमतोऽहं त्वां करोमि क्षितिवर्द्धनं। कार यिष्यामि वा कृत्यं विजिघृक्षुर्व्वनौकसौ ४५ ॥

शीर्ष। यतएवम्बिधस्त्वन्दुष्टः अतोऽहं त्वामोद्वितीयाया इत्या ज०म० दमिकरणेन त्वादेशः शीर्षच्छेद्यं. शीर्षच्छेदार्हं शीर्षच्छेदायत्

चितिवर्द्धनं करोमि शिरश्छित्त्वा व्यापादयामीत्यर्थः अथवा कृत्य करणीयं विभाषाकृवृषोरिति क्यप् कारयिष्यामि कृ ञ्कारिति द्विकर्म्मकता विजिघृक्षुः विग्रहीतुमिच्छुः सनिग्रहगुहोश्चेतीट् प्रतिषेधः रुदविदेत्यादिना सनः किर्त्त्वं ग्रहिज्येत्यादिना सम्प्रसारणम् षोढः एकाचो वशोभष् षढोःकस्सि वनौकसौ रामलक्ष्मणौ वनमोकोगृहं ययोः नलोकेति कर्म्मणि षष्ठ्याः प्रतिषेधः॥ ४५॥

भ० शीर्षेत्यादि। अतः कारणात् अस्मद्गुणापकृष्टत्वात् अनुगतनाथ शीर्षच्छेद्यं शीर्षच्छेदार्ह त्वां चितिवर्द्धनं मृतं करोमि शिरश्छित्त्वा मारयामीत्यर्थः शीर्षच्छेदमर्हतीत्यर्थे दण्डादिति यः किम्वा छिदादेर्ण्यत् शीर्षच्छेद्यः शीर्ष छेद्यं यस्येति वा विग्रहः अथवा कृत्यं कार्य्यं त्वां कारयिष्यामि यदि जीवनेच्छास्ति तदा मत्कृत्यं कुर्व्वितिभावः कृवृषमृजेति पचक्यप् धात्वोरिति प्रयोज्य कर्त्तुः पचे कर्म्मत्वं वनमेव ओकः ययोस्तौ रामलक्ष्मणौ विग्रहीतुं योधयितुं अभिभवितुं वा इच्छुरहं ग्रहेः सन् नेम्गुहग्रहेति इट्निषेध. ग्रहस्वपप्रच्छांजिः॥ ४५॥

तमुद्यतनिशातासिं प्रत्यवाच जिजीविषुः। मारीचोऽनुनयंस्त्वामादभ्यमित्त्रो भवामि ते॥ ४६॥

ज०म० तम्। तं रावणं एवमुक्तवन्तं निशात इति शाच्छोरन्यतरस्यामितीत्वाभावपक्षे रूपं उद्यतः उत्थापितः निशातस्तीक्ष्णोऽसिर्येन तम्मारीचस्त्वासात् प्रत्युवाच वचनमुक्तवान् अभ्यमित्त्रोभवामि

ते अमित्रस्याभिमुखमभ्यमित्रमाभिमुख्येऽव्ययीभावः अभ्यमित्र मलङ्गामीत्यस्मिन्नर्थे अभ्यमित्राच्छचेति चकाराद्यत्खौचेति यत् त्वदमित्राभिमुखङ्गच्छामीत्यर्थः अनुनयन् अनुकूलयन् किमर्थं जिजीविषुः जीवितुमिच्छुः ॥ ४६ ॥

तमित्यादि। मारीचोजिजीविषुर्जीवितुमिच्छुः सन् त्रासात् अनुनयन् तं रावणं प्रत्युवाच त्रासहेतुमाह उद्यत उत्थापितो निशातस्तीक्ष्णोऽसिर्येन तं निशातेति छाशोर्वेति श्यतेः पचे न क्तिः किं प्रत्युवाचेत्याह अहं तेतव अभ्यमित्यः शत्रुभिमुखगामी भवामि अमित्रस्य अभिमुखं अभ्यमित्रं आभिमुख्येऽव्ययीभावः अभ्यमित्र मब्दादिदं गच्छतीत्यर्थे विकारसंघेति यः ॥ ४६ ॥ भ०

हरामि रामसौमित्री मृगोभूत्वा मृगद्युवौ। उद्यो गमभ्यमित्रीणो यथेष्टं त्वञ्च सन्तनु ॥ ४७ ॥

हरा। अहम्मृगोभूत्वा रामसौमित्री हरामि देशान्तरम्प्रा पयामि आखेटकाभिरतत्वात् यदाह मृगद्युवौ मृगैर्दीव्यत इति क्विप् च्छ्वोः शूडनुनासिके चेति चकारात् क्वौ च ऊट् यणा देशः उवङ् मृगद्युताविति पाठान्तरम् तत्र द्युअभिगमने स्त्र गात् द्यौति अभिगच्छतीति क्विप् त्वञ्च यथेष्टं यथारुचि तमु द्योगं सन्तनु विस्तारङ्कुर्वित्यर्थः तनोतेर्लोटि उतश्चेति हेर्लुक् अभ्यमित्रीणः अमित्राभिमुखमलङ्गामी अभ्यमित्राच्छचेति चका राद्यत्खौचेति खः ॥ ४७ ॥ अ०म०

भ० हरेत्यादि। उपाय्यं दर्शयन्नाह अहं मृगोभूत्वा रामसौ मित्री हरामि अन्यत्र नयामि यतस्तौ मृगयुवा मृगयारसिकौ मृगैर्दीव्यत इति क्विपि छ्वोःशूठाविति वस्योठ् धोरियुवचि मृग युनाविति पाठे युजभिसर्पणे इत्यस्मात् क्विपि स्वम्यतनपितीति तन् मृगाभिगामिनावित्यर्थः ततस्त्वमपि अभ्यमित्रीणाययोष्ट मुद्योगं सन्तनु तनदुत्र्विस्तारे हेर्लोपोऽस्योप्रोस्येति हिलोपः अभ्यमित्रीण इति अभ्यमित्र्यवत् ॥ ४७ ॥

ततश्चित्रीयमाणोऽसौ हेमरत्नमयोमृगः। यथा मुखीनः सीतायाः पुप्रुवे बहु लोभयन् ॥ ४८ ॥

ज०म० ततः। उक्तानन्तरमसौ मारीचो मायामृगीभूतः सन् हेम रत्नमयः रत्नञ्च हेमचेति विगृह्य मयड्वैतयोर्भाषायामिति वि कारे मयट् निर्म्मलत्वात् सीताया अपता यथामुखीनः प्रति विम्बाश्रय इव भूत्वा पुप्रुवे भ्रमतिस्म इवशब्दलोपादृष्टव्यः यथा मुखन्दर्शनमिति यथामुखमम्मुखस्य दर्शनः खः बहु लोभयन् सुष्ठु स्पृहाञ्जनयन् यतश्चित्रीयमाणः आश्चर्य्यमभवत् हेमरत्न मयत्वात् नमोवरिवद्दित्यादिना क्यच् चित्रङ्आश्चर्य्ये ङकार स्यात्मनेपदार्थत्वात् शानच् अवयवकृतं लिङ्गं समुदायस्य भव तीति ॥ ४८ ॥

भ० ततइत्यादि। ततोवचनानन्तरं असौ मारीचो मायया हेम रत्नमयोमृगः सन् सीतायायथामुखीनोऽग्रतः स्थायी भूत्वा बहु

लोभयन् चक्षुःस्पृहां जनयन् पुरुवे भ्रमतिस्म मुह्यन्ती ही चित्रं करोतीति चित्रीयमाणः चित्रङ् आश्चर्य्ये कण्ड्वादित्वात् क्यः ङित्वादात्मनेपदं हेम रत्नञ्च प्रस्तुतं यस्येति प्रस्तुतार्थे मयट् वा ऽनुन्यात् विकारइत्यर्के मुखस्य सदृशं यथामुखं दर्पणादिस्थ प्रतिबिम्बमुच्यते साद्दृश्येऽव्ययीभावः मृगस्य रत्नमयत्वेन स्वच्छ तया यथा मुखं दृश्यतेऽस्येति विकारमयेत्यादिना तदत्र दृश्यते इत्यर्थे ईनःवस्तुतस्तु उपचारात् यथामुखीनमर्थ्योऽभिमुखमात्रेऽपि वर्त्तते सीताभिमुखोभूत्वेत्यर्थः ॥ ४८ ॥

तेनादुद्यूषयद्रामं मृगेण मृगलोचना। मैथिली विपुलोरस्कं प्रावुवूर्षुर्मृगाजिनं ॥ ४९ ॥

तेना। तेन मृगेण मैथिली सीता राममदुद्यूषयत् क्रीडितु ञ०म०मिच्छन्तमयुक्तवती गृह्यतामयमिति इवन्तस्य दिवेः सनीवन्तेत्यादिना, यदा नेट् तदा च्छ्वोःशूठ् द्विर्व्वचनम् तस्मात्सनन्तण्यन्तात् लुङि रूपम् मृगलोचना मृगस्य लोचने इव लोचने यस्याः मध्यपदलोपी सः विपुलोरस्कं विस्तीर्णवक्षस्थलमुरःप्रभृतिभ्यः कप् किमर्थमदुद्यूषयत् मृगाजिनमृगचर्म प्रावुवूर्षुः प्रावरितुमिच्छुः प्राङ्पूर्व्वस्य वृङ इट्सनिवेत्यनिट्पक्षे अज्झनगमां सनीति दीर्घः उदोष्ठ्यपूर्व्वस्येत्युत्वम् रपरत्वं वोंरुपधायादीर्घ इकः द्विर्व्वचनम् इणकोरिति षत्वम् रेफस्येण्ग्रहणेन ग्रहणाद् न्योष्ठ्योऽपि वकार ओष्ठ्यग्रहणेन गृह्यते ॥ ४९ ॥

भ॰ तेनेत्यादि। मैथिली मृगाजिनं मृगस्य चर्म्म प्रावुवूर्षुः प्रावरीतुं परिधातुमिच्छुः सती तेन मृगेण रामं अदृघृषयत कोपितुमिच्छामकारयत् दिवः सन् अस्त्रश्रिस्वृयूर्णुभरदरिद्रेत्यादिना पक्षेऽनिम णर्नोर्निमति गुणाभावे वृंर्णूटाविति वस्य ऊत्वं ततोद्वित्वं जिःग्रेरण दिवेरकर्म्मकत्वात् घोर्णेर्व्यरिति प्रयोज्यकर्त्तुः कर्म्मत्वं सा कीदृशी मृगस्येव लोचने यस्याः सा तथा रामं कीदृशं विपुलं प्रकीर्णमुरोवक्षःस्थलं यस्य तं उरःप्रभृतिनः कोवक्तव्योहाविति परः स्वमंत स्वार्थे कः प्रावुवूर्षुरिति वृञ्वरणे सन् धोःङ्मनिङ्गमा स्यादृदुरिति पक्षेऽनिम् दन्त्योष्ठ्यस्योष्ठ्यकार्य्यत्वात् च्छदिरणावूर्वोष्ठ्यादिति उर् व्यनचतयोति घं॥४८॥

योगक्षेमकरं कृत्वा सीताया लक्ष्मणं ततः। मृगस्यानुपदी रामो जगाम गजविक्रमः॥५०॥

ज॰म योग। ततोदृघूपानन्तरं रामोजगाम योगक्षेमौ शरीरस्थितिपालने करोतीति कृञोहेत्वित्यादिना हेतौ टः यश्णवता तदन्तविधेरभावात् क्षेमप्रियमद्रेण्चेत्यण्खचौ न भवतः सीतायाः स्थितिपालनहेतुभूतं लक्ष्मणंकृत्वा रामः मृगस्यानुपदी अन्वेष्टा अनुपद्यन्वेष्टेति निपातनात्साधुः गजविक्रमः गजगमनमिव गमनं यस्येत्यर्थः॥५०॥

योगेत्यादि। ततोऽनन्तरं लक्ष्मणं जानक्या योगक्षेमकर

हत्वा गजविक्रमो हस्तिपराक्रमो हस्तिगमनतुल्यगमनोवा रामो मृगस्यानुपदी सन् जगाम फलपुष्पादेरलब्धस्य साधनं योगः शरीरादेर्लब्धस्य पालनं क्षेमः तौ करोतीति क्षेमकृत् अनुपदं यातीति वाक्यात् इन् अनुपदमनुगमनं विद्यतेऽस्येति नैकाजादिति इन् अन्वय्यनुपदादिनिति परसूत्रं ॥ ५० ॥

स्थायं स्थायं क्वचिद्यान्तं क्रान्त्वा क्रान्त्वा स्थितं क्वचित्।
वीक्षमाणो मृगं रामश्चित्रवृत्तिं विसिष्मिये॥५१॥

स्थायम्। मृगश्चित्रवृत्तिमद्भुतशरीरचेष्टं वीक्षमाणो रामो अ०म० विसिष्मिये विस्मितः स्मिङोङित्त्वादात्मनेपदं सोपदेशत्वाभ्यासे णः परस्य सस्य षः चित्रवृत्तितां दर्शयन्नाह स्थायं स्थायं स्थित्वा स्थित्वा क्वचित्प्रदेशे यान्तं क्रान्त्वा क्रान्त्वा क्वचित्प्रदेशे उत्प्लुत्योत्प्लुत्य स्थितम् आभीक्ष्ण्ये णमुलि क्त्वा च णमुलौ द्विर्वचनञ्च ॥ ५१ ॥

स्थायमित्यादि। मृगं वीक्षमाणो रामो विसिष्मिये विस्मितः भ० स्मिङश्छा रूपं सोपदेशत्वात् खेरिलात् षत्वं श्रुधोरितीयः विस्मये हेतुमाह चित्रवृत्तिं आश्चर्य्यचेष्टं चित्रवृत्तित्वं दर्शयति स्थित्वा स्थित्वा क्वचित् गच्छन्तं चणमाभीक्ष्ण्ये पूर्व्वकाले इति चणम् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धमिति स्मारं स्मारं नमसीत्युदाहरणेन ज्ञापितं क्वचित् क्रान्त्वा क्रान्त्वा उत्प्लुत्य उत्प्लुत्य स्थितं क्रमोर्घो वेति पक्षे दीर्घः ॥ ५१ ॥

चिरं क्लिशित्वा मर्म्माविद्रामोविलुभितस्रवं। शब्दायमानमव्यात्सीत् भयदं चणदाचरं ॥ ५२ ॥

ज॰म॰ चिरम्। रामः चणदाचरमारीचमव्यात्सीत् विद्धवान् व्यधेर्लुङि हलन्तलचणावृद्धिः मर्म्माविद्रामः मर्म्माणि विध्यतीति क्किप् नहिवृतीत्यादिना पूर्व्वपदस्य दीर्घत्वं चिरं क्लिशित्वा महान्तङ्कालमायस्य अत्यन्तसंयोगे द्वितीया क्लिश क्लानिठयोरिति विकल्पेनेट् तत्र रलोव्युपधादिति कित्वविकल्पे मृडमृदेत्यादिना कित्वं विलुभितस्रवं व्याकुलितगमनं लुभोविमोहन इतीट् विमोहनं व्याकुलीकरणम शब्दायमानं शब्दङ्कुर्व्वाणं शब्दवैरेति क्यङ् भयदन्निशाचरं शब्दविशेषणं वा ॥ ५२ ॥

भ॰ चिरमित्यादि। रामश्चिरकालं क्लिशित्वा आन्तोभूत्वा भयदायकं चणदाचरं तं राचसं अव्यात्सीत व्यधीताडितवान् पूक्लिशुदितइम् इति क्लिशेः पचे इम् सेमचुधेत्यादौ क्लिशवर्ज्जनात् न गुणः मर्म्माणि विध्यतीति क्किप् जिः वामहाधङ्कात्विति दीर्घनिर्द्देशात् क्वचित क्किवन्ते पूर्व्वपददीर्घत्वं स्यादिति सूचितं आङ्पूर्व्वस्य रूपं वा मर्म्मावित् मर्म्मज्ञोवा वेत्तेरूपं विलुभितस्रवं मर्म्मताडनात् व्याकुलगतिं लुभश्चविमोहने विमोहनं व्याकुलीकरणं लुभवसपूजेत्यादिना इम् शब्दायमानं शब्दं कुर्व्वाणं शब्दसुखकष्टादेरिति ज्ञः भयदमिति मृगस्य शब्दक्रियाया वा विशेषणं ॥ ५२ ॥

श्रुत्वा विस्फूर्जथुप्रख्यं निनादं परिदेविनी। मत्वा कष्टश्रितं रामं सौमित्रिं गन्तुमैजिहत् ॥ ५३ ॥

श्रुत्वा। विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यं टुओस्फूर्जावज्रनिर्घोषे जं०म
ड्वितो ऽथुच् निनादं शब्दं गौणहननदेति विकल्पनात् पञ्चे षञ् श्रुत्वा
मैथिली कष्टश्रितं कष्टम्प्राप्तं रामं द्वितीयाश्रितेत्यादिना सः
मत्वा बुद्ध्वा कष्टप्राप्तेन रामेण मृतमिति परिदेविनी परिदेवन
शीला शङ्कमाना सम्पृचानुरुधेत्यादिना घिनुण् सौमित्रिङ्ग
न्तुमैजिहत् ईहाञ्चारित्रवती ईहत्यस्मात् लुङि द्विर्वचनेचीति
स्थानिवद्भावादजादेर्द्वितीयस्येति ह्रिशब्दस्य द्विर्वचनम् अभ्यास
कार्य्यञ्च ॥ ५३ ॥

श्रुत्वेत्यादि। विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यं निनादं श्रुत्वा भ०
कष्टश्रितं कष्टं प्राप्तं रामं मत्वा परिदेविनी परिदेवनशीला
अर्थात् सीता सौमित्रिं गन्तुं ऐजिहत् चेष्टामकारयत् ईहङ् चे
ष्टायां ञिःप्रेरणे अङि चेष्टितं टुओस्फूर्जावज्रनिर्घोषे दीर्घवानि
त्येके ट्वितोऽथुर्भावे ॥ ५३ ॥

एष प्रावृषिजाम्भोदनादी भ्राता विरौति ते। भ्रा
तेयं कुरु सौमित्रे भयात्त्रायस्व राघवं ॥ ५४ ॥

एष। 'एष ते भ्राता रौति उतोवृद्धिरित्यौकारः प्रावृषि जं०म०
जातः प्रावृषिजः सप्तम्याञ्जनेर्डः प्रावृडित्यादिना सप्तम्या अलुक्
सचाम्भोदस्येति विशेषणमिति सः तद्वन्नदतीति कर्त्तर्य्युपमाने
णिनिः तस्मात्सौमित्रे भ्रातेयं भ्रातिभावन्तत्कर्म्म वा कुरु कपिभ्रा
त्योर्ढक् तेन भयात्त्रायस्व राघवम् ॥ ५४ ॥

भ॰ एषइत्यादि। हे सौमित्रे एष ते तव भ्राता विरौति शब्दायते इलध्वनौ रपिद्धस्युतोऽदेर्मि: प्राहृषि वर्षाकाले जात: प्राहृषिज: हनजनादिति ड: सरसिजमित्युदाहरता क्वचित् समासे विभक्तेरलुगिति सूचितं अम्भोददातीति अम्भोद: पूर्ब्बवत् ड: प्राहृषिजश्चासौ अम्भोदोमेघश्चेति सरव नदतीति पचादित्वा च्चिन् त्वं भ्रातेयं भ्रातिकर्म्म कुरु किम्वदित्याह भयाद्राघवं चायस्व त्रिकारसंघेत्यादिना कर्म्मण्यर्थे भ्राते: ण्येय: ॥ ५४ ॥

रामसंघुषितं नैतन्मृगस्यैव विवञ्चिषो:। रामस्वनितसङ्काश: स्वान इत्यवदस्तु तां ॥ ५५ ॥

ज॰म॰ राम। रामसङ्घुषितं रामशब्दितमेतन्न भवति घुषिरविशब्दार्थ: तस्य निष्ठायां रुष्यमत्वरं त्यादिना विकल्पेनेट् मृगस्य विवञ्चिषो: छलयितुमिच्छो: वञ्चुगतौ भौवादिक: तस्यानेकार्थत्वात् प्रलम्भनइति चौरादिकस्याण्यन्तस्य वा प्रयोग: येषामनित्यण्यन्ताश्चुरादयइति दर्शनं तेषां मतेनाचापि सिध्यति एष स्वानोध्वान: स्वनहसोर्व्वेति पक्षे घञ् कीदृश: रामस्वनितसङ्काश: रामशब्दानुकारीति तां सीतां एवमवदत् उक्तवान् सलक्ष्मण: ॥ ५५ ॥

भ॰ रामेत्यादि। सलक्ष्मणस्तां सीतां इत्यवदत् किम्वदित्याह एतन्न रामसंघुषितं घुषरवे विवञ्चिषोर्व्वञ्चयितुं छलयितुमिच्छोर्मृगस्यैव एष स्वान: शब्द: रामस्वनिततुल्य: वञ्चकृञ्वञ्चने कित्त्वात् चौरादिक: वञ्चनं प्रलम्भनं चुर्ण्योञ्जिर्व्वेति ञ्यभावपक्षे

रूपमिदं केचित्तु वल्गगत्यां चौरादिको धातोरनेकार्थत्वात् प्रसन्न
अनेऽपि वर्त्तत इत्याहुः स्वनशब्दे भावे क्ते स्वनितं पञ्जि स्वानः
॥ ५५ ॥

आप्यानस्कन्धकण्ठांसं रुषितं सहितुं रणे। प्रोर्णु
वन्तं दिशो बाणैः काकुत्स्थं भीरु कः क्षमः ॥ ५६ ॥

आप्या। प्यैङ् वृद्धौ अस्मादाङ्पूर्व्वात्संयोगादेरातो धातो ज०
र्यण्वत इति निष्ठातोनः ओप्यायी वृद्धावित्यस्य वा रूपम्
ओदितश्चेति निष्ठानत्वं पीभावस्तु आङ्पूर्व्वस्य त्वन्धूधसोरिति वच
नात् इह न भवति आप्यानस्कन्ध इति आप्यानं स्थूलं स्कन्ध
कण्ठांसं यस्य काकुत्स्थस्य बाहुशिरोंऽसः तस्य पश्चिमो भागः
स्कन्धः तं रुषितं क्रुद्धं रणे संग्रामे सहितुं हे भीरु कातरे कः क्षमः
शक्तः अपि तु न कोऽपीत्यर्थः क्षमेः शक्तोत्यर्थत्वात् तदुपपदे शक
धृषेत्यादिना तुमुन् तीषसहेत्यादिना वेट् ककुत्स्थस्यापत्यं का
कुत्स्थः शिवादिभ्योऽण् कस्मात्र क्षम इत्याह प्रोर्णुवन्तान्दिशो बाणैः
यतः सर्व्वा दिशः बाणैः छादयन्तं ऊर्णोतेः शतरि उवङ् क्षमत
इति क्षमः पचाद्यच् ॥ ५६ ॥

आप्यानेत्यादि। हे भीरु कातरस्वभावे रणे रुषितं क्रुध्यन्तं का भ०
कुत्स्थं रामं सहितुं अभिभवितुं कः क्षमः शक्तः न कोऽपीत्यर्थः
वेमसहलुभ इत्यादिना उभयत्र पक्षे इम् क्षमेः पचादित्वादन्
ककुत्स्थस्यापत्यं इति शिवादित्वात् ष्णः आप्यानं स्थूलं स्कन्धक
ण्ठांसं यस्य तं ओप्यायीङ् वृद्धौ ओदित्त्वात् स्वाद्योदिति क्तस्य
नकारः ल्वोर्लोपो वस्त्रये इति यलोपः आङोऽन्धूधसोरिति निय

शात् न ष्यादेशः षेङ्रङ्स्तुवावित्यस्य रूपं वा अम्भोभुजश्चिरः बाणैर्दिशः प्रोर्णुवन्तं आच्छादयन्तं॥ ५६॥

देहं विभ्रक्षुरस्त्राग्नौ मृगः प्राणैर्दिदेविषन्। ज्याघुष्टकठिनाङ्गुष्ठं राममायान्मुमूर्षया॥ ५७॥

ज०म० देहम्। एष मृगो राममायात् आगतवान् यातेर्लङि रूपम् किमर्थं देहं शरीरं अस्त्राग्नौ अस्त्रे अग्नाविव विभ्रक्षुः भ्रष्टुमिच्छुः भ्रस्जेः सनीवन्तर्द्धेत्यनेनेडभावपक्षे स्कोः संयोगाद्योरित्यनेन सलोपे षत्वकुत्वयोश्च रूपम प्राणैर्दिदेविषन् क्रीडितुमिच्छन् दिवः कर्म्म चेति चकारात् करणसंज्ञा सनीवन्तेतीट् पक्षे रूपम् ज्यया गुणेन घुष्टौ निघृष्टौ तत एव कठिनौ अङ्गुष्ठौ सव्यापसव्यकर्षणात् यस्य घुषिरविशब्दन इति निष्ठायामनिट् मुमूर्षया मर्त्तुमिच्छया मृङः सनि उदोष्ठ्यपूर्व्वस्येत्युत्वम् अः प्रत्ययात्॥ ५७॥

भ० देहमित्यादि। एष मृगो मुमूर्षया मर्त्तुमिच्छया राममायात् आगच्छत् याप्रापणे धौ मृङः सनि धोऽज्झनिगमामिति दीर्घे उदिरणाविति उर् रामस्य अस्त्रमग्निरिव तत्र स्वदेहं भ्रष्टुमिच्छुः भ्रस्जः सनि भ्रस्जश्रिस्वृयूर्णुभर इति इमोऽभावपक्षे स्यादेः सोलोपः शच्छ्राजिति षत्वं षढोः कः से प्राणैर्दिदेविषन् क्रीडितुमिच्छन् इवन्तत्वात् पूर्व्वेण पक्षे इम् ज्याघुष्टो धनुर्गुणनिष्पिष्टः कठिनाङ्गुष्ठो यस्य तं रामं घुषशब्दे क्षुब्धस्वान्तेत्यादिना निपातः निपातात् निष्पेषणार्थोऽपि गम्यते गुणनिष्पेषेऽङ्गुष्ठकाठिन्यं युक्तं निपातोऽपि शब्दार्थ एव इति चेत् ज्यया घुष्टः शब्दितः सुप्रसिद्धः कठिनाङ्गुष्ठो यस्येति॥ ५७॥

शत्रून् भीषयमाणं तं रामं विस्मापयेत कः। मास्म भैषीस्त्वयाद्यैव कृतार्थो द्रक्ष्यते पतिः॥ ५८॥

शत्रून्। तं रामं शत्रून् भीषयमाणभीतान् कुर्व्वाणं भियो हेतुभये षुक् भीस्म्योर्हेतुभय इति तङ् विस्मापयेत कः क्षुभितचित्तं कुर्य्यात् नैवेत्यर्थः नित्यं स्मयतेरिति णावात्वम् अर्त्तीत्यादिना पुक् निमन्त्रणे नियोगे वा लिङ् पूर्व्ववदात्मनेपदं तस्मान्मास्म भैषीः माभूर्भीता स्मोत्तरे लङ् चेति चकारात् लुङ् सिचि वृद्धिः त्वया अद्यैव कृतार्थः पूर्णमनोरथः पतिर्द्रक्ष्यते दृशेः कर्म्मणि लृट्॥ ५८॥ ज०

शत्रूनित्यादि। शत्रून् भीषयमाणं भीतान् कुर्व्वाणं रामं को विस्मापयेत क्षुभितहृदयं कुर्य्यात् न कोऽपीत्यर्थः स्मिभीर्षाद्भयर्थे मत्त्वेति स्मिधातोरिकार आ मत्त भीर्भीष्वेति भियः पक्षे भीषा देशः तस्मात् त्वं मा भैषीः भयं न कुरु मास्मेनघोच्चाविति टीप्रभवदिति त्रिः मायोगे अमागमाभावः त्वया अद्यैव कृतार्थः कृतकृत्यः पतिर्द्रक्ष्यते दृशः कर्म्मणि तो वर्ध्दोऽकिम्म इति रेफः॥ ५८॥ भ०

यायास्त्वमिति कामो मे गन्तुमुत्सहसे न च।
कामयितुं त्वं मामित्यसौ जगदे तया॥ ५९॥

याया। तदन्वेषणाय यायास्त्वमिति कामोऽभिलाषः कामप्रवेदने कच्चिति इत्यकच्चित्युपपदे लिङ् न च गन्तुमुत्सहसे शक ज०

धृषेति तुमुन् तस्मात्तूनमाङ्कामयितुमिच्छुः एषणशीलः समान कर्त्तृकेषु तुमुन् विन्दुरिच्छुरिति निपातनात्साधुः इत्येवमसौ ल क्ष्मणो जगदे गदितस्तया सीतया ॥ ५८ ॥

भ० याया इत्यादि। त्वं रामान्वेषणाय याया इति मे मम कामोऽभिलाषः कामोऽस्ते कषितीति ख्यौ मतु गन्तुं उत्सहसे तस्मात्त्वं मां कामयितुं इच्छुः इच्छतीति इच्छुः विन्दिच्छू इति निपातः कमच्छतीगुपूधूपेति कर्मर्ञ्जिङ् इत्यसौ लक्ष्मणस्तया सीतया जगदे कर्माणि ठी ॥ ५८ ॥

मृषोद्यं प्रवदन्तीं तां सत्यवद्योरघूत्तमः। निरगात् शत्रुहस्तं त्वं यास्यसीति शपन् वशी ॥ ६० ॥

ज०म० मृषो। माङ्कामयितुमिच्छुरित्येतन्मृषोद्यम् मृषावादं राजसूयेत्यादिना भावे क्यप् यजादित्वात्सम्प्रसारणं प्रवदन्तीं तां सीतां रघूत्तमोलक्ष्मणः शपन् शत्रुहस्तं त्वं यास्यसीति शापमर्यच्छन् भौवादिकोऽत्र शपिर्न दैवादिकः निरगात् निर्गतः तस्मादुटजादित्यर्थात् कथं मृषोद्यमित्याह वशी वशनं वशः इन्द्रियसंयमनं वशिरण्यारूपसंख्यानमित्यप् सयस्यास्ति सवशी जितेन्द्रियः अतएव सत्यवद्यः अवितथवादी शत्रुहस्तं यास्यसीति सत्यं वदतीति कृत्य ल्युटोबहुलमिति कर्त्तरि यत् वदःसुपि क्यप्चेति चकाराद्यत् भावे वा यतं विधायाच् अर्शआदित्वात् ॥ ६० ॥

भ० मृषोद्यमित्यादि। त्वं शत्रुहस्तं यास्यसीति तां सीतां शपन् शापं प्रयच्छन् रघूत्तमो लक्ष्मणोनिरगात् निर्गतः इण्गतौ

गाथ्यां भूत्वेति सेर्लुक् इच्छुः कामयितुं मामिति मृषोद्यं मिथ्या वादं प्रवदन्तीं मृषोपपदे वदेर्नित्यं क्यप् सोर्व्वदःक्यप्याविति न क्तरं मृषोद्यं नित्यमित्युक्तं ग्रहक्यपाद्योरिति जिः सत्यं वदतीति क्लृप्तोः कभावइत्युक्तेः कर्त्तरि यः सत्यवद्यः सोर्व्वदःक्यप्याविति भावे ये सत्यं वद्यं विद्यते अस्येति अर्शआदित्वादचा सत्यं वद्यं अस्येति वङ्ग्रीहिर्व्वा यद्वा वदनं वत् वदस्थैर्य्ये क्विप् विकारचंचे त्यादिना तत्र साधावर्थे यः सत्यस्य करणे साधुरित्यर्थः वशी जितेन्द्रियः वशइन्द्रियसंयमः सोऽस्यास्तीति नैकाजादिति इन् अतएव सत्यवद्यः॥ ६०॥

## कुलकं।

गते तस्मिन् जलशुचिः शुद्धदन्नावणः शिखी। जंज पूकोऽक्षमालावान् धारयो मृदलावुनः॥ ६१॥

गते। तस्मिन् लक्ष्मणे गते सति रावणः सीतामूच इति वक्ष्य माणेन सम्बन्धः कीदृशः जलशुचिः स्नातइत्यर्थः शुद्धदन् निर्म्म लदशनः शुद्धा दन्ता यस्य अग्रान्तेत्यादिना दन्तस्य दत्रादेशः शिखा अस्यास्तीति शिखी परिव्राजकः श्रीह्यादित्वादिनिः जञ्ज पूकः पापाशयत्वात् गर्हितञ्जपतीति लुपसदेति यङ् जपजभे त्यभ्यासस्य नुक् यजजपदशां यङ् इत्यूकः अक्षमालावान् अक्ष सूत्रयुक्तः संसर्गे मतुप् धारयतीति धारयः अनुपसर्गादिति शः कस्य मृदलावुनः नञ्जिसंम्मेर्नलोपश्चेत्यौणादिकऊकारे प्र त्यये अलावूः तस्य विकारः फलमिति ओरञ् तस्य फले लुक्

नपुंसकह्रस्वत्वम् मृत्पूर्णमलावु इति मध्यपदलोपी षः कम्प्रयोगे कर्मणि षष्ठी रकोशिविभक्तावितिलुम्॥ ६१॥

भ॰ गतेरित्यादि। तस्मिन् लक्ष्मणे गते सति रावणः समागम्य सीतामूचे इति चतुर्थश्लोकेनान्वयः कीदृशः अशमश्रुश्रिः अश्लेन श्रुचिः स्नातत्वात् शुद्धा निर्मला दन्ता यस्येति शुद्धदन् निपातनात् शिखो शिखायुक्तः नैकाजादिति इन् पापाश्रयत्वात् गर्हितं जपतीति जञ्जपूकः गत्यर्थात् लुपेत्यादिना यङ् भ्रमजप जभेति नेर्नुण् आतृयजन्नयजजपेति ऊकः यङोलुक् अक्षमालावान् भवभक्तयुक्तः मृद्लावुनोधारयः धारयतीति धारि धानिचेतीति मः ढं षी मृच अलावुञ्च इति समाहारदन्द्वे चगेक्यवं क्लीवं मृत्पूर्णमलावु मृदलावु वा भवेदलावुरालावुरालावुस्यादलावुर्वति शब्दभेदः अलावुस्तुम्बीफलं मृत् तीर्थमृत्तिका ॥ ६१॥

कमण्डलुकपालेन शिरसा च मृजावता संवस्य लाक्षिके वस्त्रे मात्राः संभाण्य दण्डवान्॥ ६१॥

ज॰म॰ कम। कमण्डलुना कपालेन च जातिरप्राणिनामिति दन्द्वैकवद्भावः मृजावता निर्मलेन शिरसा च उपलक्षित इत्यम्भूते तृतीया संवस्य परिधाय वस्त्रसमाछादनइति मुण्डमिश्रेत्यादिना णिच् लाक्षिके वस्त्रे लाक्षया रक्ते लाक्षारोचनेत्यादिना ठक् मात्राः कमण्डल्वादिकाम् सम्भाण्य समाचित्य राशीकृत्येत्यर्थः

भाण्डात्समाचयनइति पुःभाण्डेत्यादिना णिङ् दण्डवान् गृहीतविदण्डः संसर्गे मतुप् ॥ ६२ ॥

कमेत्यादि। कमण्डलुश्च कपालोभिक्षापात्रश्चेति समाहार भ० द्वन्द्वः तेन उपलक्षितः केचित्तु कं जलं पाति पाययतीति कपालः कम ण्डलुश्चासौ कपालश्चेति कर्म्मधारयः तेन उपलक्षितः परि व्राजकोहि दक्षिणकरे सजलं पात्रं धारयतीति भावइत्याहुः मृजावता मार्जनायुक्तेन शिरसा उपलक्षितः मृजन्तृपगृद्धो पित्वात् भीषिचिन्तीत्यादिना ङः स्त्रीलिङ्गत्वञ्च विशेषणं हतीया लाक्षिके वस्त्रे संवस्य परिधाय ञिःकन्थादेरिति वस्त्रात् समा च्छादने परिधाने च ञिः संपूर्व्वस्यैव तदभिधानशक्तिः प्रकृत्यर्थ परित्यागस्तु धातोः स्वभावात् यदुक्तं विशेषकर्म्मसम्बन्धात प्रकृ तेस्तु गतार्थतेति लाक्षया रक्ते लाक्षिके विकारसंघेत्यादिना तेन रक्तेऽर्थे ष्णिकः माचां परिच्छदं कमण्डलुप्रभृतिं संभाण्ड्य समाचित्य युगद्वहनार्थं राशीकृत्य भाण्डानि संचिनोतीत्यर्थे पूर्व्ववत् ञिः प्रकृत्यर्थत्यागः संपूर्व्वतानियमश्च माचा कर्म्मविभू षणं। अक्षरावयवे वृत्ते मानेऽन्ये च परिच्छदे इति विश्वः दण्ड वान् गृहीतदण्डः ॥ ६२ ॥

अधीयन्नात्मविद्विद्यां धारयन्मस्करिव्रतं। वदन् वल्गङ्गुलिस्फोटं भ्रूक्षेपञ्च विलोकयन् ॥ ६३ ॥

अधी। मा कुरुत कर्म्माणि शान्तिर्व्वः श्रेयसीत्येवज्ञापयन्ति ज०म० ये ते मस्करिणः परिव्राजकाः तेषामेतमस्करमसौ धारयन्

मस्करमस्करिणाविति परिव्राजके मट् च आत्मविदां योगिनां विद्यामुपनिषदमधीयन् अपन् ईङ्धार्य्योरिति ईङोधारे च अत्र क्रुवति कर्त्तरि शतृप्रत्ययः मस्करो वक्र प्रभृतं वदन् अङ्गुलिस्फोट मुनः स्फोटिकान्दत्वा भ्रूचपम् विलोकयन् भुवावुत्क्षिप्य विलोकयन् उभयत्रापि स्वाङ्गे भुवइति णमुल् ॥ ६३ ॥

भ० अधीत्यादि। आत्मविदां योगिनां विद्यामुपनिषदं अधीयन् पठन् धारीङोरक्लेशेऽवहरिति परस्मैत्वं स्वमते कश्चिदभिधानात् आत्मनेपरस्मैपदिनोः परस्मैपदात्मनेपदिता मस्करिणः परिव्राजकस्य व्रतं धारयन् अङ्गुलीस्फोटं अङ्गुलीं स्फोटयित्वा वक्र वदन् मितभाषितया वक्र हस्तसंज्ञयैव वदतीति भावः भ्रूचपं भ्रुवमुत्क्षिप्य विलोकयन् ऋजुतया कटाक्षाद्यभावइत्यर्थः उभयत्र पाठ्यमानात्स्वाङ्गाणमिति परः वक्र अङ्गुल्याः स्फोटो यत्र वदनक्रियायां भ्रुवोः चेपोयत्र विलोकनक्रियायां स्फोटचेपौ घञन्तौ ॥ ६३ ॥

संदिदर्शयिषुः साम निजुन्हुषुः क्षपाटतां। चंक्रमावान् समागत्य सीतामूचे सुखीभव ॥ ६४ ॥

ज०म० संदि ॥ इह भयमाभूदिति साम सान्त्वं सन्दिदर्शयिषुः सन्दर्शयितुमिच्छुः वदन् वक्राङ्गुलिस्फोटमिति योज्यं ह्रीर्णुंसनन्तत्वं रूपं क्षपाटतां राक्षसत्वन्निजुन्हुपुर्निन्होतुमिच्छुः धारयन्मस्करिव्रतमिति योज्यम् न्होतेरज्झनगमांसनीति दीर्घः कुटिलं क

मण्स्वङ्क्मा क्रमैर्नित्यङ्कौटिल्येगताविति यङ् नुगत इत्यभ्यासस्य नुक् अःप्रत्ययादित्यकारः अतोलोपः यस्य हलः टाप् सा यस्यास्ति चङ्क्रमावान् कुटिलगतिमानित्यर्थः समागत्य ढौकित्वा सीता मूचे किमित्याह सुखाभवेति अनुकूला भवेत्यर्थः यदहम्प्रार्थये तत्र प्रतिकूला न भवेति भावः सुखप्रियादानुलोम्यइति डाज्वा योगे डाच् ॥ ६४ ॥

मन्दीत्यादि। साम सान्त्वं संदर्शयितुमिच्छुः दृशेर्ण्यन्तात् भ॰ सन् चपाटतां राक्षसभावं निक्षोतुमिच्छुः न्हुङ्लचौर्य्ये सनि धीं ऽस्मनिह्नुमामिति धः चंक्रमावान् कुटिलगतियुक्तः अमेध्यादि स्खलपरिजिहीर्षया चित्तशठत्वं वा कौटिल्यं गत्यर्थाङ्लुपेति यङ् जमजपेति खेर्नुण् यङोलुक् शस्त्यादः ततोवतुः ईट्त्वः सन् समागम्य सुखाभव यदहं याचे तत्रानुकूला भवेति सीतामूचे सपत्नीत्यत्रेत्यादिना सुखादानुकूल्ये डाच् यद्यप्यत्र तोयसम्ववीजेत्यादिसूत्रात् कृञ्जीत्यनुवर्त्तते तथापि मण्डूकप्लुताधिकारात् च्चिः कृभ्वस्त्वभूततद्भावइति सूत्रात् कृभस्तित्यस्यानुवर्त्तनं वाध्यं प्रयोगदर्शनात् कृञीकञीति लिपिकरप्रमादात् वा कल्यार्थे वा किम्वा सुखं विद्यते यस्याइत्यर्शआदित्वात् अः ततश्चाप् ॥ ६४ ॥

सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवाननीं। कान्तिं कान्त्या सदातन्या ह्रेपयन्ती शुचिस्मिता ॥ ६५ ॥

सायम्। का त्वमिति वक्ष्यमाणेन सम्बन्धः सायन्दिनावसानमन्त्र ज॰भ॰ भवाङ्गान्तिम् यदा षो ऽन्तकर्म्मणीत्येतस्मात् घञ्प्रत्ययान्तः तदा

सायञ्चिरेति ट्युट्युलौ तुट् च मकारान्तत्वञ्च निपात्यते यदा सायंशब्दो मकारान्तः तदाप्यव्ययत्वादेव प्रत्ययागमौ स्यातां कस्येत्यपेक्षायां तिथिप्रण्यः चन्द्रमसः पञ्चदश कलाः तासां वृद्धि ह्रासाभ्यां पञ्चदशतिथीः प्रणयति प्रवर्त्तयति सत्सूद्विषेति क्विप् उपसर्गादसमासेति णत्वम् एरनेकाचइति यणादेशः पङ्कजा नाञ्च कान्तिङ्कीदृशीन्दिवातनीन्दिवाभवां कान्त्या त्वदीयया स दातन्या सदाभवया ह्रेपयन्ती लज्जयन्ती दिवातन्याः सायन्त न्याश्च सदाभवत्वात् जिह्रीतिरर्तीत्यादिना णौ पुक् शुचिस्मिता शुभ्रहासा ॥ ६५ ॥

भ: सायमित्यादि । का त्वमेकाकिनीति द्वितीयश्लोकेन सम्बन्धः तिथि[illegible]श्चन्द्रस्य सायन्तनीं दिनावसानभवां कान्तिं तथा पङ्क जानां पद्मानां दिवातनीं दिनभवां कान्तिं स्वकान्त्या ह्रेप[illegible] लज्जयन्ती कीदृश्या सदातन्या सर्व्वकालस्थितया चन्द्रप[illegible] प्रभा न सदा तिष्ठतीति लज्जाहेतुः पञ्चदशतिथीः प्रणयति [illegible] र्त्तयतीति तिथिप्रणीश्चन्द्रः तस्य ह्रासवृद्धिभ्यामेव ज्योति[illegible] तिथिनिरूपणात् चासुमिति क्विप् प्राग्वत्णोणइति णत्वं क[illegible] काचइति यत्वं तिथिप्रणीर्दशविपन्निशामणिस्त्विनेत्रचूडामणिर चिनेत्रभूरित्यमरः सन्मथेनार्पिता छाया सैव कान्तिरिति स्मृते ति परिभाषिता कान्तिः सीतायाः चन्द्रपद्मयोस्तु शोभामात्रं कान्तिरिति बोध्यं त्यचाद्यचिरदक्षिणेत्यादिना सायंदिवासदा शब्देभ्यस्तनट् भवार्थे शुचिस्मिता शुद्धहासा स्मितन्त्वदृष्टदशने हासे इति वैजयन्ती ॥ ६५ ॥

का त्वमेकाकिनी भीरु निरन्वयजने वने। चुध्यन्तो ऽप्यघसन् व्यालास्त्वामपालां कथन्न वा॥ ६६॥

कात्वम्। का त्वन्देवी मानुषी राक्षसी वेति एकाकिनी असहाया एकादाकिनिच्चासहाय इति आकिनिच् भीरु इत्यामन्त्रणम्भयप्रकृतित्वात् स्त्रीणाम् निरन्वयानिरनुगमाजनायस्मिन्वने यत्र न कथञ्चिन्मनुष्याणां सम्भवः चुध्यन्तोऽपि बुभुक्षमाणा अपि दिवादित्वात् यत् व्यालाहिंस्राव्याघ्रादयः कथं वा त्वान्नाघसन् न भक्षितवन्तः अदेः लुङ्घसॢ्लृ इदित्वाच्च्लेरङ् चुध्यन्तोनाघसन्निति पाठान्तरम् तत्र कथन्न वा अपरिचितानेवाघसन् इति योज्यम् अपालां सतीं अविद्यमानः पालोयस्या इति पालरक्षण इति चौरादिकः पालयतीति पालः पचाद्यच् यदा प्रयोजकविवक्षा तदा पातेर्लुगागमो णौ वक्तव्य इति लुक् ततः पचाद्यच् ॥ ६६॥ जं॰म॰

का त्वमित्यादि। हे भीरु वने एकाकिनी का त्वं देवी मानुषी अन्या वा वने किम्भूते निरन्वयजने निरन्वयानिःसम्बन्धाजना यत्र भीरु इति सम्बोधनं भयप्रकृतित्वान्नारीणां जातिभेदस्य प्रत्यक्षत्वाद्वा एकादाकिनिच्चासहायेऽभिधानात् चुध्यन्तोबुभुक्षमाणा व्यालाव्याघ्रादयोहिंस्राः अपालां पालकारक्षितां त्वां कथं नाघसन् न भक्षितवन्तः घसॢ्अदःसन्न्यलृघञोति अदघ्रां घसॢलृदनुबन्धात् प्रासलियुदिति ङः चुधबुभुक्षायां दिवादिः पालरक्षणे चौरादिकः पचादित्वादन् व्यालोदुष्टगजे सर्पे श्वापदेमान्यवत्सल इति मेदिनी ॥ ६६॥ भ॰

हृदयङ्गममूर्त्तिस्त्वं सुभगम्भावुकं वनं। कुर्व्वाणा भीममप्येतद्वदाभ्यैः केन हेतुना॥ ९७॥

ज॰म॰ हृद। केन हेतुना इदं वनमभ्यैः अभिगतासि वद कथय अभिपूर्व्वादिणोलङ् मध्यमपुरुषैकवचनं आडजादीनाम् आटश्चेति वृद्धिः हृदयङ्गच्छति या मर्त्तिः शरीरमत्यन्तसौन्दर्य्यात गमश्चेति खच् सा एवम्बिधा मर्त्तिर्यस्याः सा त्वम्भीममप्येतद्वनं सुभगम्भावुकं सर्व्वस्यैवाप्रियं प्रियङ्कुर्व्वाणा असुभगं सुभगं भवतीति कर्त्तरि भुवद्दति खुकञ्॥ ९७॥

भ॰ हृदयेत्यादि। केन हेतुना त्वं एतद्वनं अभ्यैः अभिगता इति वद अभिपूर्व्वादिणोथ्याः सिप् लुगङ्कोऽपः घीटोथीष्विति अम् आदिगेचोरिति णुः भूथाऽम् त्यादयोऽर्थैकशेरिति तृतीया हृदयङ्गमा मर्त्तिर्यस्याः सा तथा लावण्यातिशयात हृदयं गच्छतीति तृभृद्दृदृत्यादिना खः नाम्नीत्यस्य व्यभिचारो वाऽऽन्यात् भीममप्येतद्वनं सुभगम्भावुकं कुर्व्वाणा प्रागप्रियं प्रियं भवतीति भुवो घख्विष्णखुकञाविति खुकञ्॥ ९७॥

सुकृतं प्रियकारी त्वं कं रहस्युपतिष्ठसे। पुण्यकृत्चाटुकारस्ते किङ्करः सुरतेषु कः॥ ९८॥

ज॰म॰ सुकृतं। सुकृतम्पुण्यकारिणं शोभनं कृतवानिति सुकर्मपापेत्यादिना क्विप् कं रहसि विजने त्वमुपतिष्ठसे उपस्थिस्यसि सकृतकरणेतङ् प्रियकारी अनुकूलवर्त्तिनी सती प्रियमनुकूलङ्करोतीति

क्षेमप्रियमद्रेणचेति अण् टिड्ढाणञित्यादिना ङीप् पुण्यकृत् कृतपुण्यः तस्य पूर्व्ववत्क्विप् चाटुकारः प्रियवाक्यकरः नञ्खञ्ष्णा केत्यादिना टे प्रतिषिद्धेऽण्णेव भवति ईट्टश्चले किङ्करः दासः दिवा विभेति टः किंयत्तदृङ्कपु कृञोऽभिधानमिति तत्स्त्रीविषये द्रष्टव्यम् सुरतेषु शोभनरतेषु नपुंसके भावे क्तः अनुदात्तेत्यादिनानुना सिकलोपः अनेनाभयरुचिराख्याता ॥ ६८ ॥

सुकृतमित्यादि। त्वं प्रियकारी अनुकूलवर्त्तिनी सती कं सुकृ भ॰ तं पुण्यकारिणं पुरुषं रहसि विजने उपतिष्ठसे सङ्गच्छसि मैत्रा ध्वसङ्गाराधइति सङ्गे सं शोभनं करोतीति चामुसिनि क्विप् प्रियङ्करोतीति क्षेमप्रियमद्रात्कुर्त्वा इति खाभावपक्षे ढात्षण् कः पुण्यकृत् ते तव सुरतेषु शोभनरतेषु किङ्करोदासः सन् चाटुकारः प्रियवाक्यकारी पुण्यं करोतीति क्विप् रमेर्भावे क्तः वनतनाद्यनिमामिति मलोपः चाटु करोतीति क्वचिदपवादवि षयेऽप्युत्सर्गो ऽभिनिविशतइति न्यायात् कृकुष्टइति टविषयेऽपि ढात्षण् किमित्यव्ययं तस्मात् कृत्रष्टः ॥ ६८ ॥

परिपर्य्युदधेरूपमायुलोकाच्च दुर्लभं। भावत्कं दृष्टवत्स्वितदस्मास्वधि सुजीवितं ॥ ६९ ॥

परि। एतद्रूपम्भावत्कम्भवत्याइदमिति भवतष्ठक्छसाविति ज॰म ठक्छसौ ठक्छसोश्चोपसंख्यानमिति पुंवद्भावः इसुसुक्तान्तात्कः दुर्लभम्परिपर्य्युदधेः अपपरीवर्जनइति कर्म्मप्रवचनीयसंज्ञा यान्दितीयायाम्प्राप्तायामपाञ्चम्यपाङ्परिभिरिति पञ्चमी अप

परिवर्हिरञ्चवः पञ्चम्यादति विभाषासमासश्च अयमासपक्षे परं र्वर्ज्जनइतिद्विर्व्वचनम् उदधिं वर्जयित्वा चतुरुदधिमेखलायां भूमि दुर्लभमायुर्लोकाच्च स्वर्गलोकान्तञ्च यावत् दुर्लभमत्रापि पूर्व्ववत्पञ्चमी तादृगन्दृष्टवत्त्वत्तस्मात् अधि सुजीवितमस्मादिपर्यो अधि केण सुजीवितम् अहो ना सुजीवितमिति अहो शब्दार्थे अधिशब्दो वर्त्तते॥ ६८॥

भ० परीत्यादि। एतत् भावत्कं भवदीयं रूपं दृष्टवत्त्वत्तस्मात् अधि सुजीवितं अधिकं शोभनं जीवनं विपर्ये सप्तमी यदा अधि केशार्थोपाधिभ्यामिति स्वाम्यर्थेनाधिना च योगे सप्तमी तेनास्म त्स्वामिकं सुजीवितमित्यर्थः त्वामपश्यतस्तु जनस्य तन्नास्तीति भावः भवत्यादइदमित्यर्थे विकारग्रहणे कृता पुंवतस्थ्यकपंस्का स्त्रियामित्यादौ तत्वसमस्तनगादाविधयन्ता तमंज्ञकं त्वपर्य्यन्तप्रत्यांश समस्तनगादौ चेति दौदामचकार्तेरास्वादात् पुंवत् ये स त्वनोभावइत्यनेन कृतयोस्तवयोरादेशभित्याकृस्तकृतेऽभिधानात यागविभागात्किम्बा पुम्सिविनिपुम्वत भवच्छब्दस्य स्त्रि संज्ञायां पठितत्वात् पुम्वत्कर्मेरित्यत्र कोप्युकृत्य चत्यस्मात्कित्य नुवर्त्तत वृत्तौ त्यचेति यत्न दृश्यते तल्लिपिकरप्रमादात् ग्रन्थगौरवाद्वा न लिखितं तदनुवृत्तेर्दुर्निवारत्वेन स्पष्टत्वात्पुम्वत्सर्व्वनाम्नोवृत्तिमात्रे तमादौ चेति परसूत्रं कीदृशं रूपं उदधेः परि परि उदधिं वर्ज्जयित्वा दुर्लभं दुष्प्रापं उदधिपरिच्छिन्नायां पृथिव्यां दुर्लभमित्यर्थः समुद्रे लक्ष्म्या उत्पत्तिः तत्रैव तत्सम्भवो नान्यत्रेति भावः आयुर्लोकात् स्वर्गलोकपर्य्यन्तञ्च दुर्लभं उभयत्र अन्यारभ्येत्यादिना पञ्चमी पर्य्याङो त्यागसीमार्थो आङ्

व्याप्तिर्वीप्सा त्यागेऽन्याविति युक्तेः वर्जनार्थपरेर्विभाषया द्वितम भिधानात्॥ ६९॥

प्रपीतमधुका भृङ्गैः सुदिवेवारविन्दिनी। सत्परिमल लक्ष्मीका नापुंस्कासीति मे मतिः॥ ७०॥

आपी॥ परि सर्व्वतोमार्जनमिति परिमलः कलचपस्येत्यधि ज०भ कृत्य मृजेष्टिलोपश्चेति कलप्रत्ययश्चौणादिकः इह सुरतोपभो गविमर्द्दः परिमलोऽभिप्रेतः तस्य लक्ष्मीः तत्कृतत्वात् सती विद्य माना परिमलशोभा यस्याः उरःप्रभृतिभ्यः कप् सा त्वमपुंस्का अविद्यमानभर्त्तृका नासीति मे मतिः पूर्व्ववत्कप् किमिव सुदिवेवा रविन्दिनी पद्मिनी शोभनन्दिवा नीहाराद्यभावाद्दिवा दिवसं यस्याः सुप्रातेत्यादिना अच् आपीतमधुका भृङ्गैः आपीतमधु यस्याः शेषाद्विभाषेति कप् यथेयं सत्परिमललक्ष्मीका तथात्व मपीति॥ ७०॥

प्रपीत्यादि। त्वं न अपुंस्कासि किन्तु विद्यमानभर्तृकासीति भ० मेमम मतिः यतः सती परिमलस्य लक्ष्मीर्यस्यास्तादृशी विम र्द्दोत्थे परिमलोगन्धे जनमनोहरइत्यमरः सुरते भोगविमर्द्द एव परिमलइति जयमङ्गला पुंलक्ष्मीभ्यामेकवचनान्ताभ्यां कोव क्तव्यावविति परः स्वमते लक्ष्मीशब्दात् घृतःकइति कः अपुंस्केति पुंवत्स्त्व्युक्तपुंस्कइति ज्ञापकात् घृतःकइत्यस्य योगविभागेन कचि दन्यत्रापि कइति बोध्यं स्वार्थे कोवा यथा भृङ्गैः प्रपीतं मधु यस्या

स्याद्दशी मुदिता अरविन्दिनी पद्मिनी तथा त्वमपि सत्परिमल लक्ष्मीका शोभनं नीहारादिरहितं दिवा दिनं यस्याः सा खाह्नि वा शब्दाद्रक्षीहेरा ऋदिति परः स्वमते दिवाशब्दात् स्वार्थे षाः तस्यानित्यविवक्षया न ईप हृद्विस यदा शोभने दिवसे इति मप्त म्यन्तं रूपं दिवाशब्दोऽयमव्ययः ॥ ७० ॥

मिथ्यैव श्रीः श्रियम्मन्या श्रीमम्मन्यो मृषा हरिः। सा
चात्कृत्याभिमन्येऽहं त्वां हरन्तीं श्रियं श्रियः ॥ ७१ ॥

ज०म० मिथ्यै। श्रियः श्रियं रूपसम्पदं हरन्तीमभिभवन्तीं त्वां साक्षात्कृत्य प्रत्यक्षीकृत्य विभाषाकृञोत्यनुवर्त्तमाने साक्षात्प्रभृतीनि चेति गतिसंज्ञा गतिसमासे ल्यबादेशः अहमभिमन्ये किं मिथ्या श्रीः श्रियम्मन्या अहमेव श्रीनान्येति मन्यमाना श्रीर्मिथ्या नैव श्रीः किन्तु त्वमेवेति आत्ममाने खश् दिवादित्वात श्यन् इच एकाचोऽम्प्रत्ययवच्चेत्यम्भावः तस्यामः प्रत्ययत्वात्सलोपाभावः न विभक्तौतुस्मा इति वचनात् अचोऽतीयङ्गादेशः क्विबन्ताधातु त्वत्र अहतीति क्विप्चेत्यादिना श्रयतेरौणादिकः क्विप् हरि रात्मानं श्रीमन्तम्मन्यमानो मृषा न श्रीमान् यस्य त्वं सएव श्री मानित्यहमभिमन्ये॥ ७१ ॥

भ० मिथ्यैवेत्यादि। श्रिया लक्ष्म्याः श्रियं शोभां हरन्तीं जयन्तीं वा त्वां साक्षात्कृत्य अहमेवमभिमन्ये श्रीर्लक्ष्मीर्मिथ्यैवात्मानं श्रियं मन्यते हरिरपि मृषा आत्मानं श्रीमन्तं मन्यते त्वमेव श्रीः सदोष शोभाहरणात् त्वत्पतिरेव त्वद्योगात श्रीमानिति भावः मन्या

स्वार्थ इति स्वम् मित्वा त् द्वित्वमनुदेति यत् खित्यस्याजन्तपद इति एकाजिजन्तत्वात् श्रीमद्रस्य टीकान्तरं ह्रस्वेपाणौ प्राध्वमित्यादिना समासपक्षे व्यादनञः क्त्वो ल्यपि साक्षादादेरभूततद्भावे क्त्वः क्त्वा ल्यप् वृत्ति परः॥ ७१॥

नोदकण्ठिष्यतात्यर्थं त्वामैक्षिष्यत चेत् स्मरः। खेला
यन्ननिशं नापि सजूःकृत्य रतिं वसेत्॥ ७२॥

नोद। स्मरभार्य्या रतिः सापि रूपेण निकृष्टेति दर्शयति ज०
चेत् यदि स्मरः त्वामैक्षिष्यत दृष्टवानभविष्यत् तदा अत्यर्थमो दकण्ठिष्यत रतिम्प्रति भृशमुत्कण्ठितोनाभविष्यत् ईक्ष दर्शने इति कठि शोक इति भ्वादिकात् क्रियातिपत्तौ लृङ् नापि रतिं स्वभार्य्यां सजूःकृत्य सहायीकृत्य वसेत् अपितु परित्यजेत् अत्र क्रियातिपत्तिर्न विवक्षिता किन्तु हेतुहेतुमद्भावः नापि रतिं सजूःकृत्य वसेत् यदि त्वामैक्षिष्यतेति हेतुपदमभ्यूह्य हेतुमद्भावदर्शनात् ऊर्य्यादिषु सजूःसहार्थ इति वचनात् गतिसंज्ञा खेलायन् अनिशं क्रीडन् सर्व्वदा खेलाशब्दात् कण्ड्वादित्वात् यक्॥ ७२॥

नोदेत्यादि। रतिरपि न ते तुल्येति दर्शयन्नाह स्वयं भ०
कामश्चेत् यदि त्वां ऐक्षिष्यत तदा अत्यर्थं न उदकण्ठिष्यत रतिं प्रति भृशमुत्कण्ठितोनाभविष्यत ईक्षङ् दर्शने कठिङ् शाध्याने उभयत्र ध्वर्थासम्भवे यो नापि रतिं स्वभार्य्यां सजूःकृत्य

सहायीकृत्य अनिशं निरन्तरं खेलायन् क्रीडयन् वसेत् तां परित्यजेदेव यदि त्वां पश्येत् इति हेतुपदमच बोध्यं भव्येवापफलहेतो रित्यस्य योगविभागाद्धेतेऽपि स्रो भव्येऽपि न क्तिः विलासार्थात् खेलाशब्दात् कण्ड्वादित्वात् करोत्यर्थे क्यः सजुःशब्दोऽयमव्ययः सहायार्थे वर्त्तते साक्षादादित्वात् हस्तेपाणौशाध्वंइत्यादिना समासः॥ ७२ ॥

वल्गूयन्तीं विलोक्य त्वां स्त्री न मन्तूयतीह का
कान्तिं नाभिमनायेत को वा स्थाणुसमोऽपि ते॥ ७३॥

०म० वल्गु। त्वां वल्गूयन्तीं शोभमानां विलोक्य न मन्तूयति स्त्रीह का इह जगति का स्त्री न मन्तूयेत न कुप्येत् सर्व्वदा कुप्यत्येव ईर्षायुक्तत्वात् स्त्रीणाम सम्भावने लिङ् वल्गुमन्तुशब्दाभ्यां कण्ड्वा दित्वाद्यक् कोवा कोनाम स्थाणुसमोऽपि काष्ठतुल्योऽपि गुणदोषानभिज्ञत्वात्ते तव कान्तिं विलोक्य नाभिमनायेत पूर्व्वमदृष्टत्वादनभिमनाः सन् अभिमनाः सचेताभवेत् पूर्व्ववल्लिङ् अभिमनसोभृशादित्वात्क्यङ् सलोपश्च महादेवतुल्योवा आस्तामन्यः सोऽपि तावदभिमनायेत॥ ७३॥

भ० वल्गित्यादि। इह जगति का स्त्री वल्गूयन्तीं शोभमानां त्वां विलोक्य न मन्तूयति न ईर्ष्यति स्वपतिवैराग्यशङ्कया सर्व्व कुप्यतीत्यर्थः वल्गुमन्तुभ्यां कण्ड्वादित्वात्क्यः धोऽजघ्ये कोवा स्थाणुसमोऽपि महादेववज्जितेन्द्रियोऽपि काष्ठवच्छीरसोऽपि वा

तव कान्तिं विलोक्य न अभिमनायेत प्रीतमनाम भवेत् अपि तु सर्व्वएवाभिमनायेत भृशादेरूपर्थे वेति पाक्षिकोऽत्र: सलोपश्च यो ऽप्यरे प्रोत्साहसम्भावने इति त्वो ॥ ७३ ॥

दुःखायते जनः सर्व्वः सएवैकः सुखायते। यस्यो त्सुकायमाना त्वं न प्रतीपायसेऽन्तिके ॥ ७४ ॥

दुःखा ॥ सएवैकोजनः सुखायते सुखं वेदयते यस्यान्तिके समीपे न त्वम्प्रतीपायसे न प्रतिकूलवर्त्तिनी भवसि उत्सुकायमा ना उत्कायमाना सती यस्य पुनरन्तिके उत्सुकायमाना प्रतीपा यसे ससर्व्वोजनः दुःखायते दुःखं वेदयते सुखदुःखशब्दाभ्यां सुखादिभ्यः कर्त्तृवेदनायामिति क्यङ् उत्सुकप्रतीपशब्दाभ्याम्भृ शादित्वात् ॥ ७४ ॥ अ० म०

दुःखेत्यादि । यस्यान्तिके समीपे त्वं उत्सुकायमाना उत्सु कीभवन्ती न प्रतीपायसे न प्रतिकूलीभवसि सएवैकोजनो जग ति सुखायते सुखमनुभवति अन्यः सर्व्वोजनोदुःखायते दुःखमनु भवति सुखदुःखशब्दाभ्यां शब्दसुखकष्टादेरिति वेदे क्यः केचित्तु सुखदुःखयोस्तदाश्रयेऽपि वर्त्तमानत्वात् असुखः सुखीभवति अदुः खोदुःखीभवति इत्यर्थे डाच् लोहितादेःपच्चेति क्यमाङः उत्सु कप्रतीपाभ्यां भृशादित्वात् च्व्यर्थे क्यः केचित्तु प्रतीपशब्दात् सान्त्वकीत्यादिना आचारे क्यमाङः ॥ ७४ ॥ भ०

कः पण्डितायमानस्त्वामादायामिषसन्निभां च
रन् वैरायमाणेभ्यः शून्यमन्ववसद्वनं ॥ ७५ ॥

ज०म० कः इत्यादि। पण्डितायमानः अपण्डितः कथमपि पण्डितीभवन् भृशादित्वात्क्यङ् त्वामामिषसन्निभां सर्व्वजनप्रार्थनीयत्वात् आदाय गृहीत्वा कः शून्यं वनमन्ववसत् शून्ये वने अवसदित्यर्थः उपान्वध्याङ्वस इति कर्म्मसंज्ञा कीदृशः चलन् बिभ्यत् वैरायमाणेभ्यः वैरं कुर्व्वाणेभ्यः शब्दवैरेत्यादिना क्यङ् भीत्रार्थानामिप्यपादानसंज्ञा ॥ ७५ ॥

भ० क इत्यादि। कः पण्डितायमानः अपण्डितः पण्डितीभवन् आमिषसन्निभां लोभ्यद्रव्यतुल्यां त्वां आदाय गृहीत्वा शून्यं वनं अन्ववसत् वसतिस्म कर्म्मक्रियेत्यादिना ङे ढं पण्डिताद्भृशादित्वात् क्यः वैरायमाणेभ्यः वैरं कुर्व्वाणेभ्यः चसन् सम्भयाभावे एवं कर्त्तुमनुचितमिति भावः वैरात् शब्दादित्वात शब्दसुखकारादिरिति क्यो ङः यतोऽपायभीति अपादानसंज्ञा आमिषं पल्ले लाभ्ये सम्भोगोत्कोचयोरपि। आमिषं सुन्दराकारे रूपादिविषयेऽपि चेति विश्वः ॥ ७५ ॥

आजायमाना तस्यार्घ्यं प्रणीय जनकात्मजा। उवाच दृश्यमद्वीनं सादरा गद्गदं वचः ॥ ७६ ॥

ओजा। एवमुक्तवति रावणे जनकसुता दशमूर्द्धानमुवाच जः॰भ॰
दश मूर्द्धानः शिरांसि यस्य तस्यार्घ्यमर्पणीय इत्वा ऋतिथिरयमि
ति सम्प्रदानस्य शेषत्वेन विवक्षितत्वात् षष्ठी ओजायमाना ओज
इवाचरन्ती कर्त्तुःक्यङ्सलोपश्च ओजसोऽप्सरसोनित्यमिति वच
नात् किञ्चिल्लज्जापरित्यागात् तेजस्विनी भवन्तीत्यर्थः किम्
वाच वक्ष्यमाणं सादरा सती परिव्राजक इति गद्गदमनभि
व्यक्तमसंस्कृतत्वात्॥ ७६॥

ओजेत्यादि। जनकात्मजा सादरा सती तस्य कपटपरिव्रा भ॰
जकस्य अर्घ्यं प्रणीय ऋतिथिबुद्ध्या दत्वा दशमूर्द्धानं दश मूर्द्धानो
यस्य तं रावणं गद्गदं लज्जया अन्तर्भिया वा सम्यगनभिव्यक्तं
वचोवक्ष्यमाणं उवाच ओजायमाना किञ्चिल्लज्जापरित्यागात्
ओजस्विनीवाचरन्ती ओजःशब्दात् धर्म्मिप्रधानात् आचारे इ
ति क्यङ् सलोपश्च भृशादित्वात् च्व्यर्थे वा क्यङ् तस्य इति सम्प्रदा
नस्य सम्बन्धविवक्षायां षष्ठी प्रणीयेत्यस्य समीपे स्थापयित्वा इति
वार्थः मूल्येपूजाविधावर्घः अर्घाय इदमित्यर्थे विकारयंघेति
यः॥ ७६॥

महाकुलीनऐक्ष्वाके वंशे दाशरथिर्म्मम। पितुः
प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनां॥ ७७॥

महा। यदुक्तमनेन कं इहस्थुपतिष्ठमरति अस्य प्रतिवचनं मम जः॰भ॰
भर्त्ता महाकुलीनः महाकुलस्यापत्यमिति महाकुलादञ्खञौ

विति खञ् किमादित्यवंशसम्भवः किं सोमवंशसम्भवो वा महाकुलस्यापत्यमित्याह ऐक्ष्वाके वंशे इक्ष्वाकूणामयमैक्ष्वाकः दाण्डिनायनेत्यादिना टिलोपनिपातनम् अन्ये तत्र सन्तीत्याह दाशरथिः दशरथस्यापत्यं यः सम मम भर्त्ता महाकुलीनः कीदृशः पितुः प्रियङ्करः अनुकूलकारी तपस्विनाञ्च क्षेमकारः क्षेमप्रियमद्रेऽणेति चकारात् खच्॥ ७७ ॥

भ० महेत्यादि। कं रहस्युपतिष्ठसे इति रावणप्रश्ने उत्तरमिदं मम भर्त्ता दाशरथिः प्राधान्यात् विशेषेण महिम्ना च ज्येष्ठ एव गम्यते दशरथस्यापत्यं इति वाक्यार्थतइति अदन्तत्वात् ष्णिः णिञ्जिः ऐक्ष्वाके वंशे महाकुलीनः इक्ष्वाकुनामा कश्चित् सूर्य्यवंशसम्भवः तस्यापत्यमिति तद्भवे वंशे इत्यर्थाद्गम्यते शिवादित्वात् ष्णः ओर्लोपाऽकद्रुपाण्डोरेये इत्यत्र एयस्य अश्चेति समासात् उकारलोपः ये तु केवलष्णेयप्रत्ययइति व्याचक्षते तन्मते योगविभागात महाकुलं विद्यमानः ढघेकादिति षीनः महाकुलीनइति पाठे अनित्यविवक्षया न शिः महाकुलस्यापत्यमिति केचित् पितुः प्रियङ्करः प्रियङ्करोतीति क्षेमप्रियमद्रात्कर्त्रेति खः तस्य विकल्पपक्षे तपस्विनां क्षेमकारः कुशलकर्त्ता ह्रात्षण्॥ ७७ ॥

निहन्ता वैरकाराणां सतां वङ्ककरः सदा। पारअधिकरामस्य शक्तेरन्तकरो रणे॥ ७८॥

निह। वैरकाराणां शत्रूणां वैरपूर्व्वात्कृञोनशब्दश्लोकेत्या जं॰म॰
दिना टे प्रतिषिद्धे अणेव भवति निहन्तेति तृजन्तस्य प्रयोगः तत्र कर्म्मणि षष्ठी सतान्त्वर्म्मे स्थितानामङ्गकरः बहुकार्य्यङ्करोतीति दिवाविभेति टः स्त्रीविवक्षायान्तु कियत्तद्वङ्गेष्विति करोतेरच् आङ्परयोः खनिश्रुभ्याण्डिच्चेत्यौणादिकः कुः परशुशब्दः तत्पर्य्यायएवाव्युत्पन्नः परश्वधशब्दः सम्प्रहरणं यस्य परश्वधाद्यश्च तस्य परशुरामस्य सम्बन्धिन्याः शक्तेः सामर्थ्यस्यान्तकरोविनाशयिता अन्तङ्करोतीति पूर्व्ववट्टः रणे सङ्ग्रामे तत्र भवः ॥ ७८ ॥

निहेत्यादि। तथा वैरकाराणां निहन्ता ढात्वण् कर्म्मणि भ॰
षष्ठी सतां साधूनां सदा सर्व्वदा बहूनि कार्य्याणि करोतीति बहुकृत् रणे पारश्वधिकरामस्य जामदग्न्यस्य शक्तेः सामर्थ्यस्य अन्तकरो नाशयिता परश्वधेन परशुना प्रहरतीति ष्णिकः परान् श्यति खण्डयतीति परशुः परश्वधश्चेति निपातनात् ॥ ७८ ॥

अध्वरेष्विष्टिनां पाता पूर्त्ती कर्म्मसु सर्व्वदा। पितु र्न्नियोगाद्राजत्वं हित्वा योऽभ्यागमद्वनं ॥ ७९ ॥

अध्व। इष्टमेभिरिति इष्टिनोयज्वानः इष्टादिभ्यश्चेतीनिः जं॰म॰
किमिष्टवन्तः अध्वरान् कर्म्माणि तत्र क्तस्येन्विषयस्येति कर्म्मणि सप्तमी अध्वरेष्विष्टिनामिति कर्म्मणि षष्ठी कृद्योगे पाता रक्षिता पूर्त्ती कर्म्मसु सर्व्वदा पृणातेर्निष्ठायामुदोष्ठ्यपूर्व्वस्येत्युत्वम् न

ध्याख्येत्यादिना निष्ठानत्वप्रतिषेधः पूर्त्तमनेनेति पूर्व्ववदिनिः किम्पूर्त्तमिति' सर्व्वदा श्राद्धादिकर्म्मणि पूर्व्ववत्सप्तमी सराजत्वं राज्यम् हित्वा त्यक्त्वा वनमभ्यागमत् आभिमुख्येन आगतवान् लुङ् ह्वेरङि रूपम् पितुर्नियोगात् नायोग्यत्वात् समे भर्त्तेति योज्यम्॥ ७८॥

भ॰ अध्वरइत्यादि। तथा अध्वरेषु इष्टिनां यज्वनां पाता रक्षिता पालरक्षणे इष्टं यजनं भावे क्तः ढघेक्ततीति कर्म्मणि षष्ठी सर्व्वदा कर्म्मसु पूर्त्ती पूर्त्तं पूरणं भावे क्तः सन्वाद्येदित्यादौ पूवर्ज्जनान्न क्तस्य नः वृदुश्रित्रुर्णोरिति इम्निषेधः कर्म्मापादाने ऽपि भावे क्तः अध्वरान् इष्टमेभिः कर्म्माणि पूर्त्तमनेन चेत्यर्थे इष्टादेरिष्टमनेनेत्यादावर्थे कर्त्तरि वाच्ये इन्प्रत्ययोभवेदिति। परः क्षमते क्तेनाढे इति ज्ञापकात् क्तान्तात्कर्त्तरि इन् तद्योगे कर्म्मणि सप्तमी किम्वा इष्टपूर्त्ताभ्यां भावक्तान्ताभ्यां नैकाजादिति अस्त्यर्थे इन् अध्वरकर्म्मभ्यां विषये सप्तमी केचित्तु अध्वरादृष्टा एभिः कर्म्माणि पूर्त्तान्यनेन चेति कर्म्मक्तादिन् कर्त्तरीत्याहुः यः पितुराज्ञया राजत्वं हित्वा त्यक्त्वा वनमभ्यागमत् समे भर्त्तेति योज्यं॥ ७९॥

पतत्रिक्रोष्टुजुष्टानि रक्षांसि भयदे वने। यस्य वाणनिकृत्तानि श्रेणीभूतानि शेरते॥ ८०॥

ज॰म॰ पत॥ यस्य वाणैर्निकृत्तानि छिन्नानि रक्षांसि भयदे वने दीर्घ

निद्रया शेरते समम भर्त्स्नेति योऽयम् शेरतइति शीङोरुट्
कीदृशानि अश्रेणयः श्रेणयोभूतानि ऊर्य्यादिच्विडाचश्चेति चच
न्तानाङ्कुगतिप्रादयइति सः च्वौचेति दीर्घः स्वरर्थानान्तु श्रेणा
दयः कृतादिभिरित्ययं विषयः पतत्रिभिः क्रोष्टुभिश्च जुष्टानि
परिवृतानि ॥ ८० ॥

पतन्तीत्यादि। त्वयन् वैरायमाणेभ्य इति वाक्ये तस्य चासो भ॰
णास्तीत्युत्तरमिदं यस्य वाणैः शरैर्भिन्नानि खण्डितानि रक्षां
सि भयदे वने शेरते पतितानि सन्तीत्यर्थः समं भर्त्स्नेति सम्बन्धः
शीङः की अन्ते शीङोरुट् मानारम् मान्तोऽदन्ततः अश्रेणयः
श्रेणयोभूतानि श्रेणीभूतानि च्विः कृभ्वस्तियोगेऽभूततद्भावइति च्विः
दीर्घस्य त्योवमाचोलोपइति च्विलोपः पतत्रिभिः मृगादिभिः
क्रोष्टुभिः शृगालैश्च जुष्टानि परिवृतानि जुषमुदिसेवे ॥ ८० ॥

दीव्यमानं शितान् वाणानस्यमानं महागदाः।
निघ्नानं शात्रवान्नामं कथं त्वं नावगच्छसि ॥ ८१ ॥

दीव्य। शितांस्तीक्ष्णान् वाणान् दीव्यमानं क्षेप्तुं गच्छन्तं स॰म॰
वा अनेकार्थत्वाद्धातूनान्दिवेस्ताच्छील्यवयोवचनेत्यादिना चानश्
दिवादिभ्यः श्यन् महागदाः अस्यमानं क्षेप्तं गच्छन्तं वा
पूर्ववच्चानश् शात्रवान् शत्रून् प्रज्ञादित्वादण् निघ्नानं घ्नन्तं गच्छ
न्तं शीलं वा पूर्ववत्प्रत्ययः हन्तेर्गमहनेत्युपधालोपः होहन्ते
रिति कुत्वम् एवम्विधं रामङ्कथन्नावगच्छसि तेन कर्म्मणा सर्व्व
लोकविदितत्वादिति भावः ॥ ८१ ॥

भ० दीव्येत्यादि। कथं त्वं राममपि नावगच्छसि न जानासि सर्व्वलोकप्रसिद्धकर्म्मत्वात् तथाहि शितान् वाणान् दीव्यमानं तीक्ष्णैः शरैः क्रीडाशीलं विजिगीषाशीलं वा दिव्युजिगीषेच्छापण द्यूतौ क्रीडागत्योः दिवोऽधर्व्वेति करणे द्वितीया महतीर्गदाश्मस्य मानं क्षेप्तुं शक्तं उत्क्षेपणयोग्ये वयसि वर्त्तमानं वा क्षेप्तुं शीलं यस्येति वा शाचवान् निघ्नानं निहन्तुं शक्तं सर्व्वत्र शक्तिवयस्ता च्छील्येशतुः शानः हन्तेर्हन्तृगमित्युङ्लापे हनोऽन्तोप्नः शचुरेव शानचः स्वार्थे ष्णः॥ ८१॥

कुलकं।

भ्रातरि न्यस्य यातोमां मृगाविन्मृगयामसौ। एषि- तुं प्रेषितोयातोमया तस्यानुजोवनं॥ ८२॥

ज॰भ॰ भ्रात। यदेवं कामावित्याह असौ रामोमाम्भ्रातरि न्यस्य अर्पयित्वा मृगयामाखेटकं यातः मृगैः स्वार्थिकोणिच् अदन्त त्वाच्च गुणो न भवति तदन्तात्कृञः शचेति अधिकृत्य परिचर्य्या परिसर्य्या मृगया टाद्यानामुपसङ्ख्यानमिति भावे शप्रत्ययः यक् अल्लोपाभावश्च टाप् मृगान्विध्यतीति मृगावित् कासौ भ्रातेति चेदाह तस्यानुजः कनिष्ठोमया प्रेषितः सन् यातोवनं अनु पश्चा ज्जायतइति अन्येभ्योऽपि दृश्यतइति डः अनौ कर्म्मण्युक्तमकर्म्मा ण्यपि भवति किमर्थं एषितुम् तमेव ज्ञातुम् इषुगतावित्यस्य रूपम् ज्ञानार्थत्वात् प्रेषितइति तस्यैव रूपम्॥ ८२॥

भ॰ भ्रातरीत्यादि। तथापि त्वामेकाकिनीं हित्वा त्यक्त्वा कुतोगत

इत्याह असौ रामोमां भ्रातरि न्यस्य समर्प्य मृगयां यातोगतः मृगान् विध्यतीति मृगावित् स कुत्रेत्याह तस्यानुजोऽपि मया प्रेषितः प्रस्थापितः सन् एषितुं ज्ञातुं अर्थाद्रामं वनं गतः सर्व्वे गत्यर्था ज्ञानार्था इति वचनात् इष्यमर्षणइत्यस्य ज्ञानार्थत्वं अनु जातोऽनुजः इनजनादिति डः ॥ ८२ ॥

अथायस्यन् कषायाक्षः स्यन्नस्वेदकणोल्वणः। स न्दर्शितान्तराकूतस्तामवादीद्दशाननः ॥ ८३ ॥

अथेति। अथैवमुक्तोजानक्या दशाननस्तामवादीत् उक्तवान् ज०म० आयस्यन् क्रोधाविष्टत्वात् शरीरङ्खेदयन् यसुप्रयत्नइति दैवा दिकः परस्मैपदी क्रोधादेव कषायाक्षः बहुव्रीहौ सक्थ्यक्ष्णो रिति षच् स्यन्नैः स्रुतैः स्वेदकणैरुल्वणउद्भटः व्याप्तइत्यर्थः स्यन्दे र्निष्ठायां रूपम् संदर्शितमान्तरमन्तर्गतमाकूतमभिप्रायोयेन सएवम्विधः ॥ ८३ ॥

अथेत्यादि। अथ तथैवमुक्तोदशाननस्तां सीतामवादीत् भ० अजवदेति त्रिः कीदृशः आयस्यन् तदाक्यैः क्रोधवशात् शरीरं खेदयन् कषायाक्षः क्रोधेन कषाये अक्षिणी यस्य सतथा सक्थ्य क्ष्णोःषः स्वाङ्गे स्यन्नैः स्रुतैः स्वेदकणैरुल्वणः उद्भटः व्याप्तइत्यर्थः स्यन्दूङ्स्रुतौ ऊदित्वादेमत्वे निमड्शीदित्यादिना इमनिषेधः हसुङ्नलोपोऽयाविति नस्य लोपः स्वाद्योदिति नस्य दस्य च नः सन्दर्शितं प्रकटीकृतं आन्तरं अन्तर्गतं आकूतमभिप्रायो येन स तथा ॥ ८३ ॥

कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितं। कोमग्न मुषितप्रख्यं वक्रु मन्येत राघवं॥ ८४॥

ज॰म॰ कृते। कनिष्ठाया अपत्यं ज्येष्ठाया अपत्यमिति स्त्रीभ्योढक् कल्याण्यादीनामिनङ् तयोः कल्याण्यादिषु पठितत्वात् कनिष्ठासुतस्य भरतस्य कृते निमित्तं ज्येष्ठाया. सुतः निरुपयोगितया विवासितः विसर्ज्जितः विपूर्व्वस्य वसतेर्हेतुमण्ण्यन्तस्य निष्ठायां रूपम् तन्नग्नमुषितप्रख्यं यथा कश्चिन्मुषितोनग्नोभवति तद्वद्भूतं पूर्व्वकालेति सः तस्याः पूर्व्वापरकालत्वात् राजदन्तादित्वात्परनिपातः ईदृशं राघवञ्चावक्रु मन्येत श्लाघेत नैवेत्यर्थः॥ ८४॥

भ॰ कृतेइत्यादि। कोजनो राघवं वक्रु मन्येत श्लाघेत न कोऽपीत्यर्थः किम्भूतं कानिष्ठिनेयस्य कनिष्ठाया अपत्यस्य भरतस्य कृते निमित्तं ज्यैष्ठिनेयं ज्येष्ठाया अपत्यमपि विवासितं पित्रा परित्यक्तं राज्याद्बहिष्कृतं वसिर्ण्यन्तस्य रूपं ततएव नग्नमुषितप्रख्यं यः कश्चित् प्रथमं मुषितोनिराकृतः पश्चान्नग्नोलज्जितो दिगम्बरीकृतो वा भवति तत्तुल्यं पूर्व्वकालस्यापरकालेनेति कर्म्मधारयार्थं परसूत्रं समते पूर्व्वकालसम्बन्धात् यएव मुषितः परकालसम्बन्धात् सएव नग्नइत्येकार्थतास्त्येव अभिधानात् पूर्व्वकालीनस्य परनिपातः राजदन्तादित्वादिति परः ज्येष्ठकनिष्ठाभ्यामावन्तत्वात् वाह्नायनोऽन्यावादेरिति कृतस्य ण्येयस्य कल्याण्यादिभगेत्यादिना इनेयः नग्नेति श्रोलजकोड्डिपि श्रोदित्वात् सूत्वाद्योदिति कस्य मकारः मग्नवत्त्वस्य गतं केचित्तु नञ्जेनेस्य निपातनात् तवर्गपञ्चमइत्याहुः॥ ८४॥

राक्षसान् वटुयज्ञेषु पिण्डीशूरान्निरस्तवान्। यद्य
सौ कूपमाण्डूकि तवैतावति कः स्मयः॥ ८५॥

राक्ष। अध्वरेष्विष्टिनामित्यस्योत्तरमाह यद्यसौ राक्षसान जं०म० पिण्डीशूरान् पिण्ड्यामेव शूरान् भोजने एव शूरान् पात्रेसमि तादयश्चेति सः वटुयज्ञेषु कुब्राह्मणयज्ञेषु निरस्तवान् तिरस्कृ तवान् हे कूपमाण्डूकि कूपे माण्डूकीव पूर्व्ववत्सः ढक्मण्डूकादि ति चकारादण्वापत्ये एतावति स्वल्पे वस्तुनि तव कः स्मयः नैव युज्यते मत्पराक्रमे तु युक्तः तत्रापि मम न युक्तं वक्तुमित्याह ॥ ८५॥

राक्षसानित्यादि। अध्वरेष्विष्टिनां पातेत्यस्योत्तरमिदं वट भ० वो ब्राह्मणास्तेषां यज्ञेषु यदि असौ रामः पिण्डीशूरान् पिण्ड्यां भोजनएव शूरान् कार्य्यान्तराक्षमान् राक्षसान् निरस्तवान् तदा एतावति अल्पेऽपि कार्य्ये हे कूपमाण्डूकि तव कः स्मयो गर्व्वः विस्मयोवा मण्डूकस्य भेकस्य स्त्र्यपत्यमिति शिवादित्वात् ष्ण' कूपे माण्डूकी इव एतेनाल्पदृश्वत्वादन्ये वीरास्त्वया न दृष्टा इति ते स्मयइति सूचितं कूपमण्डूकीति पाठे जातेरतइतीप् कूपमाण्डूकीत्यत्र पिण्डीशूरान् इत्यत्र च पात्रेसमितादित्वात् क्षेपे तत्पुरुषइति परः स्वमते अर्थवशात् क्षेपोगम्यते॥ ८५॥

मत्पराक्रमसंक्षिप्तराज्यभोगपरिच्छदः। युक्तं ममै
व किं वक्तुं दरिद्राति यया हरिः॥ ८६॥

ज०म० मत्प। राज्यभोगादयः परिच्छदोहृस्यस्यादिः समत्पराक्रमेण संक्षिप्तोऽपहृतोयस्य हरेरिन्द्रस्य यथा दरिद्राति निरर्थका भवति तन्ममैव किं वक्तुं युक्तमात्मगुणवादस्य लज्जाकरत्वात् दरिद्रातेरादादिकत्वाच्छपोलुक्॥ ८६॥

भ० मदित्यादि। मत्पराक्रमेण संक्षिप्तोऽपहृतो राज्यभोगपरिच्छदोहस्त्यस्यादिर्यस्य तादृशोहरिरिन्द्रोयथा यदि दरिद्राति दुर्गतोभवति तदा किं ममैव वक्तुं युक्तं अपि तु नैवेत्यर्थः आत्मगुणानुवादस्य लज्जाकरत्वात् दरिद्रातस्तुदुर्गत्यां॥ ८६॥

निर्लज्जोविमदः स्वामी धनानां हृतपुष्पकः। अध्यास्तेऽन्तर्गिरं यस्मात् कस्तन्नावैति कारणं॥ ८७॥

ज०म० निर्ल। यस्मात् कारणात् धनानां स्वामी धनदः अन्तर्गिरमध्यास्ते अध्यासितवान् गिरेः कैलासस्यान्तर्मध्ये विभक्त्यर्थेऽव्ययीभावः गिरेश्च सेनकस्येति टच् अधिशीङ्स्थासामिति कर्मसंज्ञा तेन तृतीयासप्तम्योर्बहुलमित्यस्याभावा न भवति नाव्ययीभावादित्यमेव भवति तत्कारणमम पराक्रमस्यां वा कोनावैति न जानाति कीदृशः निर्लज्जः लज्जातोनिष्क्रान्तः निरादयः क्रान्ताद्यर्थे पञ्चम्येति सः एकविभक्तिचेत्युपसर्जनसंज्ञायां ह्रस्वत्वम् हृतपुष्पकः हृतं आक्षिप्तम्पुष्पकाख्यं विमानं यस्य अतएव विमदोऽपि तदर्थः लज्जा पुष्पकस्य धनदस्यासीत् तच्छित्त्वा मनेन गृहीतमिति॥ ८७॥

निर्लज्ज इत्यादि। धनानां स्वामी कुवेरः यस्मात् कारणात् अन्तर्गिरं गिरेः कैलासस्यान्तर्मध्यमध्यास्तेऽधिवसति तत्कारणं मत्पराक्रमरूपं कोऽननोनावैति अपितु सर्व्वएव जानाति कीदृशः कुवेरः निर्लज्जः लज्जायानिष्क्रान्तः पञ्चमीतत्पुरुषः वंपूर्व्वमिति निरः पूर्व्वनिपातः निर्गता लज्जा यस्येति वा विमदः विगतोमदो दर्पोयस्य हृतपुष्पकः हृतं पुष्पकं विमानं यस्य ईदृशोऽपि मत्प राक्रमादेवेति भावः अन्तर्गिरमिति सप्तम्यर्थेऽव्ययीभावः सप् नदीपौर्णमास्याग्रहायणीगिरेर्व्वेति पचे अः कर्म्मक्रियेत्यादिना आधारस्य कर्म्मत्वं ॥ ८७ ॥ भ०

भिन्ननौक इव ध्यायन् मत्तोबिभ्यद्यमः स्वयं। क्षिणि मानं दधानेन मुखेनास्ते निरुद्यतिः ॥ ८८ ॥

भिन्न। स्वयं साक्षान्मत्तोबिभ्यत् त्रस्यन् यमोवैलक्षण्यात् मुखेन क्षिणिमानकृष्णावर्णत्वं वर्णदृढादिभ्यःष्यञ्चेति चकारादिमनिच् दधानेन धारयता इत्यम्भूते तृतीया निरुद्यतिः निरुद्यमः आङि उत्पूर्व्वाद्यमेः स्त्रियाक्तिन् अनुनासिकलोपः कीदृशः ध्यायन् चिन्त यन् किमसमापद्यदहमनेन हृतसर्व्वस्वइति भिन्ननौकइव विपन्न पोतवणिगिव उरःप्रभृतिभ्यः कप् ॥ ८८ ॥ ज०भ०

भिन्नेत्यादि। यमः मत्तोविभ्यत् त्रसन् स्वयं ध्यायन् चिन्तयन् निरुद्यतिर्निरुद्यमआस्ते स्वयमिति स्वयमेवात्मनोऽसामर्थ्यं जाना ति नत्वन्येन बोधितइत्यर्थः क्षिणिमानं कृष्णत्वं दधानेन मुखेन भ०

उपलक्षितः विशेषणे तृतीया गुणादिमन्भावे भिन्ना विदारिता नैर्थस्य ताट्टशेवणिक् यथा ध्यायति तथा ध्यायन् एकवचना न्तेन नैशब्देन वक्रमीढो करति परः स्वमते स्वार्थे पुंवत्स्य्यु क्षपुंस्करति ज्ञापकात् तसूक्तेरिति अस्मदः पञ्चम्यास्तस् युष्म दस्मदोस्त्वाह्वावित्यादिना मदादेशः गणोक्तकार्य्यस्य वाकल्यात् त्यदांटरःक्ताविति अनिषेधः त्रिभोल्मिभीत्यां मद्वः क्लादोरेविः अद्वेरित्युक्तेर्न नुण् निरुत्पूर्व्वात् यमः क्तौ वनतनात्यनिमामिति मलोपः एतेन दिक्पतीनां जयादहमेव सुप्रसिद्धोनतु तथेत्युक्तं ॥ ८८ ॥

समुद्रोपत्यका हैमी पर्व्वताधित्यका पुरी। रत्न पारायणं नाम्ना लङ्केति मम मैथिलि ॥ ८९ ॥

जःमः एवं। स्वपारूपमदर्थं स्वीकर्त्तुमाह समु। हे मैथिलि लङ्केति नाम्ना मम पुरी कीदृशी समुद्र एवोपत्यका आसन्नायस्याः सा स मुद्रोपत्यका समुद्रस्य पर्व्वतोपत्यकात्वात् समुद्रोपत्यकेति समा से साधुत्वन्न भवति यतः संज्ञाधिकारात् पर्व्वतस्यासन्ने अधि रूढे उपाधिभ्यां त्यकन्प्रत्ययान्तयोरुपत्यकाधित्यकाशब्दयोः साधुत्वमुक्तम् प्रतिषेधे त्यकन् उपसंख्यानमिति प्रत्ययस्यादितो कारो न भवति हैमी हेमविकारा प्राणिरजतादिभ्योऽञ् पर्व्वता धित्यका त्रिकूटपर्व्वतस्योपरि स्थिता रत्नपारायणं यत्र रत्ना नाम्यारमवमानमयर्न्तो बुध्यन्ते तत्परीक्षकाः सर्व्वरत्नस्थानमि त्यर्थः। दुर्गावस्थित्यानभिभवनीयतां रत्नोपचयात् समृद्ध तामुक्यन् प्रलोभयति ॥ ८९ ॥

समुद्रइत्यादि। सम्प्रति सीताप्रलोभनं क्रियते हे मैथिलि लङ्के भ०
ति नाम्ना ख्याता मम पुरी कीदृशी समुद्रोपत्यका समुद्रस्य उप
त्यका समीपे भूमिः पर्व्वतस्य त्रिकूटस्य अधित्यका उपरि स्थिता
अध्युपाभ्यां त्यचादित्वात् त्यचाद्यपिरेत्यादिना भवादित्वात् ऊ
र्द्धामन्नयोस्त्यः ततः स्वार्थे कः स्त्रियामाप् काप्यनाशीरकरत्या
दिना चिपादित्वात् न इत्वं उपत्यकाद्रेरासन्ना भूमिरूर्द्धमधि
त्यका इत्यमरकोषे अद्रेरित्युपलक्षणं समुद्रउपत्यका पर्व्वता
सन्नभूमिर्यस्याइति केचित् एतेन दुर्गमत्वं सूचितं हैमो हेम्नो
विकारः विकारसंघेति ष्णः मन्वर्व्वेत्यादौ विकारष्णवर्ज्जनात्
नलोपनिषेधाभावात् न्वोर्लोपैताविति नस्य लोपः रत्नानां पार
मवसानं अयन्ते बुध्यन्ते तत्परीक्षकाअत्रेति रत्नपारायणं घञल
नटोघे इति आधारे अनट् स्वभावादजहल्लिङ्गता सर्व्वरत्न
स्थानमित्यर्थः यदाह हलायुधः साकल्यवचनं प्राहुः पारायण
मुदाहृतमिति॥ ८८॥

आवासे सिक्तसंमृष्टे गन्धैस्त्वं लिप्तवासिता। अपि
तोरुसुगन्धिस्रक् तस्यां वस मया सह॥ ८०॥

आवासे। तस्यां पुर्य्यां आवासे गृहे आवसत्यस्मिन्निति अधि ज०
करणे घञ् मया सह त्वं वस प्रार्थनायां लोट् सिक्तसम्मृष्टे पूर्व्वं
सिक्ते पश्चात्सम्मृष्टे गन्धैर्लिप्तवासिता सती पूर्व्वं लिप्ता चन्दनादि
भिर्गन्धैः पश्चाद्वासिता धूपिता सम्मृष्टादिभिः पूर्व्वकालेत्यादिना

वः अर्पिता न्यस्ता उर्व्वी महती सुगन्धिस्रक् सुरभिमाला यस्यां सा त्वं किमिति मया सह वसामीति चेदाह ॥ ८० ॥

भ० आवासइत्यादि। तस्यां पुर्य्यां आवासं गृहं मया सह त्वं वस प्रार्थनायां लो पूर्व्वं सिक्तं पश्चात् संमृष्टे शोधिते सिक्तसंमृष्टे गन्धे चन्दनादिभिर्लिप्तवासिता पूर्व्वं लिप्ता पश्चाद्वासिता धूपैः उभयत्र पूर्व्वपरकालसम्बन्धाद्दं कार्य्यत्वेन कर्म्मधारयः गन्धयतीति गन्धश्चन्दनादिः वासिता करिणी नार्य्योर्वासितं सुरभीकृते। ज्ञातमात्र स्वगारात्रे वासितं वस्त्रवेष्टितइति विश्वः अर्पिता न्यस्ता उर्व्वी महती सुगन्धिः सुरभिः स्रक् माला यस्यां तादृशी च सती सुतसुरभिपूतेरित्यादिना गन्धादिप्रत्ययः ॥ ८० ॥

सङ्गच्छ पौंस्नि स्त्रैणं मां युवानं तरुणी शुभे। राघवः प्रोष्यपापीयान् जहीहि नमकिञ्चनं ॥ ८१ ॥

ज०म० सङ्ग। हे पौंस्नि पुमांसमर्हति तद्धिताय वा अर्हार्थे हितार्थे वा स्त्रीपुंसाभ्यान्नञ्स्नञौ स्त्रीप्रत्यये नञ्स्नञीकक्ख्युनस्तनुमानामुपसंख्यानमिति मां युवानन्तरुणं सङ्गच्छ अङ्गीकुरु गमेः प्रार्थनायां लोट् इषुगमीत्यादिना छत्वम् समोगम्यृच्छेत्यादिना तङ् न भवति सकर्म्मकत्वात् विशेषतः स्त्रैणं स्त्रियै हितमर्हन्तं वा पूर्व्ववत्प्रत्ययः तरुणी युवती सती शुभे कल्याणि शोभतइति इगुपधलक्षणः कः ममापि तादृशोभर्त्तासीति चेदाह राघवः प्रोष्यपापीयानिति पापशब्दादिष्ठनोर्लुगिति ईयसुन् लुक् मतुपः प्रोष्यपापीयानिति मयरव्यंसकादित्वात्वः देशान्तरं यात्वा पापव

न्तर: अतएतमकिञ्चनन्दरिद्रं न विद्यते किञ्चन यस्येति सर्व्वं नामाव्ययसंज्ञायाउपसर्जनप्रतिषेधइति वचनात्राव्ययसंज्ञा तेन न विभक्तिलोप: जहीहि त्यज ईत्वस्य जहातेश्चेति वा वचनादि कल्प: ॥ ८१ ॥

यज्ञेत्यादि ॥ हे पौंस्नि हे पुरुषयोग्ये पुरुषहिते वा हे शुभे भ०
कल्याणि तरुणी त्वं स्त्रैणं स्त्रीयोग्यं स्त्रीहितं वा युवानं मां सङ्गच्छ अङ्गीकुरु विधिनिमन्त्रणेत्यादिना प्रार्थनायां लो सदृशयोरावयोर्योगउचितइति भाव: स्त्रीपुंसाभ्यां विकारसंघेत्यादिना नञ्स्नञौ: नञ्स्नञौ स्त्रियां: नञ्स्नञश्च्दादिलादीप् शोभतेइति शुभा इगु पधत्वात् ज्ञाप्रीकिर:कइति क: ममापि ईदृशोभर्त्तेति चेत् आह राघव: ग्रीष्मपापीयान् देशान्तरं गत्वा पापवत्त्वर: पापवत् शब्दात् गुणाद्दिष्ठेयसुइति ईयसु: लुङ्मददिनामिति वतोर्लुक् ओमंसश्छिदिति डित्वात् टेर्लोप: मयूरव्यंसकादित्वाद च समास इति पर: समतं गमकत्वात् असमासत्वेऽपि न क्षति: तमकिञ्चनं दरिद्रं जहीहि त्यज किञ्चनेत्यव्ययेनापि समासे मयूरव्यंसकादित्वेन निपातनात् वाच्यलिङ्गतेति पर: नञ् तत्पुरुषादर्श आदित्वादित्यन्ये न विद्यते किञ्चनमस्येति बहुव्रीहौ नाव्ययकार्य्यमिति केचित् समते इविणे किञ्चनं क्लीवइति कोषादनव्ययेन किञ्चनशब्देन समास: वस्तुतोऽप्येवमकिञ्चनशब्दोनिर्धनवाची वाच्यलिङ्ग: तथाच कोष: नि:स्वाकिञ्चनदुर्व्विधाइति आद्योरित्यादिना हाकइत्वं ॥ ८१ ॥

अश्नीत पिबतीयन्ती प्रसिता स्मरकर्म्मणि। वशीकृत्य दशग्रीवं मोदस्व वरमन्दिरे ॥ ८२॥

अश्नी। अश्नीत पिबतेति मयूरव्यंसकादित्वात्समः तत्र आख्यातमाख्यातेन क्रियासातत्य इति पठ्यते सततमश्नीतपिबतेत्येवम्भृत्यजनानादेष्टुमिच्छतीति सुपआत्मनः क्यच् अश्नीतपिबतीयन्ती प्रसितास्मरकर्म्मणि आधिक्येन प्रवृत्ता कामव्यापारे प्रसितोत्सुकाभ्यान्तृतीया चेति चकारात्सप्तमी वशीकृत्यानुवर्त्तिनन्दशग्रीवङ्कृत्वा साचात्प्रभृतित्वाद्गतिसंज्ञा मोदस्व हर्षञ्जनय वरमन्दिरं श्रेष्ठगृहे स्थिता ॥ ८२॥

अश्नीत्यादि। दशग्रीवं वशीकृत्य आयत्तीकृत्य वरमन्दिरं श्रेष्ठगृहे त्वं मोदस्व हर्षं जनय वशीदति सप्तम्यन्तप्रतिरूपकोऽव्ययः ह्रस्तिपाणावित्यादिना साचादादित्वात् समासः कीदृशी अश्नीतपिबतेति भृत्यजनानादेष्टुमिच्छन्ती अश्नीतपिबतेति सततं नियोगो यस्यां क्रियायां सा अश्नीतपिबता ईक्यं सोऽन्यदति समासः तत्र हि सामान्यत्वात् पदमात्रस्यैव ग्रहणं तेन कचित् त्याद्यन्तस्य कचिन्द्वाद्यन्तस्य कचिदुभयस्य चैक्यमिति लब्धं त्याद्यन्तस्यान्यप्रत्ययान्तत्वाभावेऽपि समासे अन्यपदार्थत्वाल्लिङ्गत्वं तथा च क्रियायाविशेषणार्थत्वात् स्त्रियामतश्चाप् कर्त्तुकृत्यं चेत्यत्र त्यादिकैरेव ग्रहणमभिधानात् तेन त्यादिकैर्न लुक् निपातनाद्रूपसिद्धिरिति परे अश्नीतपिबतामिच्छतीति क्यः स्मरकर्म्मणि कामचेष्टायां प्रसिता तत्परा प्रसितोत्सुकाभ्यां तात्पर्य्ये तृतीया

सप्तम्याविति परः समते विषयविवक्षा पिबन्ध्वने क्तः॥ ८२॥

मास्म भूर्ग्राहिणी भीरु गन्तुमुत्साहिनी भव। उद्भासिनी च भूत्वा मे वचःसम्मर्द्दिनी भव॥ ८३॥

मास्म। हे भीरु मास्म भूर्ग्राहिणी प्रतिकूला माभूः न यास्यामीत्यमुमर्थङ्गृहामीति कृत्वा स्मोत्तरं लङ्चेति चकारात् लुङ् गन्तुमुत्साहिनी उद्युक्ता भव शकधृषेत्यादिना तुमुन् उत्साहिनीति सहोपपदत्वात् ततश्चालङ्कृतशरीरत्वादुद्भासिनी शोभमाना भूत्वा नोऽस्माकं वचःसम्मर्द्दिनी स्तनाभ्यामुरस्थलस्य पीडिका भव ग्रहोत्साहोद्भाससम्मर्द्दानाङ्ग्रहादिषु पठितत्वात् कर्त्तरि णिनिः छन्दस्यो लोप्॥ ८३॥ जं०म०

मासमित्यादि। हे भीरु ग्राहिणी प्रतिकूलार्थग्राहिणी त्वं मास्म भूः न भव गन्तुमुत्साहिनी उद्युक्ता भव उद्भासिनी गत्वालङ्कारादिभिः शोभमाना भूत्वा नोऽस्माकं वचःसम्मर्द्दिनी स्तनाभ्यामुरस्थलस्य पीडिका भव सर्व्वत्र ग्रहादित्वाणिन् चकारः समुच्चये अस्मद एकत्वे बहुत्वमभिधानात् गौरवव्यञ्जकं॥ ८३॥ भ०

तां प्रातिकूलिकीं मत्वा जिघृक्षुर्भीमविग्रहः। वाङ्गपपीडमाश्लिष्य जगादैवं निशाचरः॥ ८४॥

ताम्प्रा। यदैवमभिधीयमाना न प्रतिपन्ना तदा ताम्प्रातिकूलिकीम्प्रतिकूलवर्त्तिनीं मत्वा ज्ञात्वा भोजःसहाम्भसा वर्त्तत जं०

इत्यधिकृत्य प्रतिकूलं वर्त्तनइत्यस्मिन्नर्थे तत्प्रत्यनुपूर्ब्बेत्यादिना ठक् जिहीर्षुः हर्त्तुमिच्छुः भीमविग्रहः भीषणशरीरः दृष्टराक्षस शरीरहपः सुखेन ह्रियतइति वाह्रूपपीडमाश्लिष्य बाहुभिरूपपीड्य सप्तम्याञ्चोपपीडइति चकारात् हतीयान्तउपपदं णमुल् जगाहे रथेनोत्पत्य द्यामाकाशन्निशाचरोगाहते स्म दिवशब्दस मानार्थो द्योशब्दश्चौणादिकः गमड्डोइत्यत्र युतंश्रुति वचनात् ओतोऽम्शसोरित्यात्वं काल्नापेन्तु दिवशब्दादेव व्युत्पादयितुं सूत्र मवधीयते वाम्येति दिव अमि विकल्पेनाकारादेशइति ॥ ८४ ॥

तामित्यादि। उक्तवाक्यानङ्गीकारात् तां सीतां प्रातिकूलिकीं प्रतिकूलवर्त्तिनीं मत्वा जिहीर्षुर्हर्त्तुमिच्छुर्निशाचरो रावणो भीमविग्रहो भयङ्करमूर्त्तिः सन् वाह्रूपपीडं वाहुभिरूपपीड्य आश्लिष्य तां गृहीत्वा द्यामाकाशं जगाहे गाहूङ्विलोडे गतवा नित्यर्थः हतीयान्तादुपपीडाणमिति परः स्समते वाहुभ्यामुपपीडः पीडनं यथेत्याश्लेषक्रियाविशेषणं उपपीडोघञन्तः द्यामिति द्योशब्दस्य दिवशब्दस्य वा अमि रूपं प्रतिकूलं यथा स्यात्तथा वर्त्तनइति क्रियाविशेषणस्य कर्म्मत्वात् ठघकादिति ष्णिकः॥८४॥

त्रस्यन्तीं तां समादाय यातोगानिश्वगाल्लयं। तूष्णीं भूय भयादासाञ्चक्रिरे मृगपक्षिणः॥ ८५ ॥

. त्रस्य। त्रस्यन्तीं च तां तद्रूपदर्शनात् समादाय गृहीत्वा याता गच्छता रावणात् यातः भतरि पञ्चम्यां रूपम् किम्यातो

रात्रिञ्चरालयं लङ्कां रात्रौ चरतीति चरेष्टः रात्रेः कृतिविभाषेति मुम् तस्माद्रावणाद्यत् भयन्तेनाभयात् तूष्णींभूय तूष्णीमि भुवइति क्त्वाचेति समासे ल्यबादेशः आसाञ्चक्रिरे आसिताः दयायासश्चेत्याम् मृगपक्षिणः मृगाश्च पक्षिणश्च समानजातीयानामिति वचनादेकवद्भावोऽत्र न भवति ॥ ८५ ॥

त्रस्यन्तीमित्यादि। त्रस्यन्तीं बिभ्यतीं तां सीतां समादाय गृहीत्वा रात्रिञ्चरस्यालयं लङ्कां यातो गच्छतो रावणाद्भयात् मृगाश्च पक्षिणश्च तूष्णींभूय मौनिनो भूत्वा आसाञ्चक्रिरे स्थितवन्तः आसङ् उपवेशे इंजादीत्याम् भसन्नामः यात इति प्र चरन्तं रात्रौ चरतीति पचादित्वादच् रात्रेर्मन्वा कृति तूष्णीमित्यव्ययं मौनार्थे वर्त्तते व्यस्यग्यनुकार इत्यादिना ऊर्य्यादित्वात् समासे क्त्वो ल्यप् ॥ ८५ ॥ भ०

उच्चैरारस्यमानां तां कृपणां रामलक्ष्मणौ। जटायुः प्राप पक्षीन्द्रः परुषं रावणं वदन् ॥ ८६ ॥

एते प्रकीर्णकाः।

उच्चैः। तां सीताञ्जटायुः पक्षीन्द्रः रावणम्परुषन्निष्ठुरं वदन् प्राप प्राप्तवान् कीदृशीं उच्चैरारस्यमानां हा राम हा लक्ष्मणेति शब्दौ द्वौ उच्चैर्महता ध्वनिना पुनःपुनारसन्तीमित्यर्थः रसः शब्दकर्म्मकत्वात् क्रियासमभिहारे यङ् कृपणान्दीनाम् इति प्रकीर्णकाण्डः प्रथमः समाप्तः ॥ ८६ ॥ ज०म०

उच्चैरित्यादि। उच्चैर्यथा स्यात्तथा रामलक्ष्मणौ रारस्यमानां भ०

हा राम हा लक्ष्मणइति पुनःपुनराह्वयमानां सुपर्णा दीनां सीतां जटायुः पक्षिराजः प्राप रावणं परुषं निष्ठुरं वदन् वदिर्द्वि कर्म्मकः रमग्रव्द्वे मूषस्थेत्यादिना यङ्। इति गौराङ्गमल्लीक पुत्रोभरतमल्लिकः। प्रकीर्णकाण्डव्याख्यानं मुग्धबोधमतेऽकरोत् ॥ ८६ ॥

## अतःपरं टाधिकारः॥

द्विषन् वनेचराग्र्याणां त्वमादायचरोवने। अग्रेस रोजघन्यानां माभूः पूर्व्वसरोमम ॥ ८७॥

इतः परमधिकारकाण्डमुच्यते यत्र प्राधान्येनैकैकमधिकृत्य लक्षणप्रदर्शितम् तदधिकारकाण्डम् शेषलक्षणेषु प्रकीर्णकमेव द्रष्टव्यम् एवञ्च कृत्वा अन्तरान्तरा तत्सूचनार्थम्प्रकीर्णकश्लोका भिधानमत्र च काण्डे निर्द्दिष्टसंज्ञकाश्चत्वारः परिच्छेदाः तत्र प्रथमं आद्यं टप्रत्ययमधिकृत्योच्यते सर्गार्थस्य विवक्षितस्यापरि समाप्तत्वात् तमेवाभिसंन्धायाह। द्विषन्नित्यादि। एतञ्च कृत्वा मिश्रकउच्यते द्वयोरप्यत्र प्राधान्येन विवक्षितत्वात् परुषं वदन् कीदृशं हे द्विषन्माभूः पूर्व्वसरोममेति ममाग्रतोभूत्वा मागा इत्यर्थः पूर्व्वं सरतीति पूर्व्वे कर्त्तरीति टः यतस्त्वमग्रेसरोजघ न्यानामग्रेसरतीति पुरोग्रतइत्यादिना टः अघन्यइति शाखादि भ्यायइतीवार्थे यः पापानाम्प्रथमस्त्वम् कुतः आदायचरोवने आदाय चरतीति भिक्षासेनेत्यादिना वने चरन्तीति वनेचराः

अधिकरणे चरेष्टः तेषामग्र्याः प्रधानाश्चयः तानादायचरसि भचयसि कर्म्मणि षष्ठी॥ ९७॥

इतः प्रभृत्यधिकारकाण्डमुच्यते एकैकं विषयमाश्रित्य लक्षण भ॰ प्रदर्शनं यत्र तदधिकारकाण्डं तत्रापि लक्षणान्तरसम्बन्धात् प्रकीर्णतास्तीति सूचनार्थं मध्ये मध्ये प्रकीर्णश्लोकाभिधानं विवक्षितस्य सर्गार्थस्यापरिसमाप्तत्वात् सर्गमध्ये काण्डान्तरारम्भान दोषाय एवञ्चायं सर्गोमिश्रकउच्यते द्वयोरप्यत्र प्राधान्येन विवक्षितत्वात्। अथ टाधिकारः। द्विषन्नित्यादि। परुषं वदन्तीति यदुक्तं तत्किमित्याह हे वनेचराग्र्याणां मुनीनां द्विषन् शत्रो त्वं मम पूर्व्वसरोऽग्रयायी माभूः यतस्त्वं जघन्यानां नीचानां अग्रेसरः प्रथमः वने आदाय गृहीत्वा अर्थात् सीतां चरसि गच्छसीति आदायचरः द्विषन्निति द्विषः शत्रौ शतृरिति परः स्वमते द्विषच्छब्दः शत्रुवाचित्वे रूढएव विद्वेषार्थे तु कीपमवदिति शतृः उभयथा सम्बन्धे षष्ठी वने चरतीति पचादित्वादन् अभिधानात् सप्तम्यलुक् अग्रे भवोऽग्र्यः श्रेष्ठउच्यते रेफान्तपाठेऽग्रशब्दएव श्रेष्ठार्थः तथाच। अग्रमालम्बने प्राते परिमाणे पलस्य च। प्रान्ते समन्तादधिके प्रधाने प्रथमार्धयोरिति विश्वः। दामागेहागित्यादौ यत्वर्ज्जनात् न दान्तहत्वं चरेः पूर्व्ववदन् गमकत्वात् दत्तार्घाः सिद्धसंघैरितिवत् क्रियायाः कारकापेक्षायामपि यवन्तेन समासः अविवक्षितकर्म्मत्वात् सापेक्षत्वाभावेन वा समासः असमासेऽपि न क्षतिः मयूरव्यंसकादित्वात् सापेक्षत्वेऽपि समासइति परः अग्रे इत्येकवचनान्तमव्ययं स्वकु

इत्यनेन टः अधमं पश्चाद्भागः तत्तुल्योऽधन्यः विकारसंघेत्यादिना तुल्यार्थे ण्णः ॥ ९७ ।

यशस्करसमाचारं ख्यातं भुवि दयाकरं । पितुर्व्वाक्यकरं रामं धिक्त्वां दुन्वन्तमत्रपं ॥ ९८ ॥

म० यश । रामन्दुन्वन्तमुपतापयन्तमत्रपन्निर्लज्जन्धिक् त्वां गर्हा टुदुउपतापे इत्यस्य सौवादिकस्य शतरि हुश्नुवोःसार्व्वधातुक इति यणादेशे रूपम कीदृशं रामं यशस्करसमाचारं समाचरणं समाचारः चरितं भावे घञ् यशस्करोतीति यशस्करः कृञो हेत्वित्यादिना टः विसर्ज्जनीयस्य सः यशस्करणहेतुभूतः समाचारोयस्य ख्यातम्भुवि प्रसिद्धन्दयाकरङ्करुणाकरणशीलं ताच्छील्ये टः पितुर्वाक्यकरम्पितुर्वचनानुष्ठाने अनुकूलं आनुलोम्ये टः ॥ ९८ ॥

भ० यशस्केत्यादि । रामं दुन्वन्तं उपतापयन्तं अत्रपं परस्त्रीहरणेन निर्लज्जं त्वां धिक् धिक्समयेत्यादिना द्वी टुदुउपतापे स्वादित्वात् शतरि नुःश्नुध्वोरिति वः रामं कीदृशं यशस्करः समाचारोयस्य तं यशःकरोतीति सकुञ्इति टः अत्र ढातृषिति सूत्रात् ढादित्यनुवर्त्तते सेतुकखेति वेः सः कृञोहेत्वादावर्थे टइति परः स्वमते यशस्करी विद्येति निर्द्दिशता विद्याया यशस्करणे हेतुत्वात् हेत्वाद्यर्थः सूचितः अन्यथा विद्येति यशस्य वैयर्थ्यं स्यात् हेत्वाद्यर्थानुक्तावपि न क्षतिः सम्यगाचरणं

समाचारश्लेष्टा अन्नुऽलनटोऽचे इति अञ् भुवि ख्यातं इथाक रणशीलं पूर्व्ववट्टः परमते ताच्छील्यार्थेऽपि पितुर्व्वाक्यानुष्ठाने ऽनुकूलं पूर्व्ववट्टः परमते ऽनुकूलार्थेऽपि वाक्यशब्देनाच तदभि धेयमुच्यते ॥ ८८॥

अहमन्तकरोनूनं ध्वान्तस्येव दिवाकरः। तव राक्षस रामस्य नेयः कर्म्मकरोपमः ॥ ८९ ॥

अहम्। हे राक्षस अहन्तव नूनमवश्यमन्तकरः विनाशयिता कीदृशः रामस्य नेयोवश्यः अचोयत् कर्म्मकरोपमः भृतकतुल्यः कर्म्मणि भृताविति टः ध्वान्तस्येव दिवाकरः यथान्धकारस्या न्तकरोदिवाकरः सूर्य्यः तथा अन्तकरदिवाकरौ दिवाविभेति टप्रत्ययान्तौ एवमुक्त्वा सम्पपातेति सम्बन्धः॥ ८९ ॥ जं०

अहमित्यादि। हे राक्षस नूनं निश्चितं अहं तव अन्तकरः नाशयिता अन्तं करोतीति टः यथा दिवाकरः सूर्य्योध्वान्तस्य अन्धकारस्य अन्तकरः दिवाशब्दोऽयमाधारवृत्तिर्दिनवचनो ऽव्ययः तेन दिवा दिवसे प्राणिनश्चेष्टायुक्तान् करोतीति निशादि त्वाट्टइति परः स्वमते दिवाशब्दोऽयमव्ययः सप्तम्यन्तत्वं प्रायिकं तेन दिवा दिनं करोतीति पूर्व्ववट्टः बाहुल्याद्वा दिवा दिवसे करोरश्मिर्यस्य इति केचित् ध्वान्तमिति ध्वनेस्त्समथि मे ध्रुवाव इत्यादिना निपातः अहं कीदृशः रामस्य नेयः वश्यः वश्यः प्रणे योनिभृतइत्यमरः कर्म्मकरोपमः भृतकतुल्यः कर्म्म करोतीति टः कर्म्मशब्दाङ्कृतौ टइति परः॥ ८९॥ भ०

सतामरुष्करं पक्षी वैरकारं नराशिनं। हन्तुं कल
हकारोऽसौ शब्दकारः पपात खं ॥ १०० ॥

इति टाधिकारः ॥

ज॰म॰ सता। एवमुक्त्वा असौ जटायुः पक्षी खमाकाशमपपात पतितः किमर्थं नराशनं राक्षसं हन्तुं हनिष्यामीति कीदृशं राक्षसं सतां अरुष्करं धर्मे स्थितानामपीडाकरम् अरुःशब्दः पीडापर्य्यायः परः दिवाविभेति टः वैरकारं वैरकरणशीलं कलहकारः पक्षी कलहयितुमनुकूलः अनयोर्नशब्दश्लोकेति ट प्रतिषिद्धेऽण्येव भवति कर्म्मण्यणः प्राप्तिरस्तीति टाधिकार उदाहृतः कियत्खमपपात यावति दूरे शब्दपातस्तावत्खमिति टाधिकारः समाप्तः ॥ १०० ॥

भ॰ सतामित्यादि। एवमुक्त्वा असौ पक्षी जटायुर्नराशिनं राक्षसं हन्तुं खमाकाशं पपात जगाम कीदृशं राक्षसं सतां साधूनां अरुष्करं व्रणकरं पीडाकरमित्यर्थः पूर्व्ववद्धः सिष्यतस्य इति वत् षत्वं वैरं विरोधं करोतीति वैरकारस्तं छात्पणित्यस्य कुम्भकार इत्युदाहरणेन कुम्भादेःछत्रः पण् अन्यस्मात् हकुष्टरत्यस्य विषय इति सूचितं तेनात्र कुम्भादित्वात् पण् पक्षी कीदृशः कलहकारः कलहं करोतीति पूर्व्ववत् पण् एवं शब्दकारः शब्दपातमिति पाठे शब्दस्य पातोयत्रेति खविशेषणं यावद्दूरं शब्दगमनं तावद्दूरमित्यर्थः शब्दस्येव पातोगतिर्यत्रेति पतनक्रियाविशेषणं वा एतेन यथा शब्दस्य शीघ्रगमनं तथास्येति ध्वनितं इति। टाधिकारः ॥ १०० ॥

## अतः परं प्रकीर्णकाः ॥

धुन्वन् सर्व्वपथीनं खे वितानं पक्षयोरसौ । मांस
शोणितसन्दर्शं तुण्डघातमयुध्यत ॥१०१ ॥

इतः प्रकीर्णकश्लोकानाह । धुन्वन्नित्यादि । असौ पक्षी अयुध्यत जं॰म॰
युध्यते स्म युधेर्दैवादिकस्य लङि रूपम् तुण्डघातमिति क्रियाविशे
षणम् तुण्डेन चञ्चा घातो हननं यस्मिन् युद्ध इति करणे हन
इति न णमुल् कषादिषु यथाविध्यनुप्रयोगात् अहिंसार्थत्वाच्च
तदारम्भस्य यथा पादघातम्भूमिं हन्तीति हिंसार्थानाञ्च समान
कर्म्मकाणामित्यनेनापि न भवति समानकर्म्मकताभावात् अकर्म्म
कत्वाद्युधेः तेन भावे घञ् धुन्वन् कम्पयन् खे आकाशे पक्षयोर्विता
नं सर्व्वपथीनं सर्व्वः पन्था इति पूर्व्वकालेत्यादिना सः ऋक्पूरिति
समासान्तोऽकारः सर्व्वपथान् व्याप्नोतीति तत्सर्व्वादेरित्यादिना
खः मांसशोणितसन्दर्शं कात्स्न्येन मांसं शोणितञ्च दृष्ट्वा कर्म्मणि
दृशिविदोः साकल्य इति णमुल् अमैवाव्ययेनेति सः ॥ १०१ ॥

अथ प्रकीर्णकाः । धुन्वन्नित्यादि । असौ जटायुः खे आकाशे भ॰
पक्षयोर्व्वितानं विस्तारं धुन्वन् कम्पयन् मांसशोणितसन्दर्शं यथा
स्यात् तुण्डघातं यथा स्यात् तथा अयुध्यत युध्यीङ् युद्धे मांसरक्त
योरर्थाद्रावणस्य सम्यग्दर्शो दर्शनं यत्र तुण्डस्याघातो यत्र चेति
युद्धक्रियाविशेषणं दर्शघातौ घञन्तौ परे तु साकल्येन मांसं शो
णितञ्च दृष्ट्वा रावणस्येत्यर्थात् दृशेर्णमुल् साकल्ये एवं तुण्डेन हत्वा
तुण्डघातं तृतीयान्तादाघन्तौ णमुल् तुण्डघातेन युद्धसम्भवादा

सक्तिरत्र गम्यतइत्याह: वितानं कीदृशं सर्व्वस्वामी पन्थाश्चेति सर्व्वपथ: पथ्यप्युरःसे इति अः सर्व्वपथं व्याप्नोतीति ढधेकादिति ईनः ॥ १०१ ॥

न विभाय न जिह्राय न चक्राम न विव्यथे। आघ्ना नोविध्यमानोऽपि रणान्निववृते न च ॥ १०२ ॥

ज०म० नवि। आघ्नानः पक्षौ प्रहरन् आङोयमहनइति तङ् न विभाय न भीतः तस्मान्न जिह्राय न लज्जितः सम्यङ्मया न हत इति न चक्राम न क्रान्तः न विव्यथे व्यथोलिटीति सम्प्रसारणम् जितश्रमत्वात् विध्यमानोवा वाशब्दश्चार्थे परेण हन्यमानस्य न विव्यथे न पीडां भेजे सत्वाधिकत्वात् रणाच्च न निववृते न निवृत्तः अभग्नोत्साहत्वात् ॥ १०२ ॥

भ० नवीत्यादि। असौ पक्षौ आघ्नानः प्रहरन् न विभाय न भीतः मया ताडितोऽपि न मृतइति न जिह्राय न लज्जते स्म न चक्राम नासमर्थोबभूव न विव्यथे न पीडिता भवति स्म विध्यमानः परेण ताड्यमानोऽपि रणात् न निववृते न निवृत्तः अभग्नोत्साहत्वात् सर्व्वत्र ठो व्ययेस्तु व्यथयतीति जिः आघ्नानइति आत्माङ्कडादङ्वाहनयमइति सं किम्वा आघ्नानः प्रनुर्हिंसनप्रक्षः सक्रियमत्वाच्छोर्न्य इति शानः ॥ १०२ ॥

पिशाचमुखधौरेयं सच्छत्रकवचं रथं। युधि कद्रयवद्दीमं वभञ्ज ध्वजशालिनं ॥ १०३ ॥

एते प्रकीर्णकाः।

पिशा। युधि सङ्ग्रामे पक्षी रथं बभञ्ज भग्नवान् तस्य पुष्पका अ० म०
द्न्यत्वात् तथाहि कद्रथवत् कुत्सितरथमिव रथवदयोश्चेति
कदादेशः धुरं वहन्ति धौरेयाअश्वाः धुरोयड्ढञौ पिशाच
स्येव मुखं येषान्ते धौरेयायत्र रथं तम्पिशाचमुखधौरेयं सच्छो
भनं शस्त्रञ्चकवचञ्च यस्मिन् तम्भीमभयानकन्तथा धुर्य्यत्वात् ध्वज
शालिनं ध्वजवन्तं शालिन्छब्दः किन्प्रत्ययान्तस्तदन्तमाह अन्य
स्त्वाह ध्वजेन शालितुं श्लाघयितुं शीलमस्येति णिनिः अनेकार्थ
त्वाद्धातूनामिति। एते प्रकीर्णकाः।॥ १०२॥

पिशाचेत्यादि। जटायुः युधि संग्रामे रावणस्य रथं बभञ्ज भ०
कद्रथवत् कुत्सितरथमिव कत्कचत्रिरथवदइति कुशब्दस्य क
दादेशः कीदृशः पिशाचस्येव मुखं येषां तेऽश्वाधौरेयायत्र
धुरं वहतीत्यर्थे ढधेकादिति ष्णेयः सत् शोभनं विद्यमानं वा
छत्रं कवचं वा यस्मिन् छत्रकवचाभ्यां सह रथं बभञ्जेत्यर्थोवा
भीमं भयानकं ध्वजशालिनं ध्वजयुक्तं शालिन्छब्दस्तद्वत्तायां
अस्त्यर्थे शालिन् प्रत्ययइति वृद्धाः ध्वजेन शलते शोभते यद्वादि
त्वाणिन् धातूनामनेकार्थत्वात् शालिरच दीप्त्यर्थइति केचित्
ध्वजेन शाडयितुं शीलं यस्येति डलयोरैक्यमिति स्मरणात् शाडृ
श्लाघायामित्यस्य रूपमित्यपरे शलङ्कश्लाघइत्यस्मात् डशालृ
कथनेइत्यस्मादा णिनिरिति केचित्। इति प्रकीर्णकाः॥ १०२॥

## अतःपरं आमधिकारः।

संत्रासयाञ्चकारारिं सुरान् पिप्राय पश्यतः। संत्याजयाञ्चकाराथ सीतां विंशतिबाहुना॥ १०४॥

ज०म० इतःप्रभृत्याममधिकृत्याह सन्त्रा। अथैतस्मिन्युद्धप्रस्तावे स पक्षी सीतां विंशतिबाहुना रावणेन त्याजयाञ्चकार त्याजितवान् गत्यादिषु त्यजेरमङ्गृहात् हतोयैव भवति कस्मात्त्याजितवानित्याह सन्त्रासयाञ्चकारारिं यस्मादरिं रावणन्त्रासितवान् अकर्म्मकत्वात् त्रासेर्ण्यन्तावस्थायामरेः कर्म्मत्वम् आभ्यां हेतुमण्यन्ताभ्याम् कास्प्रत्ययादित्यादिना आम् आमोऽमित्वम व्यदन्तत्वात् आमइति लेर्लुक् अयामन्तेत्यादिना ण्यादेशः आमकारान्तस्य कृत्संज्ञायां प्रातिपदिकत्वे प्रथमैकवचनम् तस्मायादिति लुक् स्वरादिषु आमश्रमिति पठितत्वादव्ययत्वम् मन्तस्यानभिव्यक्तपदार्थत्वात् कृञ्चानुप्रयुज्यतइत्यादिना लिट् परस्य कृञोऽनुप्रयोगः कर्त्रभिप्रायाभावाभावेऽनुप्रयोगे तङ् न भवति सुरांश्च पश्यतोयुद्धञ्जटायुः पिप्राय प्रीणितवान् शत्रुत्रासनं सीतात्याजनञ्च देवानाम्प्रीतेः कारणम्॥ १०४॥

भ० अथामधिकारः। संत्रेत्यादि स पक्षी अरिं रावणं सम्यक् त्रासयाञ्चकार अतएव पश्यतोयुद्धमवलोकयतः सुरान् देवान् पिप्राय प्रीणितवान् अथ त्रासानन्तरं विंशतिबाहुना रावणेन सीतां संत्याजयाञ्चकार त्यजेर्णौऽणौत्रेरित्यस्य विषयाभावात् प्रयोज्यकर्त्तरि तृतीया णेरकर्म्मकत्वात् प्रयोज्यकर्त्तुः कर्म्मत्वं उभयत्र प्रत्ययान्तत्वात् ञ्जिसादीत्याम् भस्कृञ्चामइति कृञो

ऽनुप्रयोगः म्नोर्नुरित्यनुस्वारः अपेञ्जमनोरिति ञः अत्र विरा मस्त्रीकारात् अनुस्वारस्य वर्गान्तो वा भवतीति कालापाः पिप्रा यंति अनेकाचधातोराम् नलेकाचहत्युपन्यस्तं त्रिंशतिवाङ्गना इति साभिप्रायपदेन रावणस्य चासाधिक्यं जटायोर्व्वीर्य्याधिक्य ञ्च सूचितं ॥ १०४ ॥

असीतो रावणः कामाञ्चक्रे शस्त्रैर्निराकुलः। भूय स्तं वेभिदाञ्चक्रे नखतुण्डायुधः खगः॥ १०५ ॥

असी। असीतः परित्यक्तसीतोरावणः आकाशस्थः कासाञ्चक्रे जं०म० कुत्सितमभिहितवान् एह्येहीति विहगाधिपेति कासृशब्दकुत्सा यामित्यनुदात्तेत्कासित्यादिना आम् शस्त्रैः इत्यम्भूते तृतीया निराकुलः पूर्व्वम्बाङ्गभिः सीताग्रहणे व्याकुलत्वात् भूयः पुनरपि खगः पक्षी डप्रकरणे अन्येष्वपि दृश्यतइति वचनात् गमेर्डः तन्नि शाचरं वेभिदाञ्चक्रे अत्यर्थम्भिन्नवान् वेभिद्यतेर्यङन्तादाम् नख तुण्डान्येवायुधानि यस्य ॥ १०५ ॥

असीत्यादि। असीतस्त्यक्तसीतोरावणः आकुलः सन् शस्त्रैः भ० कामाञ्चक्रे शुशुभे कासृशब्दे धातूनामनेकार्थत्वात् अत्र दीप्त्यर्थः दीप्त्यर्थोऽपि दन्त्यान्तकासृङ्धातुरस्तीति केचित् यद्वा पक्षिणं प्रति एहि एहि खगाधम आस्वसीत्यादि कुत्सितशब्दं कृतवान् अस्मिन् पक्षे शस्त्रैरिति विशेषणे तृतीया दरिद्राकाशका सेति पक्षे आम् पूर्व्वं सीताग्रहणे व्याकुलः सम्प्रत्यनाकुलः भूयः पुनरपि खगः पक्षी तं रावणं वेभिदाञ्चक्रे अत्यर्थं भिनत्ति स्म

कीदृशः नखतुण्डप्रहरणः भिरेर्मूचद्यद्युद्पाटेत्यादिना यङ् प्रत्ययान्तत्वात् ञ्जिजादीत्यादिना आम् यङोलुक् यङ्लुकचलोपे अरेनणत्री इति निषेधात् न गुणः ञ्जिजादीत्यादौ यामिति विषये सन्नमोतेन यङ्लुकि परस्मैपदविषये इत्यभयपदित्वात् आत्मनेपदवदनुप्रयोगः खे गच्छतीति इनजनादिति डः ॥ १०५ ॥

हन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परं। न वा पलायाञ्चक्रे विर्दयाञ्चक्रे न राक्षसः ॥ १०६ ॥

ज०म० हन्तुम्। तौ पक्षिरावणौ क्रोधवशात् क्रोधाधीनतया परस्परमन्योन्यं हन्तुमीहाञ्चक्राते चेष्टाङ्कृतवन्तौ इजादेरित्यादिना आम् विः पक्षी जनिघसिभ्यामित्यधिकृत्य वेञोडिदित्यौणादिक इक् नवा नैव वाशब्द एवार्थे पलायाञ्चक्रे पलायितः उपसर्गस्यायताविति लत्वम् राक्षसश्च न दयाञ्चक्रे न दयते स्म पक्षिणञ्चाहं कथं व्यापादयामीति उभयत्रापि दयायासश्चेत्याम् ॥ १०६ ॥

भ० हन्तुमित्यादि। तौ पक्षिरावणौ क्रोधवशात् क्रोधाधीनतया परस्परमन्योन्यं हन्तुमीहाञ्चक्राते ईहङ् चेष्टे परस्परं व्यतिलुनन्तीत्युदाहरता व्यतीहारे परस्परशब्दोमनीषादित्वान्निपातित इति सूचितं विः पक्षी न पलायते स्म राक्षसोऽपि हन्तुं नदयां कृतवान् सर्व्वत्र ञ्जिजादीत्याम् पलायाञ्चक्र इति परापूर्व्वस्यायधातोः रूपं रेफस्य लत्वं मनीषादित्वात् मामाङ्नञ् नहिनोनवा इत्येते प्रतिषेधार्थाः एवार्थे अत्र वाशब्द इत्यन्ये ॥ १०६ ॥

उपासाञ्चक्रिरे द्रष्टुं देवगन्धर्व्वकिन्नराः। छलेन पक्षौ लालूयाञ्चक्रे क्रव्यात् पतत्त्रिणः॥ १०७॥

उपा। देवगन्धर्व्वकिन्नरा द्रष्टुं युद्धमुपह्यामइति उपासा ञ्चक्रिरे उपगताः पूर्व्ववदाम् क्रव्यात् रावणः क्रव्यमांसमत्तीति क्रव्यात् अदोनन्नइति विट् पतत्त्रिणः पक्षिणः पक्षौ लालूया ञ्चक्रे अत्यर्थं लूनवान् यङ्प्रत्ययान्तत्वादाम् छलेन मायया प्रसह्य जेतुन्न शक्यनइति भग्नेनेति पाठान्तरम्॥ १०७॥ ज०म०

उपेत्यादि। देवागन्धर्व्वाः किन्नराश्च द्रष्टुमर्थात् युद्धं उ पासाञ्चक्रिरे उपगताः आसङ्उपवेशे व्विजादीत्याम् दीव्य तीति देवः पचादित्वादन् गानं धर्म्मोऽस्येति गन्धर्व्वो मनीषादिः नराकृतित्वात् कुत्सितोनरः किन्नरः ईषदर्थे किंशब्दइत्यन्ये क्रव्याद्रावणः छलेन कपटेन पतत्त्रिणः पक्षिणः पक्षौ लोलूया ञ्चक्रे अत्यर्थं चिच्छेद त्यान्तत्वादाम् क्रव्यं मांसमत्तीति क्विप् ॥ १०७॥ भ०

प्रलुठितमवनौ विलोक्य छत्तं दशवदनः खचरोत्तमं प्रहृष्यन्। रथवरमधिरुह्य भीमधुर्य्यं स्वपुरमगात् परिगृह्य रामकान्तां॥ १०८॥

इति भट्टिकाव्ये पञ्चमः सर्गः॥

प्रलुठितमित्यादि। खचराः पक्षिणः खे चरन्तीति अधिकरणे ज०

चरेष्ठः तेषामुत्तमं जटायुं छत्तं छिन्नं लूनपचत्वात् अवनौ भुवि प्रलुठितं विलोक्य प्रहृष्यन् हर्षं प्राप्नुवन् निवृत्तोविप्रकारीति दशाननोरथवरं स्मरणात् प्राप्तं पुष्पकाख्यमारुह्य भीमधृर्य्यं रामकान्तां सीतां तथैव परिगृह्य स्वपुरमगात् गतवान् ॥ १०८ ॥

इति जयमंगलाख्यायां पंचमः सर्गः ॥

भ० विलुठितमित्यादि। छत्तं छिन्नं लूनपचत्वात् अवनौ भूमौ विलुठितं पतितं खचरोत्तमं जटायुं विलोक्य प्रहृष्यन् हृष्टोभवन् रावणोरथवरं अधिरुह्य रामकान्तां सीतां परिगृह्य स्वपुरं लङ्कां अगात् गतः रथानां वरः श्रेष्ठः पुष्पकाख्यः स्मरणादुपागतः तं कीदृशं भीमाधृर्य्यां अश्वायत्र धुरं वहतीति ढधकादिति यः ॥ १०८ ॥

इति गौराङ्गमल्लिकात्मजश्रीभरतमल्लिकविरचितायां मुग्धबोधिन्यां भट्टिटीकायां सीताहरणंनाम मिश्रकः पञ्चमः सर्गः ॥

आपांचकार कामाग्निर्दशवक्त्रमहर्निशं। विदांचकार वैदेहीं रामादन्यनिरुत्सुकां ॥ १ ॥

ज०म० अत्राधिकारस्यापरिसमाप्तत्वात्तमेव विवृत्याह ॥ आपांचकारेत्यादि अथ शब्दोवक्ष्यमाणतृतीयश्लोके यः सोऽत्र द्रष्टव्यः अथ तस्मिन् सीतापरिग्रहे जाते कामाग्निः कामोऽग्निरिव दशवक्त्रं दशाननमापांचकार ददाह उपदाहे उषविदेत्याम् अहर्निशं अहश्च निशा च सर्व्वाद्वन्द्वोविभाषैकवद्भवतीत्येकवद्भावादत्यन्तसंयोगे द्वितीया अकारेणानकारस्य रोऽसुपीति रत्वं कस्माद्ददाह

इत्याह रावणो वैदेहीमन्यनिरुत्सुकां रामादन्यस्मिन् सर्व्वत्र निरभिलाषां विदाञ्चकार अगुणत्वं विदेस्तथेति विदेरगुणत्वात् गुणभावः ॥ १ ॥

ओषामित्यादि। अत्रापि स एवाधिकारः अपरिसमाप्तत्वात् कामोऽग्निरिव दशवक्त्रं रावणं अहर्निशं ओषाञ्चकार उषदाहे दरिद्राकासकासेति पक्षे आम् अहश्च निशा च इति समाहार द्वन्द्वः सदाश्वादीति द्वौ दशवक्त्रपदन्यासेन विंशत्या नेत्रैरेकदैव सीतासौन्दर्य्यातिशयविलोकनात् कामपीडानिर्भरत्वं द्योत्यते वैदेहीं रामादन्यस्मिन् सर्व्वत्र निरुत्सुकां निरभिलाषां विदाञ्चकार ज्ञातवान् उषाम्बायामिति वेत्तेर्डाम् ङित्वान्न गुणः ॥ १ ॥ भ॰

प्रजागराञ्चकारारेरीहास्वनिशमादरात्। प्रविभयाञ्चकारासौ काकुत्स्थादभिशङ्कितः ॥ २ ॥

प्रजागराञ्चकारेत्यादि। अरेरामस्य ईहासु चेष्टासु गुरौश्च इत्यकारः आदरादादरेण प्रजागराञ्चकार जागरितवान् शत्रुचिकीर्षितज्ञानपरोऽबभूवेत्यर्थः पूर्व्ववदाम् अनिशमिति निशाक्रियाविच्छेदोनास्ति यस्मिन् प्रजागरणइति निशेति क्रियाविच्छेदोपलक्षणं प्रायेण हि निशायामपि क्रियाणां प्रवर्त्तनं किमिति जागरितवानित्याह काकुत्स्थादसौ प्रविभयांचकार प्रभीतवान् भीह्रीत्यादिनाम् श्लुवत् कार्य्ये धातोर्गुणायादेशौ अभिशङ्कितः किमियं करिष्यतीति ॥ २ ॥ ज॰म॰

भ० प्रजेत्यादि। असौ रावणोऽरेरामस्य ईहासु चेष्टितेषु अनि-निरन्तरं प्रजागराञ्चकार सावधानोबभूव आदरात् आदरं कृत्वा यदर्थं पञ्चमी हेतौ वा काकुत्स्थात् प्रविभयाञ्चकार अति भीत. ञिभीभिभीत्यां पञ्चाम्वाभीह्रीति पञ्चाम मित्यादृत्ते काद्गे रे दिः णुघेङदति गुणः स्वस्कृत्वागदति कृञनुप्रयोगः अतिशङ्कितः किमयं करिष्यतीति नानाविकल्पव्याकुलः॥ २॥

न जिह्रयाञ्चकाराथ सीतामभ्यर्थ्य तर्ज्जितः। नाप्यूर्ज्जां विभरामास वैदेह्यां प्रसितोभृशं॥ ३॥

ज०म० न जिह्रयाञ्चकारेत्यादि। सीतामभ्यर्थ्य याचित्वा न जिह्रयाञ्चकार न लज्जितः तर्ज्जितः भर्त्सितोऽपि तयैवेत्यर्थात् नाप्यूर्ज्जां बलं विभरामास धारितवान् कृञिति प्रत्याहारग्रहणादस्तेरप्यनुप्रयोगः ह्रीधातोर्गुणायादेशौ डुभृञ्‌धारणपोषणयोः उभयत्रापि पूर्व्ववदाम् सुवच कथं न धारितवान् इत्याह वैदेह्यां प्रसितः प्रसक्तः भृशमत्यर्थं॥ २॥

भ० नजीत्यादि। अथ सीतायाअन्यनिरुत्सुकलमानानन्तरं सीतामभ्यर्थ्य बहुधा अनुनीय तया तर्जितोभर्त्सितोऽपि रावणो न जिह्रयाञ्चकार ह्रीलिलज्जे ऊर्ज्जा बलमपि न विभरामास भृञिभृतिपृच्छाः उभयत्र पूर्व्ववत्पञ्चाम् पृभ्रादेर्ङिः खेरेदति भृधातोः श्लेङिः आमोऽनुप्रयोगअस्तेर्भूर्न भवतीति परः समते स्वस्कृत्वामदत्यत्र अप्रत्ययार्थ इत्यस्य ग्रहणं नलभ्यतेः यद्वा व्याकरणा

न्तरसम्बादात् अस्तेरेवानुप्रयोगः इतश्चादेरस्यासेरनुप्रयोगस्य वैयर्थ्यं भुवोऽनुप्रयोगस्याकत्वात् तेनामोऽनुप्रयोगे भूररेइत्यस्य न विषयइति बोध्यं ऊर्ज्ज्यः मेम्भात्सरोरिति अप्रत्ययः स्त्रीत्वञ्च ऊर्ज्जमिति पाठे क्विप कुतइत्याह वैदेह्या प्रसितआसक्तः तच्चिन्तया बलच्चयात्॥ ३॥

विदांकुर्व्वन्तु रामस्य वृत्तमित्यवदत् स्वकान्। रक्षांसि रक्षितुं सीतामाशिषच्च प्रयत्नवान्॥ ४॥

विदाङ्कुर्व्वन्त्वित्यादि। स्वकानात्मीयान् शुकसारणादीन् अवदद्रुक्तवान् किमित्याह रामस्य वृत्तमनुष्ठितं किमस्येहा गन्तुमुद्यमोऽस्ति न वेति विदाङ्कुर्व्वन्तु विदांकुर्व्वन्त्वित्यन्यतरस्यामिति निपातितं सीतां रक्षितुं रक्षांसि आशिषदादिष्टवान् शासेः सर्त्तीत्यङ् शासइदङ्हलोरिति शासेरुपधायाइत्वं शासिवसीति षत्वं प्रयत्नवान् प्रयत्नपरः। आमधिकारोगतः॥ ४॥ जं०म०

विदामित्यादि। रामस्य वृत्तं चेष्टितं भवन्तोविदांकुर्व्वन्तु जानन्तु इति स्वकान् आत्मीयान् दूतान् रावणोऽवदत् ज्ञात्वा यांग्यात्तुकाम्विति वेत्तेर्ल्लाम् ग्यां कृञनुप्रयोगएव प्रयत्नवान् सन् सीतां रक्षितुं रक्षांसि आशिषत् आदिष्टवान् चकारः समुच्चये शासु अनुशिष्टौ शासुलिदुदिति ङः शासुङ्कुषङे इति इत्वं किलात्कृतइति षत्वं। इत्यामधिकारः॥ ४॥ भ०

## अथ प्रकीर्णकाः।

रामोऽपि हतमारीचो निवर्त्स्यन् खरनादिनः। क्रोष्टून् समशृणोत् क्रूरान् रसतोऽशुभशंसिनः॥ ५॥

ज०म० अथ प्रकीर्णश्लोकानाह। राम इत्यादि। हतमारीचो रामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् वृमादिलक्षण इटि प्राप्ते न वृद्भ्य इतीण्निषेधः क्रोष्टून् शृगालान् रसतः शब्दायमानान् समशृणोत् संश्रुतवान् सकर्म्मकत्वात् समो गमीत्यात्मनेपदं न भवति लङि रूपं क्रूरान् भीषणान् यतः खरनादिनः खरं वदन्ति कर्त्तरीति णिनिः अशुभशंसिनः अनिष्टसूचनशीलान्॥ ५॥

भ० अथ प्रकीर्णकाः। राम इत्यादि। हतो मारीचो येन स रामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् रसतः शब्दं कुर्व्वतः क्रोष्टून् शृगालान् समशृणोत क्रोष्टूनां शब्दं शृणोति स्मेत्यर्थः रसत इति तद्विशेषणात् तथाचोक्तं सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति यद्यपि शब्द एव श्रूयते न तु शृगालः तथापि शृगालस्यायं शब्द इति ज्ञाने शृगालोऽपि विषय इति तस्यापि ज्ञानकर्म्मत्वमविवादं औपचारिकोऽयं प्रयोग इत्यन्ये अनेकार्थत्वात् शृणोतिरिह दर्शनार्थ इति केचित् वृद्भ्यो नेम्स्यसनोरिति वृतेरिण्निषेधः षे ततएव षं खरनादिनो गर्द्दभवत् नदतः ग्रहादित्वात् णिन् कर्त्तर्य्युपमानउपपदे णिन्निति परः अतएवाशुभशंसिनः अशुभं शंसितुं सूचयितुं शीलं येषामिति ताच्छील्ये णिन्निति परः स्वमते ग्रहादित्वात् अतएव क्रूरान् भयदान्। अपि सम्भावनाप्रश्नशब्दगर्हासमुच्चये। तथा युक्तपदार्थेषु कामचार क्रियासु चेति विश्वः॥ ५॥

आशङ्कमानोवैदेहीं खादितां निहतां मृतां। सशत्रुघ्नस्य सोदर्य्यं दूरादायान्तमैक्षत॥ ६॥

आशङ्कमानइत्यादि। तथाविधाशुभश्रवणादाशङ्कमानोवितर्कयन् वैदेहीं किं खादितां निशाचरादिना ततः निहतां त्यक्तप्राणां अहो स्वयमेवायुःक्षयान्मृतां वा स रामः शत्रुघ्नस्य सोदर्य्यं भ्रातरं सोदराद्यः आयान्तमागच्छन्तमारादैक्षत दृष्टवान् ईक्षेर्लुङि॥ ६॥ जं॰म॰

आशङ्केत्यादि। अमङ्गलश्रवणात् वैदेहीं राक्षसादिभिर्भक्षितां शृगालादिभिर्वा निहतां स्वयमेवायुःक्षयात् मृतां वा आशङ्कमानस्तर्कयन् रामः शत्रुघ्नस्य सोदर्य्यं लक्ष्मणं आयान्तं आराद्दूरादैक्षत ईक्षेर्लुङ् समानउदरे स्थितः सोदर्य्यः सयेकादिति यः रूपनामगोत्रेत्यादिना पक्षे समानस्य सः कनिष्ठभ्रातृसम्बन्धोक्तत्वेन लक्ष्मणस्यापकर्षः सूचितः स्त्रीवचनेन त्यक्तधैर्य्यत्वात् आराद्दूरसमीपयोः॥६॥ भ॰

सीतां सौमित्रिणा त्यक्तां सध्रीचीं वसुमेकिकां। विज्ञायामंस्त काकुत्स्थः क्षये क्षेमं सुदुर्लभं॥ ७॥

एते प्रकीर्णकाः।

सीतामित्यादि। सौमित्रेरेकाकिनोदृष्टत्वान्नियतममेन त्यक्तेति तां विज्ञाय ज्ञात्वा काकुत्स्थोरामः क्षये गृहे क्षीयतेऽस्मिन्निति अधिकरणेऽच् क्षेमं कल्याणं सुदुर्लभं सुदुःखेन लभ्यतइति ईषदित्यादिना खल् अमंस्त ज्ञातवान् कथं क्षये क्षेमं सुदुर्लभ जं॰म

मिति आह सध्रीचीं सहचारिणीं न कचिदेकाकिनीं तिष्ठन्तीं सहाञ्चतीति ऋत्विगादिना क्विन् सहस्य सध्रिरित्यञ्चतौ वप्रत्यये सहस्य सध्रादेशः अञ्चतेश्चोपसंख्यानमिति ङीप् अच इत्यकार लोपः चाविति दीर्घः कुतः चलां चमनशीलां क्रियाशब्दत्वादृङ् न भवति एकिकां लक्षणेन त्यक्तत्वात् एकादाकिनिचचासहाये इति चकारात्कन् प्रत्ययस्यादितोत्वं। एते प्रकीर्णकाः॥७॥

भ० सीतामित्यादि। सौमित्रिणा त्यक्तां अतएव एकिकां सीतां विज्ञाय काकुत्स्थः स्वयं निवासे क्षेमं कुशलं सुदुर्लभं अमंस्त एकाकिनोलक्षणस्यागमनात् तद्योगस्थानेऽपि कुतः क्षेमं सुदुर्लभमित्याह चलामिति तां कोट्टशीं चलां चामशीलां चिपनसंतिकः तथा च चामा स्मृतेति सम्भाव्यते अतएव सध्रीचीं सदा सहचरीं न कचिदेकाकिनीं तिष्ठन्तीं सहाञ्चतीति क्विपिसहसन्त्रिरःसध्रिसमिति रोति सहस्य सध्रिःअचाञ्चतेर्गत्यर्थत्वात् नेदित्पूजार्थाञ्चोरित्यस्य विषयाभावात् कमुङलोपोऽणाविति नकारलोपःद्विग्रङ्चाह इति ईप् अचोऽस्रोपोर्घस्वेति अकारलोप निमित्ताभावात् यत्न निवृत्तौ इकारस्य दीर्घः एकादाकिनकावसहाये इति परः खमते विकारसंघेत्यादिना असहाये स्वार्थे वा कः स्त्रियामाप् काप्यनाशीरके इति इत्वं चीयतेऽस्मिन्निति अन् चिनिवासगत्योः चये ऽपचयकाले इत्यर्थोवा। चयोरीगाक्षरं वेशकल्पाल्पापचयेष्वपीति विश्वः। एते प्रकीर्णकाः॥७॥

अतःपरं दुहादिः।

सोऽपृच्छल्लक्ष्मणं सीतां याचमानः शिवं सुरान्।
रामं यथास्थितं सर्व्वं भ्राता ब्रूतेस्म विक्लवः॥ ८॥

अतोद्विकर्म्मोधिकारः। सोऽपृच्छदित्यादि अकथितं चेत्यत्र ज॰म॰
दुहियाचीत्यादिश्लोकस्थान् धातून् प्रयुङ्क्ते कविः तत्र रामोऽपृ
च्छत् सीतामिति प्रधानं कर्म्म लक्ष्मणमित्यकथितं कर्म्म याचमानः
प्रार्थयमानः शिवं कल्याणं अर्थात्सीतायाः शिवं प्रधानं कर्म्म सु
रान् देवान् इत्यकथितं कर्म्म भ्राता लक्ष्मणः सर्व्वं यथावत् स्थितं
ब्रूतेस्म उक्तवान् सर्व्वमिति प्रधानं कर्म्म राममित्यकथितं॥ ८॥
अथ द्विकर्म्मकप्रकरणं। सइत्यादि। सरामः सीतां लक्ष्मणं भ॰
अपृच्छत् दुहादेः कर्म्म हेतुः कर्म्मेति परः स्वमते याच्ञार्थेत्या
दीनां स्वभावादिकर्म्मकत्वमुक्तं कर्म्मद्वयन्तु तात्पर्य्यलभ्यमेव सीता
मिति प्रधानं कर्म्म लक्ष्मणस्य हेतुत्वमर्थाल्लभ्यतएव तेनाच न ल
क्ष्मणमिति कीदृशोरामः सुरान् शिवं याचमानः दातुं प्रेरयन्
अर्थात् सीतायाः शिवमिति प्रधानं कर्म्म भ्राता लक्ष्मणोविक्लवोवि
क्लवः सन् सर्व्वं यथास्थितं सीताप्रेरणादिकं रामं उक्तवान् वचने
न बोधितवान् राममिति हेतुकर्म्म॥ ८॥

सन्दृश्य शरणं शून्यं भिक्षमाणोवनं प्रियां। प्रा
णान् दुहन्निवात्मानं शोकं चित्तमवारुधत्॥ ९॥

ज॰म॰ संदृश्येत्यादि। रामः शरणं गृहं शून्यं संदृश्य दृष्ट्वा शोकं चित्तमशाययत् चित्तं शोकं प्रावेशयत् कीदृशः प्रियां जानकीं वनं ह्रियमाणः प्राणान् दुहन्निव त्यजन्निव प्राणानिति प्रधानं कर्म आत्मानमित्यकथितं आत्मनः प्राणान् त्यजन्निव ॥ ९ ॥

भ॰ संदृश्येत्यादि। रामः शरणं गृहं शून्यं संदृश्य शोकं चित्त मशाययत् शोकमन्तः स्थापयित्वा चित्तमपावृणोत् शोकं प्रावेश यदिति वार्थः रुधिराज्ञ्याकृतौ इरित्वात् शासुलिग्घुदिति पचे ङ. कीदृशः प्रियां सीतां वनं भिद्यमाणः दातुं प्रेरयन् प्रियामिति प्रधानं कर्म आत्मानं प्राणान् दुहन्निव मोचयन्निव आत्मानमि ति कर्मान्तरं ॥ ९ ॥

गता स्यादवचिन्वाना कुसुमान्याश्रमद्रुमान्। आ यत्र तापसान् धर्म्मं सुतीक्ष्णः शास्ति तत्र सा ॥ १० ॥

इति दुहादिर्द्विकर्म्मकः।

ज॰म॰ गतेत्यादि। यत्र यस्मिंस्तपोवने सुतीक्ष्णोनाम ऋषिः धर्म्मं शास्ति शिक्षयति धर्म्ममिति प्रधानं कर्म्म तापसानित्यकथितं तत्र तपोवनं गता स्यात् सम्भावने लिङ् आकारोनिपातः स्मरणे किं कुर्व्वती कुसुमान्यवचिन्वाना कुसुमानीति प्रधानं कर्म्म आश्र मद्रुमानित्यकथितं अवचिन्वानेति चिनोतेः कर्त्रभिप्राये तङ्। दुह्यादिदण्डकोगतः। ॥ १० ॥

भ॰ गतेत्यादि। वक्ष्येवं विललाप सइति वक्ष्यमाणश्लोकेनान्वयः यत्र सुतीक्ष्णोमुनिस्तापसान् धर्म्मं शास्ति तत्र सा गता स्यात् सम्भावने स्त्री लोपोऽस्त्योरिति अस्तेरकारलोपः किं कुर्व्वती

आश्वमद्रमान् कुसुमानि अवचिन्वाना द्रुमान् विघट्टयन्ती पुष्पाण्यादाना आ इत्यव्ययशब्दः स्मरणार्थे प्रयुज्यते यदुक्तं मर्य्यादायामभिविधौ क्रियायोगेषदर्थयोः। यत्राकारः स ङित्प्रोक्तो वाक्यस्मरणयोरङिदिति। आमिति क्वचित् पाठः सोऽपि स्मरणार्थ एव। इति द्विकर्म्मकाः॥ १०॥

## अतः परं प्रकीर्णकाः।

आः कष्टं वत ही चित्रं हूं मातर्दैवतानि धिक्।
हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः॥ ११॥

प्रकीर्णकानाह। आः कष्टमित्यादि। शोकेनाक्रान्तमना विललाप जं॰म॰ आह आः पीड़ायां पितृवियोगपीड़ितः आः इत्याह अस्मद्वियोगेन पिता प्राणांस्त्यक्तवानित्यभिप्रायः कष्टमित्याह कष्टं कृच्छ्रं भर्त्तृमरणादस्मद्वियोगाच्च मातुः कावस्थेत्यभिप्रायेणाह वत इति वतशब्दः खेदे सौमित्रिरपि तया सीतया अन्याहृशः सम्भावित इति विस्मितो हीत्याह हिशब्दो विस्मये यदि नाम स्त्रिया मूर्खतया तथाभिहितं सौमित्रिणा विदुषा कथं तादृशः शापो दत्त इत्यभिप्रायेणाह चित्रमिति चित्रमाश्चर्य्ये यदेवंविधोऽपि स्खलतीति सर्व्वमेव दुर्जातं कैकेयीप्रभवमिति क्रुध्यन् हूं मातरित्याह हूंशब्दः क्रोधे अथवा सर्व्वमेतत् दैवचेष्टितं न ममानुष्ठितमित्यभिप्रायेणाह धिग्दैवतानीति धिक् कुत्सायां अविज्ञाय चक्षुषा प्राणांस्त्यक्तवन्तं पितरं पुनरहं द्रष्टास्मीत्यभिप्रायेणाह हा पितः अत्र द्रष्ट

थ्योऽसीति हा शोके हे सीते क गतासीति भृशब्दात् प्रापिजातेरि त्यादिनोङ् उवर्णान्तमात्रस्य विधानादङ् ओरिः उपसर्जनत्वञ्च पुनः स्त्रियामुङ् अन्तादिवच्चेति पूर्व्वं प्रत्ययान्तवत्वात् प्रातिपदि कत्वं अतः सम्बुद्धौ ह्रस्वत्वं विलल।प स एवं कृत्वा बहुनेकप्रकारं विलापं कृतवान्॥ ११॥

भ॰ अथ प्रकीर्णकाः। आर्त्तेत्यादि। सीतावियोगेन पूर्व्वदुःखस्मर णात् पितृवियोगपीडितः प्राह आर्त्तेति आर्त्तः स्यात् कापपीडयाः मद्वियोगेन पिता प्राणान् जहावित्यभिप्रायेणाह कष्टमिति कष्टं कृच्छ्रं पतिमरणान्मद्वियोगाच्च मातुः कावस्था इत्यत आह वर्त्तेति खेदद्योतकोऽयं वतशब्दः लक्ष्मणोऽपि सीतया अन्यथा सम्भावि तइति विस्मितः प्राह हीति ही विस्मयविषादयोः यद्यपि स्त्रीत्वा न्मौर्ख्येण तया तथाभिहितं तथापि लक्ष्मणेन तादृशः शापादा तुमनुचितइत्यभिप्रायेणाह चित्रमिति चित्रमाश्चर्य्यं सर्व्वमिदं कैकेयीप्रभवमिति रोषादाह हूं मातरिति हूंशब्दः क्रोधे भर्त्सने वा तथाविधायामातुरपीदृशोऽकस्मात् मतिविपर्य्ययो दैवकृतए वेत्यत आह दैवतानि धिगिति धिक्शब्दो निन्दाभर्त्सनयोः अविमृ श्यत्वादिति भावः पितुर्व्वाक्यादीदृशं दुःखमनुभवन्नहं पित्रा न ज्ञायते नवा पितृदर्शनेन विना ममैतद्दुःखं व्यपगमिष्यतीत्याह हा पितरिति हा विषादशुग्गर्त्तिषु धिक्ममयेत्यादिसूत्रस्य षष्ठ्य पवादत्वान्नात्र तद्विषयः सामान्येन हाशब्दं प्रयुज्य पश्चात् पितृ सम्बोधनमतोन द्वितीयेति दुर्गः वस्तुतस्तु हाशब्दवाच्यं दुःखं स्वविषयमेव पितृशब्देन तस्य सम्बन्धाभावः कथं द्वितीयया भवि तव्यं एतत् सकलदुःखं यत्सङ्गत्या विस्मर्त्तव्यं सापि नास्तीत्याह

येनाह हे सुभ्रु क्वासीति कोपेऽपि भूपारथं मासीति सुभ्रुपदस्या भिप्रायः एवं स्मृत्वा सरामोवहुप्रकारं विलापं कृतवान् शोभने भ्रुवौ यस्याः तस्याः सम्बोधनं सुभ्रूरिदोति ह्रस्वः ॥ ११ ॥

इहासिष्टाशयिष्टेह सा सखेलमितोऽगमत्। अम्लासीत् संस्मरन्नित्थं मैथिल्याभरताग्रजः ॥ १२ ॥

इहेत्यादि। इह प्रदेशे आसिष्ट उपविष्टा इदमोहः इदम इश् इह अशयिष्ट शयितवती आसेः शीङश्च लुङ् सखेलं सलीलं इतः प्रदेशादगमत् गतवती इत्थमेवंप्रकारं मैथिल्याः स्मरन् अधीगर्थेति कर्म्मणि षष्ठी भरताग्रजोरामोऽम्लासीत् ग्लानिङ्गतः ग्लायतेर्लुङ् यमरमेति सगिटौ ॥ १२ ॥ ज० भ०

इहेत्यादि। अत्र प्रदेशे सा सीता आसिष्ट शिलासङ्उपवेशे अशायिष्ट उभयत्र टौमं इतः सकाशात् सखेलं सलीलं अगमत् लृदित्वात् ङः इत्थमेवंप्रकारेण मैथिल्याः संस्मरन् भरताग्रजोरामोऽम्लासीत् यमरमेति इमसनौ मैथिल्याइति ढंचसीति कर्म्मणि षष्ठी ढघेक्षतीत्यादिना शतुर्योगे षष्ठ्याः प्रतिषेधेऽपि नञानिर्द्दिष्टस्यानित्यत्वाद्वा कर्म्मणि षष्ठी सम्बन्धविवक्षया स्मृत्यर्थयोगे कर्म्मणि वा षष्ठीति परः इह इत्यस्य कुतः क्वकुहेत्यादिना निपातितं ॥ १२ ॥ भ०

इदं नक्तान्तनं दाम पौष्पमेतद्दिवातनं। शुचेवोद्ध्य शाखायां प्रम्लायति तया विना ॥ १३ ॥

ज०म० इदमित्यादि। नक्तंतनं निशाभवं इदं दाम पुष्पमाला पुनर्द्दिवातनं दिवसभवं सायमित्यादिना ट्युट्युलौ तुट् च पौष्पं पुष्पाणामिति तस्येदमित्यण् शुचैव शोकेनैव सम्पदादिः शाखायामुद्बध्य आत्मानमित्यर्थात् प्रम्लायति ग्लानिं गच्छति ग्लायतेः श्यायाः देशः शाखायां प्रलम्बमानं ग्लानिं गच्छन्तं वाच्येदमुत्प्रेचितं कुतः शोकात्तया विना सीताविच्छेदेन॥ १३॥

भ० इदमित्यादि। इदं नक्तन्तनं रात्रिभवं पौष्पं पुष्पसम्बन्धि दाम माला इदञ्च दिवाभवं दाम तया विना शुचा शोकेन शाखायां उद्बध्य अर्थादात्मानं प्रम्लायति म्लानिं प्रयाति शाखास्थितां म्लानमाल्लां वोत्प्रेदमुत्प्रेचितं इत्येवं विललापेति व्यवहित श्लोकेनान्वयः स्मरन्नेवं मुमोह सदति वच्यमाणनवमश्लोकेन वा एवमुक्तरेष्वपि बोध्यं त्यत्राद्यचिरेत्यादिना नक्तंदिवाशब्दाभ्यां अव्ययाभ्यां तनट्॥ १३॥

ऐचिष्महि मुहुः सुप्तां यां मृताशङ्कया वयं। अकाले दुर्म्मरमहो यज्जीवामस्तया विना॥ १४॥

ज०म० ऐचिष्महीत्यादि। यां वयमैचिष्महि ईचितवन्तः ईचेः सेटो लुङ् मुहुः सुप्तां अविच्छिन्ननिद्रत्वात् मृताशङ्कयेति अनिष्टांशसित्वात् प्रियजनहृदयस्य इदानीं तया विना अहो वयं यज्जीवामस्तदकाले दुर्म्मरमिति विललाप जीवितस्यापूर्णकाले दुःखेन मरणमिति खल्॥ १४॥

ऐक्षीत्यादि। वयं सुभ्रां यां प्रियां मृता नवेत्याशङ्कया मुहु भ०
र्वारंवारं ऐक्षिष्महि ईक्षिष्यामहि अनिष्टाशंसीनि बन्धुहृदया
नीति मृताशङ्कितं एतेनानुरागातिशयः सूचितः अहो आश्चर्य्यं
यत्तया विनापि वयं जीवामस्तदस्मादकाले जीवनस्यापूर्णकाले
दुःखेन म्रियते ईषद्दुःमारिति भावे खल्॥ १४॥

## अक्षेमः परिहासोऽयं परीक्षां मा कृथामम। मत्तो मान्तर्द्धिथाः सीते मा रंस्थाजीवितेन नः॥ १५॥

## एते प्रकीर्णकाः।

अक्षेमइत्यादि। परिहसनं परिहासः क्रीडा अयमक्षेमो न ज०म०
कल्याणकरः मम परीक्षां किं मामपश्यन् दुःखमस्ति नवेति मा
कृथाः उश्चेति कित्त्वाद्गुणाभावः ह्रस्वादिति सिचोलोपः तस्माद्धे
सीते मान्तर्द्धिथाः अन्तर्हिता मा भूः अन्तर्द्धावित्यपादानसंज्ञायां
पञ्चम्यास्तसिः प्रत्ययोत्तरपदयोश्चेति मदादेशः लुङि स्थाघ्वो
रिच्चेति सिचः कित्त्वमित्वञ्च ह्रस्वादिति सिचोलोपः नोऽस्माकं
जीवितेन मा रंस्थाः क्रीडां मा कार्षीः रमेरात्मनेपदित्वात्सङ्।
एते प्रकीर्णकाः॥ १५॥

अक्षेमइत्यादि। कदाचित् परिहासेनान्तर्हिता मा भवेदि भ०
त्याशङ्क्योक्तरमिदं अयमन्तर्द्धानरूपः परिहासोऽक्षेमः अशुभः
तवादर्शनेन मम दुःखमस्ति नवेत्येवं मत्परीक्षां त्वं मा कृथाः
कृञ्स्थामि दृगुकुर्मठोत्यनिमिति सेः कित्त्वान्न गुणः ह्रस्वादिति
सिलोपः मत्तः सकाशात् मा अन्तर्द्धिथाः मत्कर्तृकदर्शनाभावे

च्छया व्यवहिता मा भूः धात्वस्यामि स्यादेर्ङिदिति ङिद्गुणलच्च पूर्व्ववत्सिलोपः यतोऽपायेति यतोऽन्तर्द्धिस्तदपादानं सर्व्वत्र हेतु माह हे सीते नोऽस्माकं जीवितेन मा रंस्थाः क्रीडां न कुरु तवादर्शनेन प्राणायास्यन्तीति भावः। इति प्रकीर्णकाः॥ १५॥

## अतः परं सिजधिकारः।

अहं न्यवधिषं भीमं राक्षसं क्रूरविक्रमं। मा घुक्षः पत्युरात्मानं मा न श्लिक्षः प्रियं प्रिये॥ १६॥

ज॰म॰ सिचं सापवादमधिकृत्याह। अहमित्यादि। यतोऽहं राक्षसं मारीचं क्रूरविक्रमं भीमं भयानकं न्यवधिषं निहतवानस्मि हन्तेर्लुङि चेति वधादेशः अदन्तत्वाद्वृद्ध्यभावः तस्मान्मा घुक्षः न गोपय पत्युरात्मानं अन्तर्द्धावित्यपादानत्वं ख्यत्यात्यरस्येत्युत्वं गुहेः सन्तदगुपधादनिटः क्सः हो ढः षढोः कः सि षत्वानि मिपश्च विसर्जनीयः मा न श्लिक्षः मा न परिरम्भाः अपितु श्लिष्य मां हे प्रिये श्लिष आलिङ्गने क्सः॥ १६॥

भ॰ अथ सापवादसिजधिकारः। स्वमते स्वधिकारः। अहमित्यादि। भीमं भीषणमूर्त्तिं क्रूरविक्रममसह्यपराक्रमं राक्षसं मारीचं अहं न्यवधिषं हतवान् हनर्लुगतौ वधे अमि अमिः हनवधष्टीति वधादेशः हमादेःमेमद्द्यादौ षधवर्ज्जनात् मेमत्व सूचनात् प्रकृत्यन्तरत्वाद्वा इम् पत्युर्भर्त्तुः सकाशात् आत्मानं त्वं मा घुक्षः न गोपय गुहञ्जसंवृतौ उदित्वादमूरिति इमोऽभावपक्षे इमभावेऽनिमिजूकदति सक् हो ढः स्वभान्तस्येति घः षढोः कः

क्लिलादिति षः हे प्रिये प्रियं मां मा न श्लिच्चः अपितु अवश्यमेव प्रियमालिङ्गय द्वौ निषेधौ सातिशयं प्रकृत्यर्थं गमयतइति न्यायात् श्लिषोऽस्थे आलिङ्गनेऽर्थे पूर्व्वेण सक्॥ १६॥

मास्म द्राचीर्मृषा दोषं भक्तां मां मातिचिक्लिशः। शैलं त्वशिश्रियद्वा मा नदीं नु प्रत्यदुद्रुवत्॥ १७॥

मास्मेत्यादि। मृषा दोषं व्यलीकं दोषं मा द्राचीः मयीत्यर्थात् स्मोत्तरे लङ्चेति चकारालुङ् मलदगुपधेति क्सस्य न दृश इति निषेधः इरितोवेत्यङ्भावे सिच् मृजिदृशोरित्यम् हलन्तलचणा वृद्धिः व्रश्चेत्यादिना षत्वं यतोऽहं भक्तस्ततोमां भक्तं मातिचिक्लिशः नातिक्लेशय क्लिशेर्ण्यन्तात् सिपि णिश्रीत्यादिना चङ्वा णिलोपः द्विर्व्वचनादिः पुनर्विकल्पयन्नाह मयि दोषदर्शनात् मत्प्रतिकूलवर्त्तिनी सती शैलं नु पर्व्वतं किमप्यशिश्रियदाश्रिता ततानदीं प्रत्यदुद्रुवत् प्रतिगतेत्यर्थः नुशब्दोवितर्के चङ्॥ १७॥ ज०म०

मास्मइत्यादि। मृषा दोषं मास्म द्राचीः अर्थान्मयि दोषदर्शनाद्वा अन्तर्हितेत्याशङ्क्य इदमुक्तं दृशेर्माश्चे मास्मेन योग्याविति टौ सन्निधौ दृशेर्वर्ज्जनात् इरितात् ङः विकल्पपचे च्यांसिः वर्द्धोऽकिदिति रत्वं अनिमन्ताद्व्रजवदेति श्रिः शक्राजेति षङ् भक्तं अनुरक्तं मां त्वं मातिचिक्लिशः नातिपीडय क्लिशेर्ञिःश्रिरखे त्रिश्रीत्यङ् द्वित्वं गुणः न्यङुङःखः ञेर्लोपः निकटे यदि तिष्ठेत्तदा मदचमादागच्छेदित्यतोऽन्यद्विकल्पयन्नाह वामेति मय्यपि दोषदर्शनात् प्रतिकूला सती शैलं किं अशिश्रियत् आश्रिता भ०

उत नद्यौ प्रत्यदद्रुतां प्रतिगता श्रिआमेवने इगतौ अनयोरङ्गि
अुध्योरिति इयुवौ नुमब्दोवितर्के॥ १७॥

ऐ वाचं देहि धैर्य्यं नस्तव हेतोरसुस्नुवत्। त्वं नो
मतिमिवाधासीर्नष्टा प्राणानिवादधः॥ १८॥

ज॰म॰ ऐवाचमित्यादि। ऐशब्दो निपातोऽभिमुखीकरणे वर्त्तते वाचं
देहि प्रार्थनायां लोट् घ्वसोरेद्धावित्येत्वं किमितिचेदाह धैर्य्यं
नोऽस्माकं धीरता तव हेतोरसुस्नुवत् गलितं नष्टा अदर्शनं गता
सती त्वन्नोऽस्माकं मतिं बुद्धिमधासीरिव बुद्धेरपाटवात् विभाषा
धेट्श्व्योरिति यदा न चङ् तदा यमरमेति सगिटौ प्राणानद
धः पीतवती कायस्याचेष्टत्वात् चङि ह्रस्वमालोपः॥ १८॥

भ॰ ऐवाचमित्यादि। ऐ सीते वाचं देहि प्रार्थनायां सी देशादौघो
र्देधेहौ तव हेतोः नोऽस्माकं धैर्य्यं असुस्नुवत् स्नुतं पूर्व्ववत् अङ्
त्वं नोऽस्माकं मतिं बुद्धिं अधासीरिव पीतवतीव बुद्धेरपाटवात्
कार्य्यान्तरासङ्क्रमात्वात्मीयं नष्टा अदर्शनं गता सती प्राणानपि
नं अदधइव पीतवतीव देहस्य निश्चेष्टत्वात् धेट्पाने पूर्व्वेण
विभाषितोऽङ् णश्चाणित्या उश्वेतीत्यालोपः अङोऽभावपक्षे
च्लः सिः यमरमेति इसमनो यमस्ता अस्तोमदति मेर्लोपः भूस्था
पिवदेनइति सेर्लुकि प्राप्ते घेशाच्छासाघइति पक्षे तदभावः
नशअदर्शने क्तः मुणरधोमुचांनशइति हतस्य नस्य इसुङ्न
लोपोऽणावित्यनेन लोपः धक्लाजेति षङ् ऐ शब्दोऽयमव्ययो

ऽभिमुखीकरणे आह्वाने वा। एऐसन्धौ तु चरैवत् मृत्यामन्त्रण इतिस्थिति विश्वः॥१८॥

रुदतोऽशिश्वियच्चक्षुरास्यं चेतोस्तवाश्वयीत्। म्रिये
ऽहं मां निरास्थश्चेन्मा न वोचश्चिकीर्षितं।१९॥

रुदतइत्यादि। तवार्थे त्वां पश्यामीति रुदतोमम चक्षुरशिश्वि जं०म०
यत् उच्छूनं आस्यं मुखं चाश्वयीत् विभाषाधेट्श्व्योरिति चङ्
णिचौ चङीयङ् ह्यन्तेति न वृद्धिः इट् इटईटीति णिचोलोपः
गुणायादेशौ मां निरास्थश्चेद्यदि मम दर्शनं निरस्तवती त्वं तदा
म्रियेऽहं म्रियतेर्लुङ्लिङोश्चेति चकाराच्छित्यात्मनेपदं रिङ्शय
गिति रिङ् अतोयत्त्वया चिकीर्षितं कर्त्तुमिष्टं तन्मा न वोचः
मा मा भाषिष्ठाः अपितु ब्रूहि अस्यतिवक्तीत्यङ् वचउम्॥१९॥
रुदइत्यादि। तवादर्शनाद्रुदतो मम चक्षुरशिश्वियत् उच्छूनं भ०
मतिरोदनात् आस्यमपि अश्वयीत् ञिश्वीत्यादिना श्वेर्विभाषि
तोऽङ् अङोऽभावपक्षे श्यासिः नेमेकाजादित्यादौ श्विजागुरि
त्युक्तेर्गुणः त्वं चेत् यदि मां निरास्थः अदर्शनेन निरस्तवती तदा
अहं म्रिये भविष्यत्सामीप्ये वर्त्तमानत्वविवक्षा मृङ्प्राणत्यागे तु
दादित्वात् शः मृङष्टोव्धेमं च्छिद्रिःशयगढौ ... श्रुश्चोरितीयः असु
क्षेपणे वक्ष्यसेति ङः व... श्विपतामिति अस्थः चिकीर्षितं कर्त्तु
मिष्टं त्वं मा न वोचः अवश्यं ब्रूहि वचेर्म्रूञोवा वचोऽरेइति
वचादेशः पूर्ब्बवत् ङः वोचादेशश्च॥१९॥

लक्ष्मणाचक्ष्व यद्याख्यत्सा किञ्चित्कोपकारणं।
दोषे प्रतिसमाधानमज्ञाते क्रियतां कथं॥ २०॥

ज०म० लक्ष्मणेत्यादि। हे लक्ष्मण यदि सा किञ्चित्कोपकारणमाख्यद्‌उक्तवती इदन्तेनाप्रियमाचरितं पूर्ब्बवदङ् तदाचक्ष्व कथय अज्ञाते दोषे प्रतिसमाधानं कथं क्रियतां नैवेति भावकर्म्मणि लोट् चिण्भावकर्म्मणोरित्यादिना चिण्॥ २०॥

भ० लक्ष्मेत्यादि। हे लक्ष्मण यदि सा सीता किञ्चित्कोपकारणं आख्यत् कथितवती तदा त्वं आचक्ष्व कथय चक्षिङः प्रार्थनायां लोट्स्य अदादित्वात् शपोलुक् स्कोः संयोगाद्योरन्ते चेति ककारलोपः षढोः कः सि क्विनादिति षः ख्याञादेशे उक्ते चक्षिङः ख्याञ् वा लिट्यस्येति अः उखयचे त्यालोपः अज्ञाते दोषे प्रतिसमाधानं तदपमार्जनार्थं कर्म्म कथं मया क्रियतां कर्त्तव्यं स्तनोर्यगिणाविति यकि कृते घोऽजय्यर इति सामान्यविधिं वाधित्वा ऋद्दिःस्रयगढी परेति विशेषविधिः रिलेऽपि पूर्ब्बवाधितत्वात् विकृतत्वाद्वा न तेन दीर्घः किम्वा यङ्यक्येचर्द्दीर्घ इत्यत्र दीर्घकरणेन ऋद्दिःस्रयगढी परेत्यनेन कृतर्दीर्घानस्यादिति ज्ञापितं यङ्यक्यं घोऽजय्य र इत्यनेन चौ अस्वावोर्घाविवत्यनेन चेष्टसिद्धेः॥ २०॥

इह सा व्यनिपद्यन्वैः स्वान्तीदाभ्यपिचज्जलैः। इष्टां इयुमाङ्कं तां स्मरन्नेवं मुमोह सः॥ २१॥

इहेत्यादि। इह प्रदेशे सा सीता गन्धैर्व्यलिपत्ममालिप्तवती जं०म०
मामात्मानञ्चेत्यर्थात् इह स्नान्तो क्रीडापूर्व्वकमभ्यषिचत् हस्त
यन्त्रमुक्तसलिलेन मामभिमुखं सिक्तवतीत्यर्थः सत्वं इह दृष्टुं
तामाक्कं आह्नतवान् लिपिसिचिह्वश्चेति ङेरङ् एवं स्मरन् मुमो
ह मोहं गतवान्॥ २१॥

इहेत्यादि। इह स्थाने सा सीता गन्धैर्व्यलिपत् मामात्मानञ्चे भ०
त्यर्थात् गन्धयन्तीति गन्धाश्चन्दनादयः त्रिलिपौश्चलेपे इह
स्नान्ती सती सा जलैः क्रीडापूर्व्वकं अभ्यषिचत् अर्थान्मां षिचप
शोऽन्चरणे शीकःस्तुस्तुभेत्यादिना अम्व्यवधानेऽपि सत्वं इह दृष्टुं
तामहं आक्कं आह्नतवान् क्लेञैस्पर्द्धे सर्व्वत्र वत्वस्येत्यादिना ङः
सरामएवं स्मरन् मुमोह मोहं गतः स्नान्तीति आदीपोरिति
विभाषितनुण्॥ २१॥

तस्यालिपत शोकाग्निः स्वान्तं काष्ठमिव ज्वलन्।
अलिप्तेवानिलः शीतोवने तं न त्वजिह्लदत्॥ २२॥

तस्येत्यादि। तस्य रामस्य स्वान्तं मनः क्षुब्धस्वान्तेत्यादिना जं०म०
निपातितं शोकाग्निः शोकोऽग्निरिव अलिपत दीपितवान् परस्मै
पदेषु लिपीत्यादिना नित्ये प्राप्ते आत्मनेपदे [illegible]तरस्यामिति
विकल्पेनाङ् स्वरितञितइति क्रियाफलविवक्षायामात्मनेपदं
काष्ठमिव स्वान्तं ज्वलन् अतिवर्त्तमानः अनिलोवायुः शीतोऽपि
सन् वने तं राममलिप्तेव दीपितवानिव अङ्भावपक्षे ञ्जलोञ्जली

ति विचोलोपः नतु नैवाजिह्लदत् ह्लादितवान् शोकाग्नेरुद्धतत्वात् ह्लदेर्ण्यन्तात्स्रिश्रीति चङ्॥ २२॥

भ० तस्येत्यादि। शोकएवाग्निर्ज्वलन् वर्द्धमानः तस्य रामस्य स्वान्तं मनः काष्ठमिवचिन्तया नीरसत्वात् अलिपत ददाह यद्यपि लेपश्चन्दनादिनोपदेहस्तथाप्यग्निना लेपोदाहएव पर्य्यवस्यति धातूनामनेकार्थत्वाद्वा शीतोऽपि अनिलः वनेतं रामं अलि..व स्पृष्टवानिव मान्द्येन सम्यगस्पर्शनात् किम्वा वह्निना अलिप्त ददा ह अतएव न अजिह्लदत् नानन्दयत् शोकाग्नेर्वर्द्धमानत्वात् वस्य स्येत्यादिना आत्मनेपदे लिपादेर्ङोविभाषितः पचे ग्रामिः स्वग स्वादिति सिलोपः ह्लादीङ्मोदने ण्यचङ्कः स्वः स्वेः मन्वत्॥२२॥

स्नानभ्यषिचताम्भोऽसौ रुदन् दयितया विना।
तथाभ्यषिक्त वारीणि पितृभ्यः शोकमूर्च्छितः॥ २३॥

ज०म० स्नानित्यादि। असौ रामोदयितया विना शोकमूर्छितः शोकेन मोहं नीतः स्नातुमारब्धः मूर्छेर्हेतुमण्यन्तस्य रूपं स्नाशोचे शट प्रत्ययः रुदन्नम्भः सलिलं अभ्यषिचत चिप्तवान् शिरस्यञ्जलिना अथ स्नातः पितृभ्यो वारीणि अभ्यषिक्त दत्तवान् सिचेः पूर्ववदि भाषाऽङ् सिचि ... वर्त्तते ततस्तार्थान्तरत्वमिलाञ्जलस्य कर्म्मत्वं॥ २३॥

भ० स्नानेत्यादि। दयितया विना शोकेन मूर्च्छितोऽपि असौ रामो रुदन् स्नान् स्नानं कुर्व्वन् अम्भोऽभ्यषिचत मन्त्रैः संस्कृतवान् स्वशि रसि अञ्जलिना चिप्तवानित्यर्थोवा तथा स्नातः पितृभ्योवारीणि

अभ्यषिक्त दत्तवान् पित्रर्थं चिप्तवान् वा धातूनामनेकार्थत्वात् षिचेः संस्कारचेपदानवाचकत्वं तेन जलस्य कर्मत्वं अभ्युक्षणे कर णत्वं यथा जलेन सिञ्चतीति पूर्व्ववत् ङः गीकदति षत्वं मूर्च्छामं मोहे उच्छ्राये अस्मात् क्तः केवलात्तु कक्तवत्वोरिदादितदम् न स्यात् मूर्च्छा जाताऽस्येति इतोऽस्यजातदति इतोवा ॥ २३ ॥

तथार्त्तोऽपि क्रियां धर्म्म्यां सकालेनामुचत् क्वचित् ।
महतां हि क्रिया नित्या छिद्रे नैवावसीदति ॥२४॥

तथेत्यादि। सरामस्तेन प्रकारेणार्त्तोऽपि क्वचिदपि धर्म्म्यां जं०म० क्रियां काले नामुचत् न त्यक्तवान् अस्मादेव यतोमहतां सत्यपि छिद्रे व्यसने नित्या क्रिया नावसीदति आङ्पूर्व्वादर्त्तेऋच्छतेर्वा निष्ठायां चतिधातौ वृद्धिः मुचेः लृदनुबन्धत्वादङ् ह्रस्वः अच् रिङि यक्तौ ॥ २४ ॥

तथेत्यादि। तथा तेन प्रकारेण आर्त्तोऽपि व्याकुलोऽपि सरामः भ० क्वचिदपि काले धर्म्म्यां धर्मादनपेतां क्रियां नामुचत् न त्यक्त वान् मुच्लृ अपञ्जोमोचे लृदित्वात् ङः आङ्पूर्व्वादर्त्तेः क्तः गेर्धो रनेधिणइति त्रिः हि यस्मात् महतां छिद्रे व्यसने सत्यपि नित्या क्रिया नैवावसीदति नापगच्छति क्रियेति कुःअङिति अः स्त्रीत्व च्चद्रिःअध्वोरितीयः यदकरणे प्रत्यवायः सा नित्या ॥ २४ ॥

आक्रोशन् समुद्ध्वः क्रूरान् मुक्तराक्रोत राक्षसान् ।
एत सीताद्रुहः संख्ये प्रत्यर्थयत राघवं ॥ २५ ॥

ज॰म॰ आक्रान्तेत्यादि। पुनः पुनरभिभवितुं शूरानाक्रान्त आक्रान्तवान् तथा राक्षसानाक्रूत पूर्व्ववत् विकल्पः स्पर्द्धायामाङ इत्यात्मनेपदं कथमाक्रूतवानित्याह हे सीताद्रुहः सीताहिंसकाः शूरा राक्षसावा एत आगच्छत आङ्पूर्व्वादिणो लोट् संख्ये संग्रामे राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत प्रत्यर्थिन्शब्दात्तत्करोतीत्यर्थे णिच् तदन्ताल्लोटः परस्मैपदं अर्थयाञ्चायामित्यस्य तु स्वायिकण्यन्तस्य सर्व्वदात्मनेपदित्वात् प्रत्यर्थयध्वमिति वा स्यात् ॥ २५ ॥

भ॰ आक्रेत्यादि। स रामो मुहुर्व्वारंवारं शूरान् आक्रन्त अर्थात् युद्धाय राक्षसानपि आक्रूत स्पर्द्धायामाङ् इति सं पूर्व्ववत् ङसौ कथमाक्रूत इत्याह हे सीताद्रुहः सीताहिंसकाः यूयं एत आगच्छत आङ्पूर्व्वादिणो गौ संख्ये युद्धे राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत प्रत्यर्थिशब्दात् लोकत्याख्यानेञिरिति क्ते ञिः ञौमंत्वेति ङित्त्वे टेर्लोपः अर्थकङ् याचनइत्यस्य वा रूपं क्वचिदात्मनेपदिनोऽपि परस्मैपदितेति न्यायात् केचित्तु चुर्ष्याञिर्व्वेति ञेरभावपक्षे ञित्वान्मं ञोरुभयपदमेवेत्याहुः ॥ २५ ॥

स्वपोषमपुषद्युष्मान् या पक्षिमृगशावकाः। अद्य तच्चेन्दुना सार्द्धं तां प्रमृत गता यतः ॥ २६ ॥

ज॰म॰ स्वपोषमित्यादि। हे मृगपक्षिणां शावकाः पोताः या सीता युष्मान् स्वपोषमपुषत् पुष्टवती स्वेपुष इति णमुल् यथाविध्यनु

प्रयोगः तां प्रब्रूत कथयत यतोयत्र श्राद्यादित्वात्तसिः गता मत्य
द्युतत् द्योततेस्म सार्द्धमिन्दुना चन्द्रमसा तुल्यत्वात्॥ २६ ॥

स्वपोषमित्यादि॥ एवंप्रकारेण मृगादीनपाक्रान्तेति सम्बन्धः भ०
हे पक्षिणां मृगाणाञ्च शावकाः शिशवोया सीता युष्मान् स्वपोषं
अपुषत् स्वेन आत्मना धनेन वा पुष्टवती अभिधानात् स्वपूर्व्वात्
पुषेर्णम् तदनुप्रयोगस्य या इन्दुना सार्द्धं अद्युतत् तस्याद्योतनेन
इन्दोः स्वभावेन गुणीभूतत्वात् ततोऽप्युत्कर्षः सूच्यते सार्द्धंशब्देन
समानत्वं वा लक्ष्यते उभयत्र शासुलिद्युत्पुषादेरिति ङः पे ङ
विधानादेव द्युतेः पं उक्तञ्च अतएव पं तां प्रब्रूत वदत त्वरिस्त
यास्त्वय्येव कथनं किमर्थं इत्याशङ्कायामाह गतेति यस्माद्ग
ता अन्यत्र मां त्यक्त्वेत्यर्थात् केचित्तु यतोयत्र गता तं देशं ब्रूते
त्यथ्याहरन्ति केचित्तु या यतोयस्मात् अपुषत् इन्दुना सार्द्धं साम्यं
गता या अद्युतत्त्व यतोऽत्यन्ते इत्यस्य क्विपीत्याङ्गः केचित्तु
हे पक्षिमृगशावकाः गतायतः सन्तः तां प्रब्रूत गतं गमनं भावे
क्तः न यतन्ते इति अयतः कर्त्तरि क्विप् गताय अयतोऽयत्न
वन्तः स्थिराः सन्तइत्यर्थइत्याङ्गः गताय नास्ति यत् यत्नो येषां
तादृशाः सन्तइत्यन्ये॥ २६॥

गिरिमन्वसृपद्रामोलिप्सुर्ज्जनकसम्भवां। तस्मिन्ना
योधनं वृत्तं लक्ष्मणायाशिषन्मदत्॥ २७॥

गिरिमित्यादि। गिरिं लक्षीकृत्य गतः सृदित्वादङ् किमर्थं अ०म

लब्धुमिच्छुः सनिमीमेत्यादिना इस् अत्र लोपइत्यभ्यासलोपः खरिचेति चर्त्वं जनकसम्भवां सम्भवत्यस्मादिति सम्भवः उदरोऽप् जनकः सम्भवोयस्यास्तां सीतां अस्मिन् गिरौ आयोधनं युद्धं मइदतिशयत्वात् दृत्तं लक्ष्मणायाशिषत्कथितवान् क्रियार्थोपपदस्य चतुर्थी सर्व्वीत्यादिनाऽङ् शासइदङ्हलोरितीत्वं शासिवसीति षत्वं कथमकथयदित्याह ॥ २७ ॥

भ॰ गिरीत्यादि। जनकसम्भवां सीतांलब्धुमिच्छन् रामोगिरिमनुलक्ष्मीकृत्य असृपत् सृष्लृगतौ लृदित्वात् ङः लभेः सनिमिमीमा देत्यादिना अकारस्य इस् द्विलोपस्य आदेः सोलोपस्य अपञ्चमे रिति पः सम्भवत्यस्मात् सम्भवः जनकः सम्भवो यस्याः जनकात् सम्भवनं यस्याइति वा तस्मिन् गिरौ दृत्तं महदायोधनं युद्धं लक्ष्मणायाशिषत् उक्तवान् तादर्थ्ये चतुर्थी यदभिप्रेत्य धात्वर्थस्तत्र चतुर्थीति परः शासअनुशिष्टौ शासुलिद्युदिति ङः शासुङिङ्सङ्दिति इत्वं क्षिमादिति षत्वं ॥ २७ ॥

सीतां जिघांसू सैामित्रे राक्षसावारतां ध्रुवं। इदं शोणितमभ्यग्रं संप्रहारेऽच्युतक्षतयोः ॥ २८ ॥

ज॰म॰ सीतामित्यादि। इत्येवं लक्ष्मणायाशिषदिति श्लोकचतुष्टयं यावत् सम्बध्यते हे सैामित्रे सीतां हन्तुमिच्छन्तौ राक्षसावारतामागताविति ध्रुवं निश्चितं उत्प्रेक्षायामित्यन्ये आङ्पूर्व्वादर्त्तेराद्यादिकादेवाङ् पुषादिसूत्रे शास्तिसाहचर्य्येण तस्यैव ग्रहणात् ऋदृशोऽङीति गुणः आङ्दिनाप्यडागमे कृते रूपमिदं हन्तेः सनि

अञ्झनगमां सनीति दीर्घः अभ्यासाच्चेति घत्वं कुतः जातमि त्याह इदमभ्ययं शोणितं तयोः संप्रहारे युद्धे अच्युतत् गलितं च्युतिरक्षरणे अकर्म्मकोऽयं इरनुबन्धत्वादिरितोवेत्यङ् सीतां भक्षयितुं तयोरेव विवादोवृत्तइति भावः ॥ २८ ॥

सीतामित्यादि। इत्येवं लक्ष्मणायाभिपदिति श्लोकचतुष्ट भ॰
येषु सम्बध्यते हे सौमित्रे ध्रुवं निश्चिते उत्प्रेक्षे वा सीतां हन्तुमिच्छू राक्षसावारतां आङ्पूर्व्वात् ऋलिगत्यांइत्यस्मात् ऋप्रापणेच त्यस्माद्वा वत्सक्षेत्यादिना पचे क्तः इश्रोर्णुरिति गुणः आङा विनापि रूपमेतत् हन्तेः सनिर्घोऽञ्झनिङ्गमामिति दीर्घः खेर्षोषः कुतोजातमित्याह तयोरेव संप्रहारे युद्धे इदं अभ्ययं अभिनवं शोणितं अच्युतत् गलितं च्युतिरक्षरणेऽकर्म्मकः इरित्वात् अासु लिद्युदित्यादिना पचे ङः सीतामत्तुं तयोरेव विरोधोजातइति भावः ॥ २८ ॥

इदं कवचमच्योतीत् साश्वोऽयं चर्णितोरथः। एह्य मुं गिरिमन्वेष्टुमवगाहावहे द्रुतं ॥ २९ ॥

इदमित्यादि। इदं कवचमच्योतीत् भ्रष्टं अङभावे सिजेव भ जः म॰
वति अयं रथः साश्वश्चर्णितश्चास्ते यतश्चैवं तस्मादेहि आगच्छ द्रुतं किं पश्चाद्विलम्बसे अमुं गिरिमवगाहावहे विलोडयावः किमर्थं अन्वेष्टुं सीतामित्यर्थात् एतत्सम्पर्व्वतसमीपे कथ्यते ॥ २९ ॥

इदमित्यादि॥ कवचमिदं अच्योतीत् भ्रष्टं इरित्वात् ङाभाव भ॰
पचे च्यांसिः अश्वेन सह चूर्णितोऽयं रथस्तास्ते यतएवं तस्मात्

द्रुतं शीघ्रं एहि आगच्छ आङ्पूर्व्वस्येणोरूपं अन्वेष्टुमथात् सीतां अमुं गिरिं आवां अवगाहावहे सर्व्वतः पर्य्यटावः। २९॥

मन्युर्म्मन्ये ममास्तम्भीद्विषादोऽस्तभदुद्यतिं। अजारीदिव च प्रज्ञा बलं शोकात्तथाजरत्॥३०॥

ज॰म॰ मन्युरित्यादि। मन्युर्मम शोकः मन्ये इत्यहं मन्ये शोकः सुहृज्जनेऽस्तम्भीत् स्तब्धवान् विषाद उद्यतिमस्तभत् अत्र पक्षे अनुनासिकलोपः प्रज्ञा च तत्र विवेकिनी बुद्धिः अजारीत् विवेकवैकल्यात् जीर्णेव तथाशब्दः समुच्चये बलं शोकादजरत् जीर्णं स्वकार्य्याकरणात् ऋदृशोऽङीति गुणः जृस्तम्भित्यादिना सिजङौ॥३०॥

भ॰ मन्युरित्यादि। हे सौमित्रे मन्युः शोकोमम मन्ये स्कन्धमूर्त्तिशिराद्वयमस्तम्भीत् शोकजन्यवायुना मन्यास्तम्भोनाम व्याधिर्जात इत्यर्थः मन्युशोकौ तु शुक् स्त्रियां पश्चाद्ग्रीवाशिरामन्येति चामरः विषाद उत्साहविपर्य्यय उद्यतिं उद्यममस्तभत् स्तम्भुधातुः सौत्रिकः शासन्निद्दिति वाङ् हसुनङ् लोपः ङाभावपक्षे च्यांसिः उत्पूर्व्वाद्यमः क्तौ वनतनाद्यनिमामिति मलोपः मम प्रज्ञा बुद्धिश्चाजारीत् कर्त्तव्यमूढत्वाज्जीर्णेव तथा मम बलं शोकात् अजरत् कार्य्याक्षमत्वाज्जीर्णमिव पूर्व्ववद्वाङ् ऋशोर्णुरिति गुणः पक्षे सिः व्रजवदेति सिः तथेति समुच्चयाभ्युपगमसादृश्येष्विति वृद्धाः॥३०॥

गृध्रस्यैताश्वतां पक्षौ छत्तौ वीचख लक्ष्मण। जिघांसोर्न्नूनमापादि ध्वंसोऽयं तां निशाचरात्॥ ३१॥

गृध्रस्येत्यादि। हे लक्ष्मण इह प्रदेशे गृध्रस्य पक्षौ छत्तौ छिन्नौ अश्वतां शूनौ पूर्व्ववदङि श्वयतेरः इति वीचख नूनमवश्यं सीतां जिघत्सोरत्तुमिच्छोर्गृध्रस्य अदेर्लुङ्सनोर्घस्लृ निशाचरादयं ध्वंसः पक्षच्छेदआपादि उत्पन्नः कर्त्तरि लुङ् चिण्तेपदइति शेश्विणादेशः तशब्दस्य चिणोलुक्॥ ३१॥ ज॰म॰

गृध्रेत्यादि। हे लक्ष्मण इह स्थाने गृध्रस्य छत्तौ छिन्नौ पक्षौ अश्वतां वायुना मांसादिपरिणामेन वा वृद्धिं गतौ इति वीचख पश्य टुओश्विगतिवृद्ध्योः पूर्व्वेण वा ङः वच्यस्यविपतामिति थः नूनं निश्चितं तां सीतां जिघांसोर्गृध्रस्य अयं ध्वंसः पक्षच्छेदः निशाचरादापादि उत्पन्नः पदस्तनोण्वेदति कर्त्तरि इण् इणमनलोपः जिघत्सोरिति पाठे अत्तुं भोक्तुमिच्छोः सर्वइ:स निति अदेर्घस्लृः सन्स्वरे॥ ३१॥ भ॰

क्रुद्धोऽदीपि रघुव्याघ्रोरक्तनेत्रोऽजनि क्षणात्। अबोधि दुःस्थं त्रैलोक्यं दीप्तैरापूरि भानुवत्॥ ३२॥

क्रुद्ध इत्यादि। तदेवं रघुव्याघ्रो रामः क्रुद्धोऽदीपि दीप्तवान् क्षणाच्च रक्तनेत्रोऽजनि जातः जनिवध्योश्चेति न वृद्धिः त्रैलोक्यं निहन्मि यस्मिन् हन्यमानेऽपि सीताद्रुहोऽपि नश्यन्ति इत्यभि प्रायेण दुःखमबोधि बुध्यते स्म किम्बा रामस्य दाराह्रियन्ते ज॰म॰

तदान्येषु का कथा इति दुःखं चैलोक्यमबोधि दीप्तैस्तेजोभिर्हे तुभिरापूरि वर्द्धते स्म भानुवदादित्यवत् दीप्तैरिति भावे निष्ठा सर्व्वत्र कर्त्तरि लुङ् दीपजनेत्यादिना चिण्॥ ३२॥

भ० क्रुद्ध इत्यादि। लक्ष्मणायैवमुक्त्वा रघुणामीशो रामः क्रुद्धः सन् अदीपि जज्वाल क्षणाच्च रक्तनेत्रोऽजनि जातः त्रैलोक्यमेतं दुःखं अबोधि ज्ञातवान् प्रभुमलब्ध्वा तन्नाशाय त्रैलोक्यमपि नाशयिष्यामीत्याशयः येनाहमपि दुःखः हतस्तेन सुतरां जगद्दुःखमिति वा दीप्तैस्तेजोभिर्हेतुभिरापूरि वर्द्धते स्म भानुरिव दीपेर्भावे क्तः सर्व्वत्र पदलत्तेणघेरित्यादिना कर्त्तरि पाक्षिक इण् इणस्तनलोपः जनवधःसेम इत्यादिना जनेर्हस्वः॥ ३२॥

अतायस्येत्तमं सत्वमप्यायि हतकृत्यवत्। उपाचायिष्ट सामर्थ्यं तस्य संरम्भिणोमहत्॥ ३३॥

ज०म० अतायीत्यादि। अस्य रामस्य उत्तमं सत्वमभिप्रायः शोकक्ष्मयोरविकारत्वात् अतायि सन्ततं मात्सरा विक्रियते स्म अप्यायि वृंहितं हतकृत्यवत् समाप्तकियवत् हस्तगतस्यं प्रभुवधं मन्यमानस्य उभयचापि पूर्व्ववच्चिण् तस्य रामस्य संरम्भिणः अपूर्व्वे विषये क्षुभितचित्तस्य सामर्थ्यं बलमुपाचायिष्ट स्वयमेवापचीयते स्म चिनोतेरयं कर्म्मकर्त्तरीति चिण् पत्ते चिणवदिट् चेति॥ ३३॥

म० अतेत्यादि। अस्य रामस्य सत्वं व्यवसायः स्वभावोवा अतायि सन्ततं बभूव मात्सरा विक्रियते स्म उत्तमं व्यसनेऽपि अविक्रान्तं नात्युत्पातमसन्ततोः अप्यायि वर्द्धते स्म हतकृत्यवत् समाप्तक्रिय इव

क्रोधोत्साहाधिक्यात् विहितो वैरिवधस्य ...ायात् थाथोङ् वृद्धं। उभयत्र पूर्व्ववद् इण् संरम्भिणः शत्रुविषये क्रुद्धस्य तस्य रामस्य सामर्थ्यं महदुपाचायिष्ट स्वयमेवोपचीयते स्म हनयह इगच इति चिनोतेः सेचिण् कर्म्मकर्त्तरि चायृङ्निपातने ऽर्थे इत्य स्यानेकार्थत्वात् कर्त्तर्य्येवेदं रूपमित्यन्ये सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुष्विति विश्वः॥ ३३॥

अदोहीव विषादोऽस्य समरुद्धेव विक्रमः। सम
भावि च कोपेन न्यश्वसीच्चायतं मुहुः॥ ३४॥

अदोहीत्यादि। अस्य रामस्य विषादः प्रागुत्पन्नोऽदोहीव स्वयं जं०म०
क्षरित इव अथवा अदोहीव प्रपूर्य्यते स्मेव विक्रमः पुरुषकारः समरुद्धेव संरुध्यते स्म इव कर्म्मवदित्यादिना कर्म्मवद्भावेन प्राप्तस्य चिणो नरुध इति निषेधः तेन सिजेव भवति झलो झलीति सिचो लोपः झषस्तथोर्धोऽधः झलां जश् झशीति धत्वजस्त्वे कोपेन च समभावि सम्भूतं चिण्भावकर्म्मणोरिति भावे चिण् त्रैलोक्यदौःस्थ्यावबोधाज्जातखेदः सन् आयतं दीर्घं न्यश्वसीत् निश्वसितवान् ह्यन्तेति वृद्धिर्न भवति मुहुरिति सर्व्वत्र योज्यं॥ ३४॥

अदोहीत्यादि। अस्य रामस्य प्रागुत्पन्नो विषादः स्वयमेवा भ०
दोहि इव क्रोधातिशयात् स्वयं क्षरित इव पूर्य्यते स्मेवेत्यन्ये वेषत्र दुह इति कर्म्मकर्त्तरि वा इण् विक्रमोऽपि समरुद्धेव स्वयमेवाक्रान्तः प्रतिरुद्ध इव न तपदुःश्वेति कर्म्मकर्त्तरि इण्निषेधः घषस्वादि

ति विलोपः अस्य ●पेन समभावि सम्भूतं इतनोर्थंमिणाविति भावे इण् कोपात् मुहुर्म्मोरंवारं आयतं दीर्घं यथा स्यात्तथा रामोऽन्यस्वसीत् इमादेःसेमइत्यादौ अमत्रर्ज्जनात् न वृद्धिः। इति सिजधिकारः॥२४॥

## श्नम्प्रकरणं कथ्यते।

अथालम्ब्य धनूरामोजगर्ज्ज गजविक्रमः। रुणध्मि सवितुर्मार्गं भिनद्मि कुलपर्व्वतान्॥ ३५ ॥

ज॰ इतःप्रभृति श्नम्विकरणमधिकृत्याह। अथेत्यादि। अथानन्तरं रामोधनुरालम्ब्य गृहीत्वा जगर्ज विस्फुर्ज्जितवान् धनूराम इति रलोपइति दीर्घः गजगतिः सवितुः सूर्य्यस्य मार्गं पन्थानं रुणध्मि आवृणोमि शरैरित्यर्थात् तथा भिनद्मि विदारयामि कुलपर्व्वतान्॥ ३५ ॥

भ॰ अथ नम्बाधिकारः। म च स्नमते श्नम्। अथेत्यादि। अनन्तरं गजपराक्रमोरामोधनुरालम्ब्य गृहीत्वा जगर्ज्ज सिंहनादं चकार किं कृत्वा जगर्ज्जेत्याह अहं सवितुः सूर्य्यस्य मार्गं पन्थानं रुणध्मि आवृणोमि अर्थात् शरैः मृदुत्वादेव ममेदृशं कर्म्म संवृत्तं इदानीं महतां दण्डभयादन्योऽपि सीतां दास्यति नच पुनरेवं कोऽपि करिष्यतीति भावः अतएव न तृणेद्मीति लोकोऽयमिति वक्ष्यति कुलपर्व्वतान् पृथिव्याअवलम्बकान् पर्व्वतानपि अहं भिनद्मि विदारयामि रुधिरौऽत्रआवृतौ अधोभिदिर्भिदि दिवसतुदरुधेति अणेव य्यमादिवत् प्रकृतिप्रत्य

यथोः माहात्म्यक्रारित्वान्न अप् दिवसुतुवधन्दे रिति षष्ठ्ये
कवचनान्तं पदं तेन दिवादिप्रभृतीनां सम्बन्धे श्यनादयोरपरे
निर्दिष्टाइत्यर्थः ते कुत्र भवन्तीत्याशङ्क्य वृत्तावुक्तं एभ्यइति
तेन सूत्रे षष्ठीनिर्देशात् रुधादेः श्नम् णित्वादन्त्यात्परः
एभ्यइति वृत्तौ पञ्चमीनिर्देशादन्ये प्रकृतेरुत्तरइति बोध्यं न
च सूत्रे पञ्चमीनिर्देशेऽपि णित्वात् श्नम् रुधादेरन्त्यादचः परे
भवितुमर्हति णमितइत्यस्य षष्ठ्यन्तएव विषयत्वात् शासुमिद्यु
त्पुषादेरिति पञ्चम्यन्तत्वात् प्रकृतेः परोङः न तु ङित्वादन्त्यस्य
स्थाने इत्यादिदर्शनात् षष्ठीनिर्देशेऽपि पञ्चम्यर्थोगम्यते तथाहि
अनडुत्पुंपयोर्लक्ष्मीनावामेकत्ववाचिनां। नित्यं कः स्यादङ्बहुव्रीहौ
वा स्याद्धित्ववङ्त्वयोरिति। अन्यत्रापि नित्यात्वतां स्वरान्तानां
सृजिदृश्योश्च वेट् थलि। ऋचि नित्यानिटःस्युर्वेदृथेऽदां नित्यमिट्
थलीति॥ २५॥

रिणच्मि जलधेस्तोयं विविनच्मि दिवः सुरान्।
क्षुणद्मि सर्पान् पाताले छिनद्मि क्षणदाचरान्॥ २६॥

रिणच्मीत्यादि। जलधेस्तोय रिणच्मि रिक्तीकरोमि रिचि जं०म०
रविरेचने दिवः स्वर्गात् सुरान्विविनच्मि पृथक्करोमि विचिर
पृथग्भावे क्षुणद्मि चूर्णयामि सर्पान् पाताले क्षुदिरपेषणे भ्रट् कु
प्राङिति णत्वं छिनद्मि क्षणदाचरान् राक्षसान् द्विधा करोमि
छिदिरद्वैधीकरणे॥ २६॥

भ० रिचण्मीत्यादि। समधेः समुद्रस्य तोयं रिणच्मि रिक्तीकरोमि रिचिर्च्छ्धौ विरेके रेफान् अणोषनं सुरान् दिवः स्वर्गात् विविनच्मि पृथक्करोमि विचिर्लिधौञ् पृथक्त्वे विपूर्व्वः सुरा योगात् सुराः अश्र्मादित्वाद् तदुक्तं सुरापरिग्रहाद्देवाः सुरा इत्यभिविश्रुता इति किम्बा सुरन्ति भान्ति ईश्नते वा इति सुरा सुरश्मैश्वर्ययोरित्यस्मात् इगुपधात् कः पाताले सर्पान् चुणद्मि चूर्णयामि अधोचुदिर्च्छदि क्षुत्सम्पेषणं मकाराश्चलं पतन्ति लोका अस्मिन्निति पातालं निपातनात् चण्दाघरान् छिनद्मि द्वैधीकरोमि छिदिर्द्धौञ् छेदे ॥ २६ ॥

यमं युनज्मि कालेन समिन्धानोऽस्त्रकौशलं।
शुष्कपेषं पिनष्म्युर्व्वीमखिन्दानः स्वतेजसा ॥ २७ ॥

म० यममित्यादि। यममपि कालेन तदधीनेन मृत्युना युनज्मि सम्बध्नामि अस्त्रकौशलं समिन्धानः सम्वर्द्धयन् ञिइन्धीदीप्तौ आत्मनेपदित्वाल्लटः शानच् श्नात्लोपः श्नसोरल्लोपः उर्व्वीं शुष्कां कृत्वा चूर्णयामि पिष्लृसंचूर्णने शुष्कचूर्णरूक्षेषु पिषइति णमुल् अखिन्दान; स्वतेजसा दैन्यमगच्छन् अपरिश्राम्यन् खिद दैन्ये पूर्व्ववल्लोपः ॥ २७ ॥

भ० यममित्यादि॥ यममपि कालेन मृत्युना अहं युनज्मि हन्मी त्यर्थः युजिर्धात्युतौ अस्त्रकाशलं समिन्धानः वर्द्धयन् इन्धीञ् धञ्चियुतौ शानः नणोनल्लोप्यइत्युङ्लोपः नणोमेणाविति नस्य अकाररहितत्वं उर्व्वीं शुष्कपेषं पिनष्मि चूर्णयामि धौपिष्लृ

चूर्णने शुष्कचूर्णरूक्षात् पिषोऽम् सनार्थत्वे तदनुप्रयोगश्चेति परः क्षमते चणभित्यस्य योगविभागात् शेषोऽप्यचामकवदिति धृषेः कस्य कः क्षतेजसा ऋषिवन्तः दैन्यमभजन् अपरिश्रान्यम् वा खिदङ्क्षौदैन्यके नणामेऽणा ॥ २७ ॥

भूतिं तृणद्मि यक्षाणां छिनद्मीन्द्रस्य विक्रमं। भन
ज्मि सर्व्वमर्य्यादास्तनच्मि व्योम विस्तृतं। २८ ॥

भूतिमित्यादि। यक्षाणां भूतिं सम्पदं तृणद्मि उत्सादयामि उतृहदिर्हिंसानादरयोः इन्द्रस्य विक्रमं छिनद्मि अपनयामि छिदिहिंसायां इदितोनुम् तस्य श्नान्नलोपः सर्व्वमर्य्यादास्य व्यवस्थाः सर्व्वेषां भनज्मि मर्द्दयामि भञ्जो आमर्द्दने श्नान्नलोपः तनच्मि व्योम विस्तृतं संकोचयामि तञ्च आच्छादने आन्तेन चौरादिकस्य रूपं तञ्चु संकोचे श्नान्नलोपः कस्मादेवं प्रवृत्तस्त्वमिति चेदाह ॥ २८ ॥ जं०

भूतिमित्यादि। यक्षाणां भूतिं सम्पदं तृणेह्मि नाशयामि तृहञ् धिर्नादरे च चकाराद्धिंसायां इन्द्रस्य विक्रमं छिनद्मि अपनयामि छिदधिकि हिंसे नणामलोपश्चेति इदित्वात् श्नतनुणा लोपः सर्व्वेषां मर्य्यादाव्यवस्थाभनज्मि निवर्त्तयामि भञ्जोऽधोमोटने व्योम आकाशस्य विस्तृतं विस्तारं तनच्मि सङ्कोचयामि तञ्चुसंकुचि तनञ्मीति पाठे तञ्चुसङ्कोचे स्तृञ्स्तृतावित्यस्माद्भावे क्तः व्योमविशेषणे विस्तृतमिति निरर्थकं स्यात् ॥ २८ ॥ भ०

न तृणेह्मीति लोकोऽयं मां वित्ते निष्पराक्रमं। एवं
वदन् दाशरथिरपृणग्धनुषा शरं॥ २९ ॥

ज॰म॰ नहर्णेह्मीत्यादि । न हर्णेह्मि न मारयामि इति कृत्वा हन्हिंसायां अस् हर्णहदम् अयं लोको मां निष्पराक्रमं निर्वीर्यं विन्ते विचारयति विदविचारणइत्यस्मादात्मनेपदिनः अस् अलोपः एवमुक्तेन प्रकारेण वदन् दाशरथिः धनुषा शरं । अपृणक् पृणक्ति स्म पृचीसंपर्के लङि अस् हल्ङ्यादिलोपः कृतं इति अस् विकरणनिदर्शनं ॥ ३८ ॥

भ॰ नहर्णेह्मीत्यादि । कथमेवं प्रवृत्तिरित्याह अहं न हर्णेह्मि न हन्मि इति कृत्वा मनसीत्यर्थात् अयं लोकः मां निष्पराक्रमं विन्ते विचारयति तेन मे पत्यपहारो वृत्तइति भावः धेविदङ् मीमांसे नर्णोवेऽणौ हनधहिंसे हहदणपिह्वमे इति नणदण् चकारात् णत्वं दाशरथीरामणवं वदन् धनुषा शरं अपृणक् युनक्ति स्म पृच्धीच्सम्पर्के हसङ्ग्यादेर्भरिति दिलोपः चङिति कङ् अतोणत्वं पृणाति हिनस्तीति शरोऽनन्तः तालव्यादिः दन्त्यादिरप्यस्ति चित्रपुङ्खः शरः सरइति त्रिकाण्डशेषः । इति मशब्दाधिकारः ॥ ३८ ॥

## अथ प्रकीर्णकाः ।

न्यवर्त्तयत्सुमित्राभूस्तं चिकीर्षुं जगत्त्रयं । ऐत्ते तामाश्रमादागाद्गिरिकल्पं पतत्रिणं ॥ ४० ॥

ज॰म॰ इतः प्रकीर्णकश्लोकानाह । न्यवर्त्तयदित्यादि । तं रामं जगत्त्रयं चिकीर्षुं कर्त्तुमिच्छं सुमित्राभूर्लक्ष्मणो न्यवर्त्तयत् निवर्त्तितवान् भ्रातः अलं कोपेन त्वया सार्द्धं कः संग्रामे युद्धं दातुं समर्थः

यदत्र युक्तं तत्प्रतिविधीयतामिति भवनं भूः सम्पदादित्वात् क्विप् सुमित्रायां भूर्यस्य ऐक्षेतां रामलक्ष्मणौ दृष्टवन्तौ लङि रूपं पक्षिणं गिरिकल्पं महाप्राणित्वात् आश्रमादारात् समीपे दूरान्तिकार्थैरिति पञ्चमी ॥ ४० ॥

अथ प्रकीर्णकाः। न्यवर्तयादि। इत्थं जगतः क्षयं कर्त्तुमिच्छन्तं तं रामं सुमित्राभूर्लक्ष्मणोन्यवर्त्तयत् निवारयामास अन्यापराधेनान्यदण्डानौचित्यात् समित्रा भूरुत्पत्तिस्थानं यस्य सुमित्रायां भूर्भवनं यस्येति वा सुमित्राया भवतीति वा क्विबन्तमिदं रूपं अथ रामलक्ष्मणौ आश्रमादारात् समीपे गिरिकल्पं पर्व्वततुल्यं पतत्रिणं पक्षिणं ऐक्षेतां दृष्टवन्तौ अन्यारभ्यार्थारादिति पञ्चमी ॥ ४० ॥ भ०

तं सीताघातिनं मत्वा हन्तुं रामोऽभ्यधावत। मा बधिष्ठाजटायुं मां सीतां रामाहमैक्षिषि ॥ ४१ ॥

तमित्यादि। तं सीताघातिनं सीता हतानेनेति मत्वा रामो हनिष्यामीत्यभ्यधावत धावु गतिशुद्ध्योरित्यस्माल्लङि स्वरितेत्वादात्मनेपदं तं हन्तुमुद्यतं रामं जटायुराह मा बधिष्टाइति हे राम मां जटायुं मा बधिष्ठाः मा बधीः बधबन्धने इत्यस्मादनेकार्थत्वादात्मनेपदिनः सैटोलुङि रूपं न हन्तेःसत्याङि आङोयमहनइत्यात्मनेपदं नास्ति अकर्म्मकादित्यनुवृत्तेः स्वनामपरिकीर्त्तनं तव पितुरहं सखेति ख्यापनार्थं सीतामैक्षिषि दृष्टवानहं लुङुत्तमैकवचने अतोमां मा बधिष्टाः ॥ ४१ ॥ ज०म०

तमित्यादि। तं पक्षिणं सीताघातिनं सीतामयं हतवान् इति भ०

मत्वा हन्तुं रामोऽभ्यधावत वेगेन अभिमुखं गतवान् धावुऽजवे इजि उपास्थितैवमुक्तेतमिति वक्ष्यमाणश्लोकेनान्वयात् मा वधिष्ठा इत्यादिपद्यार्द्धं हन्तुमुद्यतं रामं प्रति जटायुवाक्यमिति गम्यते हे राम जटायुं मां त्वं मा वधिष्ठान मारय हन्तेस्त्यामस्यांशिषि: हन वधष्टीद्व्यलोति वधादेश: धात्वरन्तत्वात् वसोरस्येतीम् आत्मने पदमिच्छन्ति परस्मैपदिनां कचिदिति परवाक्यात् स्वमते वाङ् स्यात् आत्मनेपदं किम्वा आङ्पूर्वहन्ते: आत्माङ्गढादढाघाहन यमइति मं आत्माङ्गढादित्यस्य कचिद्व्यभिचारात् तथाच गाण्डीवी कनकशिलानिभं भुजाभ्याम् आजघ्ने विषमविलोचनस्य वक्ष इति किम्वा जटायुमिति नामकीर्त्तनेन तव पितुः सखा अहमिति ज्ञापितं तेन च तव पितुः सख्यदार्ढ्येनाहं तव स्वाङ्गमिव मम हिंसया तव स्वाङ्गहिंसा व्यर्थेति आरोपितात्माङ्गत्वादात्माङ्गढादित्यात्मनेपदं किम्वा आत्माङ्गढादित्यत्र आत्मशब्देनात्मीयोऽपि लक्ष्यते किम्वा धातूनामनेकार्थत्वाद्धधङ्निन्दे च इत्यस्य रूपं किन्तिजगुपइत्यादौ निन्दाबध:सन्विधानादत्र न सन जटा आयुर्यस्येति व्युत्पत्त्या तस्य च प्रवयसो जटायुषः स्वर्गिणः किमनुशोच्यतेऽधुनेति दर्शनाच्च जटायुमिति चिन्त्यमिति भ्रान्तावदन्ति यतो वाङ्न्यादिणधातोरुण्प्रत्यये आयुशब्दोऽयमुदन्तोऽपि दृश्यते यथा वायुना जगदायुनेति जटायुश्च जटायुरिति शब्दभेदः पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथः पश्यैते पुरतः पिशाचवदनाः कङ्कालशेषाः कृताः। खड्गच्छिन्नजटायुपक्षतिरितः सीताञ्चलन्तीं वहन्नन्तर्व्याकुलविद्युदम्बुद इव द्यामभ्युदस्थादरिरित्येतत्पद्यमुनादिदृष्टत्वादुज्ज्वलदत्तेन जटायुशब्दस्य स

क्रोधज्वलेन दैन्यमपनायोद्यादाहृतं अहं सीतामैथिलि इत्य
वान् त्वां सि हम् अतोऽपि मा वधिष्टा इति भावः॥ ४१॥

उपास्थितैवमुक्ते तं सखायं राघवः पितुः। पप्रच्छ
जानकीवार्त्तां संग्रामञ्च पतत्त्रिणं। ततो रावणमा
ख्याय द्विषन्तं पततां वरः॥ ४२॥

उपास्थितइत्यादि। पक्षिणैवमुक्ते सति राघवस्तं रणभङ्गानुष्ठा जं॰म॰
नेन उपास्थित परिचितवान् संगतकरणआत्मनेपदं स्थाघ्वोरिच्चे
तीत्वं ह्रस्वादंगादिति सिचोलोपः पितुः सखायं मम पितुः सखाय
मिति कृत्वा सखिशब्दाद्द्वितीयैकवचने रूपं सख्युरसम्बुद्धाविति
णित्वाद्वृद्धिरायादेशः पप्रच्छ पृष्टवान् तं पक्षिणं जटायुं किं जान
कीवार्त्तां संग्रामञ्च ततउपस्थानानन्तरं रावणं द्विषन्तं शत्रुं आ
ख्याय कथयित्वा रावणेन हृता सीतेति पततां पक्षिणां वरोजटा
युर्ममारेति परेणान्वयः॥ ४२॥

उपेत्यादि। पक्षिणा एवमुक्ते सति राघवस्तं पितुः सखायं भ॰
उपास्थित आराधितवान् मैत्राध्वसङ्ग इति सं स्थादेर्ङिन्ष्टीमेइति
ङित्गुणाभावश्च झस्त्वादिति सिलोपः ततउपस्थानानन्तरं द्विष
न्तं शत्रुं रावणमाख्याय सीता तेन हृतेति कथयित्वा पततां पक्षि
णां वरः श्रेष्ठोजटायुर्ममारेति वक्ष्यमाणश्लोकेन सम्बन्धः॥ ४२॥

व्रणवेदनया ग्लायन्ममार गिरिकन्दरे। तस्याम्भ
स्युक्रियां कृत्वा प्रतस्थाते पुनर्व्वनं॥ ४३॥

व्रणेत्यादि। व्रणकृता वेदना पीडा मध्यपदलोपी समासः तया जं॰म

म्लायन् म्लानिं गच्छन् व्रणार्त्या यादेश: ममार मृतः क गिरिकन्द
रे यं गिरिमन्वशूपत् तस्य निम्नप्रदेशे कन्दं रातीति व्युत्पत्तिमा
त्रं तस्य जटायोरग्न्य त्रुक्रियां दाहमुदकदानञ्च कृत्वा पुनर्भूयो
वनमरण्यं प्रतस्थाते प्रस्थितौ समवप्रविभ्य इत्यात्मनेपदं ॥ ४२ ॥

भ० व्रणेत्यादि। व्रणेन या वेदना तया म्लायन् म्लानिं गच्छन्
ममार अथ गिरिकन्दरे यं गिरिमन्वशूपद्रामलक्ष्मणौ निम्न
प्रदेशे गुहायां वा अग्निक्रियां दाहं अम्बुक्रियां तर्पणं च कृत्वा
पुनर्वनं प्रतस्थाते अर्थाद्रामलक्ष्मणौ प्रतिष्ठानिर्णयेत्यादिना
प्रस्थामं भुङ्क्षाह्वेममिति नियमात् ठीपं। अथालभ्य धनुराम
इत्यादिपद्यार्द्धादनन्तरं सीताविरहदुःखार्त्तः कोपसंरक्तलो
चन इति यमं युनज्मि कालेनेत्यादिपद्यार्द्धानन्तरं विनज्मि धाम
सर्व्वेषां तर्णम्मि सकलं जगदिति एवं वदन् दाशरथिरित्यादि
पद्यार्द्धादनन्तरं जगन्नाशाय सन्नद्धस्तृणवत् स्वेन तेजसेति न्यवर्त्त
यत् सनिचाभृरित्यादिपद्यार्द्धानन्तरं तेजःचाचं विसृजन्तं दिध
चन्तमिवानलमिति तं सीताघातिनं मत्वेत्यादिपद्यार्द्धानन्तरं
प्रोवाच सतदापच्ची भयाद्रामेण तर्जितइति उपास्थितैवमुक्त
तमित्यादि पद्यार्द्धानन्तरं पप्रच्छ जानकीवार्त्तां संग्रामञ्च पतत्रि
णमिति तस्याग्न्यम्बुक्रियां कृत्वेत्यादि पद्यार्द्धानन्तरं विराधसोपि
वांसौ तां विचिन्वानावितस्ततइति पद्यार्द्धं केनचित् क्वचित् पुस्त
के प्रक्षिप्तं सर्व्वमिदं प्राचीनैरुपेचितत्वादमूलमेव तत्राप्यथालभ्य
धनुराम इत्यादिपद्यार्द्धानन्तरं सीताविरहदुःखार्त्तः कोपसंरक्त
लोचनइति पद्यार्द्धमतीवायुक्तं नशब्दाधिकारे नशब्दाभावात्
। ४२ ॥

सत्वानजस्रं घोरेण बलापकर्षमश्नता। क्षुध्यता ज
गृहाते तौ रक्षसा दीर्घबाहुना॥ ४४॥

सत्वानित्यादि। तौ रामलक्ष्मणौ रक्षसा राक्षसेन जगृहाते ज०म०
गृहीतौ कर्म्मणि लिट् किं नाम्ना दीर्घबाहुना अन्वर्था चेयं संज्ञा
एव एकेन बाहुना दितीयोदितीयेन क्षुध्यता बुभुक्षमाणेन
घोरेण भीमेन सत्वान् अजस्रं सदा नञ्पूर्व्वाज्जसेर्नमि कम्पीति
रः अश्नता भुञ्जानेन किं कृत्वा बलापकर्षं बलादाकृष्येत पाका
दिकमनपेक्ष्य अपादाने परीप्सायामिति णमुल्॥ ४४॥

सत्वानित्यादि। तौ रामलक्ष्मणौ दीर्घबाहुनाम्ना रक्षसा भ०
जगृहाते गृहीतौ कर्म्मणि ठा क्षुध्यता बुभुक्षुणा दिवादित्वात् श्यन्
बलापकर्षं सत्वान् प्राणिनोऽजस्रं निरन्तरं अश्नता भक्षयता ब
लादपकृष्य त्वरया पाकसंस्कारादिकमकृत्वैव पक्षम्यन्तात्त्वरायां
णमिति परः स्वमते बलेनापकर्षोऽपकर्षणं यत्रेति सत्वभक्षण
क्रियाविशेषणं एतेन त्वरयापरिष्कारादिकं तदपि प्राप्तं परि
ष्कृतत्वादौ बलहेतुत्वस्य वैयर्थ्यात् क्षणम्वित्यस्य योगविभागादा
क्षणम् घोरेण भयदेन नञ्पूर्व्वाज्जसेर्हिंसदीपकम्पाजसेति रः
॥ ४४॥

भग्नौ चक्रतुस्तस्य निस्त्रिंशाभ्यां रघूत्तमौ। स
च्छिन्नबाहुरपतद्विक्लवो क्लवयन् भुवं॥ ४५॥

इति प्रकीर्णकाः।

ज॰म॰ भुजावित्यादि। रघूत्तमौ रामलक्ष्मणौ तस्य योजनबाहोः बाहू यथास्थानमागतौ चक्रततुः छिन्नवन्तौ कृतं छेदनं इत्यस्य रूपं काभ्यां निस्त्रिंशाभ्यां खड्गाभ्यां निर्गतस्त्रिंशतोऽङ्गुलिभ्य इति वाक्ये डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानमिति त्रिं. च्छ ब्दाड्डच्विधिः निरादय इति समासः टिलोपः सञ्छिन्नबाहुः ह. त भुजः सन् अपतत् पतितः पतेर्लङि रूपं लृदित्वादङ् विक्लवो व्याकुलः भुवं भूमिं क्लवयन् क्लवचलने घटादित्वे ह्रस्वत्वं। इति प्रकीर्णकाः ॥ ४५ ॥

भ॰ भुजावित्यादि। रघूत्तमौ निस्त्रिंशाभ्यां तस्य रक्षसो भुजौ खड्गग्रहणाद्यतौ चक्रततुः छतौ पच्छिदि त्रिंशतोऽङ्गुलीभ्यो निर्गतः निस्त्रिंशः निरः शतेः डइति सूत्रे निश इति निर्दिशात् निष्प तन्त्य इत्यादिवत् ज्ञापकप्राप्तस्य षत्वस्याभावः त्रिंशतोऽङ्गुलीभ्यो ऽधिक परिमाणं खड्गस्याकं निस्त्रिंशः करखड्गयोरिति कोषः स च्छिन्नबाहुः सन् भुवं क्लवयन् कम्पयन् न्यपतत् क्लव ह्मलचालने ज्वलह्मलेत्यादिना अगर्वा ह्रस्वः निक्लवो व्याकुलः। इति प्रकीर्णकाः ॥ ४५ ॥

## अथ कृत्याधिकारः।

प्रष्टव्यं पृच्छतस्तस्य कथनीयमवीवचत्। आत्मानं वनवासञ्च जेयञ्चारिं रघूत्तमः ॥ ४६ ॥

ज॰म॰ इतः परं कृत्याधिकारः। प्रष्टव्यमित्यादि। सयोजनबाहुः नि हतो रामं पप्रच्छ कोभवान् कस्य पुत्रः कथं तव वनवासः कस्माच्चो

द्विग्रः मन् भ्रमसीति प्रष्टव्यं प्रश्नार्हं पृच्छतस्तस्य तव्यत्तव्यानीयर इति तव्यत् प्रश्चेति षत्वं टलस्य रघूत्तमः इदानीं कथनीयं कथनार्हं तत्प्रश्नानुरूपं पूर्व्वेणानीयर अवीवचदकिस्म वचभाषणे चौरादिकः स्वार्थिकोणिच् लुङ् चङ णिलोपपदृस्वः द्विर्व्वचनमभ्यासावेलदीर्घत्वेषु रूपं किन्तदित्याह आत्मानं राभोदाशरथिरिति वनवासं पितुरादेशात् वनवासं जेयं चारिं यः कनकमृगछलेन रावणः सीतामपहृतवान् ॥ ४६ ॥ भ०

अथ कृत्याधिकारः। स्वमते त्यास्तव्यानीयघ्यण्क्यप्केलिमाः। प्रष्टव्यमित्यादि। कस्त्वं कथमिहागतइत्यादि प्रश्नार्हं पृच्छतस्तस्य राक्षसस्य सम्बन्धे रघूत्तमः कथनार्हं प्रश्नानुरूपं अवीवचत् कथितवान् वच्कच्सन्देशे किलाचुरादिः ञिश्रीत्यङ् न्यङ्गु ङःस्वः खेःमन्वत् ञेर्लोपः किन्तदित्याह आत्मानं पित्रादिसम्बन्धेन वनतासं वनवासकारणमर्थात् जेयं जेतव्यमरिं शत्रुं रावणं शत्रुनावीजसहितमित्यर्थात् प्रक्षेशश्योषे तव्ये शक्राजिति पङ् शतरि तु शहस्वपाद्योरिति जिः कथत्कवाक्यप्रबन्धे हसालोपोऽशित्ययोरित्यकारलोपेऽपि स्थानिवद्भावाजञित्यस्तेजुङतोरिति ञिः ञेर्लोपः ते त्याः शक्यार्हेति अर्हे इत्यर्थे सर्व्वत्र त्यः॥ ४६॥

लभ्या कथन्नु वैदेही शक्योद्रष्टुं कथं रिपुः। सह्यः कथं वियोगश्च गद्यमेतत्त्वया मम॥ ४७॥

लभ्येत्यादि। कथं केन प्रकारेण उपायेन लभ्या वदेही प्राप्या पोरदुपधादिति यत् शत्रुः केन प्रकारेण द्रष्टुं शक्यः शकधृषेत्या जं०म०

दिना तुमुन् वियोगश्चायं सीतायाः कथं केन प्रकारेण मह्यः मा
हृच्यः सकिमद्वोस्वेति यत् गद्यमतत् कथनीयमेतत् गदमदेत्या
दिना यत् ममेति शेषविवक्षायां षष्ठी त्वं पुनः कः इति पृष्टश्चाह
॥ ४७ ॥

भ० लभ्येत्यादि। इत्यपि अवोचदिति सम्बन्धः नु प्रश्ने कथं वैदेही
लभ्या रिपुरावणः कथं द्रष्टुं शक्यः अज्ञातदेशत्वात् कथं वियोगः
सीतायाइत्यर्थात् मह्यः एतत्सर्वं त्वया मम सम्बन्धं गदं वाच्यं
त्वमङ्ग कृष्णप्राप्ता शकयज्ञकिलमशक्ता महदमर्थ एभ्यः पूरक
महत्यादिना यः गदभाषे इत्यस्मात् गदमदयमेति यः त्वयेति
स्वभावकृति कर्त्तुः षष्ठी निवृत्तिपक्षे तृतीया ॥ ४७ ॥

अहं राम श्रियः पुत्रोमद्यपीतइव भ्रमन्। पापच
र्य्योमुनः शापाज्जातइत्यवदत्स तं ॥ ४८ ॥

ज०म० अहमित्यादि। हे राम अहं श्रियः पुत्रः मद्यपीतइव वाहिता
ग्न्यादित्वान्निष्ठान्तस्य परनिपातः कार्य्याकार्य्यविवेकाभावात्पा
पचर्य्योराक्षसः मुनेः स्थूलशिरसः शापाज्जातउत्पन्नः माद्यत्य
नेनेति मद्यं चरितव्यं चर्य्यमेतौ पूर्व्ववद्यत्प्रत्ययान्तौ पापं चर्य्यं
यस्येत्यवदत् मयाजनवाङ्स्तं रामं वाक्यार्थोऽत्र कर्म्म ॥ ४८ ॥

भ० अहमित्यादि। इति मयाजनवाङ्स्तं रामं अवदत् किन्तदि
त्याह हे राम अहं श्रियोऽप्सरसः पुत्रः मद्यपीतः पीतमदिर
इव भ्रमन् कार्य्याकार्य्यविवेकशून्यत्वात् कृतापराधोमुनेः स्थूल
शिरसः शापात् पापचर्य्यः पापहेतुकर्म्मा राक्षसोजातः एतत्

कथनं नद्याख्ये रामप्रीत्यर्थं नदीभिर्यजिश्चर्वे नयतेऽनेनेति नत्रं अभिधानात् गदमदयमेत्यादिना अभावे विहितोऽपि यः करणे पीतं मत्रं येनेति आग्न्याहितादित्वात् क्तान्तस्य वा परनिपात इति रः स्वमते गमकत्वात् पापं चर्य्यं चरणीयं यस्य गदमद यमचरेति यः ॥ ४८ ॥

प्रयातस्तव यस्यत्वं प्रस्लपूतोऽब्रवीमि ते। रावणेन
हृता सीता लङ्कां नीता सुरारिणा ॥ ४९ ॥

प्रयातइत्यादि। इदानीं तव यस्यत्वं वध्यत्वं प्रयातः यमेः अ० म०
पूर्व्ववत् यत् प्रस्लपूतस्तव प्रस्लेण पावितः सन् देवोभूतोऽब्रवीमिते तुभ्यं कथयामि युष्मदस्मतुर्थ्येकवचनस्य तेमयावेकवचनइतिते आदेशः क्रियायोगे चतुर्थी कथनीयमाह रावणेन सुरारिणा हृता सीता लङ्कां नीता ॥ ४९ ॥

प्रयातइत्यादि। इदानीं तव यस्यत्वं वध्यत्वं प्रयातः प्राप्तः सन् भ०
तत्र प्रस्लेण पूतः पापान्निर्मुक्तः पूर्व्वदृष्टां लब्ध्वा ते तुभ्यमहं अब्रवीमीति तादर्थ्ये चो यमेः पूर्व्वेण यः पूक्लिश्यादितइत्यनेन वेमत्वात् नेमझोश्चीदिदेम इति पूङः क्तक्तवत्वोरनिमत्वं वचनीयमाह रावणेन सुरारिणा सीता हृता लङ्कां नीता प्रापिता च एतेन लङ्कायां रिपुर्द्रष्टव्यइति प्रश्नोद्दृष्टुं रिपुः कथमित्यवोत्तर मुक्तं ॥ ४९ ॥

ऋष्यमूकेऽनवद्योऽस्ति पण्यभ्रातृवधः कपिः। सुग्रीवोनाम वर्य्योऽसौ भवता चारुविक्रमः॥ ५०॥

ज॰ वैदेही प्राप्या कथमिति यमुपेत्य पृष्टवान् तं कथयन्नाह ऋष्यमूकइत्यादि। ऋष्यमूकपर्व्वते सुग्रीवोनाम कपिः चारुविक्रमो महापराक्रमोऽस्ति असौ भवता वर्य्योवरणीयः प्रार्थनीयः वर ईप्सायामिति चौरादिकाद्यत् यद्वा अवद्यपण्येत्यत्र वृञो वर्य्येति स्त्रियामनिरोधे अनिरोध्या सततप्रवर्त्तनी वर्य्या प्रीतिर्यस्येत्यर्थश्चाद्यत् भवता सहवर्य्यः प्रीतिमान् समानव्यसनत्वात् यतः पण्यभ्रातृवधः सः पण्याविक्रेतव्योभ्रातुर्वालिनोवधोयेन यद्येवं तदा कथं मया पापीयान् वर्य्यइत्यतआह अनवद्यः अगर्हणीयः दारापहारित्वेन आततायिनोभ्रातुर्वधस्य निर्दोषत्वादिति भावः ॥ ५०॥

भ॰ ऋष्येत्यादि। लभ्या कथं नु वैदेहीत्यस्योत्तरमिदं सुग्रीवो नाम कपिर्ऋष्यमूकनामपर्व्वते अस्ति असौ सुग्रीवोभवता वर्य्यः वरणीयः यतश्चारुविक्रमः अनुपकारकेण मया वृतोऽसौ मत्कार्य्यं कथं साधयिष्यतीत्याह पण्यभ्रातृवधः पण्याविक्रेतव्योभ्रातुर्वालिनोवधोयेन भवता वालिवधं कारयित्वा सीतोद्धारं करिष्यतीति भावः पण्यतुल्यत्वात्पण्यव्यपदेशः तर्हि पापात्मनस्तस्य वरणमनुचितं नच तद्वचनेऽपि विश्वासइत्यतआह अनवद्यः अनिन्द्यः दारापहारित्वेनाततायिनोभ्रातुर्वधे निर्दोषत्वात् नञ्पूर्व्वोवदिः पणश्च व्यवहृतौ स्तुतौ वृञ्गसम्भक्तौ एषां धातूनां पण्यवद्यवर्य्येत्यादिना निपातनात् तथा रूपं केचित्तु वरत्वेपीइत्यस्मात्तव्यानीययाइति ये वर्य्यइति रूपमित्याहुः ऋषयो

ऽमूकाश्रयशयनशीलाय च स्वश्यमूकः मूर्द्धन्यशकारवानयं स्वश्यो मृगविशेषो मूकोयत्रेति वा बलहृश्याद्दृश्यावलीति यमकात् तालव्यशकारवानिति केचित् केचित्तु स्वचोऽद्रिभेदे भमूके इति विश्वप्रकाशे एकदेशेनापि संज्ञा गम्यतइति न्यायात् स्वश्यमूकइत्येव संज्ञामाहुः नामेति प्रकाश्यस्वभावनाकोधाभ्युपगमेऽव्ययं अन्यथा भेदके तृतीया स्यात् ॥ ५० ॥

तेन वध्येन हन्तासि त्वमर्य्यं पुरुषाशिनां। राक्षसं क्रूरकर्म्माणं शक्रारिं दूरवासिनं ॥ ५१ ॥

तेनेत्यादि। तेन सुग्रीवेण त्वं राक्षसं हन्तासि निहनिष्यसि वध्येन वहत्यभिप्रेतमनेनेति वध्यं करणमिति यत् कीदृशमर्य्यं स्वामिनं पुरुषाशिनां राक्षसानां अर्य्यः स्वामिवैश्ययोरिति यन्निपात्यते क्रूरकर्म्माणं पापाचारं शक्रारिं रावणं यद्येवमहमेव हन्तुं समर्थइत्यभिप्रायेणाह दूरवासिनं समुद्रान्तरितवासित्वात् एकाकिना हन्तुं न शक्यतइति भावः ॥ ५१ ॥ ज०म०

तेनेत्यादि। तेन सुग्रीवेण त्वं राक्षसं रावणं हन्तासि त्वांरूपं वध्येन उह्यतेऽर्थोऽनेनेति वध्यस्तेन कीदृशं पुरुषाशिनां राक्षसानां अर्य्यं स्वामिनं क्रूरकर्म्माणं पापाचारं शक्रस्यापि अरिं एतेन दुर्ज्जयत्वं दर्शितं दूरे वसन्तं एतेन समुद्रान्तरितत्वात् सहायं विना न हन्तुं शक्यतइति भावः वहेर्णोऽशमये चासित्वात् चन योः पूर्व्वेण निपातः ॥ ५१ ॥ भ०

आस्ते स्मरन् सकान्ताया हृतायावालिना कपिः।
वृषोयथोपसर्य्याया गोष्ठे गोर्दण्डताडितः॥ ५२॥

ज॰म॰ यद्यनवद्यस्तदा कथमस्य पशोभीत्वबधइत्याह आस्तइत्यादि। वालिना हृतायाः कान्तायाः स्मरन्नास्ते कोऽन्यः सम्भवेत् यस्तं हत्वा त्वया मां योक्ष्यते अधीगिति कर्म्मणि षष्ठी कस्येव वृषो यथा उपसर्य्यायाआसन्नप्रसवायागोः स्मरन् गोष्ठे आस्ते उप सर्य्याकाल्याप्रजनइति निपातितं दण्डताडितः सन् दण्डस्थानी योऽत्र वाली॥ ५२॥

भ॰ आस्तइत्यादि। तुल्ययोः सख्यनैविश्वस्तुयनाय पश्वभात्वबध त्वादोषदर्शनाय वा इदमाह सकपिः सुग्रीवोवालिना हृतायाः कान्तायाः स्मरन् आस्ते कुतोमया सा लब्धव्येति कर्म्मणि षष्ठी यथा उपसर्य्यायाआसन्नगर्भग्रहणायागोः स्मरन् वृषोगोष्ठे गोस्थाने दण्डेन ताडितः सन् तिष्ठति तद्वत् दण्डतुल्योऽत्र वाली उपस्रियते वृषभेन गम्यते उपसर्य्या ऋतुमत्यां पश्वावदे त्यादिना निपात्यते॥ ५२॥

तेन सङ्गतमार्य्येण रामाजर्य्यं कुरु द्रुतं। लङ्कां प्राप्य ततः पापं दशग्रीवं हनिष्यसि॥ ५३॥

ज॰म॰ तेनेत्यादि। हे राम तेन वानरेण संगतं सख्यं अजर्य्यं अनपा यं नजीर्य्यतइत्यस्मिन् वाक्ये अजर्य्यं संगतमिति निपातितं आदौ विशेष्यत्वेनोपात्तं संगतं तद्विशेषणमजर्य्यं कुरु द्रुतं यावत्तस्यानेन

पुनर्विधेन संगतं न भवति आर्य्येण सदाचारेण अवलोक्यते ततः सङ्गतात् लङ्कां प्राप्य गत्वा पापं पापीयांसं रावणं हनिष्यति ॥ ५३ ॥

तेनेत्यादि। हे राम तेन सुग्रीवेण सह द्रुतं शीघ्रं अजर्य्यं भ० मैत्रीं कुरु कीदृशं सङ्गतं समयक्रमेण उचितं सङ्गतपदस्य सख्य वाचित्वेऽजर्य्यस्य तथार्थत्वादैयर्थ्यं स्यात् केचित्तु सुग्रीवेण सह सङ्गतं सख्यं कुरु कीदृशं अजर्य्यं अनपायं सङ्गतार्थस्यापि अजर्य्य शब्दस्योपचारादन्यत्र प्रवृत्तिरित्याहुः न जीर्य्यतीत्यजर्य्यं सङ्गतं पूर्व्ववन्निपातितं स्नेहोमैत्रीप्रीतिरजर्य्यसभाजनसङ्गतं प्रोक्तमिति हलायुधः आर्य्येण सदाचारेण ऋधातोर्हस्व्यासेरिति ण्यति रूपं आरात् पापेभ्यो दूरे यातीति आर्य्य इति केचित् तदा मनो षादिः द्रुतशब्देन यावद्भवद्विधेनान्येन सह तस्य सख्यं न जात मिति व्यज्यते ततः सङ्गतानन्तरं लङ्कां प्राप्य दशग्रीवं पापं त्वं हनिष्यसि स्वस्वर्द्धेन इतीम् ॥ ५३ ॥

अनृतोद्यं न तत्रास्ति सत्यवद्यं ब्रवीम्यहं। मित्र भूयं गतस्तस्य रिपुहत्यां करिष्यसि ॥ ५४ ॥

ननु यावत्कार्य्यं न सिध्यति तावन्मांसक्त इति कृतकृत्यस्तु नैवेत्य ज०म० तआह अनृतोद्यमित्यादि। सत्यमुद्यत इति कर्म्मणि यत् अहंसत्यं वचोब्रवीमीत्यर्थः अनृतोद्यं तत्र सुग्रीवे नास्ति अनृतमसत्यं उद्यं वचनं अनृतोद्यं भावे क्यप् यजादित्वात्संप्रसारणं उभयत्रापि

वदः सुपि क्यप् चेति चकाराद्यत् यस्मादेवं तस्मान्मित्रभूयं मित्रभावं गतः भुवोभावे क्यप् रिपुहत्यां शत्रुहत्यां करिष्यसि हनस्तचेति क्यप् तकारस्याऽन्तादेशः ॥ ५४ ॥

भ० अनृतोद्यमित्यादि। स्वकार्यं साधयित्वा यदि मामुपेक्षते तदा किं स्यादित्याह अहं सत्यवद्यं सत्यवचनं ब्रवीमि तव सुग्रीवेऽनृतोद्यं मिथ्यावचनं नास्ति वदेर्वाचि लोर्भेदः क्यपर्याविति क्यप् यच स्वपाद्योरिति जिः तस्मात्तस्य सुग्रीवस्य मित्रभूयं मित्रभावं गतः सन् रिपुहत्यां शत्रुवधं करिष्यसि भूहनःक्यप्भावेनतस्येति क्यप् नस्य तश्च लिङ्गभेदोऽभिधानात् ॥ ५४ ॥

आदृत्यस्तेन वृत्येन स्तुत्योजुष्येण सङ्गतः। इत्यः शिष्येण गुरुवद्गृध्यमर्थमवाप्स्यसि ॥ ५५ ॥

०म० आदृत्य इत्यादि। तेन संगतः सन् गृध्यमभिलषणीयमवाप्स्यसि ऋदुपधादिति क्यप् कीदृशः कीदृशेनेत्याह आदृत्यः आदरणीयः वृत्येन वरणीयेन स्तुत्यः स्तवार्हः जुष्येण सेव्येन हनुमत्प्रभृतीनां कइव शिष्येण गुरुरिव यथोपाध्यायः शिष्येणैकार्थः अनुगम्यस्तद्वदिति एतिस्तुशास्वित्यादिना क्यप् ह्रस्वान्तात्तुक् ॥ ५५ ॥

भ० आदृत्येत्यादि। न केवलं रिपुहननमन्यदप्यस्तीत्याह तेन शिष्येणेव गुरुरिव त्वं सङ्गतः सन् गृध्यमाकाङ्क्षणीयमर्थमवाप्स्यसि त्वं कीदृशस्तेन वा कीदृशेन आदृत्यआदरणीयः वृत्येन वर

योगेन स्तुत्यः स्तवार्हः जुष्येण सेवार्हेण अनानामर्थात् तेन नृभ्य योरुभयोः सङ्गतं योग्यं इत्यः मनुमन्तव्यः अर्घास्तेन भवतोगुरु त्वेन तस्य शिष्यत्वेन मैत्रीकरणेऽपि न ते मानहानिरिति सूचितं इङ्मादरे वृञ्स्तुतौ जुष्जुलस्तुतौ शङ्गोतिजुषमुदिश्वे इणगतौ शासुसुशासने गृधिर्युरिमे एभ्योहभृजुषेत्यादिना क्यप् लस्य तत्त्पिति ॥ ५५ ॥

नाखेयः सागरोऽप्यन्यस्तस्य सङ्कृत्यशालिनः। मन्यु स्तस्य त्वया मार्ग्योमृज्यः शोकस्य तेन ते ॥ ५६ ॥

नाखेयइत्यादि। तस्य सुग्रीवस्य सङ्कृत्यशालिनः इनुमदादिभृ जं०म० त्ययुक्तस्य भृञोऽसंज्ञायामिति क्यप् अन्योद्वितीयः सागरोऽपि नाखेयोन खननीयः अपितु खननीयएव अपिशब्दः सम्भावनायां तस्य कारणं सङ्कृत्यशालित्वं ईचखनइति क्यवोकारौ तस्य शरी रस्य मन्युस्त्वया मार्ग्योऽपनेयः ते तव तेन च शोकोमृज्यः ऋजे र्विभाषेति यदिकल्पे ण्यत् ॥ ५६ ॥

नाखेयइत्यादि। इनूमदादिसङ्कृत्यशालिनस्तस्य सुग्रीवस्य भ० अन्योऽपि सागरोन अखेयः अपि तु शक्यखननएव एतेन तस्यैषं बड्सहायत्वं समुद्रलङ्घनमपि सुकरमिति सूचितं खनुऽविदारे खनाश्चेरेये इति टेरेत्वं तस्मात् प्रथमं त्वया तस्य मन्युर्दैन्यं मार्ग्योमार्ज्जनीयः पश्चात्तव शोकस्येव मृज्यः अपनेयः एतेन मह्यः कथं वियोगस्येत्यचोत्तरं दत्तं सुग्रीवेणाचिरादेव वियोगा

पनयात् अपिशब्दः सम्भावनयां सृजलूषश्रुद्धौ हवृषसृजेनि वा क्यप् पक्षे ऋहलोर्ण्यदिति घ्यण् चजोःकुघिण्ण्यतोरिति गत्वं सृजो ऽकुङ्कितीति गुणः ॥ ५६ ॥

सराजसूययाजीव तेजसा सूर्य्यसन्निभः । अमृषो द्यं वदन् रुच्योजगाहे द्यां निशाचरः ॥ ५७ ॥

ज०म० सइत्यादि। सनिशाचरोद्यामाकाशं जगाहे गतः राजसूययाजीव राज्ञा सूयते राजा वा अनेन सूतइति राजसूयः क्रतुः तनेष्टवान् सराजसूययाजी करणे यजइति णिनिः तद्वदित्यर्थः रुच्यः प्रियोजातोरामस्येत्यर्थात् राजसूयइत्यादिना क्यबन्ता राजसूयादयः ॥ ५७ ॥

भ० सराजेत्यादि। इत्येवममृषोद्यं सत्यवचनं वदन् सनिशाचरोयोजनवाञ्छी स्वर्गं आकाशं वा जगाहे गतः राजसूयनाम यज्ञकर्त्तेव तेजसा सूर्य्यतुल्यः रुच्यः रामस्य रुचिविषयः प्रिय इति यावत् सुजनसम्भाषितदपीडामन्वे राज्ञा सूयते सोमोऽत्रेति राजसूयः पाय्यधाय्येत्यादिना निपातितः राजसूयेन यजते राजसूययाजी यज्ञादित्वात् णिन् सरतीति सूर्य्योऽर्कः रोचते रुच्यः एतौ गृह्यविनीयेत्यादिना निपातितौ सूरएव सूर्य्यः स्वार्थयइति गोयीचन्द्रः नञ्पूर्व्वमृषाशब्दादुदेर्नित्यं क्यप् मृषोद्य मित्यमित्युक्तेः ॥ ५७ ॥

अक्लिष्टपच्याः पश्यन्तौ ततो दाशरथी लताः। रत्ना न्नपानकुप्यानामाटतुर्नष्टसंस्मृती ॥ ५८ ॥

अक्लिष्टपच्या इत्यादि। ततोनिशाचरगमनानन्तरं दाशरथी रामलक्ष्मणावाटतुर्गतवन्तौ कीदृशौ नष्टा संस्मृतिर्ययोः केषां सं स्मृतिः रत्नान्नपानकुप्यानां रत्नान्नपानानि प्रसिद्धानि कुप्यं स्वर्ण रजताभ्यामन्यत् वस्तु तत् क्यप् गकारस्य ककारः कर्म्मणि षष्ठी लताः पश्यन्तौ क्लिष्टे पच्यन्तेइति क्लिष्टपच्याः पूर्व्ववत् क्यप् पश्चा न्नञ्समासः स्वयमेव पच्यन्ते यास्ता इत्यर्थः ॥ ५८ ॥ जं०म०

अक्लिष्टेत्यादि। ततस्तद्गमनानन्तरं लताः पश्यन्तौ दाशर थी रामलक्ष्मणौ आटतुः अटगतौ लताः कीदृशीः अक्लिष्टपच्याः क्लिष्टे चेत्रे स्वयमेव पच्यन्तइति क्लिष्टपच्याः पूर्व्वेण निपातः पश्चा न्नञ्समासः कीदृशौ रत्नानां अन्नस्य पानस्य कुप्यानां ताम्रा दीनाञ्च नष्टा सम्यक् स्मृतिर्ययोः गुणभूतापि क्रिया साधनसम्बन्ध मनुभवतीति कर्म्मणि षष्ठी सम्बन्धविवक्षयेत्यन्ये कुप्यतइति कुप्यं स्वर्णरूप्याभ्यामन्यद्धनं पूर्व्ववन्निपातः ॥ ५८ ॥ भ०

समुत्तरन्तावव्यथ्यौ नदान् भिद्योद्ध्यसन्निभान्। सिध्यतारामिव ख्यातां शबरीमापतुर्व्वने ॥ ५९ ॥

समुत्तरन्तावित्यादि। तौ तस्मिन् वने शबरीमापतुः प्राप्तव न्तौ अव्यथ्यौ न व्यथेते इति पूर्व्ववत् क्यप् परिश्रमवर्जितावित्यर्थः जं०म०

नदान् समुत्तरन्तौ कीदृशान् भिद्योद्ध्यसन्निभान् भिद्योद्ध्यौ नदवि शेषौ भिद्योद्ध्याविति पूर्ब्बवत् निपातितं भिनत्ति कूलमिति भिद्यः उज्झत्युदकमिति उद्ध्यः उद्ग्मउत्सर्गे दकारात्परस्य धकारो निपात्यते तत्सदृशान् नदान् सिध्यतारामिव ख्यातां सिध्यन्त्यस्मि न्निति सिध्यः पुष्यसिध्यौ नक्षत्रे इति निपातनात् पुष्याख्यां तारा मिव ख्यातां शवरीं॥ ५८॥

भ० समुत्तरन्तावित्यादि। तौ वने शवरीमापतुः प्राप्तवन्तौ न व्यथेते अव्यथौ नदान् समुत्तरन्तौ कीदृशान् भिद्योद्ध्यसन्निभान् कूलं भिनत्तीति भिद्योनदः वार्य्युज्झतीति उद्ध्योनदः तयोस्तु ल्यान् शवरीं कीदृशीं सिध्यतारामिव कार्य्यसाधकत्वात् ख्यातां प्रसिद्धानुभवां कार्य्यं साधयतीति सिध्या सर्व्वत्र गृह्यविनीयेत्या दिना निपातः॥ ५८ ॥

वसानां वल्कले शुद्धे विपूयैः कृतमेखलां। श्यामा मञ्जनपिण्डाभां दण्डिनीमजिनास्तरां॥ ६०॥

भ० वसानामित्यादि। वसानां परिदधानां वल्कले विपूयैर्म्मुञ्जैः कृतमेखलां कृतकटिसूत्रां यद्यपि विपूर्ब्बस्य पवतेर्विपूयइत्यादि ना मुञ्जे निपातितं तथापि मुञ्जानामनुपहतत्वं ज्ञापयितुं विपू यैरिति विशेषणं पवित्रैरित्यर्थः मुञ्जशब्दस्तदानीं सामान्यमाह विपूयैरित्युक्ते मुञ्जैरित्युपादानमनर्थकं एवं कृत्वा पाठान्तरमु च्यते वसानां वल्कले शुद्धे विपूयैरिति श्यामां कृष्णां श्यामेम इति निष्ठामत्वं अंजनपिण्डस्येवाभा यस्यास्तीति तां कृष्णां

दण्डिनीं गृहीतदण्डां आस्तीर्य्यंतदति आस्तरः च्छदोरप् अजिनमास्तरउत्तरामंगोयस्यास्तामजिनास्तरां ॥ ६० ॥

वसानामित्यादि। ईद्वा तामनुचन्द्रामदति तृतीयश्लोकेनान्वयः शुद्धं वल्कलद्वयं वसानां वसनङ्मृतौ स्तृतिराच्छादनं विपूयैर्मुञ्जैः कृतमेखलां कृतकटीसूत्रां पृङ्गोधे पूर्व्ववन्निपातः शुद्धे इत्यत्र मुञ्जैरिति पाठे विपूयैरित्यस्य पवित्रैरित्यर्थः यद्यपि विपूयशब्दो मुञ्जे रूढस्तथाप्यन्वयवशात् पवित्रार्थः चामां अतेन चीणां चैगुण्यचामकवदति कस्य मः अञ्जनपिण्डवदाभा यस्यास्तां तद्वदाभातीति वा दण्डिनीं पालाशदण्डवतीं अजिनमास्तरः शयनी यस्याः आस्तरउत्तरामङ्गदति केचित् ॥ ६० ॥ भ०

प्रगृह्यपदवत् साध्वीं स्पष्टरूपामविक्रियां। अगृह्यां वीतकामत्वाद्देवगृह्यामनिन्दितां ॥६१॥

प्रगृह्येत्यादि। अविक्रियामजातविकारां अतएव स्पष्टरूपां एवञ्च साध्वीं साधुचरितां कमिव प्रगृह्यपदवत् यस्य पदस्य प्रगृह्यसंज्ञा तत्पदं प्रगृह्यं प्रत्यपिभ्यांग्रहेरित्यनुवृत्तौ पदास्वैरित्यादिना प्रपूर्व्वाद्ग्रहेः पदेऽभिधेये क्यप् यथा तत्पदमविकाररूपत्वात् स्पष्टं साधु च अतप्रगृह्याअचीति प्रकृतिभावेन स्वरसन्ध्यभावादित्यर्थः कथमजातविक्रियेति चेदाह अगृह्यां ग्रहेः स्वैरविषये क्यप् अगृह्यामस्वैरिणीमस्वतन्त्रा न भवतीत्यर्थः कस्मात् वीतरागत्वात् वीतरागाप्यस्वतन्त्रा भवति देवगृह्याममरपक्षां पक्षविषये क्यप् एवं चानिन्दितामगर्हितां ॥ ६१ ॥ ज०म०

भ० प्रगृह्योत्यादि। नास्ति विक्रिया रागादिविकारो यस्यास्ताम विक्रियां स्पष्टं अकौटिल्यं व्यक्तं रूपं स्वभावो यस्यास्तां स्पष्टरूपां साध्वीं साधुचरितां अतएव प्रगृह्यपदतुल्यां यत्र नाओऽन्तोऽना ङ्विमुद्येत्यादिना सन्धिनिषेधः क्रियते तत्र पाणिनिना प्रगृह्यसंज्ञा कृता गृह्यविनोयेत्यादिना पदादौ गृह्यं निपातितं पदादिविष यस्मूदाहरणेऽभिहितः तथाहि प्रगृह्यं पदमित्यादि तदपि पदं विकाररहितं अतएव स्पष्टरूपं दीर्घादिविकारे सत्येव रूप स्यान्यथाभावात् साधु च भवति अर्थप्रतिपादकत्वं धर्म्मजनकत्वं व्याकरणव्युत्पाद्यत्वं वा पदस्य साधुत्वं अविक्रियत्वे हेतुमाह अ गृह्यां स्वतन्त्रां विगतकामत्वात् सरागा हि भोगार्थं परतन्त्रा भवति गृह्या परतन्त्रा पश्चान्नञ्समासः देवगृह्यां देववर्ग्यां देव पक्षपातिनीं अतएवानिन्दितां वीतकामत्वादित्यत्र पूर्व्वं स्त्रीत्वा विवक्षया त्वप्रत्ययः स्त्रीत्वविवक्षा चेत् पुंवत्स्युक्तइति पुम्बद्भावः ॥ ६२ ॥

धर्म्मकृत्यरतां नित्यमवृष्यफलभोजनां। दृष्ट्वा ताम मुचद्रामो युग्यायातइव श्रमं ॥ ६२ ॥

ज०म० धर्म्मकृत्यरतामित्यादि। पुण्यकर्म्मरतां नित्यं अवृष्यफलभोज नां वृष्याणीन्द्रियविकारनिमित्तानि फलानि भोजनं यस्याः पश्चा न्नञ्समासः विभाषाकृवृषोरिति क्यप् दृष्ट्वा तां तथाविधां श्रम ममुचत् मुक्तवान् तद्दर्शनाह्लादितत्वात् युग्यायातइव वाहनं प्राप्त इव क्यप् युग्यञ्च पत्रइति निपातितं ॥ ६२ ॥

धर्म्मेत्यादि। नित्यमविरतं धर्म्मस्य कृत्ये करणे रतां वृष्यं भ०
वैद्यशास्त्रोक्तवीर्य्यकरं विकारोत्पादकं तद्भिन्नं फलमेव भोजनं
यस्याः भुज्यतेऽनेनेति वेति घञ्ल्युनटो, वेदति अनट् तेन भोजनं
यस्यादति वा कृञ्जडुदक्तौ वृषमेचने आभ्यां कृवृषमृजेत्यादिना
वा क्यप् एवम्भूतां तां शवरीं दृष्ट्वा चित्तप्रसन्नतया रामः श्रमम
मुचत् त्यक्तवान् मुञ्चशपञ्चोमोचि ल्वदित्वात ङः युगेन वाहनं
नाश्वादिना आगतइव ग्राह्यविनोयेत्यादिना युजः क्यपि युग्यं नि
पातितं॥ ६२ ॥

सतामूचेऽथ कच्चित्त्वममावास्यासमुन्नये। पितृणां
कुरुषे कार्य्यमवाच्यैः स्वादुभिः फलैः॥ ६३॥

सद्त्यादि। अथानन्तरं त्यक्तश्रमः सरामस्तां शवरीमूचे ज०म०
उक्तवान् कच्चित् किं त्वं अमावास्यायाः संप्राप्तौ पितॄणां कार्य्यं तच्च
प्रीत्यर्थं ब्राह्मणभोजनं स्वादुभिर्मिष्टैः फलैः अवाच्यैरवचनीयैः
कुरुषे अमा सह वसतोऽस्यां चन्द्रार्काविति अमापूर्व्वकवसधातोः
क्यप्॥ ६२ ॥

सतामित्यादि। अथ अमत्यागानन्तरं सरामस्तां शवरीं भ०
ऊचे कथितवान् वुलञ्जउक्तौ वचोऽरे कच्चिदिति कामप्रवेदने
ऽव्ययं त्वं फलैरमावास्यायास्तिथेः समुन्नये सम्प्राप्तौ पितॄणां सम्ब
न्धि कार्य्यं कुरुषे कोदृशैः फलैः अवाच्यैः अनिन्द्यैः स्वादुभिर्मिष्टैः
अमा सहार्थेऽव्ययं सहवसतोऽस्यां चन्द्रार्कावित्यमावास्या यदा

अमा नाम रवेरश्मिः सूर्य्यलोके प्रतिष्ठिता। तस्यां सोमोवसत्यस्या ममावास्या प्रकीर्त्तिता। पाय्यधाय्येत्यादिना घ्यणि निपातः इत्वृ षस्त्रजेत्यस्याप्रवृत्तिपक्षे हशोहस्त्रयासोरिति घ्यण् वाच्यं वचनीयं निन्द्यमेव रूढं भुजवचेति घ्यणि कत्वनिषेधः॥ ६३॥

अवश्यपाव्यं पवसे कच्चित्त्वं देवभाग्घविः। आमा व्यमध्वरे सोमं द्विजैः कच्चिन्नमस्यसि॥ ६४॥

ज०म० अवश्यपाव्यमित्यादि। देवभाक् देवान् भजतइति भजोण्विः तद्धविः कच्चित् किं पवसे पवित्रीकरोपि मन्त्रादिना झयोहोऽन्य तरस्यामिति हकारस्य पूर्व्वसवर्णः पूञ्पवनइति भ्वादिकः की दृशमवश्यपाव्यमवश्यम्भावेन पावयितव्यमित्यर्थः ओरावश्यके ण्यत् मयूरव्यंसकादित्वात्समासः लुम्पेदवश्यमः कृत्ये तुंकाममनसो रपीति मकारलोपः सोमसोपधिविशेषं आमाव्यमभिषवार्हं अध्व रे यज्ञे द्विजैः सह कच्चित्त्वं नमस्यसि आसुयुवपीति यत्॥ ६४॥

भ० अवेत्यादि। कच्चित्त्वं देवभाग्घविर्हव्यं पवसे अग्निसंस्कारादिना पवित्रीकरोपि देवाय दातुमित्यर्थात् देवान् भजतइति ढाङ्गज वह्मसंहोविण शेहाद्युपादेति हस्य घत्वं हविः कीदृशं अवश्यपाव्यं अवश्यम्भावेन पवितुं पवित्रीकर्त्तुं योग्यं पूङ्शोधिघ्यणोरावश्यक इति घ्यण् ञित्यन्तगुङ्गतोरितिवृद्धिः ओदौतोऽव्यत्तलयकच्छ इति अच्छद्वावात् जलायवायावइति आवादेशः क्रियाविशेष णस्य द्वितीयान्तत्वात् तत्पुरुषः समासः द्यादित्वन्तपूर्व्वदानांष

संज्ञा इति सामान्योक्तेः मयूरव्यंसकादित्वात् समास इति न्यासः सम् तुम्मनःकामेऽवश्यमित्यादिना मलोपः कच्चित् त्वं द्विजैः सार्द्धं सोमं लताविशेषं नमस्यसि नमःकरोषीति नमस्तपोवरिव इति क्यः सोमं किम्भूतं अध्वरे यागे आसाव्यं अभिषवनीयं सन्ध्या नार्हं ऋहलोर्ण्यदिति ण्यत् द्विजैरासाव्यमिति वान्वयः॥ ६४ ॥

आचाम्यं सन्ध्ययोः कच्चित् सम्यक्तेन प्रहीयते।
कच्चिदग्निमिवानाय्यं काले संमन्यसेऽतिथिं॥ ६५ ॥

आचाम्यमित्यादि। प्रभातेऽपराह्ने च सन्ध्ययोर्यदाचाम्य जं॰मं॰
मुपस्पर्शनं पूर्ब्ववत् ण्यत् कच्चित्सम्यक् यथावत्तत्र तच्च न प्रहीयते काले आतिथ्योक्तकाले कच्चित् संमन्यसे पूजयसि यथा अग्निं आनाय्यम् मन्यसे तद्वत् आनाय्योनित्यइति नयतेराङ्पूर्ब्बस्य ण्यत् अयादेशौ निपात्येते॥ ६५ ॥

आचाम्यमित्यादि। कच्चित्ते तव सायं प्रातःसन्ध्ययोः सम्यगा भ॰
चाम्यं आचमनं स्वयमेव न प्रहीयते न भ्रश्यते कर्म्मकर्त्तरि प्रत्ययः पूग्नकसहेत्यादौ चमादिवर्ज्जात् ऋहलन्तत्वाद्‌ण्यण् जनबधः सेमइत्यादौ आचमवर्ज्जनान्न हृस्वः कच्चित् त्वं काले आतिथ्योचिते अतिथिं सम्मन्यसे पूजयसि यथा आनाय्यमग्निं दक्षिणाग्निं सम्मन्यसे तद्वत् आङ्पूर्ब्बस्य णीञोण्यणि पाय्यधाय्येत्यादिना निपातः॥ ६५ ॥

न प्रणाय्योजनः कश्चिन्निकाय्यं तेऽधितिष्ठति। देव
कार्य्यविघाताय धर्मद्रोही महोदये ॥ ६६ ॥

ज०म० नप्रणाय्य इत्यादि। महानुदयः स्वर्गापवर्गाणां यस्याः सा तथा हे महोदये देवकार्य्यविघाताय देवानहं हनिष्यामीति भाववचनाच्चेति भविष्यति घञ् तुमर्थाच्च भाववचनादिति चतुर्थी प्रणाय्योऽसम्मतो जनः प्रणाय्योऽसम्मताविति निपातितं कश्चित् निकाय्यं गृहं ते तव नाधितिष्ठति नाधिवसति पाय्येत्यादिना निवासे चिनोते निपूर्व्वान् ण्यद् आदेश्च कः आदेः कुत्वञ्च अधिशीङ्स्थासां कर्मेति कर्म धर्मद्रोही धर्मद्रोहशीलः॥ ६६ ॥

भ० नेत्यादि। हे महोदये कश्चित् प्रणाय्योऽसम्मतो जनश्चौरादि स्ते तव निकाय्यं निवासं देवकार्य्यविघातार्थं नाधितिष्ठति धर्मद्रोही धर्मद्रोहशीलः धर्माय द्रुह्यतीति ग्रहादित्वाणिन् धर्मद्रोहोऽस्यास्तीति वा प्रपूर्व्वणीञोण्यति प्रणाय्यः निपूर्व्वाच्चिनोतेर्ण्यति निकाय्यः द्वौ पूर्व्वेण निपात्येते कर्मक्रियेत्यादिना निकाय्यस्याधारत्वे कार्य्यत्वं महान् उदयः स्वर्गापवर्गफललक्षणस्तत्स्थानमेव वा यस्यास्तस्याः सम्बोधनं महोदयः कान्यकुब्जेऽभ्याभिपत्यापवर्गयोरिति विश्वदर्शनात् ततोऽर्शआदित्वादच् इत्यन्ये विघातायेति हनो घञि सेऽहोघाज्ञ्णिति चेति घः हस्य कुः॥ ६६ ॥

कुण्डपाय्यवतां कश्चिदग्निचित्यावतां तथा। कथा
भीरमसे नित्यमुपचाय्यवतां शुभे ॥ ६७ ॥

इति कृत्याः।

कुण्डपाय्यवतामित्यादि। कुण्डेन पीयतेऽत्र क्रतौ कुण्डपाय्यः क्रतुः क्रतौ कुण्डपाय्यसंचाय्याविति निपातितं कश्चित्कथाभीरमसे अलोपइति दीर्घः तथाग्निचित्यावतां आहिताग्निकानां कथाभीरमसे चित्याग्निचित्ये चेति निपात्यते अग्निचयनमग्निचित्या भावे क्यप् तुक् तद्वतां तथोपचाय्यवतां उपचीयते इत्युपचाय्योऽग्निः अग्नौ परिचाय्येति निपातितः उपपूर्व्वाच्चिनोतेर्ण्यदायादेशौ तद्वतां कथाभीरमसे शुभे कन्याणि। इति कृत्याधिकारः ॥६७॥ ज०म०

कुण्डेत्यादि। हे शुभे कल्याणि कश्चित् त्वं कुण्डपाय्यवतां तथा अग्निचित्यावतां तथा उपचाय्यवतां कथाभिर्नित्यं रमसे क्रीडसि कुण्डैः पीयतेऽत्र सोमइति कुण्डपाय्यः क्रतुविशेषः पाय्यधाय्येत्यादिना निपातः सविद्यते येषां इति सोऽस्त्यस्यपादइतुः अग्नेश्चयनं राशीभावइत्यग्निचित्या पूर्व्ववन्निपातः उपचीयतइत्युपचाय्योऽग्निः पूर्व्ववन्निपातः अग्निविशेषोयस्याविशेषाङ्ग। इति कृत्याः ॥६७॥ भ०

## अथ प्रकीर्णकाः।

वर्द्धते ते तपोभीरु व्यजेष्ठाविघ्ननायकान्। अजैषीः कामसंमोहौ संप्राण्थाविनयेन वा ॥६८॥

अतःपरं प्रकीर्णकाः। वर्द्धतइत्यादि हे भीरु कातरचित्ते तव तपोवर्द्धते तस्य च ये विघ्नास्तेषां ये नायकाः प्रणेतारस्तान् ज०म०

ज०म० व्यजेष्ठाः जितवत्यसि लुङि विपराभ्यांजेरित्यात्मनेपदं काममनो हे कश्चिद्‌जैषीः जितवत्यसि सिचि वृद्धिः विनयेन वा संप्राप्थाः संप्राप्तासि कर्म्मणि लुङ् झलोझलीति सिचोलोपः अचानुक्तमिति कश्चिदिति ग्राह्यं॥ ६८॥

अथ प्रकीर्णकाः।

भ० वर्द्धतइत्यादि कश्चिदित्यस्यानुषङ्गनोयं हे भीरु कश्चित्ते तव तपोवर्द्धते कश्चित् त्वं तपसा विघ्नानां नायकान् प्रणेतॄन् व्यजेष्ठा अभिभूतवत्यसि विपराजीति सं कश्चित् त्वं काममनङ्गविकारं समोहमविद्याञ्च ... जैषीः ब्रजवदंतिस्त्रिः कश्चिद्विनयेनापि त्वं सम्प्राप्थाः सम्प्राप्तासि कर्म्मणि ढो सम्बोधनमहिम्नार्थावगमात् कश्चिदित्यस्यानुषङ्गं केचिन्नेच्छन्ति॥ ६८॥

नायस्यसि तपस्यन्ती गुरून् सम्यगतूतुपः। यमा न्नोदविजिष्ठास्त्वं निजाय तपसेऽतुपः॥ ६९॥

ज०म० नायस्यसीत्यादि। तपस्यन्ती तपश्चरन्ती कश्चिन्नायस्यसि न खिद्यसे तपश्चरणशालीभूतेत्यर्थः कर्म्मणोरोमन्थेति क्यङ् तपसः परस्मैपदञ्च गुरून् आचार्य्यादीन् सम्यक् यथावदनुवृत्त्याऽतूतुपः तोषितवत्यसि तुषिर्ण्यन्तस्य लुङि रूपं चङिणिलोपादि यमा न्मृत्योर्नोदविजिष्ठाः नाभैषीः पुण्यकृतां नास्त्यभयमित्यर्थः ओविजेरात्मनेपदं लुङि सिचइट् विजइति सिचोङित्वेन गुणः निजायात्मीयाय अतुषः तुष्टवत्यसि॥ ६९॥

नायेत्यादि। अद्यापि कच्चिदनुपश्यते तपस्विनी तपःकुर्व्वती भ०
त्वं कच्चिन्नायस्यसि न खिद्यसे अत्यन्ताभ्यासात् ममस्तपोवरि
वदति कः इत्यस्युपतने कच्चित्त्वं गुरूनाचार्य्यादीन् सम्यगद्भुतुषः
तोषितवत्यसि तुषिस्थैर्य्यानितुष्टी त्यन्ताइड् अपखुरुःखःखेः
मन्वदिति खेर्षः कच्चित्त्वं यमात्म उदविजिष्ठाः नाभैषीः पुण्यवतां
मृत्योर्भयं नास्तीति भावः यमदन्द्रियनियहे वा कियत्कालं यमः
कार्य्यइति भयं दूरीभूतमित्यर्थः विजङ्गोऽभीकम्पे विजेर्नुर्नेमो
त्यगुणत्वं कच्चित्त्वं निजाय स्वकीयाय तपसे अतुषः तुष्टासि
अद्धावती असिद्धित्वशङ्काशून्या वासीत्यर्थः पुषादित्वात् ङः
॥ ६८ ॥

अथार्घ्यं मधुपर्काद्यमुपनीयादरादसौ। अर्च्चयि
त्वा फलैरर्च्च्यौ सर्व्वत्राख्यदनामयं॥ ७० ॥

इति प्रकीर्णकाः।

अथेत्यादि। अथानंतरमसौ शवरी अर्घ्यमर्घार्थं पादार्घाभ्या ज०म०
ञ्चेति यत् मधुपर्काद्यं मधुपर्कमिश्रमुदकं मधुपर्कः तदादं आदौ
भवमाद्यं तदुपनीयादरात् फलैरर्च्चयित्वा अर्च्च्यौ अर्च्चनार्हौ एतत्
रामलक्ष्मणौ सर्व्वत्रोक्तेषु अनामयं कल्याणं आख्यत्कथितवती
अस्यतीत्यङ्। इति प्रकीर्णकाः॥ ७० ॥

अथेत्यादि। एवं प्रश्नानन्तरं असौ शवरी मधुपर्केणाढ्यं भ०
सहितं अर्घ्यमुपनीय अर्च्च्यौ अर्घार्हौ रामलक्ष्मणौ फलैरादरात्
अर्च्चयित्वा सर्व्वत्र पूर्व्वपृष्टेष्वर्थेषु अनामयं कुशलं आख्यत उक्त

वती वक्तव्यश्चेति ङः मूल्ये पूजाविधावर्घः अर्घशब्दात्तदर्थे विका रसंघेति यः मधुपर्काद्यमिति पाठे आदौ भवमाद्यः मधुपर्कश्चा द्यौायस्येत्यर्घ्यविशेषणं यद्वा आदिरेवाद्यः अर्घ्यमधुपर्कादि पूजो पहारश्चोपनीयेत्यर्थः आमयशब्दो लक्षणया अनिष्टमात्रे प्रयु ज्यते। इति प्रकीर्णकाः॥ ७०॥

## अतःपरं कृदधिकारः।

सख्यस्य तव सुग्रीवः कारकः कपिनन्दनः। द्रुतं द्रष्टासि मैथिल्याः सैवमुक्त्वातिरोऽभवत्॥ ७१॥

ज०म० अथ कृदधिकारमाह। कृत्यानां तदन्तर्भावेऽपि भावकर्म णोःकृत्याइति विशेषप्रतिपादनार्थः पृथगधिकारः तत्रोपपदं मामोस्यमित्यादिना एतदप्यधिक्रियते तान् इतोदर्शयन्नाह सख्यस्येत्यादि सा शबरी तिरोऽभवदन्तर्भूता एवमुक्त्वा किं तदि त्याह तव सख्यस्य सखित्वस्य सख्युर्यः कर्मषष्ठी कारकः सुग्रीवः ण्वुल्तृचाविति ण्वुल् त्वया सह मैत्रीं करिष्यति कपिनन्दनः कपी नां नन्दयिता नन्द्यादिभ्योल्युः कृद्योगे षष्ठी अमीति वर्त्तमाने लट् ॥ ७१॥

भ० अथ कृदधिकारः। यद्यपि कृत्यानां कृत्त्वमस्ति तथापि भाव कर्मणोस्तद्विधानमिति सूचनाय पृथक् प्रदर्श्य कर्त्तरि शेषानाह तत्र निरुपपदसोपपदयोर्निरुपपदं प्रयोगवाहुल्यादादौ दर्श यति सख्यस्येत्यादि। सा शबरी एवमुक्त्वा तिरोऽभवत् अन्त

र्दिता किमन्तदित्याह सुग्रीवस्तव सख्यस्य कारकः सख्यं करिष्यति सख्युर्भावः कर्म्म वा सख्यं विकारसंघेति यः डघेहतीत्यादिना कर्म्मणि षष्ठी कपीनां नन्दयिता कपेः पुत्रो वा यहनन्दिपचादेरिति अनः ततोऽद्भुतं मैथिल्याद्रष्टाऽसि प्रचकोभविष्यसि असेर्भविष्यत्सामीप्ये की अभिधानात् असीति युष्मदर्थं अव्ययमिति वा द्वलकौघे इत्यादिषु कालस्यानिर्द्देशात् त्रिष्वपि कालेषु द्वणादयोभवन्तीति बोध्यं द्वगेर्वड्डोऽकिदिति रः॥ ७१॥

नन्दनानि मुनीन्द्राणां रमणानि वनौकसां। वनानि भेजतुर्व्वीरौ ततः पाम्पानि राघवौ॥ ७२॥

नन्दनानीत्यादि। ततउक्तादनन्तरं वीरौ राघवौ रामलक्ष्मणौ वनानि भेजतुः सेवितवन्तौ एत्वाभ्यासलोपौ द्वफलेत्यादिना पाम्पानीति पम्पाया अदूरं अदूरभवश्चेत्यण् मुनीन्द्राणां नन्दनानि प्रमोदकारीणि वनौकसां वनेचराणां उच्समवाये असादीणादिकोऽसुम् पृषादरादित्वाद्वर्णविपर्य्ययः तेषां रमणानि रतिजनकानि नन्द्यादित्वात् ल्युः कर्म्मणि षष्ठी॥ ७२॥ जं०म०

नन्दनानीत्यादि। ततोऽनन्तरं राघवौ पाम्पानि वनानि भेजतुः सेवितवन्तौ जग्मतुरित्यर्थः भजञोभागसेवयोः तृफलभजत्रपेति अतएत्वं खिलोपश्च पम्पानामसरःसमन्धीनि पम्पाया अदूरभवानीत्यर्थे वा विकारसंघेत्यादिना ष्णः मुनीन्द्राणां नन्दनानि प्रमोदकानि वनौकसां वनवासिनां रमणानि क्रीडाजनकानि उभयत्र यहनन्दिपचादेरिति अनः कर्म्मणि षष्ठी॥ ७२॥ भ०

भृङ्गालीकोकिलक्रुङ्भिर्व्वाशनैः पश्य लक्ष्मण। रोच नैर्भूषितां पम्पामस्माकं हृदयाविधं ॥ ७३ ॥

ज०म० भृङ्गालीत्यादि। हे लक्ष्मण पम्पां पश्य अस्माकं हृदयाविधं हृद यं विध्यतीति ग्रहिज्यादिना संप्रसारणं नहिवृतीति दीर्घः भूषितां कैर्भृङ्गालीभिः भ्रमरपङ्क्तिभिः कोकिलैः क्रुङ्भिश्च वाशनैः कूजद्भी रोचनैः शोभनैः क्रुङिति ऋत्विगादिना क्विन् निपातनसामर्थ्याद नुनासिकलोपाभावः संयोगाच्च लोपः क्विन्प्रत्ययस्येति कुत्वं ॥ ७३ ॥

भ० भृङ्गेत्यादि। रामइत्युवाचेत्यर्थाद्गम्यते हे लक्ष्मण पम्पां पश्य कीदृशीं भृङ्गालीभिर्भ्रमरपङ्क्तिभिः कोकिलैः क्रुङ्भिः क्रौ ञ्चैश्च भूषितां कुन्ठगत्यां चाम्रदित्यादिना विच् चकारेत्वं क्विप् संशयनिवारणार्थं नतु अव्ययार्थमिति बोध्यं विविति पाठइत्येके घडित्यादौ क्रुञ्चः पृथक्पाठात् प्राक्कड् दानुः अपेक्षमनोरि ति ङम्यान्तस्य लुप् कीदृशैः वाशनैः कूजद्भिः वाश्टङशब्दे रोचनैः शोभमानैः उभयत्र नन्द्यादित्वादनः पुनः किम्भूतां अस्माकं हृद याविधं चेतः पीडयन्तीं हृदयं विध्यतीति क्विप् ग्रहज्यपाद्यौरि ति जिः वीरुद्रोधङ्क्वाविति दीर्घनिर्देशात् क्वचित् क्विवन्ते पूर्व्वप दस्य दीर्घत्वमिति दीर्घः आङ्पूर्व्वस्य रूपं वा ॥ ७३ ॥

•

परिभावीनि ताराणां पश्य मन्थीनि चेतसां। उद्भा सीनि जलेजानि दुन्वन्त्यदयितं जनं ॥ ७४ ॥

परिभावीनीत्यादि। जलेजानि पद्मानि पश्य तत्पुरुषे क्वती त्यादिनाऽलुक् सप्तम्याः उद्भासीनि भासमानानि अतएव तारा णां परिभावीनि तिरस्कारीणि ततश्चेतसां मन्थीनि पीडाकारीणि अतोजनमदयितं प्रियारहितं दुन्वन्ति टुदु उपतापे स्वादिकः मन्थोद्भासपरिभूभ्यो ग्रहादित्वाणिनिः॥ ७४॥ ज॰म॰

परीत्यादि। हे लक्ष्मण जलेजानि पद्मानि पश्य हनजमादि ति डः सरसिजमित्युदाहरणेन क्वचित् समासे सप्तम्या अलुगिति सूचितं तत्पुरुषे क्वतिवहुलं सप्तम्या अलुगिति परः कीदृशानि उद्भासीनि शोभमानानि अतएव ताराणां परिभावीनि तिरस्का रकाणि समानीत्यर्थोवा ढपेक्रृत्यव्येति कर्म्मणि षष्ठी नोऽचोऽन्त रदुर्गेरित्यादौ भूवर्ज्जनात् न णत्वं किन्तु पूर्व्वोऽदान्तइत्यादिना समासाद्विहितेन स्वादिना सहितत्वात् विकल्पेन णत्वं नोऽचोऽन्त रित्यादिना उपसर्गमात्राश्रयस्यैव णत्वनिषेधात् अतएव चेतसां मन्थीनि पीडकानि सर्व्वत्र ग्रहादित्वाणिन् अतएव अदयितं प्रि यारहितं मादृशं जनं दुन्वन्ति पीडयन्ति टुदुउपतापे श्रुतरि स्वादित्वात् नुः॥ ७४॥ भ॰

सर्व्वत्र दयिताधीनं सुव्यक्तं रामणीयकं। येन जातं प्रियापाये कद्वदं हंसकोकिलं॥ ७५॥

सर्व्वत्रेत्यादि। हे लक्ष्मण सर्व्वत्र यत्किञ्चिद्रामणीयकं रमणी यस्य भावः योपधाद्गुरूपोत्तमाद्वुञ् तत्सर्व्वं दयिताधीनं दयितायत्तं स्पष्ट ज॰म॰

चेत्यादिना खः सुव्यक्तं स्पष्टं कुतः येन प्रियायाश्चभावमति हंसकोकिलं हंसाश्च कोकिलाश्चेति शकुनित्वात् द्वन्द्वैकत्वं कद्वदं कुत्सितप्रलपितं वदतीति पचाद्यच् कुत्सितं वदतीति रथवदयो श्चेति कोः कत् दयितायां सत्यां मधुरप्रलपितमिदमिति ॥ ७५ ॥

भ० सर्व्वञ्चेत्यादि। हे लक्ष्मण रामणीयकं यत्किञ्चित् रमणीयत्वं तत्सर्व्वञ्च दयिताधीनं प्रियानिमित्तकमिति सुव्यक्तं स्पष्टमेव कथमित्याह येन हेतुना प्रियायाश्चपाये विरहे सति हंसको किलमपि कद्वदं कुत्सितवादिजातं यदा सीतासीत्तदा मधुरा लापीदमासीदिति भावः कुत्सितं वदतीति कतत्वं रथवद् इति कदादेशः रमणीयस्य भावइति विकारमंधेति कण् हंसाश्च कोकिलाश्चेति समाहारद्वन्द्वः ॥ ७५ ॥

पक्षिभिर्वितर्दैर्यूनां शाखिभिः कुसुमोत्किरैः। अशो
योयस्य वा नास्ति प्रियाप्रम्लोभवेन्न सः ॥ ७६ ॥

ज०म० पक्षिभिरित्यादि। उद्दिहिंसानादरयोरित्यस्मादिगुपधः कः यूनां विर्द्दैः हिंसकैः पक्षिभिः शाखिभिर्वृक्षैश्च शीघ्रादिल्वा दिनिः कुसुमोत्किरैः उत्किरन्तीत्युत्किराः पूर्व्ववत् कः कुसुमा नामुत्किराः कर्तृकर्मणोः षष्ठीं विधाय समासः तैर्हेतुभूतैः करणभूतैर्वा सप्रम्लोन भवेत् प्रकर्षेण म्लायते प्रम्लः आतश्चोप सर्गेकः योऽज्ञः गुणदोषानभिज्ञः पूर्व्ववत्कः यस्य प्रियानास्ति तस्य प्रयोजनाभावः सर्व्वत्र विवेकित्वात् प्रीणातीति प्रियः इगुप धेति कः ॥ ७६ ॥

पचिभिरित्यादि। पचिभिः प्राचिभिस्च यएव जनः प्रमोतात्मा भ०
निमाश्च भवति योऽप्रमोऽप्रमोगुणदोषानभिज्ञोभवति यश्च वा आम
तोऽपि प्रियाजनोनास्ति सर्व्वत्र विरक्तत्वात् नलस्त्रविधोऽभिज्ञः
प्रियानुरक्तश्चेति भावः पचिभिः प्राचिभिस्च कोदृशैः घूणामर्यादि
रहितां विहरैर्हिंसकैः प्राचिभिः कीदृशैः कुसुमोत्करैः पुष्पवि
चेपकैः कुसुमधिगाद्रेच चकाराद्विंसायां कर्म्मविचेपे प्रागवो
धने प्रोअप्रीतो एभ्यः कगुप्राप्रीपकरति कः उपेक्षतीति कर्म्मषि
षष्ठी प्रमप्रायतीति प्रमः एचोऽविस्थादत्यच अचितीति विषय
यप्रमो पनजमादिति कः॥ ७६॥

ध्वनीनामुद्भमैरेभिर्मधूनामुद्धयैर्भृशं। आजिघ्रैः
पुष्पगन्धानां पतङ्गैर्म्लपितावयं॥ ७७॥

ध्वनीनामित्यादि। पतङ्गैर्भ्रमरैर्म्लपिताः पीडितावयं म्लाला ज०म०
वनुवमांचेति मिलात् क्तः पतेरङ्गपपविपीत्यौणादिकः ध्वनी
नामुद्धमैः ध्वनीन् कुर्व्वद्भिः आधातोः पाघ्रेति शः पाघ्राधेति धमा
देशः मधूनामुद्धयैःमधूनि पुनःपुनः पिवद्भिः धेट्पानरत्यसावा
देशः आजिघ्रैः पुष्पगन्धानां पुष्पगन्धान् गृह्णद्भिः पाघ्राधेति शः
कर्त्तरिकर्म्मणा षष्ठी॥ ७७॥

ध्वनीनामित्यादि। एभिः पतङ्गैर्वयं म्लपिताः पीडिताः विशे भ०
षेण मक्षिका भ्रमरैरिति गम्यते एभिरित्यङ्गुलीनिर्द्देशलेन वा
कोदृशैः ध्वनीनां गुञ्जितानां उद्धमैः कारकैः मधूनां उद्धयैः पा

नकारिभिः पुष्पगन्धानां घ्राणैः घ्राणकारिभिः भृशमत्यर्थं मितिं सर्वत्र क्रियाविशेषणं आशंसाशिप्रयुतौ ध्वनौ अनेकार्थत्वा दूव करोत्यर्थः घेटपाने घ्रागन्धग्रहणे एभ्योधेटहशपाघ्राध्मः शदृति शित्वात् आदाणपाघ्रेत्यादिना आधम शाशिश पतङ्गः पक्षिसूर्य्ययोः पतोगच्छतीति शर्डङ्गच्छोरु रमदृत्यादिना निपा तः ध्यायतेर्ध्वंस्तस्य ज्वलक्कलशलसेति गा वृक्षः॥ ७७।

धार्य्यैः कुसुमोर्म्मीणां पार्य्यैर्व्बाधितुं जनान्। शा खिभिर्हा हताभूयो हृदयानामुद्देजयैः॥ ७८॥

ज० धार्य्यैरित्यादि। हा कष्टं शाखिभिर्द्रुमैर्भूयोऽत्यर्थं वयं हताः कामशराणां धारणात् तदेवाह कुसुमानां ये ऊर्म्मयः भङ्गाः प्रकाशास्ता तान् धारयद्भिः ऊर्म्मिस्तरङ्गे पीड़ायां वेगे भङ्गप्रकाश योः। उत्कण्ठास्वसंकोचवोधेषु च प्रकीर्त्तितदूति विश्वः समूहे ऽपीति अतएव जनान् मद्विधान् वाधितुं पारयद्भिः यतो हृदया नामुद्देजयैरुत्कण्ठाजनकैरिति भावः धृञ्धारणे पृपालनपूरण योः एजृकम्पने च एभ्योणिजन्तेभ्यः अनुपसर्गोल्लिम्पविन्देत्यादि ना शः उदेजोति सूत्रे निर्द्देशात् अनुपसर्गादिति न निषेधः॥ ७८॥

भ० धार्य्यैरित्यादि। हा कष्टं शाखिभिर्वृक्षैर्व्वयं भूयोऽत्यर्थं हताः कीदृशैः कुसुमानामुर्म्मयः प्रकाशाः संङ्गा वा तेषां धार्य्यैः धारकैः अतएव जनान् वाधितुं पीड़यितुं पार्य्यैः पारयद्भिः यतो हृदयानामुद्देजयैः उत्कम्पकैः धृञ्ञ्स्थितौ पृलिपालनपूर

पयोः ह्रस्वान्तोऽनुदात्तादिः दीर्घान्तः श्रेयादिकस्य इत्यूकस्ये तत्पूर्व्वः एभ्यः प्रेरकान्यन्तेभ्यः सार्व्वधातीत्वादिना क्षः पारस्करो इवत् इत्यस्य न ग्रहणं प्रेरकान्यन्तः सार्व्वधातुक्यात् पवेरिति प्रति षेधेऽपि उद्देशः क्षः कृत्तद्धितसमासानामभिधानं नियामक मित्युक्तेः ऊर्म्मिस्तरङ्गे पीडायां वेगे वक्रप्रकाशयोः। उत्क ण्ठावस्थसहोपकोपयोरपि कोर्त्तितेति विश्वः समूहेति अथ मञ्जला॥ ७८॥

दद्दैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमं। लिम्पै रिव तनोर्व्वातैश्चेतयः स्याज्ज्वलोन कः॥ ७९॥

ददैरित्यादि। वातैर्ददैः दुःखस्य दुःखं ददद्भिः केभ्योमादृग्भ्यः अस्माद्दृशेभ्योविरहिभ्यः त्यदादिषुदृशइति क्विन् इदृशवतुम्वि त्याकारः धायैरामोदमुत्तमं आमोदं प्रियासङ्गमेन हर्षं यावत् विरहिभ्योदत्तस्य दुःखस्य धायैः पोषकैरित्यर्थः उत्तममिति क्रियाविशेषणं उत्तममामोदं धायैः कुसुमानां परिमलं धारय द्भिरिति व्याख्याने अनित्यत्वात् क्तप्रयोगे कर्म्मषष्ठ्यभावः लिम्पैरिव तनोः शरीरं लिम्पद्भिरिव वातैर्हेतुभिः कोनाम विरहाग्निना यस्ते तयमानः ज्वालाज्वलदग्निरिव न स्यात् किन्तु भवेदेवेति भावः ददैर्धायैरिति श्याद्व्यधेति आकारान्तलक्षणे शे प्राप्ते ददातिद धात्योरिति शपीभवतः शे आतोलोपः लेतुधुक् लिम्पश्चेतयइति अनुपसर्गादिति शः ज्वलइति ज्वलिति कसन्तेभ्योणइति वस्य विकल्पपक्षेणः॥ ७९॥

भ० इद्धैरित्यादि। कश्चेतश्चेतनायाम् अनोऽर्थादिरतो वाती वैतुभिर्ज्वलोम स्यात् अग्निरिव न भवति वायुभिश्चेतःसन्तापात् सर्व्वएव ज्वलो दीप्तिमान् स्यादिति वा केवलं मद्विधानां विरहिणां कष्टमित्याह मादृश्योऽह्नःबल इद्धैर्दीप्तिभिः यतः उन्मत्तमामोदं पुष्पसम्भिन्नं धार्य्येर्धारयद्भिः कश्चिद्विशेषेऽपि सामान्यप्रवृत्तिरिति न्यायात् इधेक्ततीति कर्म्मणि षष्ठीं बाधित्वा कर्म्मणि चेत्यादिना द्वितीया तनोर्देहस्य लिम्पैर्लेपकारिभिरिव इदहाने पचादित्वादच् अङ्गमिव दह्यते इति नरादिभवत्समाने त्यादिना कर्म्मणि क्विप् श्रेर्क्कातुधाञ्धारणे पुष्टौ हावंशकत्वात् श्वसव्यधेन तनहावश्चसइति नः पर्ण्ज्ञिल्कृहिस्यातः श्लिसपैश्चपञ्जलेपे माहिस्यातीत्यादिना यः मुचादित्वात् नुम् चितककुप्राने इत्यस्मात् अभिधानात् यः धेटष्टमित्यच योगविभाग इत्यन्ये माहिस्यातीत्यादौ चेतीति लिपिकरप्रमादात् पतितमित्यन्ये अज्वलज्वलनलिपोः दुमीभूज्वलेत्यस्याप्रवृत्तिपक्षे पचादित्वादच्॥ ७८॥

अवश्यायकणास्रावाश्चारुमुक्ताफलत्विषः। कुर्व्वन्ति चित्तसंस्रावं चलत्पर्णाग्रसम्भृताः॥ ८०॥

ज०म० अवश्यायेत्यादि। अवश्यायत इत्यवश्यायः तस्य कणाविन्दवः आस्रवन्तीत्यास्रावाः पचाद्यः श्याद्व्यधेति णः कर्त्तरि तयोर्विशेषण समासे राजदन्तादिति परनिपातः ते कुर्व्वन्ति चित्तसंस्रावं संस्रव

तीति संस्राव: पूर्व्ववत्: चित्तं संस्रावं चलत्कुर्व्वन्ति इत्यर्थ: पूर्व्ववत् समासपरनिपातौ कीदृशा चलत्पर्णाग्रसंस्थिता: अतएव चारु मुक्ताफलत्विष: दर्शनीयमुक्ताफलानुकारिण: सीताहारस्थमुक्ताफलानि स्मारयन्तीत्यर्थ: ॥ ८० ॥

अवेत्यादि। अवश्यायकणास्रावाश्चित्तसंस्रावं कुर्व्वन्ति अवश्यायस्य नीहारस्य कणाविन्दव: आस्रवन्तीति आस्रावा: कर्म्मधारये गमकत्वात् विशेषणस्यापि परनिपात: सुगतौ दुनीभूज्य इत्यादिना प० ण: चित्तस्य तत् संस्रावं चलश्चेति पूर्व्ववत् कीदृशा: चलतां पर्णानां अग्रेषु संभृता: चलन्तश्च ते पर्णाग्रसंभृताश्चेति वा स्थूलीभूतागलिताइत्यर्थ: अतएव चारुत्विष: शोभनत्विट् दीप्तिर्येषु ते तथा सीताहारस्थितानि मुक्ताफलानि स्मारयन्त इत्यर्थ: स्रुगतौ घञि यन्क्रित्कृदित्यातइति यत् ॥ ८० ॥ भ०

अवसायोभविष्यामि दुःखस्यास्य कदा न्वहं। न जीवस्यावहारोमां करोति सुखिनं यमः ॥ ८१ ॥

अवसायइत्यादि। कदा नु काले अहं दुःखस्यानुभूयमानस्य अवसायोऽन्तकरोभविष्यामि येन जीवस्यावहारोऽवहर्त्ता यमो मां सुखिनं न करोति मारयतीत्यर्थ: अवस्यति इति अवसायोऽन्तकर्म्मणि अवहरतीत्यवहार: श्याद्व्यधेति सर्व्वत्र ण: युक् ॥ ८१ ॥ ज०म०

अवेत्यादि। नु प्रश्ने वितर्के वा कदा अहं अस्य दुःखस्य अवसायोऽन्तकरोभविष्यामि येन जीवस्यावहारोऽपकारकोभूत्वा भ०

श्रद्यापि यमोमां दुःखिनं न करोति विना मरणं न दुःखमपगमिष्यतीत्यर्थः षोयमाग्रे इत्र् इत्यां श्राभ्यामेवपूर्व्वाभ्यां श्रव्ययेन तनद्भावइमदइति ग्रः ॥ ८१ ॥

दह्येऽहं मधुनोलेहैर्दावैरुग्रैर्यथा गिरिः। नायः कोऽत्र सयेन स्यां वनाहं विगतज्वरः॥ ८२ ॥

ज०म० दह्येऽहमित्यादि। मधुनोलेहैर्भृंगैः अहं दह्ये ध्याद्युधिति न दावैर्वनाग्निभिरुग्रैः प्रचण्डैर्यथा गिरिर्दह्यते तद्वत् अत्र कोनायः नयतीति नायः उपायः ईप्सितप्रापकः उभयत्र दुन्योरिति णः येन नायेन विगतज्वरः विगतपोडः स्यामिति आशंसायांलिङ् वत खेदे ॥ ८२ ॥

भ० दह्य इत्यादि। मधुनोलेहैर्मधुलिहद्भिर्भ्रमरैरहं दह्ये कर्म्मणि की यथा उग्रैः प्रचण्डैर्दावैर्वनाग्निभिर्गिरिर्दह्यते तद्वत् अत्र सकोनायोऽभिमतप्रापकउपायः येनाहं विगतज्वरोविगतसन्तापः स्यां नु प्रश्ने वितर्के वा वत खेदे अस्तेःस्यांलोपोऽस्त्यमोरिति अकारलोपः लिहोऽत्रस्मादे पचादित्वादन् टुदुउपतापे दुगतौ वा णीञ् प्रापणे दुनीभूज्वलेति वैकल्पिकोणः दवोदावोवनारण्यवह्नोइत्यमरः॥ ८२ ॥

समाविष्टं ग्रहेणेव ग्राहेणेवात्तमर्णवे। दृष्ट्वा गृहान् स्मरस्येव वनान्तान्मम मानसं॥ ८३ ॥

समाविष्टमित्यादि। वनान्तान् वनपर्य्यन्तान् स्मरस्य कामस्य गृहमिव उन्मादकत्वात् गेहेकइति ग्रहेःकः अर्द्धर्चादिपाठात् पुंलिंगता स्थितस्येत्यर्थात् योज्यं अन्यथा कथं समानकर्त्तृकत्वं मानसस्येत: ज्योतिषिग्रहः ग्राहेणेवात्तमर्णवे अर्णः पानीयं यत्रास्तीति केशादोऽन्यतरस्या᳚मिति तत्रार्णसोलोपस्येति भूमनि न्दाप्रशंसास्वित्यादौ वः सलोपस्येति अर्णवे समुद्रे वर्त्तमानेन ग्राहेण कुंभीरादिना आत्तं गृहीतं आङ्पूर्व्वस्य दाञोऽचउप सर्गात्तः॥ ८३॥ ज०म०

समेत्यादि। वनान्तान् वनस्वरूपान् तत्समीपदेशान् वा दृष्टा स्थितस्य मम मानसं ग्रहेण सूर्य्यादिना समाविष्टमिव आस्कन्दी तमिव इत्यर्थः उपहितत्वात् समुद्रे ग्राहेण कुम्भीरादिना आत्तं गृहीतमिव अतिगभीरशोकमग्नत्वेऽपि कामपीडितत्वात् स्थित स्येत्यध्याहारेणैककर्त्तृकत्वे पूर्व्वकाले क्त्वा वनान्तान् कीदृशान् स्मरस्य गृहानिव ग्रहेः सूर्य्यादौ अन् जलजन्तौ घञ् निलयेऽलि जित्वाभिधानात् गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाइत्य मरः आङ्पूर्व्वदाञः क्ते ग्यचसत्वेति पत्वे तादेशःअर्णोजलं विद्यते अस्येति केशादित्वात् वः मनीषादित्वात् सलोपः मनएव मानसं स्वार्थे ष्यः केचित्तु मनएव जानातीति व्यवहारात् मनसएव दर्शनकर्त्तृत्वं विवक्षितमित्युक्ता स्थितस्येति नाध्याहरन्ति अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽपि मनोहरइति विश्वः॥ ८३॥ भ०

वाताहतिचलच्छाखा नर्त्तकाइव शाखिनः। दुः सहाश्री परिक्षिप्ताः क्वणद्भिरलिगायकैः॥ ८४॥

वातेत्यादि। हा कष्टं एते शाखिनः नर्त्तका इव शिल्पिनिष्वुन् दुःखहादुःखेन मग्नाइति ईषदित्यादिना खल् नर्त्तकैः साधर्म्य माह वाताहतिचलच्छाखावाताहतिभिः चलन्त्यः शाखावाहुलता इव येषांते अलयोभ्रमरागायकाइव गन्धकन् तैश्च परिक्षिप्ताः परिवेष्टिताइति ॥ ८४ ॥

भ॰ वातेत्यादि। एते शाखिनोदुःखहादुःखेन मग्नाः ईषद्दुःसोरिति खल् हौ विषादे नर्त्तकाइव नृत्यन्तीति नृत्खनरञ्जइति षकः नृतादेः शिल्पिनि कपइति परः स्वमते शिल्पिविशेषाऽर्थाद्गम्यते नर्त्तकसाधर्म्यमाह वाताहतिचलच्छाखाः वातस्याहतिभिश्चलन्तो शाखा वाहुतुल्या येषां अलयोभ्रमराएव गायकागायन्तास्तैः परिक्षिप्ताः परिवेष्टिताः गायन्तीति गोणनट्थकाविति थकः गायतेरैतो सोघे इति सूत्रावुक्तत्वात् गैगाने इत्यस्यैव ग्रहणं नतु गाङ. इत्यादिः शब्दायमानैः ॥ ८४ ॥

एकहायनशारङ्गगती रघुकुलोत्तमौ। लवकौ शत्रुशक्तीनामृष्यमूकमगच्छतां ॥ ८५ ॥

ज॰म॰ एकहायनेत्यादि। रघुकुलोत्तमौ रामलक्ष्मणौ ऋष्यमूकमगच्छतां गतवन्तौ लक्षि रूपं हायनः संवत्सरः सएकोयस्य शारंगस्य मृगस्य तस्येव गतिर्ययोः शीघ्रगामित्वात् घसशोहिकालयोरिति हाधातोर्ण्युट् आतोन्युकृतौ शत्रुशक्तीनां लवकौ अपवेतारौ पुन्हत्यः समभिहारइति वुन् तत्समभिहारग्रहणं साधुकारित्वोपलक्षणार्थं ॥ ८५ ॥

एकेत्यादि। एतद्वचनानन्तरं रघुकुलस्य उत्तमौ श्रेष्ठौ राम भ०
लक्ष्मणौ ऋष्यमूकं पर्व्वतं अगच्छतां कीदृशौ एकहायनसारङ्ग
गती एकोहायनोवत्सरोवयोयस्य तादृशस्य सारङ्गस्य हरिण
इव मृगस्येव वा गतिर्गमनं ययोः शीघ्रगामित्वात् अहातेर्युनटि
हायनोनिपातितः हाङोरूपमित्यन्ये मनुष्यकीनां लवकौ छेदकौ
लुनातेः पुद्दमुस्त्वोऽकः इत्यकः प्वादेः साधुकारिण्यर्थेऽकइति
परः सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे ॥ ८५ ॥

तौ वालिप्रणिधी मत्वा सुग्रीवोऽचिन्तयत्कपिः। ब
न्धुना विगृहीतोऽहं भूयासं जीवकः कथं ॥ ८६ ॥

तावित्यादि। तौ रामलक्ष्मणौ वालिनः प्रणिधी चरौ मत्वा ज०म०
सुग्रीवः कपिरचिन्तयत् चिन्तितवान् प्रणिधीयते नियुज्यते कार्य्ये
षु प्रणिधिः उपसर्गेधोःकिः बन्धुना भ्रात्रा विगृहीतो विरोधितः
सन् कथं जीवकोभूयासमिति आशंसायां लिङ् जीवेराशिषिवुन्।
इति निरुपपदकृदधिकारः॥ ८६ ॥

तावित्यादि। रामलक्ष्मणौ वालिनः प्रणिधी चरौ मत्वा भ०
सुग्रीवः कपिरचिन्तयत् बन्धुना वालिना विगृहीतो विरोधितो
ऽहं कथं जीवकोभूयासं प्रणिधीयते कर्म्मणि प्रयुज्यतेऽसाविति
दासंज्ञकत्वात् किर्दोऽन्तर्गेरित्यनेन भावविहितोऽपि किः कृद्धोः
कभावइत्युक्तेरत्र कर्म्मणि बोध्यः केचित्तु कभावेऽमीरत्यस्मात्
मण्डूकप्लुताधिकारादत्र कभावइत्यनुवर्त्तते वृत्तौ तु कारकानु

पदेशो लिपिकरप्रमादात् इत्याहुः आशिषीति जीवतेरकः। इति निरुपपदाधिकारः॥ ८६॥

शक्तुलावौ मन्वानौ राघवौ मलयं गिरिं। जगाम सपरीवारो व्योममायमिवोत्थितं॥ ८७॥

ज०म० इतः प्रभृति तत्रोपपदं सप्तमीस्थमिति अस्योपपदस्थानेन कृतो दर्शयन्नाह सइत्यादि। ससुग्रीवः सपरीवारः सपरिकरः उपसर्ग स्येति दीर्घः कपीनाममनुष्यत्वात् मलयं गिरिं जगाम राघवौ शक्तुलावौ शक्तून् लुनातीति कर्म्मण्यण् शक्तूणामुन्मूलकाविति मन्वानोऽवगच्छन् मनुबोधनअस्मादात्मनेपदिनस्तनादिभ्यउः व्योम मायमिवोत्थितं व्योम आकाशं मिमीतइति आवामयंत्यण् नभः परिच्छेत्तुमिवोत्थितं कियत्प्रमाणमस्येति॥ ८७॥

भ० अथ सोपपदाधिकारः। अस्मात् पराङ्गतोः प्रत्ययास्तदुपपदं सइत्यादि। ससुग्रीवौ राघवौ शक्तुलावौ शक्तूणां छेदकौ मन्वानः परीवारैः परिजनैः सह मलयं गिरिं जगाम व्योम मायं आकाशस्य परिमाणं कुर्व्वाणमिव उत्थितं अतिदैर्घ्यादियमुत्प्रेक्षा शक्तून् लुनातीति व्योम मातीति च द्वावपण्यनङ्क्षित्कृदिति आतोऽयन् मनदवबोधे क्लित्वान्नं दिन्वात्मनादिः परिपूर्व्वाद् भावे घञ् परिवारस्य दीर्घत्वमभिधानात्॥ ८७॥

शर्म्मदं मारुतिं दूतं विषमस्थः कपिद्विपं। शोकापनुदमव्यग्रं प्रायुङ्क्त कपिकुञ्जरः॥ ८८॥

शर्म्मदमित्यादि। कपिकुंजरः सुग्रीवः हनुमन्तं दूतं प्रायुङ्क्त प्रस्थापितवान् वृन्दारकनागकुंजरैरित्यादिना कर्म्मधारयः सः ज०म०
…न्तं ज्ञातुमित्यर्थात् प्रायुङ्क्त इति प्रोपाभ्यां युजेरित्यात्मने
… …धादित्वात् शम कपिकुंजरः किम्भूतः विषमे दुर्गपर्व्वते तिष्ठ
…ति विषमस्थः सुपिस्थइति कः मारुतिं कीदृशं शर्म्म कल्याणं
…तीति शर्म्मदः आतोऽनुपसर्गेकइति कः श्रेष्ठत्वमाह कपिद्विपं कपिश्रेष्ठं द्वाभ्यां पिबतीति द्विपः कपिरयं द्विपइव उपमितं व्या
घ्रेत्यादिना कर्म्मधारयः पुनः कीदृशं शोकापनुदं शोकमपनुदति
तुन्दशोकयोरिति कः अव्यग्रं सुचित्तमित्यर्थः॥ ८८॥

शर्म्मदमित्यादि। कपिकुञ्जरः सुग्रीवो मारुतिं हनूमन्तं दूतं भ०
प्रायुङ्क्त प्रस्थापितवान् इत्यान्तं ज्ञातुमित्यर्थात् कीदृशः वि
षमस्थः विषमे कष्टे तिष्ठतीति हनजनादिति डः एवम्भूतोऽपि
महासत्वत्वादव्यग्रोऽव्याकुलः यद्वा विषमे दुर्गे स्थितः अतएव अ
व्यग्रः अक्षोभितमनाः कीदृशं मारुतिं शर्म्म ददातीति शर्म्मदं सुख
दायकं पूर्व्ववत् शर्म्मशातसुखानिचेत्यमरः कपिद्विपं कपिश्रेष्ठं
शोकमपनुदति शोकापनुदं कगृह्याप्रीजुकइति कः कपिर्द्विपइव
कपिः कुञ्जरइव गमकत्वात् विशेषणस्यापि परनिपातः द्वाभ्यां
पिबतीति द्विपः पूर्व्ववत् डः कुञ्जोदन्तोविद्यतेऽस्येति मध्वादित्वात्
रः गुणकुञ्जे निकुञ्जेऽपि हनौ दन्तेऽपि दन्तिनामिति विश्वः मा
रुतस्यापत्यमिति वाक्यशतइति ष्णिः याञ्जनेयो हनूमान् स्याद्ध
नुमानपि मारुतिरिति कोषः अव्यग्रमिति क्वचित् पाठः तादृश
स्य दूतस्य योग्यत्वात् युजेर्ध्वौ इत्यादित्वात् अण् नयोवेऽत्वाविति
मादेशः॥ ८८॥

विश्वासप्रदवेशोऽसौ पथिप्रज्ञः समाहितः । चित्त संख्यो जिगीषूणामुत्पपात नभस्तलं ॥ ८९ ॥

ज०म० विश्वासेत्यादि । असौ मारुतिर्नभस्तलमुत्पपात विश्वासं प्रददातीति विश्वासप्रदः प्रेदाज्ञ इति कः विश्वासप्रदोवेशोयस्य भिक्षुवेष इत्यर्थः वेश्यतेऽऽत्मानेनेति अकर्त्तरि चकारके घञ् विषव्याप्ताविल्यस्य रूपं पन्थानं प्रजानातीति पथिप्रज्ञः समाहितः अभ्रान्तचित्तः इदञ्च मया तत्र वक्तव्यमिति जिगीषूणां जेतुमिच्छतां चित्तसंख्यः चित्तं संख्याति परिच्छिनत्तीति समिख्य इति कः ॥ ८९ ॥

भ० विश्वासेत्यादि । असौ मारुतिर्नभस्तलमुत्पपात कीदृशः विश्वासप्रदोवेशोयस्य सतथा भिक्षुवेशत्वात् शौविशप्रवेशे घञि वेशः विषिर्लिङ्गोऽव्याप्ताविल्यस्य मूर्द्धन्यान्तस्य रूपमित्यन्ये पन्थानं प्रजानाति इति इगुपधज्ञाप्रीति कः समाहितः अभ्रान्तचित्तः जिगीषूणां जेतुमिच्छूनां स्वपक्षाणां परपक्षाणाञ्च चित्तं संख्याति परिच्छिनत्तीति हनजनादिति डः संपूर्व्वस्य ख्याख्याताविल्यस्य प्रयोगोनास्तीति ये वदन्ति तन्मते चक्षिङोरूपं तदा चक्षिङः कशाञ्ख्याञरे इत्यत्र अर इति विषयसप्तमी ॥ ८९ ॥

सुरापैरिव घूर्णद्भिः शाखिभिः पवनाहतैः ऋष्यमूकमगाद्भृङ्गैः प्रगीतं सामगैरिव ॥ ९० ॥

ज०म० सुरापैरित्यादि । मारुतिर्ऋष्यमूकमगात् शाखिभिरुपलक्षितं घूर्णद्भिः कम्पमानैः पवनाहतत्वात् अतएव सुरापैरिव मत्तैरिव

गापोष्टगित्यच सुरासीध्वोरिति टक् प्रगीतं प्रगीयतेऽचेति अधिकरणे क्तः कैर्भृंगैः सामगैरिव सामवेदपाठकैरिव गायन्तीति टक्॥ ९०॥

सुरापैरित्यादि। ममारुतिर्ऋष्यमूकमगात् कीदृशं शाखिभिरुपलक्षितं कीदृशैः पवनेनाहतैः अतएव घूर्णद्भिः कम्पमानैः घूर्ण अग्रभ्रमणे धातुः अतएव सुरापैर्मद्यपैरिव सुरां पिवन्तीति इनजनादिति डः भृङ्गैः प्रगीतं नादितं गीयते यत्रेति ध्रौव्यगत्येति आधारे क्तः क्तस्यौ:कभावइत्युक्तेः अपवादेऽप्युत्सर्गप्रवृत्तिः क्वचिदिति न्यायात् कामुकसङ्गार्थकेन इत्यनेन षष्ठीप्राप्तौ साधनहेत्वित्यादिना कर्त्तरि तृतीया भावकान्तादर्शआदित्वादत्ति भृङ्गकर्त्तृकसङ्गीतयुक्तमिति वार्थः प्रकृष्टं गीतं यत्रेति वा सामगैरिव सामवेदं गायन्तीति इनचरगष्टक्॥ ९०॥ भ०

तं मनोहरमागत्य गिरिं वर्म्महरौ कपिः। वीरौ सुखाहरोऽवोचद्भिक्षुर्भिक्षार्हविग्रहः॥ ९१॥

तमित्यादि। ऋष्यमूकं गिरिमागम्य कपिर्वीरौ रामलक्ष्मणौ अवोचत् उक्तवान् कीदृशं मनोहरं रम्यत्वात् मनोहरतीति हरतेरनुद्यमनेऽच् वर्म्महरौ कवचं हर्त्तुं क्षमौ संभाव्यमानवयसावित्यर्थः वयसिचेत्यच् सुखाहरः सुखाहरणशीलः आङिताच्छील्य इत्यच् भिक्षुः परिव्राट्वेशः न कपिरूपः यतीविश्वासप्रदवेश इत्युक्तं भिक्षार्हविग्रहः भिक्षायोग्यशरीरः कृशत्वादित्यर्थः भिक्षामर्हतीत्यच्॥ ९१॥ ज०

भ० तमित्यादि। तं ऋष्यमूकं गिरिं आगत्य आगम्य कपिर्हनूमान् वीरौ रामलक्ष्मणौ अवोचत् कथितवान् गिरिं कीदृशं रम्यत्वात् मनोहरं हरतीति हरः पचादित्वादच् मनसो हरः मनोहरः कीदृशौ तौ वर्म्महरौ कवचधरौ पूर्व्ववदच् कपिः कीदृशः सुखाहरः सुखकारी अर्थात्तयोः पूर्व्ववदच् परे तु अवहने कर्म्मणः परात् हञोऽच् वयोबोधकवहने च आङ्पूर्व्वात्तु ताच्छील्य एवेत्याहुः तन्मते मनोहरतीति मनोहरत्वं वहने तु भारहारह त्यादि बोध्यं वर्म्म हर्त्तुं क्षमौ वर्म्महरौ अच सम्भाव्यमानं वयो गम्यते तरुणावित्यर्थः सुखमाहर्त्तुं शीलमस्य सुखाहरः भिक्षुर्यतिरूपः भिक्षणशीलोवा सन्भिक्षाशंसकः भिक्षार्हविषयः भिक्षायोग्यशरीरः भिक्षुकवेशपरिग्रहात् नतु वानरमूर्त्तिः विन्द्राशंसु दवेशइत्युक्तं भिक्षामर्हतीति भिक्षार्हः पचादित्वादच्॥ ८१॥

बलिनावमुमद्रीन्द्रं युवां साम्बेरमाविव। आचक्षाथामिथः कस्माच्छङ्करेणापि दुर्गमं॥ ८२॥

१०भ० किमवोचदित्याह बलिनेत्यादि। युवां अमुं अद्रीन्द्रं कस्मात् कारणादियः प्राप्तौ इणगतावित्यस्माद्वर्त्तमानसामीप्ये भूते लट् थस् एतदाचक्षाथां कथयतं लोटि रूपं बलिनौ बलवन्तौ यत् शंकरेणापि महादेवेनापि दुर्गमं दुःखेन गम्यते काविव साम्बेरमाविव यथा मत्तद्विपौ प्राप्नुतस्तद्वत् स्तंवकरणयोरित्यच् कर्त्तरि हस्तिन्यभिधेये हस्तिसूचकयोरिति वचनात् शंकरइति शमि धातोरित्यच्॥ ८२॥

बलीत्यादि। किमतोऽभवदित्याह युवां अमुं अद्रीन्द्रं ऋष्यमूक भ०
कस्मात् कारणात् इयः प्राप्तुथः इणगतौ भूतग्रामोऽथे कौ अभि
धानात् एतत् युवामावयाेर्यां कथयतं प्रार्थनायां लो अद्रीन्द्रं
कीदृशं शङ्करेण महादेवेनापि दुर्गमं दुःखेन गम्यतइति ईषदुः
मारित्ति खल् अतएवात्र गमनात् युवां बलिनौ बलमस्ति ययो
रिति नैकाजादिति इन् अत्रातिशयेन अन्वर्थोबोध्यः। तथा च
भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्ति विवक्षायां
भवन्ति मतुवादयइति स्तम्बेरमाविव हस्तिनौ यथा प्राप्नुथ
स्तद्वत् स्तम्बेरमतइति पचादित्वादच् अभिधानात् सप्तम्यलुक्
हस्तिन्येव रूढः शं कल्याणं करोतीति शङ्करः स्कुष्टइति टः
अभिधानात् संज्ञा गम्यते॥ ८२॥

व्याप्तं गुहाशयैः क्रूरैः क्रव्याद्भिः सनिशाचरैः।
तुङ्गशैलतरुच्छन्नं मानुषाणामगोचरं॥ ८३॥

उक्ताष्टाधिकारः।

व्याप्तमित्यादि। दुर्गमत्वदर्शनाय इदमुच्यते कीदृशमद्रीन्द्रं ज०
क्रव्यमपक्वमांसं भक्षयद्भिः सिंहादिभिः सनिशाचरैः राक्षससहि
तैर्व्याप्तं क्रव्येचेति विट् गुहाशयैः गुहायां शेरते इति शीङोऽधि
करणेऽच् तुंगाः उच्चाः शैलाः शिलायां भवाये तरवस्तैश्छन्नं
व्याप्तं अतएव मानुषाणामगोचरं अगम्यं गोचरसंचरेत्यादिना
निपातितः॥ ८३॥

भ० व्याप्तमित्यादि। दुर्गमत्वं दर्शयन्नाह ऋद्धीन्द्रं कीदृशं क्रव्याद्भिः किरातादिभिः सिंहादिभिर्व्याप्तं क्रव्यं मांसमदन्तीति क्विप् क्रव्यशब्दाददः पक्के क्विप् अपक्केऽण् क्विपाविति परः स्वमते पक्कापक्कविशेषानुक्तौ न क्षतिर्ध्याननिश्चयत्वात् कीदृशैः गुहाशयैः गुहायां शेरतइति पचादित्वादन् शीङोऽधिकरणादमेति परसूत्रं क्रूरैर्निर्दयैः कठिनैर्वा सनिशाचरैः राक्षससहितैः पुनः कीदृशं तुङ्गशैलतरुच्छन्नं तुङ्गैः शैलैस्तरुभिश्च छन्नं सर्वतोव्याप्तं अतएव मानुषाणामगोचरं अगम्यं। द्विषन् वनेचराणामित्यारभ्य चरादेष्टइत्यादिप्रकरणस्य प्रागुक्तत्वात् अत्र तत्त्यागइत्यत आह उक्तस्याधिकारइति ॥ ८३ ॥

सत्वमेजयसिंहाढ्याम् स्तनन्धयसमत्विषौ। कथं
नाडिन्धमान्मार्गानागतौ विषमोपलान् ॥ ८४ ॥

ज०म० सत्वमित्यादि। युवामिमान् मार्गानागतौ सत्वमेजयसिंहाढ्यान् सत्वमेजयन्ति ये सिंहाः एजेः खश् अरुर्द्विषेति मुम् तैराढ्यान्
३ व्याप्तान् सिंहग्रहणं तद्धिंस्रोपलक्षणार्थं हिनस्तीति सिंहः पृषोदरादित्वाद्वर्णविपर्य्ययः नाडिन्धमानिति उच्चनीचाधिरोहणान्मुहुर्मुहुर्निश्वासैर्नाडिन्धमन्तीति नाडीमुष्ट्योश्चेति खश् खित्यनव्ययस्येति ह्रस्वः विषमोपलान् उन्नतपाषाणयुक्तान् स्तनन्धयसमत्विषौ बालवत्सुकुमारौ सामर्थ्यं पुनर्युवयोरचिन्त्यं स्तनं धयतः पिबतः नासिकास्तनयोरिति खश् अरुर्द्विषदिति मुम् ॥ ८४ ॥

अथ खशाद्यधिकारः सत्वमित्यादि। युवां कथं इमान् मार्गान् आगतौ एतत् मृतमिति वक्ष्यमाणश्लोकेनान्वयः कीदृशान्

सलमेजयविंहाकात् बलात् प्राणिनएजयन्ति कम्पयन्ति भीषय न्तीति यावत् खशेजेरिति खश् खित्यनाजिति मम् ताहशाये विं हासैराक्यान् व्याघ्रान् हिनस्तीति विंहः पचादित्वादच् निपात नात् वर्णविपर्य्ययः नाडिन्धमान् मुहुर्मुहुर्नाडीं सिःश्वासैर्धमन्ति उपतापयन्तीति नाडीमुष्टीस्तनेत्यादिना खश् स्थादानपेत्या दिना धोधमादेशः पूर्व्वेण मम् द्रुतस्य विषमोपलान् उन्नतानत प्रस्तरयुक्तान् युवां कीदृशौ स्तनन्धयसमलिषौ स्तनंधयति पिव तीति स्तनन्धयोःवालकः पूर्व्ववत्खश् मम् च तेन समा त्विट् दीप्ति र्ययोः एतेन सौकुमार्य्यं दर्शितं स्तनन्धयशब्देनार्थात् तद्दीप्तिरुप लक्ष्यते दीप्तौ तत्समलमुचितं परम्परया धर्म्मिसाम्यं धर्म्मसाम्यं वा गम्यते॥ ९४॥

उत्तीर्णौ वा कथं भीमाः सरितः कूलमुद्वहाः। आ सादितौ कथं व्रतं न गजैः कूलमुद्रुजैः॥ ९५॥

उत्तीर्णावित्यादि। कथं वा केनोपायेन युवां सरितोनदीरु त्तीर्णौ भीमास्त्रासकरी यतः कूलमुद्वहाः कूलमापूर्य्य वहन्त्यः उदिकूलइति खश् गजैः कूलमुद्रुजैः कूलं भिन्दद्भिः कथं नासा दितौ न व्यापादितौ इति व्रतं कथयतं॥ ९५॥ ज॰म॰

उत्तीर्णावित्यादि। कथं वा युवां सरितोनदीरुत्तीर्णौ तर णमपि गतिः तेन गत्यर्थाळेत्यादिना कर्त्तरि क्तः कीदृशीः कूलमु द्वहाः कूलान्यापूर्य्य वहन्ति कूलं तीरमपि जलानि प्रापयन्ति वा भ॰

अतएव भीमास्त्रासकरौ: गजेन्द्रैरपि कथं वा युवां नाशादितौ न प्राप्तौ न मारितावितिति भावः कर्म्मणि क्तः कीदृशैः कूलमुद्रुजैः मत्ततया कूलं भिन्दद्भिः एतद्युवां ब्रूतं कथयतं उभयत्र कूला दुद्रुजुद्वहरति खश् खित्यनव्ययस्येति मुम्॥ ८५॥

रामोऽवोचद्धनूमन्तमावामभ्रंलिहं गिरिं। ऐव विद्वन् पितुः कामात् पान्तावल्पंपचान्मुनीन्॥ ८६॥

ज०म० रामइत्यादि। हनुर्वदनैकदेशः सोऽस्यास्तीति निन्दायां मतुप् अन्येषामपि दृश्यतइति दीर्घः हनूमान् हनुमानपीति विश्वदर्शनात् ईदृक्त्व तस्य किल जातमात्रस्य आदित्यरथं गृह्णतो हनुद्वयं भग्नमिति श्रूयते तं रामोऽवोचत् उक्तवान् तत् किमित्याह हे विद्वन् यद्यम् गिरिमावामैव आगतौ तत् पितुः कामादभिप्रायात् आङ्पूर्व्वादिणोमङ्कि रूपं अभ्रंलिहमुच्चैस्तरं अभ्रं लेढीति वहाभ्रेलिहइति खश् किं कुर्व्वाणौ पान्तौ रक्षन्तौ मुनीन् अल्पंपचान् अल्पमन्नुष्टान् अल्पं पचन्तीति मितनखेचेति मितेत्यर्थग्रहणात् खश् चकारस्यानुक्तसमुच्चयार्थत्वाद्वा॥ ८६॥

भ० रामइत्यादि। रामोहनूमन्तं अवोचत् पर्व्वताघातभग्नत्वात् कुत्सिता हनूरस्यास्तीति निन्दायां मतुः हनूशब्दात् तन्वादेर्व्वा इति पाक्षिकऊप् उतोऽयुङ्त्र्यादेरित्यस्य प्रत्युदाहरणे रज्वादैा तु हनुरिति क्वचितपुस्तके दृश्यते तत्तु लिपिकरप्रमादा

हिति केचित् नाम्न ऽस्त्यर्थे ऽचोर्घइति केचित् हनूमान् हनुमानपीति विश्वदर्शनाद्वैरूप्यमेव किमुक्तवानित्याह हे विदन् आवां पितुः कामादभिलाषादमुं गिरिं ऐव आगतौ इणोघीव अदादित्वात् अपोलुक् अभ्रंलिहमाकाशं लेढि प्राप्नोतीति तृभृहस्तौ त्यादिना अभिधानादनाम्न्यपि खः खितीति मन् अभिधानात् गुणाभावः आवां कीदृशौ मुनीनां पान्तौ रचन्तौ पालरच्णे शतुः कीदृशान् अल्पंपचान् स्वल्पमनुष्ठान् दरिद्रान् वा घटीखारीत्यादौ मितनखमानादित्यत्रार्थस्यैव ग्रहणं तेनाल्पशब्दात् पचः खश् अल्पं यथास्यात्तथा पचानिति केचित् मुनिरच्णेन दुष्टहिंसाप्रवृत्तयोरावयोः कुतः सिंहादिभयं तादृशोश्च सरिदुत्तरणमपि नाशक्यमिति पूर्व्वप्रश्नेपूत्तर्व्वेत्तरं सूचितं ॥ ९६ ॥

अमितम्पचमीशानं सर्व्वभोगीणमुत्तमं। आवयोः पितरं विद्धि ख्यातं दशरथं भुवि ॥ ९७ ॥

कः पुनः पिता यदादेशादागताविय्यत आह। अमितम्पचमित्यादि। आवयोः पितरं दशरथनामानं भुवि विख्यातं विद्धि जानीहि ऊशल्भ्योर्हेर्धिः अमितंपचं महामन्त्रिणं पूर्व्ववत् खश् मुमच ततोनञ्समासः ईशानमीशनशीलं स्वामिनमित्यर्थः ताच्छील्येत्यादिना चालश् सर्व्वभोगीणं सर्व्वसकलभोगाय हितं आत्मन्विश्वजनेति खः भोगशब्दोऽत्र शरीरवाची सर्व्वात्प्रादिना खलं ॥ ९७ ॥ ज॰म॰

अमितमित्यादि। कः पिता यदादेशादागताविव्याह आव भ॰

योः पितरं हमरथं विद्धि आगीषि ऊमणोरोर्धिः कीदृशं पमित मथं प्रचुरासमरं घटीघारीत्यादिना खश् पद्यामानूपमाव: ईशा नं ऐश्वर्य्ययुक्तं ईशकर्द्दीश्वर्य्ये शानः सर्व्वभोगाय सर्व्वशरीराय हितं भुज्यतेऽनेनेति भोगः शरीरं ततोविकारसंघेत्यादिना हि तार्थे ईनः पूर्व्वोऽदामेदत्यादावमहादित्वस्य योगविभागात् णत्वं उत्तमं श्रेष्ठं भुवि ख्यातं पृथिव्यां प्रसिद्धं सर्व्वख्यातत्वात् ॥ ८७॥

छलेन दयितारण्याद्रक्षसारुन्तुदेन नः। अहर्य्य म्पश्यया मूर्त्त्या हृता तां मृगयावहे॥ ८८॥

ज०म० यदि पितुरादेशादागतौ किमत्र गमनेनान्वेषयथ इत्याह । छलेनेत्यादि। सोऽस्माकं दयिता अरण्याद्राक्षसेन हृता कीदृ शेन अरुन्तुदेन मर्म्मस्पृशा विध्वरुषोस्तुद इति खश् मुम् असूर्य्य म्पश्यया आदित्यगोप्यया मूर्त्त्या शरीरेणोपलक्षिता असूर्य्य ललाटयोरिति खश् तां हृतां मृगयावहे गवेषयावः मृगअन्वे षणे स्वार्थिकण्यन्तः युवयोः पौरुषान्वितत्वात् कथं हृतेत्याह छलेन छद्मना ॥ ८८॥

भ० छलेनेत्यादि। पितुराज्ञया दण्डकागमनेऽपि कथं अत्राग मनमित्याह अस्माकं दयिता अरण्याद्रक्षसा हृता कथं युव योरग्रे हृतेत्याह छलेन छद्मना नतु बलात् कीदृशेन रक्षसा अरुन्तुदेन मर्म्मस्पृशा घटीघारीत्यादिना खश् खित्यव्याजिति मम् स्यादेः लोपः असरएकाले वङ्कलविचक्षा तां हृतां मृगया

वद्दे अन्वेषणार्थः मृगतत्कर्तृमार्गमपि मार्गणमन्वेषणं मूर्च्छा अरी रिपोपलक्षिता विशेषणे तृतीया कीदृश्या ः दूर्व्यमपश्यया सूर्य्य मपि न पश्यन्त्या अतिगोप्यर्थेत्यर्थः पूर्व्वेण खश् खादानेत्यादिना द्रशः पश्यादेशः सूर्य्येण सह समायोगमकत्वात् ॥ ९८ ॥

प्रत्यूषे मारुतीराममस्ति वालीति वानरः। शमये दपि संग्रामे योललाटन्तपं रविं ॥ ९९ ॥

तं पुनः कस्य वेत्यतआह। प्रत्यूषेइत्यादि। रामं मारुतिः प्र त्यूषे प्रत्युक्तवान् अस्ति वालीतिनाम्ना कपीश्वरः यः संग्रामे युद्धे ललाटन्तपं सर्व्वेषामुपरि वर्त्तमानं पूर्व्ववत् खश् शमयेत् परा जयेदिति सम्भावने लिङ् वालिशब्दोनान्तः इदन्तश्च तथा च वाली वालिश्च कथ्यते इति शब्दभेदः ॥ ९९ ॥ ज०म०

प्रत्यूषइत्यादि। मारुतिर्हनूमान् रामं प्रत्यूषे किम्प्रत्यूषे इत्या ह वालीति नाम्ना वानरोऽस्ति यः संग्रामे प्रवृत्ते रविं सूर्य्यमपि शमयेत् पराजयेत् प्रोत्साहसम्भावनेति लिङ् कीदृशं रविं ललाट न्तपं सर्व्वेषामुपरिवर्त्तिनं मध्याह्नकालीनमपि प्रचण्डमपीत्यर्थः यद्वा सूर्य्योऽपि चेत्तस्य ललाटं तपति तदा तमपि शमयेत् सुत रामेवान्यायकारिणमित्यर्थः घटीखारीत्यादिना खश् ॥ ९९ ॥ भ०

उग्रम्पश्येन सुग्रीवस्तेन भ्राता निराकृतः। तस्य मित्रीयतोदूतः संप्राप्तोऽस्मि वशम्वदः ॥ १०० ॥

उग्रम्पश्येनेत्यादि। तेन भ्रात्रा उग्रंपश्यता पापं विजानता ज०म० उग्रंपश्येत्यादिना निपातितं यस्य सुग्रीवोनिराकृतोऽभिभूतस्तस्य

हि दूतः प्राप्तोऽस्मि वशम्वदः वशमनुकूलं वदतीति वशम्वदः प्रियवशेवदः खच् कीदृशस्य मित्रीयतोमित्रमिच्छतः सुपआत्मनः क्यच्॥ १०० ॥

भ० उग्रमित्यादि। तेन भ्रात्रा वालिना सुग्रीवोनिराकृतः देशान्निःसारितः कीदृशेन उग्रम्पश्येन पापं पश्यता उग्रदृष्टिना वा घटीखारीत्यादिना खश् तस्य सुग्रीवस्य दूतोऽहं सम्प्राप्तोऽस्मि आगतोऽस्मि कीदृशस्य मित्रीयतः आत्मनामित्रमिच्छतः तथा भवन्तमनु क्याऽन्यात्यर्थेनि क्यः अवर्णस्य ईत्वं ततः शत्रः वशम् ; कूलं वदतीति वशम्वदः प्रियवशादित्यादिना खः अस्मीति क्रियापद अस्मदर्थेऽव्ययं वा॥ १०० ॥

प्रियम्वदोऽपि नैवाहं ब्रुवे मिथ्या परन्तप। सख्या तेन दशग्रीवं निहन्तासि द्विषन्तपं॥ १०१ ॥

ज०म० किन्तेन सख्येनेति चेदाह प्रियंवद इत्यादि। प्रियम्वदतया लोकोमिथ्या वदति अहं प्रियम्वदोऽपि पूर्व्ववत् खच् परंतप शत्रूणामुपतापद द्विषदिति खच् वाचंयमपुरन्दरौचेत्यमागमोनिपात्यते नैवाहं मिथ्या ब्रुवे वदामि तेन सुग्रीवेण सख्या मित्रेण दशग्रीवं निहन्तासि हनिष्यसि हन्तेर्लुटि रूपं कीदृशं द्विषन्तपं शत्रूणामुपतापयितारं पूर्व्ववत्खच्॥ १०१ ॥

भ० प्रियमित्यादि। किन्तेन मित्रेणेत्याह तेन सुग्रीवेण सख्या त्वं दशग्रीवं हन्तासि निहनिष्यसि हन्तेर्लुटि कीदृशं द्विषन्तपं शत्रूणामुपतापकं द्विभृदित्यादिना द्विषच्छब्दात्तपोऽभिधानादर्शया

यामपि खः मनीषादित्वात्तलोपे खित्यव्याजिति मन् किम्वा दे
ष्टीति द्विषः अतृपाभीजुङ्इति कः तस्मात्तपः खः प्रियम्वदत्वा
न्मृषा ब्रवीषि चेदाह हे परन्तप शत्रूणामुपतापक प्रियम्वदो
ऽपि सन् नैव मिथ्या ब्रुवे वदामि परन्तपेति रामसम्बोधनात्
द्विषन्तपमिति रावणविशेषणात् द्वयोः साम्यमुक्तं तेन तद्वधाय
रामस्य मित्रान्तरापेक्षा युक्तेति भावः प्रियम्वदइति प्रियवशादि
ति खः परन्तपेत्यत्र द्विषन्तपवत् खः॥ १०१॥

वाचंयमोऽहमनृते सत्यमेतद्ब्रवीमि ते। एहि सर्व्वं
सहं मित्रं सुग्रीवं कुरु वानरं॥१०२॥

वाचंयमइत्यादि। वाचंयमपुरंदरौचेत्यमागमोनिपात्यते जं॰मं॰
तस्मात् सत्यमेतत् पूर्व्वोक्तं ब्रवीमि ते तुभ्यं तादर्थ्ये चतुर्थी यत
एवं तस्मादेहि आगच्छ सुग्रीवं वानरं मित्रं कुरु कीदृशं सर्व्वंसहं
सर्व्वं सहतइति पूःसर्व्वयोरिति खच्॥ १०२॥

वाचमित्यादि। न मिथ्या ब्रुवइति प्रागुक्तं द्रढयन्नाह अहं अ भ॰
नृते असत्ये वाचंयमोमौनी तस्मात्सुग्रीवं निहन्तासि इति यदु
क्तं एतत्तुभ्यं सत्यमेव ब्रवीमि तादर्थ्ये चतुर्थी तस्मात् एहि आग
च्छ सुग्रीवं वानरं मित्रं कुरु कीदृशं सर्व्वंसहं सर्व्वकार्य्यक्षमं तृभृ
वृइत्यादिना अभिधानादसंज्ञायामपि खः वाचंयमइति वाचा
शब्दात् यमः पूर्व्ववत् खः खित्यव्याजिति मम् ह्रस्वस्य परे तु वाक्
शब्दोपपदेन साधयन्ति॥१०२॥

सर्व्वंकषयशःशाखं रामकल्पतरुं कपिः। आदा याभ्रंकषं प्रायान्मलयं फलशालिनं ॥ १०३ ॥

ज०म० सर्व्वंकषेत्यादि। रामः कल्पतरुरिव यस्तमादाय गृहीत्वा कपिः प्रायात् गतः कीदृशं रामं सर्व्वंकषयशःशाखं सर्व्वं कषन्ति व्याप्नुवन्ति यानि यशांसि सर्व्वकूलेत्यादिना खश् तान्येव शाखा यस्य फलशालिनमभिमतफलसम्पादनात् अभ्रंकषमुच्चैस्तरं मलयं पूर्व्ववत् खश् ॥ १०३ ॥

भ० सर्व्वमित्यादि। रामएव कल्पतरुः तमादाय कपिर्हनुमान् मलयं प्रायात् प्रगतः रामं कीदृशं सर्व्वं कषयन्ति व्याप्नुवन्ति सर्व्वं पापं नाशयन्ति वा यानि यशांसि तान्येव शाखायस्य तं फलशालिनं अभिमतफलसम्पादनात् मलयं कीदृशं अभ्रंकषं आकाशव्यापकं अत्युच्छ्रितत्वात् फलशालिनमिति मलयस्य विशेषणात् श्रमापहारकत्वं सूचितमिति केचित् प्रियवशाद्वयत्तीत्यादिना खः ॥ १०३ ॥

मेघंकरमिवायान्तमृतुं रामं क्षमान्वितः। दृष्ट्वा मेने न सुग्रीवोवालिभानुं भयङ्करं ॥ १०४ ॥

ज०म० मेघंकरमित्यादि। राममायातं दृष्ट्वा सुग्रीवोवालिनं भानुमिव भयंकरं भीतिजनकं न मेने न बुद्धवान् मेघर्त्तीत्यादिना खच् क्षमान्वितोम्लानोवालिभानुना पीडितत्वात् कीदृशं रामं मेघंकरं ऋतुमिव प्रावृट्कालमिव पूर्व्ववत् खच् ॥ १०४ ॥

मेघमित्यादि। राममागतं दृष्ट्वा सुग्रीवोऽभानुमिव वालिनं भय म०
ङ्करं भीतिजनकं न मेने न मन्यते स्म कीदृशः क्रमेणान्वितः स्थानः
रामं कीदृशं मेघङ्करं मेघोत्पादकं ऋतुमिव वर्षाकालमिव वर्षा
कालस्य सूर्य्याच्छादकत्वेन क्लान्तश्रमभयापहारित्वात् साम्यं
प्रियवशाद्भूयर्त्तिमेघादिति खः॥१०४॥

उपाग्न्यकुरुतां सख्यमन्योन्यस्य प्रियङ्करौ। क्षेमङ्क
राणि कार्य्याणि पर्य्यालोचयतां ततः॥१०५॥

उपाग्नीत्यादि। उपाग्नि अग्निसमीपे रामसुग्रीवौ सख्यमकुरु ज०म०
तां इतःप्रभृत्यावयोः सख्यमिति अन्योन्यस्य प्रियङ्करौ क्षेमप्रियम
द्रेष्वण्चेति चकारात् खच् ततः सख्यकरणानन्तरं क्षेमङ्कराणि
हितजनकानि यथा कार्य्याणि प्रत्यालोचयतां निरूपितवन्ताविति
त्यर्थः। पठपुटेत्यत्र चुरादिकाण्डे धातौ लोचृ पठ्यते तस्य लङि
रूपं॥१०५॥

उपाग्नीत्यादि। रामसुग्रीवौ उपाग्नि अग्निसमीपे सख्यं मैत्रीं भ०
अकुरुतां धीतां अग्निसाक्षिकं सख्यमिति भावः अन्योन्यस्य प्रिय
ङ्करौ प्रियं कुरुतइति क्षेमप्रियमद्रात्कुञ्ञेति खः विकारसंघेति
सखिशब्दात् भावे यः ततः सख्यानन्तरं परस्परस्य क्षेमङ्कराणि
कुशलजनकानि कार्य्याणि पर्य्यालोचयतां निरूपितवन्तौ लो
चृक्भाषीत्यस्य ण्यां रूपं पूर्ववत् खः॥१०५॥

आशितम्भवमुत्क्रुष्टं वल्गितं शयितं स्थितं। बह्व मन्यत काकुत्स्थः कपीनां स्वेच्छया कृतं ॥ १०६ ॥

ज०म० आशीत्यादि। आशितम्भवमन्नं आशितेभुवःकरणभावयो रिति खच् उत्क्रुष्टं किलकिलायितं वल्गितं धावनं तथा शयितं स्थितञ्च कपीनां स्वेच्छया कृतं एतत्काकुत्स्थोबह्वमन्यत श्लाघि तवान् पुण्यभाजश्चमी यदेषां स्वेच्छाविहारिणां चेष्टितं अस्माकन्तु शोकसन्तप्तानां न किञ्चिदस्तीति सर्व्वत्र भावे निष्ठा ॥ १०६ ॥

भ० आशितमित्यादि। आङ्पूर्व्वादश्नातेः क्तः आशितस्याद्यते भोजनस्य भवनं आशितम्भवं भावचेत्वाशिताद्भुवश्चेति खः उत्क्रुष्टं शब्दकरणं वल्गितं गमनं शयितं शयनं पूङ्शीधृषेत्यादिना गुणः स्थितं अवस्थानं द्यतिस्यतिमास्थामिति इः सर्व्वत्र भावे क्तः कपीनामे तत्सर्व्वं स्वेच्छया कृतं काकुत्स्थोबहु अमन्यत स्तुतवान् पुण्या एते स्वेच्छयैवं व्यवहरन्ति अस्माकन्तु शोकसन्तप्तानां न किञ्चि दस्तीति भावः स्वभावसिद्धत्वादाहार्य्यशोभारहितत्वात् प्रशंसा वा ॥ १०६ ॥

ततोवलिन्दमप्रख्यं कपिर्विश्वम्भराधिपं। सुग्रीवः अब्रवीद्रामं वालिनोयुधि विक्रमं ॥ १०७ ॥

ज०म० ततइत्यादि। ततः कार्य्यालोचनानन्तरं सुग्रीवोऽब्रवीत् लङि ब्रुवईट् किमुक्तवान् वालिनोयुधि विक्रमं शौर्य्यमिति प्रधान

कर्म्म राममित्यकथितं कीदृशं रामं बलिन्दमप्रख्यं विष्णुतुल्यं बलिं दमयतीति संज्ञायां भृतृवृजीत्यादिना खच् ममन्तस्य मिल इत्खले तथा विश्वं विभर्त्तीति विश्वम्भरा तस्या अधिपं अधिपाती त्यधिपः आतश्चोपसर्गइति कः ॥ १०७ ॥

ततइत्यादि। कार्य्याक्षेपणानन्तरं सुग्रीवः कपिर्युधि संग्रामे भ० ब लिनोविक्रमं रामं प्राब्रवीत् रामं कीदृशं बलिन्दमप्रख्यं बलिं दमयतीति बलिन्दमस्त्रिविक्रमस्तेन तुल्यं तृभृवृइत्यादौ ण्यन्त दमेर्ग्रहणं अरिन्दमइत्युदाहरणे कर्म्मोपपदेन सूचितं केव लस्य दमेरन्तर्भूतण्यर्थत्वात् सकर्म्मकत्वमिति केचित् सकर्म्मको ऽपि इमिर्दृश्यतइति गोयीचन्द्रेणोक्ता इमित्वा परिसंघातानिति निदर्शितं विश्वं विभर्त्तीति विश्वम्भरा पृथ्वी पूर्व्ववत् खः तस्या अधिपं स्वामिनं अधिपातीत्यधिपः सुनजमादिति डः ॥ १०७ ॥

वसुन्धरायां कृत्स्नायां नास्ति वालिसमोवली। हृ
दयङ्गममेतत्त्वां ब्रवीमि न पराभवं ॥ १०८ ॥
इति खजधिकारः ॥

वलीत्यादि। वसुन्धरायां पूर्व्ववत् खच् वालिना समोऽन्योवली ज०म० बलयुक्तोनास्तीति हृदयङ्गमं मम स्वानुभवं ब्रवीमि मम स्वानु भवं हि वस्तु हृदयङ्गममित्युच्यते तेन संज्ञायामित्यधिकृत्य गमश्चेति खच् न पुनस्त्वां पराभवमभिभवं ब्रवीमि ॥ १०८ ॥

भ० वसित्यादि। इत्थंभूतायां समस्तायां वसुन्धरायां पृथिव्यां वालितुल्योबलवान् नास्ति वसु धरतीति तृभृतृ इत्यादिना खः एतत्तु हृदयङ्गमं आत्मानुभूतमेव त्वां ब्रवीमि हृदयं गच्छतीति पूर्व्ववत् ख. अनुभूतस्त्वियं संज्ञा न पुनस्त्वां पराभवं न ब्रवीमि तस्माद्भवतः पराभवं न त्वां वदामि तेन नास्ति वालिसमोबलीति प्रागनुभूतं कथितं न तु त्वत्तोऽधिकोऽयमिति सम्प्रति ज्ञापितं। इति खप्रत्ययाधिकारः॥ १०८॥

दूरगैरन्तगैर्व्वाणैर्भवानत्यन्तगः श्रियः। अपि संक्रन्दनस्य स्यात् क्रुद्धः किमुत वालिनः॥ १०९॥

ज०म० एवम्पराक्रमोऽसौ तत्र किं त्वं करिष्यसीत्याह दूरगैरित्यादि। यतोभवान् क्रुद्धः सन् संक्रन्दनस्यापि शक्रस्यापि नन्द्यादिभ्योल्युः वाणैः करणभूतैः दूरगैः दूरं गच्छन्तीति अन्तगैः कार्य्यसमापकैः अन्तात्यन्तेत्यादिना डः श्रियोलक्ष्म्याः अत्यन्तगः विनाशयिता स्यात् अत्यन्तं पर्य्यवसानं गच्छतीति किं पुनर्वालिनोलक्ष्म्या अत्यन्तगोभवान्विनाशयितेति॥ १०९॥

भ० दूरगैरित्यादि। रामं प्रोत्साहयन्नाह भवान् क्रुद्धः सन् संक्रन्दनस्य इन्द्रस्यापि श्रियोलक्ष्म्यावाणैरन्तगोभवेत् किं पुनर्वालिनः श्रियः सुतरामेतल्लक्ष्म्यानाशयिता स्यात् वाणैः कीदृशैः दूरगैर्दूरपातिभिः अन्तगैः कार्य्यसमापकैः दूरमन्तञ्च गच्छतीति इनजनाद्गमादेर्डः दितिगर्भं संक्रन्दितवान् इति नन्द्यादिलादनः॥ १०९॥

वरेण तु मुनेर्व्वाली सञ्जातो दस्युहारणे। अवार्य्य प्रसरः प्रातरुद्यन्निव तमोपहः ॥११०॥

वरेणेत्यादि। मुनेस्तु वरेण दस्युहः दस्यून् शत्रून् बध्यादिति आशिषि हन इति डः अतोरणे अवार्य्यप्रसरोऽनभिभवनीयगतिः सञ्जातः क इव तमोपह इव तमोपहः आदित्यः तमोऽपहन्तीति अपं क्लेशतमसोरिति डः प्रातः प्रभाते उद्यन् उद्गच्छन् उत्पूर्व्वादिणः शतरि इणो यण् अवार्य्यप्रसरस्तद्दसावपि सर्व्वं वाक्यं सावधारणं भवतीति प्रातरप्युद्यन्नवार्य्यप्रसर एवेति तेन सर्व्वकाले अस्यावार्य्यप्रसरत्वं सिद्धं नतु प्रातरेवोद्यन्नवार्य्यप्रसर इति ॥११०॥ ज०म०

वरेणेत्यादि। रामस्याध्यवसायं जिज्ञासुः पुनरपि वालिविक्रममाह मुनेर्व्वरेण तु दस्युहः सवाली रणेऽवार्य्यप्रसरः संजातः काले उद्यन् तमोपहः सूर्य्य इव दस्यून् शत्रून् हन्तीति हनजनादिति डः हन्तेराशिषि ड इति परे तन्मते वाली दस्यून् बध्यादिति मुनेर्व्वरेण अवार्य्यप्रसरोजातः स्मते आशीरर्थानुक्तौ न क्षतिः वरेण दस्युहन्तृत्वे आशीर्गम्यत एव अवार्य्योऽखण्डनीयः प्रसरो गतिर्यस्य स तथा सृगतौ अनि रूपं उत्पूर्व्वस्येणः शतरि उद्यन् तमोऽपहन्तीति पूर्व्ववत् डः तमःक्लेशार्थेभ्योऽपपूर्व्वहन्तेर्ड इति परः ॥११०॥ भ०

अतिप्रियत्वान्न हि मे कातरं प्रतिपद्यते। चेतो वालिवधं राम क्लेशापहमुपस्थितं॥ १११॥

इति डाधिकारः॥

ज०म० अतीत्यादि। हे राम मदीयं चेतोवालिवधं कर्म्मीभूतमुपस्थितं प्राप्तं न हि प्रतिपद्यते नैव प्रत्येति यस्मात्कातरं व्याकुलं वालिनोऽतिबलयुक्तत्वात् कीदृशं वधं क्लेशापहं दुःखस्योन्मूलकं पुनः कुतः अतिप्रियत्वाद्वालिवधस्य यस्य हि यत्प्रियं तत्सिद्धमपि अर्थं न प्रत्येति॥ १११॥

भ० अतीत्यादि। हे राम वालिवधस्यातिप्रियत्वात् मे मम चेतो वालिवधमुपस्थितमुपपन्नमपि न प्रतिपद्यते न प्रत्येति यतः कातरं वालिभयाद्व्याकुलं उपस्थितेऽपि प्रिये कातरस्य प्रतीतिर्नास्तीति भावः वालिवधं कीदृशं क्लेशापहं दुःखस्योन्मूलकं अतएवास्या तिप्रियत्वं क्लेशमपहन्तीति पूर्व्ववत् डः॥ १११॥

शीर्षघातिनमायातमरीणां त्वां विलोकयन्। पतिघ्नीलक्षणोपेतां मन्येऽहं वालिनः श्रियं॥ ११२॥

ज०म० उपस्थितोऽस्य वधइति कथं ज्ञायतइत्याह शीर्षेत्यादि। अरीणां शीर्षघातिनं कुमारशीर्षयोर्णिनिः निपातनात् शिरसः शीर्षभावः आयान्तं विलोकयन् वालिनः श्रियं पतिघ्नीलक्षणोपेतामहं मन्ये पतिं हन्ति यल्लक्षणं तेनोपेतामिवेतीवार्थोऽत्र द्रष्टव्यः अमनुष्यकर्त्तृकेचेति टक् गमहनेत्युपधालोपः होहन्तेरिति कुत्वं॥ ११२॥

शीर्षैत्यादि। वालिवधश्चोपस्थितत्वं दर्शयन्नाह आगतं त्वां भ०
विलोकयन्नहं वालिनः श्रियं पतिघ्नलक्षणोपेतां मन्ये श्रियो
वालिपत्नीत्वेन निरूपणात् पतिहन्तृचिह्नयुक्तत्वात् वालिवधो •
गम्यते पतिं हन्तीति हनचरगह्टक् हनगमित्युङ्लोपः हनोघ्नो
घ्नः अमनुष्यकर्तृकाद्धन्तेष्टगिति परः त्वां किम्भूतं अरीणां शीर्ष
घातिनं शिरश्छेदिनं ग्रहादित्वाणिन् कुमारशीर्षाभ्यांहन्तेर्णि
न्निति परः उत्प्रेक्षाव्यञ्जकोऽत्र मन्येशब्दः अन्यथास्थितस्यान्यथा
कथनात्॥ ११२॥

शत्रुघ्नान्युधि हस्तिघ्नोगिरीन् क्षिप्यन्नकृत्रिमान्। शि
ल्पिभिः पाणिघैः क्रुद्धस्त्वया जय्योऽभ्युपायवान्॥ ११३॥

शत्रुघ्नानित्यादि। किंच युधि संग्रामे वाली त्वया जय्यः शक्यो ज०म०
जेतुं यदि युष्मदस्त्राणां शक्तिर्दृष्टा ताश्च द्रष्टुमिच्छामीति वक्ष्यमा
णाभिप्रायः चय्यजय्यौ शक्यार्थे इत्ययादेशनिपातनं कीदृशः अभ्यु
पायवान् युद्धोपाययुक्तः किं कुर्व्वन् क्रुद्धः क्षिप्यन् गिरीन् दिवादि
त्वाच्छ्यन् अकृत्रिमान् देवनिर्मितान् शत्रुघ्नान् शत्रून् हन्तीति
अमनुष्येति टक् हस्तिघ्नइव हस्तिघ्नः हन्तुं शक्तः शक्तौ हस्तिकपा
टयोरिति सूत्रस्य मनुष्यकर्तृकार्थारम्भकत्वात् वाली चामनुष्यः
शिल्पिभिर्युद्धकुशलैः वानरैः सह क्षिप्यन् सहार्थस्य गम्यमा
नत्वात् सहयोगे तृतीया पाणिघैः पाणिवादकैः ते हि हस्तियुद्धे
ऽन्यस्य वाद्यस्यासम्भवात् हस्तिमुखमेव वादयित्वा गिरीन् प्रहर
णान् क्षिपन्ति पाणिघताडघौशिल्पिनीति कर्त्तरि निपातनं
॥ ११३॥

म० अनुघ्नानित्यादि। अयमजनककर्मद्वारा रामविक्रमं ज्ञातु मिच्छन् महतामयतः साक्षात् स्वाभिप्रायकथनायुक्तत्वात् कलेन रामं स्तुवन्नेवाह ईदृशोऽपि वाली त्वया जय्यः जेतुं शक्यः पश्चा वद्येत्यादिना निपातः कीदृशः अभ्युपायवान् युद्धोपाययुक्तः क्रुध्यन् सन् गिरीन् क्षिपन् क्षिप्तवान् मुदि कीदृशान् अर्कात्विमाम् देवनिर्म्मितान् एतेन स्वभावसिद्धमुक्तिवत्त्वं सूचितं अनुघ्नान् क्षिप्य माणागिरयः अनु घ्नन्ति अनु हन्तुं गिरीन् क्षिपतीति भावः पति घ्नवत् टक् पुनः कीदृशः हस्तिघ्नः हस्तिनं हन्तीति पूर्व्ववत् टक् हस्तिकपाटाभ्यां हन्तेः शक्तौ टगिति परः तेन हस्तिनं हन्तुं शक्त इत्यर्थः स्वमते अर्थादेव शक्तिर्गम्यते शिल्पिभिर्युद्धकुशलैर्वानरै रुपलक्षितः पाणिघैः पाणिवादकैः युद्धे तेषां वाद्यान्तराभावात् हर्षेण हस्तयुगमेव वादयन्ति विशेषणे तृतीया शिल्पिभिः सह गिरीन् क्षिपन् इति वा सम्बन्धः एतेन तत्सदृशान्तत्सहाया अपि घ्नन्तीति सूचितं पाणिभ्यां पाणी हन्तीति पाणिघेतिनिपातनात् ॥ ११३ ॥

आढ्यङ्करणविक्रान्तोमहिषस्य सुरद्विषः। प्रियङ्करणमिन्द्रस्य दुष्करं कृतवान् वधं ॥ ११४ ॥

म० आढ्य। अनाढ्यमाढ्यं करोत्यनेनेति आढ्यसुभगेत्यादिना करणे ख्युन् आढ्यङ्करणं विक्रान्तं यस्य वालिनः अनाढ्यः सन् विक्रान्तेनाढ्योभूतइत्यर्थः महिषस्य सुरद्विषोदुन्दुभेर्वधं मरणं यः कृतवान् दुष्करं कष्टसाध्यं प्रियङ्करणमिन्द्रस्य तुष्टिकरं अप्रियं प्रियङ्करोत्यनेनेति पूर्व्ववत् ख्युन् ॥ ११४ ॥

आव्यमित्यादि। किञ्च वाली युधि महिषस्य दैवंशचोऽवधं भ०
कृतवान् कीदृशः अनाव्यमाव्यः क्रियते येन तादृशं विक्रान्तं
विक्रमो यस्य सतथा अनाव्यः सन्नपि विक्रमेणाव्योभूतइत्यर्थः मग्न
पलितेत्यादिना खनट् कीदृशं इन्द्रस्य प्रियङ्करणं प्रीङ्प्रीतौ
क्र्यादिः प्रीति कप्रत्यये प्रियः प्रीतिमान् महिषभयेन प्रागप्रियः
प्रियः क्रियते अनेनेति पूर्व्ववत् खनट् प्रीतिजनकमित्यर्थः यद्वा
इन्द्रोलोकानामप्रियआसीत् शत्रुवधाक्षमत्वात् पुनःकृतशत्रुव
धेन तु प्रियःक्रियतइत्यर्थः यतो दुष्करं कष्टसाध्यं एतेन इन्द्रा
दप्यधिकोऽयं बलीति सूचितं॥ ११४॥

प्रियम्भावुकतां यातस्त्वं क्षिपन् योजनं मृतं। स्वर्गे
प्रियम्भविष्णुश्च कृत्स्नं शक्तोऽप्यबाधयन्॥ ११५॥

प्रियमित्यादि। तमेवं सुरद्विषं मृतं पादाङ्गुष्ठेन योजनमध्वानं ज०
क्षिपन् क्षिपेर्लौदादिकस्योभयपदिनोरूपं प्रियम्भावुकतां यातस्त
था स्वर्गे प्रियम्भविष्णुरासीत् कर्त्तरिभुवइत्यनेनाव्यादिषूपपदेषु
खिष्णुच्खुकञौ शक्तोऽपि समर्थोऽपि कृत्स्नं लोकमित्यर्थात् अबा
धयन् अपीडयन् बधसंयमनइति चौरादिकः तस्य शतरि रूपं
सर्द्दहनस्त्वया शक्त्याजेतुं यदि त्वद्भ्रात्रा सामर्थ्यं दृष्टमित्यभिप्रा
येणाब्रवीत् सुग्रीवः॥ ११५॥

प्रियमित्यादि। तं मृतं महिषं पदाङ्गुष्ठेन योजनं अध्वानं भ०
क्षिपन् प्रेरयन् प्रियम्भावुकतां प्राप्तः प्राक् सखाप्रियआसीत्
दुष्टवधात् तस्यापि प्रियभावं प्राप्तः बाधितुं शक्तः समर्थोऽपि

कृत्स्नं लोकं मबाधयत् अपीडयत् स्वर्गस्य प्रियमासीत् तस्यापि प्रियोभूतः भुवोधेष्णिष्णुखुकञावितिस्यर्थे ष्णिष्णुखुकञौ मधक् मस्ये किष्वासुरादिः योजनमब्देनाच योजनात्मरितेहेमोलभ्य ते मदाध्वादिव्याप्ताविति योजनात् द्वितीया एवं सुग्रीवः प्राप्नोद्रामभिति प्रागुक्तेन सम्बन्धः॥ ११५॥

जिज्ञासोः शक्तिमस्त्राणां रामोन्यूनधियः कपेः।
अभिनत् प्रतिपत्त्यर्थं सप्त व्योमस्पृशस्तरून्॥ ११६॥

१०म० रामोऽपि तदभिप्रायं विदन् यत्कृतवान् तदाह। जिज्ञासोरित्यादि। अस्त्राणां शराणां शक्तिं जिज्ञासोः ज्ञातुमिच्छोः कपेः सुग्रीवस्य न्यूनधियः स्वल्पबुद्धेः यतः प्रमाणान्तरेणापरिज्ञानात् प्रत्यक्षेण ज्ञातुमिच्छतीति प्रतिपत्त्यर्थं संप्रत्ययार्थं रामः सप्त तरून् मालान् पङ्क्त्या स्थितान् एकेन शरेणाभिनत् व्योमस्पृशः स्पृशोऽनुदके क्विन्॥ ११६॥

भ० जिज्ञासोरित्यादि। यदि तवास्त्राणां भेदकत्वं दृष्टं स्यात्तदा त्वया तादृशोवाली जेतुं शक्यतइति सम्भाव्यतइति सुग्रीवाभिप्रायं रामोऽपि ज्ञातवान् यतोन्यूनबुद्धेरतएवास्त्राणां शक्तिं ज्ञातुमिच्छोः कपेः सुग्रीवस्य प्रतिपत्त्यर्थं सम्प्रत्ययार्थं रामः सप्त तालान् अभिनत् भिदेर्धौ रुधादित्वात् श्नम् व्योमस्पृशः अत्युच्छ्रितानित्यर्थः व्योम स्पृशन्तीति चास्मिन्निति क्विप् उदकवर्ज्जमुपपदात् स्पृशः क्विनिति परः॥ ११६॥

ततोवालिपशौ वध्ये रामर्त्विग्जितसाध्वसः। अभ्य
भून्निलयं भ्रातुः सुग्रीवोनिनदन् दधृक्॥११७॥

ततइत्यादि। ततस्तद्भेदादनन्तरं सुग्रीवो भ्रातुर्निलयम ज०म
भ्यभूत् अभिभूतवान् कीदृशः दधृक् धृष्टः ऋत्विगित्यादिना निपा
तितं धृषेः क्विन् द्विर्व्वचनं क्विन्प्रत्ययस्य कुरिति कुत्वं खकारः चर्त्वं
ककारः यस्माद्वालिनि पशाविव वध्ये वधार्हे रामेण ऋत्विजा
याजकेन जितसाध्वसः अपनीतसाध्वसः तस्माद्दधृक् ऋतौ यजति
ऋतुं वा यजति ऋतुप्रयुक्तो वा यजतीति ऋतुपूर्व्वाद्यजेः क्विन् यजा
दित्वात्संप्रसारणम् इदमृत्विक्शब्दनिर्व्वचनं रूढितस्तु याजयितृ
षु ब्राह्मणेषु क्विन्प्रत्ययस्य कुः निनदन् कितकिताशब्दं कुर्व्वन्
॥११७॥

ततइत्यादि। प्रत्ययानन्तरं सुग्रीवोनिनदन् शब्दं कुर्व्वन् भ०
भ्रातुर्व्वालिनोनिलयं निवासं अभ्यभूत् अभिभूतवान् भूसुधापि
वेति सेर्लुक् वालिनि पशाविव वध्ये सति रामेणैव ऋत्विजा याज
केन जितमपनीतं साध्वसं भयं यस्य येन वा स तथा अतएव द
धृक् धृष्टः ऋतौ यजतीति चास्विति क्विप् यजवपाद्योरिति जिः
चक्विति कुङ् धृषप्रागल्भ्ये क्विपि दधृक् दधृक्स्रग्वागित्यादिना
निपातः ऋत्विजा पशुरपि हन्यतइति भावः॥११७॥

गुहायानिरगाद्वाली सिंहोमृगमिव धुवन्। भ्रा
तरं युद्ध्रियः संख्ये घोषेणापूरयन्दिशः॥११८॥

ज०म० गुहायादित्यादि। तस्य शब्दमाकर्ण्य गुहायानिरगाद्वाली निर्गतः इणोगा लुङि गातिस्थेति सिचोलुक् भ्रातरं युवन् अभिगच्छन् युअभिगमने अस्यादादिकस्य वर्त्तमानसामीप्ये लटः शतरि उवङादेशे रूपं संख्ये युद्धे भियोयुङ् भीतेर्योक्ता कर्म्मणि ष्ठत् भीतिं युञ्जन्नित्यर्थः युजेः पूर्ब्बवत् क्विन् युजेरसमासइति नुम् संयोगान्तलोपः क्विन्प्रत्ययस्य कुः ङकारः कः कमिव सिंहोमृगमिव युवन् घोषेण दिशआपूरयन् दिशन्ति ताइति दिशः पूर्ब्बवत् क्विन्॥११८॥

भ० गुहेत्यादि। सुग्रीवस्य शब्दं श्रुत्वा वाली गुहायाः सकाशात् निरगात् निर्गतः इणोगाल्यां भूस्थापिवदिणइति सेर्लुक् सिंहो यथा मृगं द्यौति तद्वत् भ्रातरं युवन् आभिमुख्येन गच्छन् युअभिसर्पणे भविष्यत्सामीप्ये क्वौ अभिधानात् संख्ये युद्धे भियोयुङ् भयस्य प्रयोक्ता भयप्रदइत्यर्थः युजेः क्विप् युजिरोऽसेनुन्धाविति नुण् ङित्यादौ युजःपृथक्ग्रहणात् प्राक्कङ् न्नोर्मुः ङपेञ्ज्मनोरिति ङः स्यान्तस्य लुप् घोषेण शब्देन दिशआपूरयन् दिशतीति दिक् चासुसिति क्विप्॥ ११८॥

व्यायच्छमानयोर्मूढोभेदे सदृशयोस्तयोः। वाणमुद्यतमायंसीदिक्ष्वाकुकुलनन्दनः॥११९॥

ज०म० व्यायच्छेत्यादि। तयोर्व्वालिसुग्रीवयोर्व्यायच्छमानयोः कलहायमानयोः सदृशयोः समानयोः भेदे पृथक्त्वे मूढोभ्रान्तः सन्

इक्ष्वाकुकुलनन्दनो रामो वाणमुद्यतं सन्धीकृतमायंसीत् उपसंहृतवान् समङ्गाकर्थायमोपन्मइति तकूत भवति अकर्त्रभिप्रायत्वात् तत्र कर्त्रभिप्रायइति वर्त्तते आङो यमहनइत्यनेनापि न स्यात् सकर्मकत्वात् तत्राकर्मकादिति वर्त्तते समानपूर्व्वस्य दृशेः समानान्ययोश्चेत्युपसंख्यानात् त्यदादिष्वित्यादिना कञ् इदृश वतुष्विति समानस्य सभावः॥ ११८॥

व्यायेत्यादि। इक्ष्वाकुकुलनन्दनो रामस्तयोर्वालिसुग्रीवयो भं० र्भेदे विवचने मूढः भ्रान्तः सन् वालिवधायोद्यतं कृतसन्धानमपि वाणं सुग्रीववधशङ्कया आयंसीत् संहृतवान् यमरमणमातइति इमसनौ कोदृशयोस्तयोः व्यायच्छमानयोः कलहायमानयोः युध्यमानयोर्व्वा आत्माकृत्वादङागमयमइति नमं सदृशयोराकृत्या अन्योन्यं तुल्ययोः मूढत्वे हेतुरयं समानोदृश्यतइति त्यदादिना टक् समानेदं किमदइति समानस्य सादेशः॥११९॥

ऋष्यमूकमगात् क्लान्तः कपिर्मृगसदृगद्रुतं। किष्किन्धाद्रिसदात्यर्थं निष्पिष्टः कोष्णमुच्छ्वसन्॥१२०॥

ऋष्यमूकमित्यादि। कपिः सुग्रीवः किष्किन्धाद्रिसदा वालिना अ०म० किं किं इधातीति किष्किन्धा गुहा आतो ऽनुपसर्गेकः पारस्करादिदर्शनात् पूर्व्वस्य सुडागमोमलोपः षत्वञ्च निपात्यते तदुपलचितोऽद्रिः किष्किन्धाद्रिः तत्र सीदतीति सत्सूद्विषेत्यादिना क्विप् तेनात्यर्थं निष्पिष्टत्वात् क्लान्तः सन् ऋष्यमूकं द्रुतमगात् समानोपपदात् दृशेः पूर्व्ववत्क्विन् कोष्णमीषदुष्णमुच्छ्वसन् कवञ्चोष्णइति चकारात् कोः कादेशः॥ १२०॥

भ० ऋष्येत्यादि। कपिः सुग्रीवः किष्किन्धाद्रिसदा वालिना भृत्यर्थं निष्पिष्टः पीडितः अतएव क्लान्तः सन् कीर्णं ईषद्दुष्णं उच्छ्वसन् द्रुतं शीघ्रं ऋष्यमूकं अगात् गतवान् मृगसदृक् पलायने द्रुतगमनात् मृगतुल्यः किपि सदृक् सदृशवत् किष्किं भर्व्वानरैभिरिश्यत इति इण्शेर्व्यन्तात् घञ्‌सलनट इति अल् निपातनात् किष्केः किष्कादेशः किं किं दधातीति किष्किन्धेत्यन्ये किष्किन्धामू र्द्धन्यषकारवती यकारोपान्त्यापि किष्किन्ध्येति श्रीपतिः किष्किन्धा गुहा तदुपलक्षितोऽद्रिसच्च सीदतीति चासुमिति क्विप्॥१२०॥

कृत्वा वालिद्रुहं रामो मालया सविशेषणं। अङ्गदस्वं पुनर्हन्तुं कपिनाक्रायय‌द्रणे॥१२१॥

ज०म० कृत्वेत्यादि। वालिद्रुहं सुग्रीवं वालिनं द्रुह्यतीति सत्स्वित्यादिना क्विप् मालया सविशेषणं सचिह्नं कृत्वा भेदपरिज्ञानार्थं रामः अङ्गदस्वं वालिनं अङ्गदं सूतइति पूर्व्ववत्क्विन् ओःसुपीतिः यणादेशः तं रणे हन्तुं कपिना सुग्रीवेणाक्राययत् अभिभवं कारितवान् क्रयतेर्हेतुमण्णिचि शाछेत्यादिना पुक्॥१२१॥

कृत्वेत्यादि। वालिद्रुहं सुग्रीवं वालिभेदज्ञानाय मालया सविशेषणं सचिह्नं कृत्वा रामोऽङ्गदस्वं वालिनं रणे हन्तुं कपिना सुग्रीवेण पुनराक्राययत् आक्राममकारयत् घोऽश्रौञेरित्यादौ अस्वादनेक्रन्दायशब्दायक्रादेति वर्ज्जनात् ण्यन्तस्य कर्त्तुः कपेर्न कर्म्मत्वं शाछासाछेत्यादिना यन् अङ्गदं सूते जनयतीति चासुमित्यादिना क्विप् कव्याचनेकाचइति वत्वं वालिने द्रुह्यतीति पर्व्ववत् क्विप्॥१२१॥

तयोर्वानरसेनान्योः संप्रहारे तनुच्छिदं। वालिनो दूरभाग्रामोवाणं प्राणादमत्यजत्॥ १२२॥

तयोरित्यादि। वानरसेनान्योः वानरस्वामिनोः एरनेकाच इति यण् संप्रहारे युद्धे प्रवृत्ते रामोवाणमत्यजत् वालिनस्तनुच्छिदं तनुं शरीरं छिनत्तीति पूर्व्ववत् क्विप् छेचेति तुक् प्राणादं प्राणापहारिणं प्राणानत्तीति प्राणादं अदोनन्नइति विट् दूरभाक् दूरमवस्थितोरामोदूरं भजतइति भजोण्विः॥ १२२॥ ज०म०

तयोरित्यादि। तयोर्वानरसेनानामीश्वरयोः संप्रहारे युद्धे प्रवृत्ते सति दूरभाक् दूरदेशस्थितोरामोवालिनस्तनुच्छिदं अतएव प्राणादं प्राणभक्षकं वाणं अत्यजत् चिक्षिपवान् सेनां नयति तनुं शरीरं छिनत्ति प्राणानत्तीति च त्रासुविति क्वप् अत्तेरनन्तत्वात् क्विविति परः दूरं भजतइति ढान्नजसहवहोविण्॥ १२२॥ भ०

वालिनं पतितं दृष्ट्वा वानरारिपुघातिनं। बान्धवाक्रोशिनोभेजुरनाथाः ककुभोदश॥ १२३॥

वालिनमित्यादि। रिपुघातिनं रिपून् हन्तुं शीलमस्येति सुप्यजातौ णिनिः तं वालिनं पतितं दृष्ट्वा वानरादश ककुभोदश दिशोभेजुः अनाथाः सन्तः स्वामिनोहतत्वात् बान्धवक्रोशिनोबान्धवाइव क्रोशन्तीति कर्त्तर्य्युपमानइति णिनिः॥ १२३॥ ज०म०

वालिनमित्यादि। वालिनं पतितं दृष्ट्वा वानरादश ककुभो दिशोभेजुः पलायितादत्यर्थः रिपुघातिनं रिपुं हन्तीति मघादि भ०

त्वाच्छिन् बान्धवाक्रोशिनः बान्धववत् आक्रोशन्तः क्रन्दन्तः कर्त्त र्युपमानेणिनिति परः स्वमते ग्रहादित्वाणिन् इवार्थस्य गम्य मानत्वं अनाथाः वालिनाशेन स्वामिरहिताः ॥ १२३ ॥

धिग्दाशरथिमित्यूचुर्मुनयो वनवर्त्तिनः। उपेयु र्मधुपायिन्यः क्रोशन्त्यस्तं कपिस्त्रियः ॥ १२४ ।

ज०म० धिग्दाशरथिमित्यादि । येषां सत्यन्यस्थाने वृत्तौ च वनएव वर्त्तितुं शास्त्रतोनियमः ते वनवर्त्तिनोमुनयः व्रतइति णिनिः धिगिमं दाशरथिमित्यूचुः उक्तवन्तः येनानपराधेऽपि वालिनो हृशं हतमिति कपिस्त्रियश्च वालिनमुपेयुः मधुपायिन्यः आभी क्ष्ण्येन मधु पिबन्त्यः बहुलमाभीक्ष्ण्येइति णिनिः क्रोशन्त्योहा नाथेति रुदन्त्यः ॥ १२४ ॥

भ० धिगित्यादि । दाशरथिं रामं धिगिति वनवर्त्तिनो मुनयऊचुः महतामन्यासक्तघातित्वानौचित्यात् धिक्समयेत्यादिना दाश रथेर्द्वितीया वने वर्त्तन्तइति ग्रहादित्वात् णिन् कपिस्त्रियः क्रोश न्त्या हा नाथेति क्रन्दन्त्यस्तं वालिनं उपेयुरुपगताः उपपूर्व्वस्येण श्च्याउमि रूपं मधुपायिन्यः मधूनि पीतवत्यः ग्रहादित्वात् णिन् यनञ्छित्वादिति यन् परमते तु आभीक्ष्ण्ये तु णिन् पुनःपुनर्मधु पिबन्ति इत्यर्थः आभीक्ष्ण्यार्थस्य णिनोक्तत्वात् न दित्वं स्वमतेऽप्य भिधानादेव ॥ १२४ ॥

राममुच्चैरुपालभ्य प्रगमानी कपिप्रभुः । अणवेदन या ग्लायन् साधुम्मन्यमसाधुवत् ॥ १२५ ॥

राममित्यादि। कपिप्रभुर्वाली राममुच्चैर्महता शब्देनोपालब्ध उपालब्धवान् लभिरात्मनेपदयनिट् तस्य लुङि झलोझलीति सिचो लोपः झषस्तथोर्धोध: झलाजश्झशि शूरमानी शूरमात्मानं मन्यमानः आत्ममाने खश्चेति चकाराण्णिनिः व्रणवेदनया म्लायन् म्लानिमुपगच्छन् साधुम्मन्यं साधुमात्मानं मन्यमानं रामं तेनैव खश् तस्मिन् सार्व्वधातुके परतो दिवादित्वाच्छ्यन् पूर्व्वपदस्य मुम् असाधुवदसाधुमिव असाधुना तुल्य वर्त्तत इति वतिः॥ १२५॥ ज॰म॰

राममित्यादि। व्रणवेदनया म्लायन् कपिप्रभुर्व्वाली उच्चैः शब्देन राममुपालब्ध निन्दितवान् लभेर्लुङि झलझलीति सेर्लोपः ढभाषस्तथोरिति तस्य धः झषन्तस्येति भस्य बः शूरमानी आत्मानं शूरमन्यमानः अभिधानात् मन्यतेरात्मनोऽभिमाने णिन् यद्वा शूरस्य अभिमानो विद्यतेऽस्येति नैकाजादिनिइन् वीराभिमानवानित्यर्थः शूरश्चासौ मानो चेति वा रामं कीदृशं साधुम्मन्यं साधुमात्मानं मन्यमानं भ्रातृवधूहरणेनोचितस्य दण्डस्यैव करणात् मन्यात्मार्थेइति खश् श्यन्वाद्त्वे दिवादित्वात् श्यन् खित्यव्याजिति मन् असाधुवत् असाधुना तुल्यं असाधवत् हननात् चतास्यइति चत् असाधुं यथा निन्दति तथोपालब्धेति वा॥ १२५॥ भ॰

मृषासि त्वं हविर्याजी राघव च्छद्मतापसः। अन्यव्यासक्तघातित्वाद्ब्रह्मघ्नां पापसम्मितः॥ १२६॥

ज०म० मृषासीत्यादि। हे राघव त्वं छद्मना तापसः सन् मृषैव मिथ्यैव हविर्याजी हविषा करणेनेष्टवानसि न लोकप्राप्तभयइत्यभिप्रायः करणेयजइति भूते णिनिः इतःप्रभृति भूतइत्यधिक्रियते यतो ब्रह्मघ्नां पापसंमितः ब्रह्म हतवन्तइति ब्रह्मेत्यादिना क्विप् तेषां पापेन तुल्यः कुतः अन्यथाशक्तघातित्वात् अन्यस्मिन् सुग्रीवे व्यासक्तं मां हतवान् कर्म्मणिहनइति णिनिः तत्र कुत्सितग्रहणं कर्त्तव्य मित्युक्तं यदि सुग्रीवेण विरोधः किं तवायातमिति कुत्सितहननं ॥ १२६ ॥

भ० मृषेत्यादि। हे राघव त्वं हविर्याजी मृषा स्वर्गादिफलाभावात्रये हविषा करणेन इष्टवानिति मिथ्या ग्रहादित्वात् णिन् करणाद्यजोभूतेणिन्निति परः स्वमते करणादिर्भूतकालस्य विशेषा नुक्तेरर्थाद्गम्यते यतश्छद्मना तापसः तपस्वी न तु वस्तुतः अन्यव्यासक्तघातित्वात्त्वं ब्रह्मघ्नां ब्रह्माणं हतवतां पापसम्मितः पापेन सम्मितस्तुल्यः तुल्यपापाश्रयत्वात् पुरुषोऽपि तुल्यइत्युच्यते पापेन करणभूतेन ब्रह्मघ्नां तुल्यइत्यन्वयः अन्यस्मिन् सुग्रीवे व्यासक्तं हतवानिति ग्रहादित्वाण्णिन् कर्म्मणो हनःकुत्सायामिति परः हनस्तङ् खर्हौ घोञ्ञितिघेति घः ततस्त्वतोभावइति त्वं ब्रह्माणं हतवानिति त्रासुमिति क्विप् ब्रह्मभ्रूणवृत्रात् क्विप्‌मोभूतइति परः स्वमते अविशेषात् कालत्रयं प्राप्तमत्रातीतविवक्षा सदागोऽलोपइत्यकारलोपे हनोङ्क्तोप्तः ॥ १२६ ॥

पापकृत्सुकृतां मध्ये राज्ञः पुण्यकृतः सुतः। माम पापं दुराचार किं निहत्याभिधास्यसि ॥ १२७ ॥

तदेव दर्शयन्नाह पापेत्यादि। हे दुराचार मामपापं निहत्य पापकृत् कृतकिल्बिषः राज्ञोदशरथस्य पुण्यकृतः सुतः सुकृतां मध्ये किमभिधास्यसि वक्ष्यसि किं क्षेपे न किञ्चिदभिधातव्यमस्तीतिभावः सर्व्वत्र सुकर्म्मपापेत्यादिना क्विप्॥ १२७॥ ज०म०

पापेत्यादि। हे दुराचार अपापं मां निहत्य सुकृतां शोभनक्रियावतां मध्ये किमभिधास्यसि किं वक्ष्यसि यतस्त्वं पुण्यकृतो दशरथस्य सुतः पुत्रोऽपि भूत्वा पापकृत् पापं सुष्ठु पुण्यञ्च कृतवानसि चासुमित्यादिना क्विप् पुण्यादेः कर्म्मणः सोपपदकृञः कर्त्तरि भूतइति परः स्वमतेऽविशेषात् सर्व्वं विवचितं॥ १२७॥ भ०

अग्निचित्सोमसुद्राजा रथचक्रचिदादिषु। अनलेष्विष्टवान् कस्मान्न त्वयापेक्षितः पिता॥ १२८॥

अग्निचिदित्यादि। कस्मात्त्वया पिता नापेक्षितः नानुवृत्तः येनैवं कृतवानसीति कीदृशः अग्निचित् आहिताग्निः अग्निं चितवानिति अग्नौचेरिति क्विप् सोमसुत् सोमं सुतवान् सोमयाजी सोमेसुञइति क्विप् अनलेषु अग्निषु इष्टवान् रथचक्रचिदादिषु रथचक्रवच्चीयतइति कर्म्मण्यग्न्याख्यायामिति क्विप् आदिशब्दाच्छ्येनचिदादिग्रहणं अग्न्यर्थोहि तदाकारइष्टकाचयइत्युच्यते तद्द्वारेणाग्निरपि॥ १२८॥ ज०म०

अग्नीत्यादि। कथं त्वया पिता दशरथोराजा नापेक्षितः न चिन्तितः नानुवृत्तोवा येनैवं कृतमिति भावः अग्निचित् आहिताग्निः सोमसुत् सोमयाजी रथचक्रचिदादिषु अग्निविशेषेषु भ०

इष्टवान् क्रतवश्च: अग्निं चितवान् सोमं सुतवान् रथचक्रवचौ यते इति च चासुमित्यादिना क्विप् रथचक्रचिदादिश्विवित्यादि शब्दात् श्येनचिदादिष्वपि अग्न्यर्थौ रथचक्राद्याकाररहस्कार चनाविशेष: क्रियते तद्वारेणाग्निरपि रथचक्रचिदाहितथाव्य पदिश्यते इष्टवानिति यजे: क्वतु: यजस्वपाद्योरिति जि: ॥ १२८ ॥

मांसविक्रयिण: कर्म्म व्याधस्यापि विगर्हितं । मां घ्नता भवताकारि नि:शङ्कं पापदृश्वना ॥ १२९ ॥

ज॰म॰ मांसेत्यादि । मांसविक्रयिण: कुत्सितकर्म्मकारिणो व्याधस्यापि विगर्हितं निन्दितं कर्म्मणोनिर्विक्रियइति इनि: तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तं निकृष्टकर्म्मकरणेनेति यद्भवता पापदृश्वना पापं दृष्टवता दृश: क्वनिप् नसंयोगाद्वमन्तादिति अल्लोपप्रतिषेध: कर्म्म अकारि कृतं कर्म्मणि लुङ् नि:शङ्कं शङ्कां त्यक्त्वा किं कुर्व्वता मां घ्नता मारयता हन्ते: शतरि गमहनेत्युपधालोप: होह न्तेरिति कुत्वं ॥ १२९ ॥

भ॰ मांसेत्यादि । मांसविक्रयिणोव्याधस्यापि यद्विगर्हितं कर्म्म तत्त्वया मां घ्नता नि:शङ्कं शङ्कां त्यक्त्वा कृतं पापदृश्वना पापं दृष्ट वतापि पापानभिज्ञेन मांसोपजीविना व्याधेनापि अन्यासक्तस्य निष्प्रयोजनत्वाद्वानरस्य च हननं निन्द्यते भवता तु पापं जान तापि तत्कृतमिति भाव: व्याधस्येति कर्त्तरि सम्बन्धविवक्षा यदा व्याधस्यापीदृशं कर्म्म लोकैर्व्विशेषेण निन्दितमित्यर्थ: मांसविक्रयी

ऽस्यास्तीति नैकाजादिति इन् विक्रीणातेर्भूते कुत्सायामिति पर: तन्न साधु अत्र व्याधस्य मांसविक्रयणे कुत्साया अभावात् इतोऽस्त्रा सुपित्यादिना क्वनिप्॥ १२९ ॥

बुद्धिपूर्व्वं ध्रुवन्न त्वा राजकृत्वा पिता खलं। सह युध्वानमन्येन योऽहिनोमामनागसं ॥ १३० ॥

बुद्धिपूर्व्वमित्यादि। त्वत्पिता त्वां खलं असाधुचरितं ध्रुवन् जं०म गच्छन् ध्रुगतिस्थैर्य्ययोरिति रुदादौ पठ्यते तस्य गतौ ज्ञानार्थे वर्त्तमानस्य शतरि विकरणलोपे उवङादेशे रूपं यन्न राज कृत्वा कस्य तवेत्यर्थात् राजनियुधिकृञ्ञइति क्वनिप् तत्तस्य बुद्धि पूर्व्वं ध्रुवमवश्यं तस्येति व्याख्याने कृत्प्रयोगे कर्म्मणि षष्ठ्या भवितव्यं यस्त्वं मामनागसमपापमन्येन सह युध्वानं अन्येन सुग्रीवेण सह योद्धुं प्रवृत्तं सहेचेति क्वनिप् अहिन: हिंसितवान् हिंसेर्लङि मध्यमपुरुषैकवचने अमि,आमलोपे हल्ङ्यादिलोपे रुत्वे च रूपं॥ १३० ॥

बुद्धीत्यादि। खलं दुष्टचरितं त्वां पिता दशरथो यन्न राज भ० कृत्वा राजानं न कृतवान् तद्बुद्धिपूर्व्वं खलत्वविज्ञानपूर्व्वकमेव ध्रुवं निश्चितं चासुपित्यादिना कृञ: क्वनिप् स्वस्यतन्पिति दीचोषीना मित्यादिना त्वादेश: क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति न्यायात् ढधेक्कतीत्यस्य विषयेऽपि कर्म्मक्रियेत्यादिना द्विती या केचित्तु ध्रुविस्थैर्य्ये इत्यस्य शतरि ध्रुवन् धातूनामनेकार्थत्वात् ज्ञानार्थ: पिता त्वा खलं ध्रुवन् यन्न राजकृत्वा अर्थात्तव तद्बुद्धि

पूर्व्वमित्याहुः अन्ये तु इति निषेधे आशब्दः स्मरणे पीडायां वा राजहत्वेत्यत्र तवेत्यर्थाद्गम्यते नञः प्रश्लेषात् अखलमिति मामित्यस्य वक्ष्यमाणस्य विशेषणमित्याहुः खलत्वमाह यस्त्वं मां अहिनो हतवान् कीदृशं अन्येन सुग्रीवेण सह युध्यानं योद्धुं प्रवृत्तं युधेः पूर्व्ववत् क्वनिप् अनागसं अनपराधं अहिनदिति हिंसिहिंसायां ध्याः श्निप् रुधादित्वात् श्नम् श्नसोरल्लोपइति इदनुबन्धजन्यनकारस्य लोपः हल्ङ्याब्भ्यो दीर्घादिति सेर्लोपः॥ १३०॥

पञ्च पञ्चनखा भक्ष्या ये प्रोक्ताः कृतजैर्द्विजैः। कौशल्याज शशादीनां तेषां नैकोऽप्यहं कपिः॥ १३१॥

ज०म० मांसार्थं हतइति चेदाह पञ्चपञ्चेत्यादि। हे कौशल्याज कौशल्याजात सप्तम्यां जनेर्डः ये पञ्च पञ्चनखाः शशकः शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चमइति कृतजैः कृतयुगजातैः सप्तम्यां जनेर्डः द्विजैर्द्विजातैः अन्येष्वपि दृश्यतइति डः सप्तम्यामित्युपलक्षणं असप्तम्यामपि दृश्यते भक्ष्याः भक्षणीयाः प्रोक्ताः तेषामहमेकोऽपि न भाविता अहं कपिः तत्किमिति हतोऽहं त्वयेति॥ १३१॥

भ० पञ्चेत्यादि। राजभिर्म्मांसाय मृगाहन्यन्तइति समानं निराकुर्व्वन्नाह हे कौशल्याज ये पञ्चनखाः पञ्च शशकः शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चमइत्यादिवाक्येन कृतजैः सत्ययुगजातैर्द्विजैर्महर्षिभिर्भक्षणयोग्याः प्रोक्ताः कथिताः तेषां शशादीनां मध्ये अहं नैकोऽपि यतःकपिरहं अतोऽभक्ष्यत्वान्मम वधोव्यर्थएव कौशल्यायाः सकाशाज्जातः कृते जातः द्विर्जातइति च सप्तम्यां जनेर्डः पैतृकधर्म्मायाहितया कुत्सार्थं मातुरुत्कीर्त्तनं॥ १३१॥

कथं दुष्टः स्वयं धर्म्मे प्रजास्त्वं पालयिष्यसि। आत्मानुजस्य जिह्रेषि सौमित्रेस्त्वं कथन्न वा॥१३२॥

कथमित्यादि। स्वयमात्मना धर्म्मे दुष्टः दुस्थः सन् अपदुः अन्म सुपुस्यद्त्यौणादिकः कुप्रत्ययः कथं प्रजाः पालयिष्यसि नैवेति भावः उपसर्गेचसंज्ञायामिति जनेर्ड्ः कथं वा सौमित्रेर्भ्रातुरात्मानुजस्य कनीयसः आत्मानमनुजात इत्यनौ कर्म्मणि इति डः न जिह्रेषि न लज्जसे॥१३२॥ जं॰म

कथमित्यादि। त्वं कथं प्रजाः पालयिष्यसि अपि तु नैवेति भावः यतः स्वयमात्मनो धर्म्मे दुःस्थः दुःखेन तिष्ठतीति हनजनादिति डः दुष्ठुरिति पाठे औणादिकः कुप्रत्ययः पलक्षाभिधानात् प्रजायन्तइति प्रजालोकाः पूर्व्वेण डः स्त्रीत्वं संज्ञा चाभिधानात् आत्मानुजस्य सौमित्रेः कथं न वा जिह्रेषि न लज्जसे आत्मानमनुजातइति पूर्व्ववत् डः॥१३२॥ भ॰

मन्ये किञ्जमहं प्रम्नं त्वामक्षत्रियजे रणे। लक्ष्मणाधिज दुर्वृत्तं प्रयुक्तमनुजेन नः॥१३३॥

मन्यइत्यादि। किञ्जं त्वामहं कुतोऽपि जातं न राजजातं मन्ये पञ्चम्यामजाताविति डः प्रम्नं मारयन्तं अक्षत्रियजे रणे क्षत्रियादजाते हे लक्ष्मणाधिज लक्ष्मणायज नोऽस्माकमनुजेन भ्रात्रा प्रयुक्तं जातावपि दृश्यते अक्षत्रियजइति उपसर्गे च संज्ञायामित्युक्तं असंज्ञायामपि दृश्यते लक्ष्मणाधिजइति अनौकर्म्मणीत्युक्तं कर्म्मण्यपि दृश्यते अनुजइति सर्व्वत्रान्येष्वपि दृश्यतइति डः इत्युपपदाधिकारः॥१३३॥ जं॰म॰

भ॰ मन्येरित्यादि। हे लक्ष्मणाधिज हे दुर्जन दुश्चरित्र अहं त्वां किञ्ज कुतोऽपि जातं कुत्सिताद्वा जातं मन्ये न तु राज्ञोजातं यतः अक्षत्रियजे क्षत्रियादजाते रणे मां घ्नन्तं मारयन्तं अस्माकमनुजेन कनिष्ठेन सुग्रीवेण प्रयुक्तं सर्व्वत्र हनजनादिति जनेर्डः परे तु विशेषसूत्राण्युक्त्वा अन्यत्रापि दृश्यतइत्यनेन तेषां प्रायिकत्वं बोधयन्ति तथाहि पञ्चम्यन्तादजातेर्डः इत्यस्य किञ्जइत्युदाहरणं जातेरपि अक्षत्रियजइत्युदाहृतं उपसर्गात् संज्ञायामित्यस्य प्रजास्त्वं पालयिष्यसीत्युदाहृतं असंज्ञायामपि अधिज इति कर्म्मणोऽनोरित्यस्य आत्मानुजस्य जिह्रेषीत्युदाहरणं अकर्म्मणोऽपि अनुजइति अतएव महाधिया बोपदेवेन विशेषणात्तः ॥१३३॥

प्रत्यूचे वालिनं रामो नाकृतं कृतवानहं। यज्वभिः सुत्वभिः पूर्व्वैर्जरद्भिश्च कपीश्वर ॥१३४॥

ज॰म॰ प्रत्यूचइत्यादि। रामोऽपि वालिनं प्रत्यूचे प्रत्युक्तवान् किमित्याह हे कपीश्वर पूर्व्वैर्जरद्भिर्वृद्धैः जीर्य्यतेरतृन् यज्वभिः याज्ञिकैः सुत्वभिः सोमयाजिभिः सुयजोर्ङ्वनिप् नाकृतं कृतवानहं अपि तु कृतमेव कृतवानहं निष्ठेति भूते क्तवत् ॥१३४॥

भ॰ प्रत्यूचइत्यादि। रामोवालिनं प्रत्यूचे किं प्रत्युक्तवानित्याह हे कपीश्वर यज्वभिर्याज्ञिकैः सुत्वभिः सोमपीतिभिः पूर्व्वैर्जरद्भिर्वृद्धैर्मान्धातृप्रभृतिभिर्यन्न कृतं तदहं न कृतवान् इष्टवानिति

वासुमिति वनिप् सुलामिति क्वनिप् स्वस्तनमृपिति जीर्य्यतीति शत्रः जीनोजीर्णोजरन्नपीत्यमरः ॥ १३४ ॥

ते हि जालैर्गले पाशैस्तिरश्चामुपसेदुषां। ऊषुषां परदारैश्च सार्द्धं निधनमैषिषुः ॥ १३५ ॥

तेहीत्यादि। हि यस्मात्ते पूर्व्वं दृष्टाजालैर्गले पाशैश्च तिरश्चां मृगपक्षिसरीसृपाणां तिरोऽञ्चतीति ऋत्विगित्यादिना क्विन् अमि अचइत्यलोपः तेषां निधनं विनाशमैषिषुः इष्टवन्तः इषेर्लुङि रूपं कीदृशं उपसेदुषां समीपमुपगतवतां तेषां समीपवर्त्तिनामुपद्रवकारित्वात् भाषायामिति क्वसुः परदारैश्च सार्द्धमूषुषां उषितवतां पूर्व्ववत्क्वसुः वसेर्यजादित्वात्सम्प्रसारणं ॥ १३५ ॥ ज०म०

तेहीत्यादि। पूर्व्वोक्ते हेतुरयं हि यस्मात् तेऽपि पूर्व्वं दृष्टास्तिरश्चां पक्षिमृगादीनां जालैर्गले पाशैश्च निधनं ऐषिषुः इच्छन्तिस्म न केवलं तिरश्चां परदारैः परस्त्रीभिः सार्द्धं ऊषुषां कृतनिवासानाञ्च परदारैः सह वासमपि मत्तोके वदतीति अतएव वध्यत्वप्रतिपादकं रूपद्वयमेव तत्त्वात्स्ति उभयविशेषणमाह उपसेदुषां समीपमुपगतानां स्ववासस्थितानामपीत्यर्थः केचित्तु परदारैः सार्द्धमूषुषामिति तिरश्चामित्यस्य विशेषणं वध्यत्वदर्शनायेत्याहुः तिरोऽञ्चतीति क्विप् सहसन्तिरइति तिर्य्यादेशः तिर्य्यगमुमूयगिति तिरश्चादेशः उपपूर्व्वसदश्चोपसर्गादिति क्वसुः वसोर्वसेकाजिति इम् धुर्दिष्वक्षीति दित्वं नृफलेति अतएत्वं विलोपश्च वसोर्वःसेमपीति उः वसेः पूर्व्ववत् क्वसुः इम् च भय भ०

ग्रहेति खेर्ष्णिः यहस्वपाद्योरिति प्रकृतेर्ष्णिः क्रिलादिति षः इषु इच्छायां अन् थांसिः अनुस्विद्देः भूयोऽम् ॥ १२५ ॥

अहन्तु शुश्रुवान् भ्रात्रा स्त्रियं भुक्तां कनीयसा।
उपेयिवाननूचानैर्निन्दितस्त्वं लतामृग ॥ १२६ ॥

ज०म० अहमित्यादि। हे लतामृग हे शाखामृग अहं पुनः शुश्रुवान् श्रुतवान् पूर्व्ववत्क्वसुः यदुत भ्रात्रा कनीयसा भुक्तां स्त्रियं त्वमुपेयिवान् सन् अनूचानैर्वेदविद्भिर्निन्दितस्ततोमे नैव दोषः उपेयिवाननूचानइति उपेयिवानित्यादिना निपातितौ ॥ १२६ ॥

भ० अहमित्यादि। हे लतामृग शाखामृग अहं शुश्रुवान् किं शुश्रुवानित्याह कनीयसा कनिष्ठेन भ्रात्रा सुग्रीवेण भुक्तां स्त्रियं त्वमुपेयिवान् उपगतोऽसि अतएव अनूचानैर्व्वेदविद्भिस्त्वं निन्दितः तेन तव बधे मम दोषोनास्तीति भावः श्रृणोतेरिणश्च पूर्व्ववत् क्वसुः द्वित्वं वमोर्धुर्सैकाच्त्रणातदमित्यत्र खिषजितसैकचायहणं तेन न ओरिम् इणस्तु इमि यिर्णोऽच्यणाविति यादेशः खेःकितिर्घः अनुपूर्व्वभृज्रः कानः वचोऽरे पूर्व्ववत् जिः अनूचानः प्रवचने साङ्गेऽधीती गुरोश्च यदत्यमरः। लता ज्योतिष्मती पृक्का शाखा वल्ली प्रियङ्गुष्विति विश्वः ॥ १२६ ॥

अन्वनैषोत्ततोवाली त्रपावानिव राघवं। न्यषिञ्चच्च पश्चात्कृदं यत्नात् काकुत्स्थे तनयं प्रियं ॥ १२७ ॥

अन्वैत्यादि। ततो रामवचनादनन्तरं वाली राघवमन्वनैषीत् अनुनीतवान् देव क्षम्यतां यदजानता मयोक्तमिति नयते र्लुङित्यनेन भूतसामान्ये लुङ् त्रपावानिव यथा लज्जावान् कश्चिदनुनयति तद्वत् अङ्गदञ्च प्रियं तनयं काकुत्स्थे रामे न्यक्षिपत् न्यस्तवान् यस्मादादरात् क्षिपेरनद्यतने लङ् लकारप्रत्ययस्तातिङिति प्रतिषेधान्न कृत्संज्ञा॥ १२७॥ जं०

अन्वेत्यादि। ततो रामवाक्यानन्तरं वाली राघवमन्वनैषीत् अनुनीतवान् णीञश्चासिः नेमेकाजिति इम्निषेधः अजवइति भं० त्रिः त्रपावानिव वस्तुतोमृगस्य भ्रातृवधूहरणेऽपि त्रपा नास्ति किन्तु यथा लज्जावान् कश्चिदनुनयति तद्वत् अङ्गदनामानं प्रियं पुत्रं काकुत्स्थे रामे यस्मात् न्यक्षिपत् समर्पितवान्॥ १२७॥

म्रियमाणः ससुग्रीवं प्रोचे सद्भावमागतः। सम्भविष्यावएकस्यामभिजानासि मातरि॥ १२८॥

म्रियेत्यादि। सवाली म्रियमाणः सन् सद्भावं शोभनभावमागतः स सुग्रीवं प्रोचे किमित्याह अभिजानासि स्मरसि एकस्यां मातरि सम्भविष्यावः समभवावइत्यस्मिनर्थे अभिज्ञावचने लृडित्यनद्यतने लृट् अभिजानासीत्यभिज्ञावचनस्योपपदत्वात्॥ १२८॥ जं०

म्रियेत्यादि। म्रियमाणः सन् सद्भावं प्राप्तोवाली सुग्रीवं प्रोचे भं० मृङ्‌प्राणत्यागे मृङ्‌लोमिमिति शानः तौदादिकः शः रिङिः अभ्योरितीयः किमित्याह एकस्यां मातरि आवां यत्सम्भविष्यावः सम्भूतौ तदभिजानासि स्मर्थैलृयदित्यतीतइति भूते लृ॥ १२८॥

अवसाव नगेन्द्रेषु यत्पास्याबोमधूनि च। अभिजानीहि तत्सर्व्वं बन्धूनां समयोह्ययं॥१३९॥

ज०म० अवेत्यादि। अभिजानीहि स्मर यन्नगेन्द्रेषु अवसाव उषितवन्तौ अत्राभिज्ञावचनस्य यच्छब्दसहितत्वात न यदीत्यनेन ऌटि प्रतिषिद्धे लङेव भवति अत्र वासमात्रं स्मर्य्यते मधूनि च यत्पास्याव: तत्र पीतवन्तौ तत्सर्व्वमभिजानीहि अत्र विभाषासाकाङ्क्ष इति पक्षे ऌट् साकाङ्क्षता च प्रयोक्तुर्लक्ष्यलक्षणयो: सम्बन्धे तत्र वासोलक्षणं पानञ्च लक्ष्यमिति यस्माद्बन्धूनामयमेषसमय: काल:॥१३९॥

भ० अवेत्यादि। नगेन्द्रेषु पर्व्वतश्रेष्ठेषु आवां अवसाव यत्र तत्र मधूनि पास्याव: पीतवन्तौ तत्सर्व्वं अभिजानीहि स्मर यस्मात् अयं बन्धूनां समय: नेदानीं वैरिचिन्ता युक्तेति भाव: वासिकस्मार्य्य इति भूते विभाषया तौ वसोनिवासे घो॥१३९॥

दैवं न विदधे नूनं युगपत्सुखमावयो:। शश्वद्बभूव तद्दु:खं यतोन इतिचाकरोत्॥१४०॥

ज०म० दैवमित्यादि। नूनमवश्यं दैवमावयो: सुखं युगपदेककालं न विदधे न हि विहितवत् परोक्षे लिट् ञित्वात्तङ् आतोलोप: यतोयस्मात्तत् दैवं शश्वत् नित्यं दु:खमननुकूलं नोऽस्माकं बभूव तस्मादितिह एवमकरोत् इदत्येवं कृतवान् यद्युगपदावयो:

सुखविधानं तद्दुःखं मम्बदभूव ह्वाकरोदिति भूतानद्यतनप रोचे लिटि प्राप्ते ह्मस्वतोर्लङ्गिति लङ् चकारात् लिट् तत्र मस्व ह्वब्दे उपपदे लिङ्वादाद्वतः न लङ् ह्मशब्दे लङेवन लिङपीति ॥ १४० ॥

दैवमित्यादि। नूनं निश्चितं दैवं कर्तृ युगपदेकदा नावयोः सुखं विदधे चकार धाञश्च्यां उभ्येचीत्यादिना आलोपः यत स्तद्दैवं नोऽस्माकं मम्बमित्यं दुःखं प्रतिकूलं बभूव तस्मादिति प्रा गुक्तं युगपत् सुखाभावं अकरोत् हा विषादे ह पादपूरणे वा पारम्पर्य्यप्रसिद्धौ चादेतिह्यमितिहाव्ययमितिदर्शनात् पारम्प र्य्यप्रसिद्धिमकरोदिति केचित् इति लोकापवादागमयोरिति वर्द्ध मानवचनात् लोकापवादं आहवधगमनरूपमकरोदिति केचित यत्तदोः परस्पराकाङ्क्षया ततइति गम्यते॥१४०॥ भ०

दद्दौ सदयितां भ्रात्रे मालाञ्चाग्र्यां हिरण्मयीं।
राज्यं सन्दिश्य भोगांश्च ममार व्रणपीडितः॥१४१॥

ददावित्यादि। सवाली दयितां ताराख्यां भ्रात्रे सुग्रीवाय दद्दौ मालां चाग्र्यां श्रेष्ठां हिरण्मयीं सुवर्णघटितां राज्यं सामा त्यादिद्रव्यप्रकृतिं सन्दिश्य दत्वा भोगांश्च राज्याङ्गानि ममार व्रणपीडितः तत्रापि परोक्षे लिट्॥१४१॥ ज म०

ददावित्यादि। सवाली भ्रात्रे सुग्रीवाय दयितां स्वप्रियां हिरण्मयीं स्वर्णमयीं स्वर्णघटितां मालाञ्च दद्दौ अग्र्यां श्रेष्ठा मित्युभयविशेषणं हिरण्यस्य विकारोहिरण्मयइति निपातनात् भ०

मयट् यलोपश्च ततो राज्यं भोगांश्च सन्दिश्य दत्वा व्रणपीडितः सन् ममार मृतः ॥ १४१ ॥

तस्य निर्व्वर्त्त्य कर्त्तव्यं सुग्रीवो राघवाज्ञया। किष्कि-
न्ध्याद्रिगुहां गन्तुं मनः प्रणिदधे द्रुतं ॥ १४२ ॥

ज०म० तस्येत्यादि। तस्य मृतस्य कर्त्तव्यं पिण्डोदकादिकरणीयं कृत्वा सुग्रीवो राघवाज्ञया गच्छ वर्षासमयमतीत्य शरद्यागमिष्यसीति आज्ञया किष्किन्ध्याद्रिगुहां गन्तुं मनः प्रणिदधे कृतवान् अत्रापि परोक्षे लिट् ॥ १४२ ॥

भ० तस्येत्यादि। तस्य मृतस्य वालिनः कर्त्तव्यं कर्त्तुमुचितं पिण्डोदकदानादि निर्व्वर्त्त्य अङ्गदद्वारा स्वयञ्च यथायोग्यं निष्पाद्य राघवस्याज्ञया किष्किन्ध्यानाम्नीमद्रिगुहां द्रुतं शीघ्रं गन्तुं मनः प्रणिदधे चकार धाञ्ठो घाम्नश्चाणइति णत्वं किष्किन्ध्याद्रिगुहेति मुसेरुपर्व्वतादिवत् एकार्थत्वे कर्म्मधारयः ॥ १४२ ॥

नामग्राहं कपिभिरशनैः स्तूयमानः समन्तादन्व-
गस्थावं रघुवृषभयोर्व्वानरेन्द्रो विराजन्। अभ्यर्णेऽम्भः-
पतनसमये पर्णलीभूतसानुं किष्किन्ध्याद्रिं न्यविशत
मधुच्चीवगुञ्जद्द्विरेफं ॥ १४३ ॥

इति भट्टिकाव्ये वालिवधो नामाधिकारकाण्डे षष्ठः सर्गः।

नामेत्यादि। वानरेन्द्रः सुग्रीवः किष्किन्ध्याद्रिं न्यविशत निवि ज०म
ष्टवान् नेर्विंशइति तङ् अशनैः मुहु कपिभिस्तूयमानः वर्त्तमाने
शट् तस्य कर्म्मणि विहितत्वात् लक्षणहेत्वोःक्रिययाइति शानच्
नामग्राहं नाम गृहीत्वा नाम्न्यादिशिग्रहोरिति णमुल् समन्तात्
र्व्वतः विराजन् शोभमानः अत्र परस्मैपदसंज्ञकः शद्धः किं कृत्वा
रघुवृषभयोरनुगभावं अनुकूलीभूत्वा अव्यक् पूर्व्वाद्भुवतेरन्यथा
नुलोम्यइति णमुल् तदनुकूल्यवर्त्तित्वाद्विराजन् कदा न्यविशत
अभ्यर्णे निकटे अम्भःपतनसमये प्रावृषीत्यर्थः पर्णलीभूतसानुं
पर्णानि सन्ति येषामिति सिध्मादिपाठाल्लच् तदन्तादभूततद्भा
वे च्विः पर्णलीभूताः सानवएकदेशायस्याद्रेः मधुक्षीवामधुमत्ता
गुञ्जन्तोद्विरेफायत्र क्षीवइत्यत्रानुपसर्गात्फुल्लक्षीवकृशोल्लाघा
इति निपातितः क्षीवमदइत्यस्मात् क्तप्रत्ययस्य लोपः इडभाव
स्य निपात्यते गुञ्जेर्लट् क्वचित्प्रथमासमानाधिकरणेऽपि शतृप्र
त्ययः। इति शापपदकृतः॥ १४२॥

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे प्रथमः
परिच्छेदः। रामस्य सुग्रीवाभिषेकोनाम षष्ठः सर्गः॥

नामेत्यादि। वानरेन्द्रः सुग्रीवः किष्किन्ध्यया गुहाविशेषेणो भ०
पलक्षितमद्रिं न्यविशत प्रविष्टवान् नेर्विशप्रवेशे विपराजीति सं
कीदृशः अशनैरचैः समन्तात् सर्व्वतोनामग्राहं नाम गृहीत्वा
कपिभिः स्तूयमानः कर्म्मणि शानः इतनोरिति यकि घोऽज्यऽरे
रघुवृषभयोरामलक्ष्मणयोः अन्वग्भावं अनुकूलोभूत्वा विराज
मानः उत्तरपदे वृषभादिशब्दः श्रेष्ठवाचकः स्वभावात् राम

कार्य्यं त्यक्त्वा कुतोगृहं गतइत्याह अम्भःपतनसमये वर्षाकाले अभ्यर्णे समीपवर्त्तिनि सति तदा प्रयाणाभावित्वात् तयोरात्मी या गृहं गतइत्यर्थः अभ्यर्णइति अर्द्दः क्तःकास्य समीपार्थे क्षुब्धस्वा न्तेत्यादिना निपातः कीदृशमर्द्दिं पल्वलीभूताः सामवणकर्द्दमाय स्य यादृशं वेशन्तः पल्वलम्झाल्पसरइत्यमरः च्विः कर्भ्वस्तिति च्विः अकारस्य ईत्वञ्च सधुना लीनामत्ता गुञ्जन्तोद्विरेफाभ्रमरा यत्र घोलङ्ङ्दर्पे इत्यस्य क्तान्तस्य घोरः पूर्व्वेण निपातितः साम याहमिति कर्म्मरूपं नाम सादिभ्यियाहिभ्यां नण्णिति परः त्वम तेऽभिधानात् किम्वा नामगाहोगहणं यत्रेति स्तुतिक्रियाविशे षणं अव्ययभावमिति आनुकूल्येऽव्ययाभुवस्वणमिति परः त्वमते ऽत्राप्यभिधानात् यदा रघुद्भवविषये अनुगताभावोयत्रेति दीप्तिक्रियाविशेषणं एतेन विनयित्वं दर्शितं। इति सोपपदकृद धिकारः॥ १४३ ॥

भ० इति महामहोपाध्यायहरिहरस्वानवंशसम्भवगौरगाङ्गमल्लिकात्मजश्रीभ रतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायामधिकारकाण्डे प्रथमपरिच्छेदः। काव्यस्य षष्ठः सर्गः॥

ततः कर्त्ता वनाकम्पं ववौ वर्षाप्रभञ्जनः। नभः पूरयितारश्च समुन्नेमुः पयोधराः॥ १ ॥

ज०म० इतस्ताच्छीलिकं कृतमधिकृत्योच्यते ताच्छीलिकइत्युपलक्षणं तद्धर्म्मतत्साधुकारिष्वपि द्रष्टव्यं यतस्ताच्छीलतद्धर्म्मतत्साधु कारिष्विति तत्राधिक्रियते। ततइत्यादि. ततः प्रवेशानन्तरं

वर्षाप्रभञ्जनः प्राद्ववातेऽववौ वाति स्म वागतिगन्धनयोरिति कर्त्ता वनाकम्पं साधु कुर्व्वन् इन्निति इन् नलोकेति षष्ठीप्रतिषेधः पयोधरा मेघाश्च समुन्नेमुः समुन्नताः कीदृशा नभःपूरयितारः इन्॥१॥

अथ ताच्छीलिकाः कृत उच्यन्ते। ताच्छीलिकाइत्युपलक्षणं पर भं॰ मते तच्छीलतद्धर्म्मतत्साधुकारिष्वर्थेषु इनादिदर्शनात् स्वमते यद्यपि इनादीण्वादिविधायकसूत्रेषु तच्छीलाद्यर्थोनोक्तस्तथापि ठघेंकृतीत्यादौ शीलार्थइन्भव्यर्णार्थणिनोति ज्ञापकात् इनिण्वादयः कतिचित्प्रत्यया अभिधानात् शीलाद्यर्थेष्वपि भवन्तीति वोध्यं उक्तं हि कृत्तद्धितसमासानामभिधानं नियामकमिति शीलाद्यर्थाकथनेऽपि नाधिका क्षतिः प्रकृतार्थस्य तद्बोधकत्वात् तथा हि ततः कर्त्ता वनाकम्पमित्यादौ वनस्य ईषत्कम्पकारित्वेनैव वायोः साधुत्वं गम्यते एवमन्यत्रापि। ततइत्यादि ततोऽनन्तरं वर्षाकालसम्बन्धी प्रभञ्जनोवायुर्ववौ वहति स्म वाग्लगमनहिंसयोः णवातोऽडौ कीदृशः वनानामीषत्कम्पनं कर्त्ता साधु कुर्व्वन् एतेन मान्द्यं सौगन्ध्यञ्च परमते साधुकारिणि इन् स्वमते ईषत्कम्पकारित्वेनैव साधुत्वं गम्यते इषर्कोघे इति इन् ठघेकृतीत्यादौ शीलार्थइन्निति शीलार्थइत्युपलक्षणं तेन तत्साधुकार्य्यस्यापि ग्रहणं शीलार्थइन्नित्यत्र शीलाद्यर्थइन्निति पाठं केचिद्वदन्ति किम्वा शीलार्थे इन् वनानामीषत्कम्पकरणशीलइत्यर्थः अतएव कर्म्मणि न षष्ठी वर्षासु वायोरतिप्रयत्नंवर्णनीयमिति सम्प्रदायानुरोधात् वनानामाकम्पं कर्त्तेति केचित् पयोधरा

अत्र तु गोशब्दादिवद्रूढिरेव यद्वा तडित्वन्तो मेघाः पयो मुमुचुः कीदृशाः घना निविडाः ॥ ३ ॥

तान् विलोक्यासहिष्णुः सन् विललापोन्मदिष्णुवत्।
वसन् माल्यवति ग्लास्नुरमोजिष्णुरधृष्णुवत् ॥ ४ ॥

ज०म० तानित्यादि। तान् घनान्विलोक्य असहिष्णुरसहनशीलो रामः माल्यवति पर्व्वते वसन्विललाप उन्मदिष्णुवत् उन्मादनशीलः उन्मत्तमत्तवत् पूर्व्ववदिष्णुच् ग्लास्नुः ग्लानशीलः जिष्णुर्जयशीलः अधृष्णुवदप्रगल्भइव शोकाभिभूतत्वात् ग्लाजिस्थश्वष्णुः धृषेर्गिति चसिगृधीत्यादिना क्नुः ॥ ४ ॥

भ० तानित्यादि। तान् घनान् विलोक्य असहिष्णुः सन् अक्षमाशीलोभवन् रामो माल्यवति पर्व्वते वसन् उन्मदिष्णुवदुन्मत्तवत् विललाप विलापं कृतवान् सन् पण्डितोऽपि उन्मदिष्णुरिव विललापेति वा योजना जिष्णुर्ज्जयशीलोऽपि अधृष्णुवत् अप्रगल्भइव ग्लास्नुः ग्लानिशीलः सहोन्मदिभ्यां पूर्व्वेण इष्णुः ग्लाजास्थेत्यादिना ग्लायतेः स्नुः ष्णुक्भूर्जेरिति जयतेः ष्णुक् त्रिपचसगृधेत्यादिना धृषः क्नुः ॥ ४ ॥

भ्रमी कदम्बसंभिन्नः पवनः शमिनामपि। क्लमित्वं कुरुतेऽत्यर्थं मेघशीकरशीतलः ॥ ५ ॥

किं तद्विलपनमित्याह भ्रमीत्यादि। भ्रमी भ्रमणशीलः कदम्ब सम्भिन्नः कदम्बगन्धसंश्लिष्टः शमिनामपि शमनशीलानामपि क्लमित्वं कुरुते अत्यर्थं ग्लानिं कुरुते शमित्यष्टाभ्योघिनुण् नोदात्तोपदेशेत्यादिना उपधावृद्धिप्रतिषेधः॥ ५॥ ज०म

भ्रमीत्यादि। इतःप्रभृति एवं विललापेति पूर्व्वेण सम्बन्धः पवनः शमिनां शान्तिशीलानामपि क्लमित्वं मनसोग्लानिशीलत्वं कामहेतुकमित्यर्थात् अत्यर्थं अतिशयितं कुरुते कीदृशः भ्रमी भ्रमणशीलः मन्दत्वात् कदम्बपुष्पेण सम्भिन्नः सुरभीकृत इत्यर्थः मेघस्य शीकरैः शीतलः शीकरोऽम्बुकणाः स्मृतादित्यमरः भ्रम्यचालं शमुभ्यदूर्षमे क्लमुभिर्ग्लानौ एभ्योयन्नादित्वात् घिनुण् जनवधःसेमइति ह्रस्वः॥ ५॥ भ०

संज्वारिणेव मनसा ध्वान्तमायासिना मया। द्रोहि खद्योतसम्पर्कि नयनामोषि दुःसहं॥ ६॥

संज्वेत्यादि। मयैतत् ध्वान्तं तमो दुःसहं दुःखेन सह्यतइति मनसा करणभूतेन कीदृशेन संज्वारिणेव रोगशीलेनेव आयासिना आयासशीलेन मयेति द्रोहि अपकारशीलं ध्वान्तं खद्योतसम्पर्कि ज्योतिरिङ्गणसंसर्गशीलं नयनामोषि चक्षुर्मोषणशीलं संपृचानुरुधेत्यादिना सर्व्वे घिनुणन्ता.॥ ६॥ ज०म०

संज्वेत्यादि। मया मनसा करणेन ध्वान्तं तमोदुःसहं दुःखेन सह्यते संज्वारिणेव रोगशीलेनेव आयासशीलेन ध्वान्तं कुतोदुःसहं इत्याह द्रोहि अपकारशीलं खद्योतसम्पर्कि ज्योतिरिङ्गणसं भ०

सर्गशीलं मयमाप्नोषि भेत्तापहारकं अर्थसंगेगेदर्थमनुयतने अद् अजिघांसे पृच्धीवसंपर्के मुषलुटने एभ्योपहादिभ्यात् णिन् पृषः कङ् निपातात् एभ्योघञन्तेभ्योऽस्त्यर्थे इन् वा ॥ ६ ॥

कुर्व्वन्ति परिसारिण्योविद्युतः परिदेविनं। अभ्याघातिभिरामिश्रास्तातकैः परिराटिभिः ॥ ७ ॥

ज०म० कुर्व्वन्तीत्यादि। एताविद्युतः परिदेविनं परिदेवनशीलं कुर्व्वन्ति मामित्यर्थात् काद्दृश्यः परिसारिण्यः परिसरणशीलाः चातकैः पक्षिविशेषैः परिराटिभिः परिरटनशीलैः एवञ्चाभ्याघातिभिः अभिहननशीलैः दुःखोत्पादनात् आमिश्रा युक्ताः विद्युतः पूर्व्ववत् णिन् ॥ ७ ॥

भ० कुर्व्वेत्यादि। विद्युतोऽर्थान्मां परिदेविनं विलापशीलं कुर्व्वन्ति परिसारिण्यः परिसरणशीलाः दुःखोत्पादकतया अभिहननशीलैः परितोरटनशीलैश्चातकैः पक्षिविशेषैर्युक्ताः सृगतौ देवृङ्देवने हनलोगतौ वधे रटवाचि एभ्यो ग्रहादित्वाण्णिन् विपूर्व्वात् द्योततेः क्विप् विद्युत् ॥ ७ ॥

ज०म० संसर्गी परिदाहीव शीतोऽप्याभाति शीकरः। सोढुमाक्रीडिनोऽशक्याः शिखिनः परिवादिनः ॥ ८ ॥

संसर्गीत्यादि। संसर्गी संसर्जनशीलः शीतोऽपि शीकरोविन्दुः परिदाहीव परिदहनशीलइवाभाति शिखिनश्च मयूराः सोढुम

शक्याः आक्रोशिनोमर्मनशीलाः परिवादिनः परिवदनशीला इव इवशब्दश्चात्र लुप्तोद्रष्टव्यः पूर्व्ववद्विनुण्॥ ८॥

संसेत्यादि। शीकरः शीतोऽपि संसर्गसाधुकारी अपि सन् परिदहनशीलइव आभाति शिखिनोमयूराः सोढुमशक्याः कीदृशाः आक्रोशनशीलाः परि सर्व्वतोवदनशीलाः साधुभाषिणोवा रञ्जोऽपधकानामग्निनाविति ज्ञापकात् क्वचित् ग्निन् प्रत्ययोऽप्यस्तीति प्राप्तं तेन सूत्रेग्निनि चजोःकगाविति गत्व घञन्तादस्त्यर्थेइन् वा दहिक्रोशवदिभ्योग्रहादित्वात् णिन्॥ ८॥ भ०

एतादैवानुरोधिन्योद्वेषिण्यइव रागिणं। पीडयन्ति जनं धाराः पतन्त्योऽनपकारिणं॥ ९॥

एतादत्यादि। एताधाराः पतन्त्योद्वेषिण्यइव द्वेषणशीलाइव जनं रागिणं रागशीलं अनपकारिणमनपराधशीलं पीडयन्ति दैवानुरोधिन्यः भाग्यानुरोधात् प्रवर्त्तनशीलाः पूर्व्ववत् घिनुण् घिनुणि च रञ्जेरुपसंख्यानमित्यनुनासिकलोपः इतानुनासिकनिर्द्देशाद्वा लोपनिपातनं॥ ९॥ अ०भ०

एतादत्यादि। एताः पतन्त्योधाराः द्वेषशीलाइव अनपकारशीलमपि जनं पीडयन्ति दैवानुरोधात् प्रवर्त्तनशीलाः रुधद्विषहभ्योग्रहादित्वात् णिन् रञ्जेः संसर्गिवत् ग्निनि रञ्जोऽपधकेति नलोपः घञन्तनिष्पादितरागशब्दात् इन् वा॥ ९॥ भ०

कुर्य्याद्योगिनमप्येष स्फूर्जावान् परिमोहिनं। त्यागिनं सुखदुःखस्य परिक्षेप्यभसाम्प्रतुः॥ १०॥

ज°म° कुर्य्यादित्यादि। एष चतुरश्रमां अलानां परिक्षेपी परित्य जनशीलः कर्म्मणि षष्ठी योगिनमपि योगशीलमपि सुखदुःखस्य त्यागिनं त्यागशीलं कर्म्मणि षष्ठी परिमोहिनं परिमोहनशीलं कुर्य्यात् कीदृशः स्फूर्जावान् वज्रनिर्घोषयुक्तः पर्ज्जन्यः॥१०॥

भ° कुर्य्यादित्यादि। एषोऽश्रमां परिक्षेपी परित्यागशीलश्च तुर्य्योगिनं शास्त्रविधिना योगे साधुकारिणमपि सुखदुःखस्य त्यागशीलमपि परि सर्व्वतोमोहशीलं कुर्य्यात् यतः स्फूर्ज्जावान् वज्रनिर्घोषयुक्तः तेन कामस्य भयस्य चोत्पादात् केचित्तु योगिनं कान्तायुक्तं वज्रनिर्घोषेण सुखत्यागिनं कान्तालिङ्गनेन च दुःखत्यागिनमित्याहुः युजेः संसर्गिवत् घिन् यजन्तादिन् वा मुहिचिपिभ्यां दहादित्वात् घिन्॥१०॥

विकत्थी याचते प्रत्तमविश्रम्भी मुहुर्ज्जलं। पर्ज्जन्यश्चातकः पक्षी निकृन्तन्निव मानसं॥११॥

ज°म° विकेत्यादि। चातको मानसं निकृन्तन्निव खण्डयन्निव प्रत्तं प्रदत्तं अचउपसर्गात्तः जलं याचतइति प्रधानं कर्म्म पर्ज्जन्यमित्यकथितं विकत्थी विकत्थनशीलइव पर्ज्जन्योऽपि मह्यं जलं ददाति इवशब्दोलुप्तोऽत्र द्रष्टव्यः अविश्रम्भी अविश्वासशीलः मानसखण्डनात् वाक्यफलमेतति घिनुण्॥११॥

भ° विकेत्यादि। चातकः पक्षिविशेषोमम मानसं निकृन्तन्निव खण्डयन्निव व्योम्नि मुहुः पुनःपुनः प्रदत्तमपि जलं पर्ज्जन्यं मेघं याचते याचिर्द्विकर्म्मकः यतोऽविश्रम्भी अविश्वासशीलः इषाद्या

कुशलत्वात् प्राप्तेऽपि जले जलं याचत इत्यर्थः विकत्थी श्लाघाशीलः कत्थङ् श्लाघे स्रम्भुङ्विश्वासे इत्यादिः आभ्यां शमादित्वात् घिन् प्रपूर्व्वस्य दाञोगयचस्तवेति ताद्देश्यः षृषुर्वके इत्यस्यान्यप्रत्यये चव र्गद्वितीयानिपातश्चौणादिक इत्यर्ज्जुनदत्तः तृतीयपक्षे दि मुषा दित्वात् नुषरधामुषामिति नुण्॥ ११॥

प्रलापिनोभविष्यन्ति कदा न्वेतेऽपलाषिणः। प्रमा थिनोवियुक्तानां हिंसकाः पापदर्दुराः॥ १२।

प्रलापीत्यादि। एते पापदर्दुराः पापाश्च ते दर्दुराश्चेत्या ज॰म॰
क्रोशाभिधानं कदा नु अपलाषिणोभविष्यन्ति अपलषणशीलाः व्यपगतकामा इत्यर्थः लषकान्तौ अपे चलषइति घिनुण् प्रला पिनः प्रलपनशीलाः प्रमाथिनः प्रमथनशीलाःचेतसामित्यर्थात् प्रेलपेत्यादिना घिनुण् अतएव वियुक्तानां मादृशां हिंसकाः हिंस नशीलाः इत्येवं विललाप निंदहिंसेत्यादिना वुञ्॥ १२॥

प्रलेत्यादि। एते पापदर्दुराः पापिनोभेकाः कदा अपलषण भ॰
शीलाः व्यपेतकामाभविष्यन्ति तद्दैव तत्प्रलापनिवृत्त्या दुःखानु त्पत्तिः पापशब्दश्चाक्रोशपूर्व्वककुत्साद्योतनाय प्रयुक्तः प्रलाप करणशीलाः प्रलापोऽनर्थकं वचः वियुक्तानां भार्य्याविरहिणां प्रमाथिनः साधुप्रमथनकारिणः यतोहिंसकाः हिंसाशीलाः लप लषमथिभ्योग्रहादित्वात् घिन् हिंसेः इत्वकौचे इति वकः एवं विललापेति सम्बन्धनीयमेतत्पर्य्यन्तं॥ १२॥

निन्दकोरजनिम्मन्यं दिवसं क्लेशकोनिशां। प्रावृ
ष्यनैषीत् काकुत्स्थः कथञ्चित्परिदेवकः॥१३॥

ज०म० निन्देत्यादि। काकुत्स्थोदिवसं रजनिम्मन्यं रजनिमात्मानं मन्यमानं घनान्धकारित्वात् आत्ममानिन्यं खित्युत्पत्त्यर्थमिति ..... निशाञ्च प्रावृषि कथमपनैषीत् नीतवान् निन्दकः निन्दनशीलः नक्तंदिनस्येत्यर्थात् क्लेशकः क्लेशनशीलः परिदेवकः परिदेवनशीलः आत्मन इत्यर्थात्॥१३॥

भ० निन्देत्यादि। काकुत्स्थः प्रावृषि वर्षाकाले कथञ्चित् कथमपि दिवसं निशाञ्च अनैषीत् गमयामास कीदृशः निन्दकः निन्दाशीलः अर्थादात्मनः दिनरात्र्योर्वा दिवसं निशाञ्च निन्दकइति ये वदन्ति तन्मते वुञ्घकतीत्यादौ शीलार्थत्वमित्यत्र त्वमित्युपलक्षणं शीलार्थे एकस्यापि ग्रहणं तेन न षष्ठी क्लेशकः क्लेशशीलः परिदेवकः साधु देवनकारी सन् दिवसं कीदृशं रजनिम्मन्यं आत्मानं रजनिं रात्रिं मन्यमानं तत्तुल्यमिति यावत् घनान्धकारात् णिन्दिक्लिशिदेविभ्यः वुञ्प्रत्यय इति एकः॥१३॥

अथोपशरदेऽपश्यत् क्रौञ्चानाञ्चेष्टनैः कुलैः।
उत्कण्ठावर्द्धनैः शुभ्रं रवणैरम्बरं ततं॥१४॥

ज०म० अथेत्यादि। अथानन्तरमुपशरदे शरत्समीपइत्यव्ययीभावे शरत्प्रभृतिभ्यइति समासान्तष्टच् तृतीयासप्तम्योर्बहुलमित्यमभावः क्रौञ्चानां कुलैस्ततं व्याप्तमम्बरं शुभ्रं शुक्लमपश्यत् दृष्टवान्

चेष्टनैः व्यापारशीलैः रवणैः शब्दनशीलैः अनयोरकर्मकत्वाच्छब्दार्थत्वात् चलनशब्दार्थादित्यादिना युच् उत्कण्ठावर्द्धनैः उत्कण्ठावर्द्धनशीलैः अनुदात्तेतश्चेति युच् क्रोञ्चा इति क्विन्प्रत्ययान्तत्वात् प्रज्ञादित्वादण्॥ १४॥

अथेत्यादि। अथानन्तरं उपशरदे शरत्कालस्य समीपे भ० काकुत्स्थोऽम्बरमाकाशमपश्यत् कीदृशं क्रौञ्चानां पक्षिविशेषाणां कुलैः समूहैः ततं व्याप्तं अतएव शुभ्रं धवलं कीदृशैश्चेष्टनैः साधुचेष्टां कुर्वद्भिः उत्कण्ठाया भार्य्याविषयिकाया वर्द्धनैः वृद्धिशीलैः साधूत्कण्ठावृद्धिकारिभिर्वा रवणैः साधुशब्दं कुर्वद्भिः चेष्टवृधिरुभ्योऽनन्त्यादित्वादनः वृधिरत्र ण्यन्तः शरदोऽव्ययीभावे शरदिप्रभृतिभ्यश्चेति अः चोत्तरग्रामस्वेति पक्षे समप्रवृत्तिः क्रुङ्‌ेव क्रौञ्चः स्वार्थे अणः॥ १४॥

विलोक्य द्योतनं चन्द्रं लक्ष्मणं शोचनोऽवदत्।
पश्य दंद्रमणान् हंसानरविन्दसमुत्सुकान्॥ १५॥

विलोक्येत्यादि। चन्द्रं विलोक्य द्योतनं साधुद्योतमानं अनुदात्तेतश्चेति युच् शोचनः शोचनशीलः जुचङ्क्रम्येत्यादिना युच् रामो लक्ष्मणमवदत् पश्य हंसान् दन्द्रमणान् भृशं द्रमणशीलान् द्रमेर्नित्यं कौटिल्य एव भवति नतु क्रियासमभिहार इत्युक्तं तदन्ताद्युच् अतोलोपः यस्य हलः अरविन्दसमुत्सुकान् प्रसितेति सप्तमीं विधाय सप्तमीति योगविभागात्सः॥ १५॥

भ० विलोक्येत्यादि। लक्ष्मण विलोक्य रामो लक्ष्मणमब्रवीत् लक्ष्म कीदृशं शीतलं घोरमाम शोचन: शोकशीला राम: किमुक्तवानि त्याह हंसान् त्वं पश्य कीदृशान् इंद्रमणाम् कुटिलगमनशीलान् अरविन्देषु पद्मेषु समुत्सुकान् यतश्चयङ्लुगन्तद्रमिभ्योनन्द्या दित्वादन: विपरीतदिशां देशानां गमनमिह वर्म॥ १५॥

कपिश्चङ्क्रमणोऽद्यापि नासौ भवति गर्द्धन:। कुर्व्वन्ति कोपनं तारा मण्डनं गगणस्य मां॥ १६॥

ज०म० कपिरित्यादि। नासौ कपि: सुग्रीवोऽद्यापि चङ्क्रमण: शनैर्गमनशीलो न भवति यतो गर्द्धनोऽभिलाषशील: स्त्रीष्वित्यर्थात् पूर्व्ववद्युच् ताराश्च मां कोपनं कोपनशीलं तद्विषयएव कुर्व्वन्ति कीदृश्य: गगणस्य मण्डनाभूषणा: कुधमण्डार्थेभ्यश्चेति युच्॥ १६॥

भ० कपिरित्यादि। असौ कपि: सुग्रीवोऽद्यापि कुटिलगतिशीलो न भवति नाना दिक्षु गमनं न करोतीत्यर्थ: यतो गर्द्धन: अभिलाषशील: अर्थाद्भोगेषु तारामां कोपनं कोपशीलं कुर्व्वन्ति तद्विषयइत्यर्थात् कीदृश्य: गगणस्य मण्डनं साधुभूषाकारिण्य: यङ्लुगन्तक्रमेर्गृधुकुपमण्डिभ्यश्च नन्द्यादित्वादन: वेदा: प्रमाणमित्यादिवत्सामान्योपक्रमान्मण्डनस्य क्लीवत्वमेकत्वञ्च किम्वा मामित्यस्य विशेषणं आकाशवासित्वाद्गगणभूषणं मामित्यर्थ: अहमाकाशवासी सोऽद्यापि गृहे तिष्ठतीति कोपहेतु: ॥ १६॥

नावैत्याप्यायितारं किं कमलानि रविं कपिः।
दीपितारं दिनारम्भे निरस्तध्वान्तसञ्चयं ॥१७॥

नावैत्येत्यादि। किमसौ कपिः रविं नावैति नावगच्छति कमला न्याप्यायितारं साधु वर्द्धयन्तं अनुदात्तेतश्चेति प्राप्ते नयइति प्रतिषिद्धे हन्नेव भवति ततश्च नलोकेति षष्ठीप्रतिषेधः दिनारम्भे दीपितारं साधु दीप्यमानं पूर्व्ववप्युचि प्राप्ते स्वददीपदीक्षेति प्रतिषेधः निरस्तध्वान्तसञ्चयं अपनीतान्धकारसंहतिकं किमसौ अरत्नमयं नावैतीत्यर्थः ॥१७॥ ज०म०

नावैत्येत्यादि। किमसौ कपिरीदृशं सूर्य्यं नावैति अरत्का लमागतं किं न जानातीत्यर्थः कीदृशं रविं कमलानि आप्यायितारं पद्मवृद्धिं साधु कुर्व्वन्तं दिनारम्भे दीपितारं साधु दीप्यमानं अपनीतान्धकारसमूहं प्यायिदीपिभ्यां तृचकौषेरति तृन् ढघेक्षतीत्यादौ शीलार्थस्यापलक्षणत्वान्न कर्म्मणि षष्ठी क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्ततइति वा द्वितीया ॥१७॥ भ०

अतीते वर्षुके काले प्रमत्तः स्थायुकोगृहे। गामुकोध्रुवमध्वानं सुग्रीवोवालिना गतं ॥१८॥

अतीत्यादि। वर्षुके वर्षणशीले काले अतीतेऽपि गृहे स्थायुकः स्थितिशीलः शरदि नागतत्वात् प्रमत्तः सन् सुग्रीवोवालिना गतं अध्वानं प्राप्तमार्गं ध्रुवमवश्यं गामुकः साधु गन्ता लषपतेत्युकञ् नलोकेति षष्ठीप्रतिषेधः ॥१८॥ ज०म०

भ॰ अतीत्यादि। असौ सुग्रीवोवालिना गतमध्वानं यममार्गं ध्रुवं निश्चितं गामुकः साधु गमिष्यति यतः वर्षुके वृष्टिशीले काले अतीतेऽपि गृहे स्थायुकः स्थितिशीलः अतएव प्रमत्तः अनवहितः लषपतपदेत्यादिना उकञ् लस्यागामिभ्यः गृहाभूकमेति उकः ढघेत्यादौ उकवर्ज्जं नास्त्र कर्म्मणि षष्ठी॥ १८॥

जल्पाकीभिः सहासीनः स्त्रीभिः प्रजविना त्वया।
गत्वा लक्ष्मण वक्तव्योजयिना निष्ठुरं वचः॥ १९॥

जम॰ जल्पेत्यादि। हे लक्ष्मण त्वया प्रजविना प्रकृष्टगमनशीलेन प्रजोरिनिः जयिना अभिभवनशीलेन जिदृचीत्यादिना इनिः सुग्रीवो निष्ठुरं वचोऽभिधातव्यः जल्पाकीभिः जल्पनशीलाभिः स्त्रीभिः सहासीनः जल्पभिक्षेति षाकन् षित्वात् ङीष् तन्मध्ये हि परुषमभिधीयमानः परिभवं मन्यतइति भावः॥ १९॥

भ॰ जल्पेत्यादि। हे लक्ष्मण त्वया गत्वा सुग्रीवोनिष्ठुरं वचोवक्तव्यः कथनीयः सुग्रीवस्य गौणकर्म्मत्वात् गौणधात्वादयइति तत्रैव प्रत्ययः सुग्रीवः कीदृशः जल्पाकीभिर्जल्पनशीलाभिः साधु जल्पन्तीभिर्वा स्त्रीभिः सह आसीनः उपविष्टः भिक्षजल्पकुट्टेति षाकः षित्वाद्दीप् आसोऽस्येत्यनेन आमः शानस्य आईत्वं त्वया कीदृशेन प्रजविना प्रकृष्टगवता जयिना जययुक्तेन जुजिभ्यामनन्ताभ्यामस्त्यर्थे इन् किम्वा कृत्तद्धितसमासानामभिधानं नियामकमित्युक्तेस्तद्धितण्यादिवत् कृत्प्रत्ययाश्चपि क्वचित् येनाऽनितस्य

भवन्ति तेन यत्नादित्वात् णिनोणकारेत्याविवक्षया वृद्ध्यभावे ण्, घूरुङ्इति गुणः परे तु शीलाचारसाधुषु जुजिप्रभृतितदन् वर्त्तमानइत्याहुः॥१८॥

शीले विश्रयिणं क्षिप्रमनादरिणमभ्यमी। न्याय्यं परिभवी ब्रूहि पापमव्ययिनं कपिं॥२०॥

शीलइत्यादि। कपिं क्षिप्रं गत्वा ब्रूहि इत्यकथितं कर्म्म न्याय्यं वचइति प्रधानं कर्म्म अस्य चातिस्पष्टार्थत्वादिदं तदिति न उन्दिष्टं अनादरिणमनादरशीलं कपिं कालातिक्रमणात् आङ्पूर्व्वोदृङ् अतएव पापं दुराचारं अव्ययिनं निर्भयशीलं नञ्पूर्व्वोव्ययिः शीले विश्रयिणं तत्र स्थितिशीलं विपूर्व्वः श्रयतिः त्वं चाभ्यमी अभिमुखगमनशीलः अभिपूर्व्वोऽमगत्यादिषु परिभवी साधुपरिभवं जनयन् परिपूर्व्वोभवतिः अत्र सर्व्वत्र जिदृक्षीत्यादिना इनिः॥२०॥ जº मº

शीलइत्यादि। त्वं क्षिप्रमभ्यमी शीघ्रमाभिमुख्येन साधु गतः सन् परिभवी साधु परिभवं कुर्व्वन् न्याय्यं न्यायादनपेतं वचस्त्वं कपिं ब्रूहि कीदृशं कपिं शीले विश्रयिणं स्थितिशीलं अनादरिणमपि अनादरशीलं पापं दुराचारं यतोऽव्ययिनं निर्दयशीलं श्विदृक्षमभ्रूव्ययानां प्रजविवत् तथा रूपाणि॥२०॥ भº

स्पृहयालुं कपिं स्त्रीभ्योनिद्रालुमदयालुवत्। श्रद्धालुं भ्रामरं धारुं सद्रुमस्रौ वद द्रुतं॥२१॥

अ°म° स्पृहेत्यादि। स्त्रीभ्यः स्पृहयालुं कपिं साधु स्पृहयन्तं स्पृहिः स्वार्थिकण्यन्तोऽदन्तश्च अयामन्तेत्ययादेशः स्पृहेरीप्सित इति सम्प्रदानसंज्ञा द्रुतं वद शृणु अदयालुवत् अदयनशीलइव निद्रालुं निद्राशीलं अस्मत्कार्य्येष्वनवधानत्वात् शयनीयएव सर्व्वदा स्थितत्वात्स्त्रीभिः सह श्रद्धालुं साध्वभिलषन्तं भ्रामरं भ्रमरैः कृतं चुद्राभ्रमरेत्यादिना अञ् मध्वित्यर्थात् नलोकेति षष्ठीप्रतिषेधः स्पृहिगृहीत्यादिना आलुच् श्रद्धालुत्वादेव धारं साधु पिबन्तं भ्रामरमेव सद्रु साधु सीदन्तं दाधेट्सिशदसदोरुः ॥ २१ ॥

भ° स्पृहेत्यादि। द्रुतं शीघ्रं त्वं कपिं वद विषादे पौनरुक्त्यं न दोषाय अतिशयार्थत्वात् कीदृशं स्त्रीभ्यः स्पृहयालुं स्पृहाशीलं साधु स्पृहयन्तं वा यस्मादित्येत्यादिना संप्रदानत्वं अदयावन्तमिव निद्रावन्तं भ्रमरैः कृतं भ्रामरं मधु ढधेकादिति ष्णः तत् धारं साधु पिबन्तं तथापि तत्र श्रद्धालुं अभिलाषवन्तं एतेन पानासक्त तया प्रमत्तत्वं दर्शितं अद्रौ किष्किन्धापर्व्वते सद्रुं साधु सीदन्तं तिष्ठन्तमित्यर्थः एवं रामोलक्ष्मणमब्रवीदिति पूर्व्वेणान्वयः स्पृह त्केसे पतिगृहिस्पृहीति आलुः निद्रादयाश्रद्धाशब्देभ्योगोत्वण मेधेत्यादिना निद्रादित्वादस्त्यर्थे आलुः निपूर्व्वद्रादयश्रत्पूर्व्व धाञ् इत्येतेभ्यः स्पृहयालुवदालुरिति परे धेट्सदिभ्यां शतषत् सिधेदोरुरिति रुः ॥ २१ ॥

स्मरोऽभङ्गुरप्रज्ञोगृहीत्वा भासुरं धनुः। विदुरो जित्वरः प्राप लक्ष्मणोगत्वरान् कपीन् ॥ २२ ॥

हृमेत्यादि। लक्ष्मणः कपीन् प्राप कीदृशः सृमरः साधुगन्ता ज०म
सृघस्यदः क्मरप् भङ्गुरा ये स्वयमेव भज्यन्ते भञ्जभासेति घुरच्
तान् प्रजानातीति भङ्गुरप्रज्ञस्तान् कः विदुरः साधु वेत्ती विदि
भिदिच्छिदेः कुरच् जित्वरः साधु जयशीलः इणनशजीत्यादिना
क्वरप् गृहीत्वा धनुर्भासुरं भाषनशीलं गत्वरान् गमनशीलान्
कपीन् अस्थिरप्रकृतीनित्यर्थः गत्वरश्चेति निपातितं गमेः क्वर
पनुनासिकलोपः॥ २२॥

हृमेत्यादि। लक्ष्मणोभासुरं दीप्तिशीलं धनुर्गृहीत्वा गत्व भ०
रान् अस्थिरप्रकृतीन् तद्भयात् पलायमानान् वा कपीन् प्राप
कीदृशः सृमरः साधु सरति गच्छतीति घसस्यदः क्मरः भङ्गुरान्
स्वयमेव भञ्जनशीलान् अर्थात् कपीन् प्रजानातीति इगुपधज्ञाप्रीति
कः यद्वा नञः प्रश्लेषात् अभङ्गुरा स्थिरा प्रज्ञा बुद्धिर्यस्य स तथा
साधु वेत्तीति विदुरः जित्वरोजयशीलः भञ्जिभासिभ्यां मिद्भा
भभञ्जइति घुरः इत्वोःकभावइत्युक्तेः कर्त्तरि विहितोऽपि घुरो
भञ्जेः कर्म्मकर्त्तरि बोध्यः भज्यते स्वयमेवेति भङ्गुरः चजोःकगा
विति गत्वं वेत्तेश्छिद्भिदिद्रूति कुरः जिगमिभ्यां क्वरप्ह्रजी
नित्यादिना क्वरप् मस्य तस्य स्वस्तन्पिति॥ २२॥

तं जागरूकः कार्य्येषु दन्दशूकरिपुं कपिः। अकम्प्रं
मारुतिर्दीप्रं नम्रः प्रावेशयद्गुहां॥ २३॥

तञ्चेत्यादि। तं लक्ष्मणं कपिर्मारुतिः गुहां प्रावेशयत् विशे ज०म०
र्हेतुमण्ण्यन्तात् लङि रूपं कार्य्येषु कृत्येषु जागरूकः सावधानः

आगरूकइति आगर्त्तेरूकः इन्द्रयूकरिपुं हिंसारिं यजजपेत्यादिना दंशेर्यङन्तादूकः लुपसदेत्यादिना यङ् दीप्रं साधु दीप्यमानं अकम्प्रं अकम्पनशीलं अभीहमित्यर्थः नम्रः साधु प्रह्वीभूतः सर्व्वत्र नमिकम्पीत्यादिना रः ॥ २३ ॥

म० तंजेत्यादि। कपिर्म्मारुतिर्हनूमान् तं लक्ष्मणं गुहां किष्किन्ध्यां प्रवेशयामास प्रवेशोऽपि गतिभेदः तेन घोत्रोर्ञ्जिः प्रब्दाममगतीत्यादिना प्रयोज्यकर्त्तुः कर्म्मत्वं गुहेति भिदादित्वात् भीषिचिन्तीत्यादिना ङः स्त्रीत्वञ्च कीदृशोमारुतिः कार्य्येषु जागरूकः साधु सावधानः नम्रः साधु प्रह्वीभूतः तं कीदृशं दन्दशूकानां हिंस्राणां रिपुं अकम्प्रं अकम्पनशीलं निर्भयमित्यर्थः दीप्रं दीप्तिशीलं जागृयङन्तदन्शिभ्यां जागृयङन्तयजेत्यादिना ऊकः दन्शेर्नलोपो वेति यङ्लुकि नस्य लोपः ञमजपेत्यादिना खेर्नुगम् कम्पिदीपिभ्यां हिंसदीपेत्यादिना रः ॥ २३ ॥

कम्राभिरावृतः स्त्रीभिराशंसुः क्षेममात्मनः। इच्छुः प्रसादं प्रणमन् सुग्रीवं प्रावदन्नृपं ॥ २४ ॥

ज०म० कम्रेत्यादि। सुग्रीवः प्रावदन्नृपं लक्ष्मणं स्त्रीभिरावृतः परिवृतः सन् प्रणमन् ताभिः सहेत्यर्थः कम्राभिः कमनशीलाभिः पूर्व्ववद्रः आत्मनः क्षेमं कल्याणमाशंसुः प्रार्थयमानः सनाशंसभिक्षउः नलोकेति षष्ठीप्रतिषेधः इच्छुः प्रसादं प्रसादमिषणशीलः अपि मे स्वामी प्रसन्नः स्यादिति विन्दुरिच्छुरिति निपातनं ॥ २४ ॥

कथेत्यादि। सुग्रीवो नृपं लक्ष्मणं प्रावदत् कथाभिः कामुकीभिः स्त्रीभिः परिवृतः सन् प्रणमन् अर्थात् ताभिः सह पूर्व्वं वत् रः आत्मनः चेमं कुशलं आशंसुः इच्छुः सन्भिक्षाशंसंउः अतएव तस्य प्रसादं इच्छुः साधु इच्छन् विन्दिच्छू इति निपातः इच्छतीत्यादौ उदन्तवर्ज्जनात् न षष्ठी ॥ २४ ॥ भ॰

अहं स्वप्नक् प्रसादेन तव वन्दारुभिः सह। अभीरुरवसं स्त्रीभिर्भासुराभिरिहेश्वर ॥ २५ ॥

अहमित्यादि। अहं तव प्रसादेन इह गुहायामवसं उषितवान् स्वप्नक् निद्रालुः चिन्ताभावात् स्वपितृषोर्नजिङ् वन्दारुभिर्व्वन्दनशीलाभिः सह शृवन्द्योरारुः अभीरुः अभयशील: भियः क्रुक्लुकनौ भास्वराभिः भासनशीलाभिः ईश्वरः ईशनशीलः स्थेशभासेति वरच् ॥ २५ ॥ ज॰म

अहमित्यादि। किमुक्तवानित्याह हे ईश्वर तव प्रसादेनाहं स्त्रीभिः सह इह गुहायां अवसं उषितवानस्मि अहं कीदृशः स्वप्नक् साधु स्वपन् स्वपतृषधृषोर्नजिङिति नजिङ् अभीरुर्भयहीनः क्रुक्लुकौ भियइति क्रुः कीदृशीभिः स्त्रीभिः वन्दारुभिः प्रणामशीलाभिः साधु स्तुतिं कुर्व्वाणाभिर्व्वा शृवन्द्योरारुः भास्वराभिः दीप्तिशीलाभिः साधु दीप्यमानाभिर्व्वा भासीशिभ्यां याथायभास्वसेत्यादिना वरः ॥ २५ ॥ भ॰

विद्युन्नाशं रवेर्भासं विभ्राजं शशलाञ्छनं। रामप्रत्तेषु भोगेषु नाहमज्ञासिषं रतः ॥ २६ ॥

ज०भ० विद्युदित्यादि। रामप्रक्तेषु रामद्रक्तेषु भोगेषु रतः सक्तः नाहमस्मायिषं नाहं ज्ञातवान् लुङि स्मयमरमेत्यादिना सगिटौ विद्युतां द्योतनशीलाविद्युतः तासां नाशं रवेर्भासः भासनशीलाद्दीप्तीर्व्विभ्राजं साधु दीप्यमानं शशलाञ्छनं चन्द्रं प्रावृडतिक्रान्ता शरद्रायातेति नाज्ञासिषमित्यर्थः सर्व्वत्र भ्राजभासेति क्विप् ॥ २६ ॥

विद्युदित्यादि। अहं रामेण प्रक्तेषु भोगेषु रतः आसक्तः सन् विद्युतां नाशं सूर्य्यस्य दीप्तिं साधु दीप्यमानं चन्द्रञ्च नाज्ञासिषं न ज्ञातवानस्मि शरदागमनं न ज्ञातवान् गृहे तिष्ठामीति भावः यमरमेति इमसनौ विभ्राजतइति क्विप् ॥ २६ ॥

एषोऽकच्छिदोवीरान् प्रभो संप्रति वानरान्।
धरासमुद्रशैलानामन्तगान् प्रहिणोम्यहं ॥ २७ ॥

इति वाक्कीलिकाः समाप्ताः ॥

ज०म० एषइत्यादि। हे प्रभो एषोऽहं संप्रति वानरान्प्रहिणोमि प्रस्थापयामि कीदृशान् शोकच्छिदः शोकापनोदनशीलान् अन्येभ्योऽपि दृश्यतइति क्विप् वीरान् शूरान् धराशैलसमुद्राणां अन्तं गच्छन्ति ये तानन्तगान अन्तात्यन्तेति डः धरा पृथ्वी धरासमुद्रशैलानामिति पाठान्तरं अत्र बह्वच्चनियमइति पूर्व्वनिपातः यथा वीणाशंखदुन्दुभयः। इति वाक्कीलिककृतः ॥ २७ ॥

भ० एषइत्यादि। हे प्रभो एषोऽहं संप्रति वानरान् प्रहिणोमि

प्रेरयामि सैन्यागमनायेत्यर्थः कीदृशान् शोकच्छिदः शोकापनो दनशीलान् त्वासुखिति किंभूतान् वीरान् समर्थान् अतएव पृथिवीस मुद्रपर्व्वतानामप्यन्तगान् अन्तं गच्छन्तीति अन्यत्रापि दृश्यते इति डः प्रभवतीति प्रभुः स्वयंभ्वविसंप्रादिति डुः प्राग्वद्गोणोन्तरदुर्मौरि त्यादिना नुविकरणस्य णत्वं इत्येवं सुग्रीवः प्रावदत्नृपमिति पूर्व्वेण सम्बन्धः। इति ताच्छीलिकाउक्ताः॥२७॥

राघवस्य ततः कार्य्यं कारुर्व्वानरपुङ्गवः। सर्व्ववा नरसेनानामाश्वागमनमादिशत्॥२८॥

इतोविशेषाधिकाराभावात् निर्व्विशेषकृतोदर्शयन्नाह। राघे ज०म० त्यादि। ततोऽभिधानानन्तरं वानरपुङ्गवः सुग्रीवः सर्व्ववानरसे नानामाशु शीघ्रमागमनमादिशत् आदिष्टवान् पुमांश्चासौ गौ श्चेति गोरतद्धितलुकीति समासान्तष्टच् व्युत्पत्तिमात्रमेतत् पुङ्ग वशब्दस्तु प्रधानमाचष्टे कारुः करोतीति उणादयो बहुलमिति औणादिकः कृपावाजीत्यादिना उण् एवमाशुकस्य कर्त्तेत्याह राघवस्य कार्य्यं॥२८॥

संप्रति निर्व्विशेषाः कृतउच्यन्ते राघवेत्यादि। तत्कथा भ० नन्तरं वानरश्रेष्ठः सुग्रीवः सर्व्वासां वानरसेनानां आशु शीघ्रं आगमनं आदिशत् आज्ञापयामास नाचरन्येतिकेति गमेर्डोः पुमांश्चासौ गौश्चेति गोरतार्थे इति षः व्युत्पत्तिमात्रमिदं पुङ्ग वशब्दस्तूत्तरपदं प्रधानार्थः कीदृशः राघवस्य कार्य्यं कारुः

कर्त्ता अभिधानात् नावन्न्येति कस्यचित् कथित आयामपि प्रवृत्तिरिति तेन उण् रधिगमताबित्यस्मात् पूर्व्वेण उक् मज्ञा निर्दिष्टस्यानित्यत्वात् नेदित्पूजार्थायोरित्यस्याप्रवृत्तेर्नसुङ्नलोपः तस्यापत्यमिति ष्यः अपूरूक्वयाप्तौ उण् प्राप्तु ॥ २८ ॥

वयमद्यैव गच्छामो रामं द्रष्टुं त्वरान्विताः। कारकास्त्रिकार्य्याणि सीतालाभाय सोऽब्रवीत् ॥ २९ ॥

ज॰म॰ वयमित्यादि। आगमनमादिश्य सुग्रीवोऽब्रवीत् उक्तवान् वयमद्यैव गच्छामइति रामं द्रष्टुं रामं द्रक्ष्यामइति त्वरान्विताः त्वरितादृत्यर्थः कीदृशावयं सीतालाभाय सीतां प्राप्स्यामइति कारकामित्रकार्य्याणि रावणबधादेः कार्य्यस्य कर्त्तारो भविष्यामइति गच्छामइति क्रियायां क्रियार्थायामुपपदे तुमुन्ण्वुलौ भविष्यति काले स्यातां मित्रकार्य्याणीति अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीप्रतिषेधे द्वितीयैव स्यात् सीतालाभायेति भाववचनाचेति क्रियायां क्रियार्थायामुपपदे भविष्यति घञ् तुमर्थाच्च भाववचनादिति चतुर्थी ॥ २९ ॥

॰भ वयमित्यादि। आगमनमादिश्य ससुग्रीवइदमब्रवीत् आदिष्टवान् कपीनित्यर्थः त किमुक्तवानित्याह वयमद्यैव रामं द्रष्टुं गच्छामः अद्यैवत्यनेन तानरानयनमद्यैव कार्य्यमिति त्वरा सूचिता वक्तव्यं मेनामाहित्यात सीतालाभाय त्वरायुक्ताः तादर्थ्ये चतुर्थी मित्रस्य रामस्य कार्य्याणि रावणवधादीनि कारकाः

कर्त्तार: कश्चिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्ततइति षष्ठीविषये द्वितीया ॥ २९ ॥

ततः कपीनां संघाताहर्षाद्राघवभूतये। पूरयन्तः समाजग्मुर्भयदाया दिशो दश ॥ ३० ॥

जं०म० ततइत्यादि। आदेशादनन्तरं कपीनां संघाता: समाजग्मु: हर्षात् हर्षेण आदेशादानमेव हर्षहेतु: राघवभूतये अपि नाम राघवस्य संपत्स्यादिति समाजग्मुरित्यस्यां क्रियायां क्रियार्थाया मुपपदे भाववचनाच्चेति भविष्यति क्तिन् चतुर्थीदर्थ पूर्ववत् पूरयन्तोव्याप्नुवन्त: दश दिश: भयदाया: भयं दास्यामइत्यस्यां क्रियायामुपपदे अण्कर्मणिचेत्यण् आतोयुक् ॥ ३० ॥

भ० ततइत्यादि। ततआदेशात् कपीनां संघाता: समूहा दश दिश: पूरयन्तो व्याप्नुवन्तो राघवस्य भूतये सम्पत्त्यर्थं हर्षादाजग्मु: किष्किन्धायामित्यर्थात् भयदाया: शत्रुभ्योभयं ददातीति मित्राणां भयंघ्नन्ति खण्डयन्तीति वा श्यसव्यधेनतनइति ण: यन ञ्‌इदिति यन् ॥ ३० ॥

सुग्रीवान्तिकमासेदुः साधयिष्यामइत्यरिं। करिष्यन्तइवाकस्माद्भुवनं निर्दशाननं ॥ ३१ ॥

जं०म० सुग्रीत्यादि। अरिं शत्रुं सादयिष्यामोव्यापादयिष्यामइति सुग्रीवान्तिकमासेदु: आगता: लृट्‌शेषेचेति चकारात् क्रियार्थायामुपपदे भविष्यति लृट् आसेदुरिति क्रिया क्रियार्था अकस्मा

इतर्कितं भुवनचयं निर्दशाननं रावणरहितं करिष्यन्त इव तथा विधमहासंरम्भदर्शनादुत्प्रेक्ष्यते लृट्शेषे चेति लृट् अत्र क्रियायाः क्रियार्थायाअन्यः प्रवृत्तोभविष्यत्कालः शेषः ॥ ३१ ॥

भ० सुग्रीवेत्यादि। वयमरिं साधयिष्यामः व्यापादयिष्याम इति एतदर्थं सुग्रीवसान्निकं समीपमासेदुरागताः कपीनां संघाता इत्यनुषज्यते अकस्मादतर्कितं यथा स्यात्तथा भुवनं रावणशून्यं करिष्यन्त इव महापराक्रमदर्शनादुत्प्रेक्षेयं॥ ३१ ॥

कर्त्तास्मि कार्य्यमायातैरेभिरित्यवगम्य सः। का कुत्स्थपादपच्छायां शीतस्पर्शामुपागमत्॥ ३२ ॥

ज०म० कर्त्तेत्यादि। एभिरायातैर्व्वानरैः कार्य्यं सीतान्वेषणादिं कर्त्तास्मि करिष्यामीति अवगम्य अनद्यतने भविष्यति लुट् सुग्रीवः काकुत्स्थपादपच्छायामुपागमत् पद्यन्त इति पादाः पदरुजेति कर्त्तरि घञ् तत्र भविष्यतीति निवृत्तं मादैः पिवतीति पादपो वृक्षः आतोऽनुपसर्गेकः काकुत्स्थः पादप इव समाश्रयणीय त्वात् तस्य छायां शीतस्पर्शां अनुद्वेजनकरीं स्पृश्यत इति स्पर्श स्तन्मात्र उच्यते अकर्त्तरि चेति घञ् ननु पदरुजेत्यादिना तत्र हि स्पृश उपताप इति वक्तव्यमित्युक्तं स्पृशतीति स्पर्श उपतापः ॥ ३२ ॥

भ० कर्त्तेत्यादि। आगतैरेभिर्व्वानरैरहं कार्य्यं सीतान्वेषणादिरूपं कर्त्तास्मि करिष्यामि स्वां रूपं इत्यवगम्य निश्चित्य सुग्रीवः काकुत्स्थपादपच्छायामुपागमत् रामान्तिकं गतवानित्यर्थः शीत

स्पर्शा दुःखहन्त्रीमित्यर्थः पद्यतइति कर्त्तरि घञ् पादोमूलं तेनपिबति सेकजलमिति पादपोवृक्षः छाया स्यादातपाभावे शोभा यामपि दृश्यते। अत्र लक्षणया समीपदेशवृत्तिः॥ ३२॥

कार्य्यसारनिभं दृष्ट्वा वानराणां समागमं। अवै न्नाशं दशास्यस्य निर्वृत्तमिव राघवः॥ ३३॥

इति निरधिकारकृत्।

कार्य्येत्यादि। राघवोवानराणां समागमं दृष्ट्वा कार्य्यसारनिभं जं॰म॰ सीतालाभतुल्यं सरति कालान्तरे तिष्ठतीति कर्त्तरि कारके इत्यिरइति घञ् दशास्यस्य रावणस्य नाशं विनाशं निर्वृत्तमिव निष्पन्नमिव अवैत् ज्ञातवान् अवपूर्व्वादिणो लङि रूपं। इति निरधिकाराः कृतः॥ ३३॥

कार्य्येत्यादि। वानराणां समागमं दृष्ट्वा राघवोदशास्यस्य भ॰ नाशं निर्वृत्तं निष्पन्नमिव अवैत् ज्ञातवान् अवपूर्व्वादिनो ध्या दिपूकोदृशं समागमं कार्य्यसारस्य सीतालाभस्य तुल्यं सरति कालान्तरमिति सारः कर्त्तरि घञ् नश्रीभावे घञ्। इति निरधि काराः कृतउक्ताः॥ ३३॥

अतः परं घञधिकारः।

ततः कपिसमाहारमेकं निस्वायमागतं। उपाध्या यद्वायामं सुग्रीवोऽध्यापिपद्दिशां॥ ३४॥

ज०म० अतःपरं भावे कर्त्तरि च कारक इत्यधिकृत्य उच्यते। तत इत्यादि कपिसमागमनानन्तरं सुग्रीवः कपिसमाहारं कपिस मूहं दिशामायाममध्यापिपत् बोधितवान् अमुका अमुका दिक् ईदृशीति गतिबुद्धीत्यादिना समाहारस्य कर्म्मसंज्ञा आयाम परिज्ञानस्यास्य वालिभयाद्दूरपरिभ्रमणात् एकनिश्रायमागतं एकराशितां प्राप्तं आयाममित्यर्थः निश्रायमिति परिमाणा ख्यायामिति घञ् पश्चादेकशब्देन पूर्व्वकालैकेति सः क इव उपा ध्याय इति उपेत्याधीयते अस्मादिति इङश्चेति घञ्। २४॥

भ० अथाकर्त्तरि कारके कृत उच्यन्ते। तत इत्यादि कपिसमा गमानन्तरं सुग्रीवः कपीनां समाहारं समूहं दिशामायामं दैर्घ्यं अध्यापिपत् अध्यापितवान् अस्यां दिशि एतत्पर्य्यन्तं गन्तव्यमिति ज्ञापितवान् आयामज्ञानस्यास्य वालिभयेन दूरभ्रमणात् घोऽ ऽोर्ऽः शब्दायनगतिरित्यादिना समाहारस्य प्रयोज्यस्य कर्म्मत्वं क्रोऽीङोऽजंति इङश्चात्वं क्रीञीत्यादिना पण् उपाध्याय इव यथा गुरुरध्यापयति तथेत्यर्थः उपेत्याधीयतेऽस्मादिति घञन्तनटो ऽघे इति घञ् कीदृशमायामं एकं निश्रायं ज्ञानं आगतं प्राप्तं अत्यभ्यासात् सर्व्वासां दिशां दैर्घ्यं सुग्रीवस्य ज्ञानारूढमित्यर्थः पूर्व्वेण घञ् एकोनिश्रायोनिश्रयोयस्येति कपिसमाहारस्य विशे षणं वा एतेनैकवाक्यता दर्शिता एवमागन्तं यमर्षभि जनवधर त्यादिना पचे कृत्वाभावः॥ २४॥

सजलाम्भोदसंरावं हनूमन्तं सहाङ्गदं। जाम्ब वन्नीलसहितं चारुसंद्रावमब्रवीत्॥ २५॥

सजेत्यादि। सुग्रीवो हनूमन्तमब्रवीत् सजलाम्भोदसंरावं स जलमेघस्येव संरावो यस्य हनूमतः उपसर्गेरुवदति घञ् सहा ङ्गदं अङ्गदसहितं तथा जाम्बवं ऋक्षाधिपतिं नीलसहितमब्र वीत् जाम्बवशब्दोऽकारान्तोऽप्यस्य: चारुसन्द्रावं चारुगतिं समि युदुद्रुवदति घञ्॥ ३५॥ ज॰म

सजेत्यादि। सुग्रीवो हनूमन्तमब्रवीत् सजलस्य मेघस्येव संरा वः शब्दो यस्य तं अतिगम्भीरस्वनमित्यर्थः पूर्व्वेण घञ् उपसर्गा द्रुवदति परः अङ्गदेन सह विद्यमानं जाम्बवता नीलेन च सहितं नीलसहितं जाम्बवञ्चाब्रवीदिति वा जाम्बवान् जाम्बवोऽपि चेति विश्वः चारुसंद्रावं मनोहरगतिं पूर्व्वेण घञ् समत्येभ्यो द्रुवदति परः॥ ३५॥ भ॰

यात यूयं यमश्रायं दिशं नायेन दक्षिणां। विक्षा वैस्तोयविश्रावं तर्ज्जयन्तो महोदधेः॥ ३६॥

यातेत्यादि। यूयं यात गच्छत यमश्रायं यमस्थानं श्रयन्त्येन मिति श्रिणीभुवोनुऽपसर्गइति घञ् कर्म्मणि कां दक्षिणां दिशं सामान्याभिधानाद्विशेषाभिधानं नायेन नीत्या सामादिना नीय तेऽनेनेति पूर्व्ववत्करण घञ् महोदधेस्तोयविश्रावं तोयध्वनिं तर्जयन्तोन्यक् कुर्व्वाणाः कैः विक्षावैः स्वैः शब्दैः उभयत्रापि वौ क्षुस्रुवदति कर्म्मणि घञ्॥ ३६॥ ज॰म॰

भ० यातेत्यादि। यूयं दक्षिणां दिशं यात गच्छत यमश्रायं यम स्थानं अयत्येनमिति घञ् सामान्यविशेषभावात् पौनरुक्त्यभावः यमस्थानं न गन्तव्यमित्याशयो वा नायेन नीत्या सामदानादिना उपलक्षिता यूयमित्यर्थः करणत्वविवक्षा वा णीञः करणे घञ् सहोदधेस्तोयस्य निस्तावं शब्दं विधावैः स्वीयशब्दैस्तर्ज्जयन्तः न्यक् कुर्व्वन्तः क्षुनुभ्यां घञ्॥ ३६॥

उन्नायानधिगच्छन्तः प्रद्रावैर्व्वसुधाभृतां। वनाभिलावान् कुर्व्वन्तः स्वेच्छया चारुविक्रमाः॥ ३७॥

ज०म० उन्नेत्यादि। वसुधाभृतां पर्व्वतानां उन्नायानुच्चयानुच्चत्वान्यधिगच्छन्तः आनन्तः अवोदोर्नियइति भावे घञ् कैः प्रद्रावैः प्रकृष्टगतिभिः प्रेद्रुस्तुस्रुवइति घञ् वनाभिलावान् वनविध्वंसान् निरभ्योःपूल्वोरिति भावे घञ् स्वेच्छया कुर्व्वन्तः चारुविक्रमाः असाधारणपराक्रमाः यात यूयमिति सम्बन्धः॥ ६१॥

भ० उन्नेत्यादि। प्रद्रावैः प्रकृष्टगमनैर्व्वसुधाभृतां पर्व्वतानां उन्नायान उच्छ्रितत्वानि अधिगच्छन्तोजानन्तः यूयं यातेति पूर्व्वेणान्वयः वनाभिलावान् अरण्यविध्वंसान् स्वेच्छया कुर्व्वन्तः चारुविक्रमाः असाधारणशौर्य्याः उन्न्योर्ग्रः प्रपूर्व्वद्रोरभिपूर्व्वलूञश्च भावे घञ्॥ ३७॥

सदोद्गारसुगन्धीनां फलानामलमाशिताः। उत्कारेषु च धान्यानामनभीष्टपरिग्रहाः॥ ३८॥

सदेत्यादि। सदा सर्व्वदा उद्गारे भक्षणानन्तरं वमनपूर्व्वके जं०म॰
शब्दोच्चारणे यानि सुगन्धीनि फलानि तेषामलं पर्य्याप्तमाशिताः
तृप्ताः गृशब्दइत्यस्मादुत्पूर्व्वादुन्योर्ग्र इति घञ् आङ्पूर्व्वादश्नातेः
रादिकर्म्मणि क्तः कर्त्तरिचेति कर्त्तरि क्तः क्तप्रयोगे कर्म्मणि षष्ठी
नलोकेति निषिद्धातः शेषषष्ठी उत्कारेषु च राशिषु धान्यानां
कृविक्षेपइत्यस्मादुत्पूर्व्वात् कृधान्यइति कर्म्मणि घञ् अनभीष्ट
परिग्रहाः अनभिलाषुकाइत्यर्थः॥ ३८॥

सदेत्यादि। सर्व्वदा उद्गारे सुगन्धिभिः फलैरलमत्यर्थं भ॰
आशिताः तृप्ताः यूयं यातेति सम्बन्धः अशभोजनइत्यस्य आङ्
पूर्व्वस्य तृप्त्यर्थेनाकर्म्मकत्वात् गत्यर्थाढेत्यादिना कर्त्तरि क्तः
शीलादित्वात् वर्त्तमानेक्तइत्यन्ये तृप्त्यर्थानांवेति अधिकरणे
षष्ठी उत्पूर्व्वात् गृशनिगरणे इत्यस्मात् गृगिशब्देइत्यस्माद्वा घञ्
यदुक्तं सदुद्गारेऽपि सुगन्धिं प्रकाशयति तदुद्गारसुगन्धि उद्गारः
परिणामइत्यन्ये धान्यानामुत्कारेषु राशिषु अनभीष्टः परिग्र
हायेषां ते धान्यानभिलाषुकाइत्यर्थः किर आधारे घञ् किरो
धान्ये इति परसूत्रं॥ ३८॥

संस्तावमिव शृण्वन्तश्छन्दोगानां महाध्वरे। शि
ञ्जितं मधुलेहानां पुष्पप्रस्तारशायिनां॥ ३९॥

संस्तेत्यादि। मधुलेहानां भ्रमराणां पुष्पप्रस्तारशायिनां प्रेस्तो जं०म॰
ऽयज्ञइति घञ् शिञ्जितं शब्दं शृण्वन्तः यूयं यात छन्दोगानां

महाध्वरे संस्तावमिव संभूयस्तवनमिव पाठध्वनिविशेषमिव वा यस्मिं समभिस्तुवदिति घञ्॥ ३८ ॥

भ० संस्तेत्यादि। मधुलेहानां भ्रमराणां शिञ्जितं शब्दं श्रुत्वा स्तोयूयं यातेति सम्बन्धः यद्यपि भूषणानाञ्च शिञ्जितमित्यमरेणोक्तं तथापि शिञ्जिशब्द्यक्ते शब्दे इतिधात्वर्थमात्रे तात्पर्य्यं छन्दोगानां वेदविदां महायज्ञे संस्तावमिव सम्यक्स्तवनमिव भावे घञ् पुष्पाणां प्रस्तारे समूहे शायिनां स्थितानां प्रपूर्व्वस्तृञो घञ्॥ ३८ ॥

आलोचयन्तो विस्तारमम्भसां दक्षिणोदधेः। स्वादयन्तः फलरसं मुष्टिसंग्राहपीडितं ॥ ४० ॥

ज०म० आलोचेत्यादि। दक्षिणोदधेरम्भसां विस्तारं विस्तीर्णतां विपूर्व्वात् स्तृणातेः प्रथनेवावशब्देइति घञ् आलोचयन्तोनिरूपयन्तः इयानस्य विस्तारइति फलरससमास्वादयन्तः मुष्टिसंग्राहपीडितं मुष्टेः संग्राहेण हस्तेन पीडितं ग्रहेः समिमुष्टाविति घञ् भावे मुष्टिविषये व्युत्पादितत्वात् मुष्टिग्रहणमभिव्यक्तार्थं ज्ञातव्यं ॥ ४० ॥

भ० आलोचेत्यादि। दक्षिणोदधेरम्भसां विस्तारं विस्तीर्णतां आलोचयन्तो निरूपयन्तो यूयं यातेति सम्बन्धः स्तृञोभावे घञ् मुष्टिसंग्राहेण मुष्टिबन्धेन पीडितं फलरसं आस्वादयन्तः यद्यपि संग्राहोमुष्टिबन्धइत्यमरमाला तथापि मुष्टिग्रहणमत्राभिव्यक्तार्थं संग्राहोमुष्टिरित्यतइति हलायुधवाक्यादन्यथापि प्रवृत्तिदर्शनाद्वा ॥ ४० ॥

## कुलकं।

न्याय्यं यद्यत्र तत्कार्य्यं पर्य्यायेणाविरोधिभिः। निशो पशायः कर्त्तव्यः फलोच्चायश्च संहतैः॥ ४१॥

न्याय्यमित्यादि। यदत्र न्यायादनपेतं तत्कार्य्यमविरोधिभिर्युष्माभिः परिन्योर्निणोरिति घञ् पदार्थानामनपचारेणेत्यर्थः व्युपयोःशेतेःपर्य्याय इति घञ् पर्य्यायेण परिपाट्या परावनुपात्यय इण इति भावे घञ् अनुपात्ययः पर्य्यायः निशोपशायः कर्त्तव्यः युष्माभिर्निशायामुपशायः पर्य्यायशयनं कर्त्तव्यं व्युपयोःशेतेःपर्य्याय इति घञ् फलोच्चायश्च संहतैः युष्माभिः कर्त्तव्यः हस्तादान इति घञ् हस्तादानं चादेयस्य प्रत्यासत्तिः॥ ४१॥ ज॰भ॰

न्याय्यमित्यादि। यत्र यत् न्याय्यं न्यायादनपेतं तत्र तत्कार्य्यं अविरोधिभिर्युष्माभिः पर्य्यायेण परिपाट्या क्रमेणेति यावत् निशोपशायः निशायां शयनक्रिया कर्त्तव्या संहतैर्मिलितैः सद्भिः फलोच्चायः फलादानं कर्त्तव्यः वने हिंस्रादिभयान्मिलितैरेव गन्तव्यमिति भावः निपूर्व्वात्परिपूर्व्वाच्चेण उपपूर्व्वात् शीङ उत्पूर्व्वाच्चेञ्च घञ् न्यायशब्दात् ढघेकादिति ण्यः॥ ४१॥ भ॰

सीता रक्षोनिकायेषु स्तोककायैश्छलेन च। मृग्या शत्रुनिकायानां व्यावहासीमनाश्रितैः॥ ४२॥

सीतेत्यादि। छलेन युष्माभिः सीता मृग्या रक्षोनिकायेषु निवासेषु निवसन्त्यस्मिन्निति अधिकरणे निवासचित्तीत्यादिना घञ् आदेश्च ककारः स्तोककायैर्युष्माभिः चिन्वन्त्यस्मात्कुम्भमिति ज॰म॰

कायः शरीरे घञ् शत्रुनिकायानां अरिसमूहानां निचीयतइति निकायः संघेचानौत्तराधर्य्यइति कर्म्मणि घञ् आदेश्च ककारः तेषां सम्बन्धिनीं व्यावहासीं परस्परहसनं अनास्रितैः व्यत्पर्व्वाद्धुसे: कर्म्मव्यतीहारे णच्स्त्रियामिति स्त्रीलिङ्गे भावे णचं विधाय णचः स्त्रियामञ् न कर्म्मव्यतीहारइति वृद्धिप्रतिषेधः॥ ४२॥

भ॰ सीतेत्यादि। युष्माभिः सौककायैः स्वल्पदेहैः मद्भिः रक्षोनिकायेषु राक्षसनिवासेषु सीता मृग्या अन्वेषणीया छन्नेन न तु प्रकटेन मृगत्वङ्मार्गणे शत्रुनिकायानां शत्रुसमूहानां व्यावहासीं परस्परहसनं अनास्रितैः उपहसताऽपि शत्रोरुपहासं कार्य्यसिद्ध्यर्थमकुर्व्वद्भिरित्यर्थः व्यावहासी परस्परविचारणेति केचित् निचीयतेऽस्मिन्निति निकायोनिवासः समूहश्च चीयते सुखदुःखार्थमिति कायोदेहः स्वदेधावादेत्यादिना घञि कायनिकायौ निपातितौ व्यत्पूर्व्वहसोव्यतीहारे णच् मूर्द्धन्यणकारइत्यर्थः दन्त्यनकारस्त्वर्यमदाक्षोइत्यादौ खव्वरणनइति चिन्त्यार्थः णजन्तात् स्वार्थे अणः पित्वात् स्त्रियामीप्॥ ४२॥

संगाविणं न कर्त्तव्यं यावन्नायाति दर्शनं। संदृष्टा यान्तु वैदेह्यां निग्राह्या वोऽर्थवानरैः॥ ४३॥

ज॰म॰ सांराविणमित्यादि। संरावणमभिव्याप्या भाषणं न कर्त्तव्यं युष्माभिः यावन्नायाति दर्शनं सीतायाइत्यर्थात् संपूर्व्वाद्रौतेरभिविधौ भावइत्युन् तदन्ताद्षि नुण् इत्यण् तस्मिन्निणसपत्य

इति प्रकृतिभावः यस्मात्संदृष्टायां चैतस्यां वैदेह्यां शरैर्निग्राहः आक्रोशोऽभिभवलक्षणः वो युष्माकमर्थवान् आक्रोशेऽवन्योर्ग्रह इति भावे घञ्॥ ४३॥

सामित्यादि। यावद्दोर्दर्शनं नायाति न प्राप्नोति अर्थात् भ० सीता कर्त्री तावद्युष्माभिः सांराविणं अभिव्याप्य भाषणं कोला हलरूपं न कर्त्तव्यं संपूर्व्वद्रुलध्वनौ व्याप्तौ भावे णिन् णिनन्तात् स्वार्थेऽण्‌ः मन्वर्ज्ञान्त्वर्म्मीचस्येनइत्यादिना संयोगात्परस्य इन न्तस्यापत्यण्णे नकारलोपाभावउक्तस्तेन असंयोगात् परस्य इन न्तस्यापत्यण्णे नकारलोपः स्यान्नत्वपत्यण्णे इति प्राप्तं तेनात्र नलोपाभावः देवीदासचक्रवर्त्ती तु णिनप्रत्ययोऽकारान्तः णिन न्तादित्यत्र णिनान्तादिति पाठइत्याह हि यस्मात् सम्यग्दृष्टा यामेव वैदेह्यां शरैर्निग्राहश्चाक्रोशोऽभिभवोवा युष्माकं स्वार्थको भवति ग्रहेर्भावे घञ्॥ ४२॥

प्रग्राहैरिव पात्राणामन्वेष्या मैथिली कृतैः। ध्यात व्या चेङ्गितैर्धर्म्यैर्ध्यायन्ती राघवागमं॥ ४४॥

प्रग्रेत्यादि। पात्राणां भिक्षाभाजनानां प्रग्राहैरिव कृतैरन्वे ज०म० ष्या मैथिली भिक्षुकवेशैरिव युष्माभिरित्यर्थः ग्रहेः प्रेलिप्सायामि ति भावे घञ् कर्म्मणि षष्ठी इङ्गितैर्धर्म्यैः चेष्टितैः कुलाङ्गनोचितैः ध्यातव्या सा ध्यायन्ती रामागमं कुलाङ्गना हि प्रोषितभर्त्तृका सर्व्वदा भर्त्तुरागमनं ध्यायति॥ ४४॥

०भ अथेत्यादि। पात्राणां भिक्षाभाजनानां अयाथैरिव अयहत्तैरिव कृतैर्भवद्भिः सीताऽन्वेष्या भिक्षुत्रैरपीत्यर्थः ह्वार्थोऽच सम्भावना प्राङ्गहैर्भावे घञ् कथं सा ज्ञेयेत्याह धर्म्मैर्धर्मादनपेतैरङ्गितैश्चेष्टितैर्ज्ञातव्या राचसगृहेऽन्यस्यास्तादृशधर्मासम्भवात् कीदृशी राघवागमनं चिन्तयन्ती असाधारणं दिक्रमंतत् कुलस्त्री सदा स्वामिनः समागमं ध्यायति स्वधर्म्मञ्च न त्यजतीति भावः॥ ४४॥

वेदिवत्सपरिग्राह्या यज्ञियैः संस्कृता द्विजैः। दृश्या मासतमादह्नः प्रागनिन्दितवेशभृत्॥ ४५॥

ज०म० वेदीत्यादि। यथा यज्ञियैर्यज्ञकर्म्मार्हैः द्विजैः ब्राह्मणैः वेदिः यज्ञस्थली सपरिग्राह्या परिगृहीता संस्कृता तथा साऽपि अतिपवित्रत्वात् यज्ञः परोयज्ञइति यज्ञविषयं घञ् मासतमादह्नः प्राग्दृश्या दर्शनार्हा मासस्य पूरणं यदह्नः नित्यंशतादिमासेत्यादिना तमडागमः अस्मादेव निपातनात् मासस्यासंख्यावाचित्वेऽपि डट् मासतमसंज्ञोति हेतुं दर्शयन्नाह तस्याः पूतत्वात्तदेदनिन्दितवेशभृत् मैथिली मङ्गलमात्राभरणा दर्शनार्हा तां द्रष्टुं भवतां न चिरकालोभवतीति मासावधिना प्रेषिताः॥ ४५॥

भ० वेदीत्यादि। मासतमात् मासपूरणादह्नः प्राक् सीता युष्माभिर्दृश्या मासावधिनैव भवन्तः प्रेष्यन्ते चिरकालो न कर्त्तव्यइति दृशेश्चदुरुत्वात् दृभृजुषेत्यादिना क्यप् मासशब्दात् शतादिमाससम्वत्सरादिति पूरणे तमट् कीदृशी अनिन्दितवेशभृत् मङ्गल

नानाभरणवत्त्वात् यथा यज्ञियैर्यज्ञकर्मार्हैर्द्विजैः सपरियाहा परिगृहीता वेदिस्तैः संज्ञाता तथा सापि अतिपवित्रत्वात् पुरोहितैः संज्ञातत्वाच परेर्यहोघञ् यज्ञविषये परेर्ग्रहो ●ञिति परः ढघेकादिति यज्ञशब्दात् अर्हतीत्यर्थे इयः॥ ४५॥

नीवारफलमूलाशानृषीनप्यतिशेरते। यस्यागुणा निरुद्रावास्तां द्रुतं यात पश्यत॥ ४६॥

नीवेत्यादि। यस्यागुणाश्च्छपर्य्यादयः ऋषीनप्यतिशेरते ज०म० न्यक्कुर्व्वते तां द्रुतं यात पश्यत तत्र नीवारः अकृष्टपच्यधान्यं नौकृष्टधान्य इति घञ् उपसर्गस्य घञीति दीर्घत्वं फलं मोचादि मूलं आलूकादि एतान्यश्नन्ति ये ऋषयः कीदृशागुणाः निरुद्रावाः स्थिराः उदिश्रयतीति घञ्॥ ४६॥

नीवारेत्यादि। यस्याः सीतायागुणाः शमदमादयोमुनी भ० नपि अतिशेरते न्यक्कुर्व्वन्ति शीङ् अतिपूर्व्वः अतिक्रमे सकर्म्मकः स्वभावात् कीदृशाः निरुद्रावाः स्थिराः उत्पूर्व्वाद्द्रवतेर्घञ् कीदृशान् नीवारं तृणधान्यं फलमामलक्यादि मूलं आलूकादि अश्नतः तां यूयं द्रुतं पश्यत यात च निपूर्व्वात् वृञोघञ् अभिधानात् क्वचिदुपसर्गस्य घञन्ते दीर्घइति व्यतीहारइति दीर्घनिर्द्देशेन ज्ञापितं तेनैव दीर्घत्वं अतएवेदितीगुण् अतएव पं इत्यादिवचनात् ज्ञापकेन कार्य्यसिद्धिः स्वयमेवोक्ता तृणधान्यानि नीवारादइत्यमरः इति सुग्रीवोऽब्रवीदित्यन्वयः॥ ४६॥

उच्छ्रायवान् घनारावो वानरं जलदारवं। दूरा-
स्रावं हनूमन्तं रामः प्रोचे गजास्रवः ॥ ४७ ॥



ज०म० उच्छ्रेत्यादि। रामो हनूमन्तं प्रोचे कीदृशः उच्छ्रायवानुन्नति
युक्तः पूर्ववद्घञ् घनस्येवारावो यस्य विभाषाङि रुप्लुवोरिति भावे
घञ् गजास्रवः गजगमनः पक्षे पूर्ववदप् कीदृशं दूरास्रावं दूरमा
स्रावउद्गमनं यस्य पूर्ववत् घञ् ॥ ४७ ॥

भ० उच्छ्रेत्यादि। रामो हनूमन्तं वानरं प्रोचे कीदृशः उच्छ्राय
वान् उन्नतिमान् महापुरुषलक्षणमेतत् उत्पूर्वात् श्रिञो घञ्
घनस्येवारावो ध्वनिर्यस्य सतथा गजास्रवो गजगमनः वानरं
कीदृशं जलदारवं मेघशब्दं दूरास्रावं दूरदेशउत्प्लुतिकारिणं
आङ्पूर्वाभ्यां रुप्लुभ्यां घञ्ला ॥ ४७ ॥

अवग्राहे यथा वृष्टिं प्रार्थयन्ते कृषीवलाः। प्रार्थय
ध्वं तथा सीतां यात सुग्रीवशासनात् ॥ ४८ ॥

ज०म० अवेत्यादि। अवग्रहो वर्षप्रतिबन्धः अवग्रहइति पक्षे अप् यथा
अवग्रहे कृषीवला वृष्टिं प्रार्थयन्ते तथा प्रार्थयध्वं सीतां यूयं तस्या
दुर्लभत्वादत्यन्तादरणीयत्वाच्च यात सुग्रीवशासनात् ॥ ४८ ॥

भ० अवेत्यादि। कृषीवलाः कृषकायथा अवग्राहे वृष्टिप्रतिबन्धे
वृष्टिं प्रार्थयन्ते तथा यूयं सीतां प्रार्थयध्वं अतिदुर्लभत्वात् यात
सुग्रीवशासनात् न तु मयाज्ञा क्रियतइति भावः गौरवख्यापना
यैकत्वेऽपि बहुत्वं लोकात् अन्यथाहितत्वाद्वा अर्थात्कङ्याचने

अवादृष्टिप्रतिबन्धे यहोपग्रहलादिति परः स्वमते घञलनटोऽघे इत्यस्य सर्व्वविषयत्वात् कृषिग्रहत्वात् गोग्रहणमेधेति बलः नाश्वय स्यर्थेऽयोर्घः ॥ ४८ ॥

वणिक् प्रग्राहवान् यद्वत् काले चरति सिद्धये।
देशापेक्षास्तथा यूयं यातादायाङ्गुरीयकं ॥ ४९ ॥

वणिगित्यादि। तुला प्रगृह्यते येन सूत्रेण स प्रग्राहः प्रे वणिजा मिति करणे घञ् स तुलासम्बन्धी विद्यते यस्य वणिजः संसर्गे मतुप् यथा तुलाप्रग्राहवान् तदुपलक्षितो वणिक्काले ऽचिते क्रयसिद्धये चरति तथा यूयं अङ्गुलीयं तुलासूत्रस्थानीयं चिह्नमादाय देशापेक्षाः तत्तद्देशस्थितास्तत्र हि चिह्नेन रामदूता इति लक्ष्यन्ते ॥ ४९ ॥ ज०म

वणिगित्यादि। यथा प्रग्राहवान् तुलासूत्रवान् वणिक् योग्ये काले क्रयविक्रयादिस्वक्रियासिद्ध्यर्थं चरति योग्यदेशमपेक्षते च तथा यूयमपि ममाङ्गुरीयकं तुलासूत्रतुल्यमादाय गृहीत्वा योग्ये काले देशापेक्षाः सीतानिवासदेशमपेक्षमाणा यात गच्छत इति रामः प्रोचे इति सम्बन्धः अनेनैवाङ्गुलीयकेन चिह्नेन सीतया मद्दूता भवन्तो ज्ञास्यन्त इति भावः तुला प्रगृह्यते येन सूत्रेण तत्प्रग्राह उच्यते प्रपूर्व्वाद्ग्रहो वणिक् सम्बन्धे रज्जौ च घञ्लाविति परः स्वमते घञलनटोऽघे इत्यस्यापि विषयोऽदुर्निवारः ॥ ४९ ॥ भ०

अभिज्ञानं गृहीत्वा ते समुत्पेतुर्नभस्तलं। वाजिनः
स्यन्दने भानोर्व्विमुक्तप्रग्रहा इव ॥ ५० ॥

ज०म० अभीत्यादि। ते वानरानभस्तलमुत्पेतुः वाजिन इव विमुक्त प्रग्रहाः विमुक्तः प्रग्रहो नियमरज्जुर्येषामिति रश्मौ चेति विभाषा ग्रहणमनुवर्त्तते घञभावपक्षे ग्रहवृदृनिश्चिगमश्चेत्यप् स्यन्दने रथे भानोरादित्यस्य किं कृत्वा अभिज्ञानं गृहीत्वा चिह्नमङ्गुलीयकमादाय ॥ ५० ॥

भ० अभीत्यादि। ते हनूमदादयोऽभिज्ञानं चिह्नमङ्गुरीयकं गृहीत्वा नभस्तलं आकाशं समुत्पेतुः यथा भानोः स्यन्दने रथे विमुक्तप्रग्रहाः शिथिलीकृतबन्धरज्जवो वाजिनोऽश्वा नभो गच्छन्ति तथा एतेनातिशीघ्रत्वं दर्शितं तलशब्दोऽत्र स्वरूपार्थः तलं स्वरूपाधरयोः खड्गमुष्टिचपेटयोरिति विश्वः प्रग्रहोऽनन्तो रज्जुवाचकः ॥ ५० ॥

उदक् शतबलिं कोश्या सुषेणं पश्चिमां तथा। दिशं प्रास्थापयद्राजा वानराणां कृतत्वरः ॥ ५१ ॥

ज०म० उदगित्यादि। वानराणां राजा सुग्रीवः शतवलिं नाम वानरं वानराणां कोश्या सह उदगुदीचीं दिशं प्रास्थापयत् तिष्ठतर्णन्तस्य लङि रूपं उदीचीशब्दात्प्रथमान्तादिशि वर्त्तमानादस्तातिः तस्याञ्चेर्लुक् लुकतद्धितलुकीति स्त्रीप्रत्ययस्य लुक् तस्मिन्वृत्तौ भसंज्ञाभावादीत्वमपि निवर्त्तते तसिलादिस्तद्धित एधाच् पर्य्यन्त इत्यव्ययत्वे द्वितीयालुक् तथैव सुषेणं वानरं पश्चिमां दिशं प्रास्थापयत् कृतत्वरः त्वरितः ॥ ५१ ॥

भ० उदगित्यादि। वानराणां राजा सुग्रीवः कृतत्वरस्त्वरान्वितः सन् शतवलिनामानं कपिं उदक् उत्तरस्यां दिशि सङ्ख्या

पयामास तथा सुषेणनामानं पश्चिमां दिशं प्रास्थापयत् वान
राणां कोव्या सहेत्युभयत्र योऽयं गोऽश्रौ शेःसम्प्रदानगतीत्या
दिना प्रयोज्यस्य कर्म्मत्वं प्रपूर्व्वस्य तिष्ठतेर्गत्यर्थत्वात् उदगिति
उदक्शब्दाद्दिग्देशकालेद्वति सप्तम्याःस्तात् तस्य लुक् पात्पर
त्वात् तदन्तस्याव्ययत्वं लोकोपचारात्॥ ५१॥

प्राचीं तावद्भिरव्यग्रः कपिभिर्व्विनतोययौ। अप्र
ग्राहैरिवादित्योवाजिभिर्दूरपातिभिः॥ ५२॥

प्राचीमित्यादि॥ कपिभिस्तावद्भिरित्येककोटिसंघातैः सह जंम
विनतः प्रणतः सुग्रीवदत्यर्थात् अव्यग्रः अनाकुलः प्राचीं पूर्वां
दिशं ययौ यथा आदित्योवाजिभिरप्रग्राहैः मुक्तबन्धनैः करण
भूतैः रश्मीश्चेति यत्र् दूरयायिभिः॥ ५२॥

प्राचीमित्यादि। विनतनामा वानरोऽव्यग्रोऽनाकुलः स भ॰
तावद्भिः कोटिसंख्यातैः कपिभिः सह प्राचीं पूर्व्वां दिशं ययौ सुग्री
वाज्ञयेत्यर्थात् यथा आदित्यः सूर्याऽप्रग्राहैर्मुक्तरज्जुभिर्दूर
पातिभिर्व्वाजिभिरश्वैः सह प्राचीं याति तथा प्रग्राहोघञन्तोर
ज्जुवाचकः अदितेरपत्यमिति गर्गादित्वात् ण्यः केचित्तु विन
तोनाम सुग्रीवः प्राचीं ययावित्याहुस्तत्तु रामायणविरुद्धं
॥ ५२॥

ययुर्व्विन्ध्यं शरन्मेघैः प्रावारैः प्रवरैरिव। प्रच्छन्नं
मारुतिप्रष्ठाः सीतां द्रष्टुं प्लवङ्गमाः॥ ५३॥

ज॰म॰ ययुरित्यादि। मारुतिप्रष्ठाः हनुमदग्रेसराः सीतां द्रष्टुं विन्ध्य पर्व्वतं ययुः शरन्मेघैः प्रावारैरिव प्रावरणैरिव प्रछन्नं वृणोतेराच्छादनइति घञ् प्रवरैः श्रेष्ठैः अनाच्छादने यञेत्यादिना अप्॥ ५३॥

भ॰ ययुरित्यादि। प्लवङ्गमावानराः सीतां द्रष्टुं विन्ध्यपर्व्वतं ययुः प्लवेन गच्छतीति तृभृवृहजीत्यादिना खः कीदृशाः मारुतिर्हनूमान् प्रष्ठोऽग्रसरो येषां ते तथा प्रादग्रगेस्थस्य षत्वमभिधानात् मनीषादित्वाद्वा कीदृशं शरन्मेघैः प्रच्छन्नं प्रवरैः श्रेष्ठैः प्रावारैः प्रच्छदपटैरिव अभिधानात् प्राङ्पूर्व्वात् वृञश्चाच्छादने घञ् अन्यथाल्॥ ५३॥

परिभावं मृगेन्द्राणां कुर्व्वन्तोनगमूर्द्धसु। विन्ध्ये तिग्मांशुमार्गस्य चेरुः परिभवोपमे॥ ५४॥

ज॰म॰ परीत्यादि। मृगेन्द्राणां सिंहानां परिभावमभिभवं कुर्व्वन्तः विन्ध्ये चेरुः भ्रान्ताः परौभुवोवज्ञानइति घञ् कीदृशे परिभवोपमे आदित्यमार्गस्य परिभवनं अत्युच्चत्वात् घञभावपक्षे अप्॥ ५४॥

भ॰ परीत्यादि। ते नगमूर्द्धनि गिरिशिखरे मृगेन्द्राणां सिंहानां परिभावं तिरस्कारं कुर्व्वन्तो विन्ध्ये चेरुः चरगताः कीदृशे सूर्य्यवर्त्मनः परिभवइव तस्यात्युच्चत्वात् परिभवशब्देनात्र तत्कर्त्ता लक्ष्यते आदित्यमार्गस्य परिभवेणोपगता मा लक्ष्मीः शोभा यस्येति वा यद्वा तत्परिभवक्रिययैवात्र लोकभयदत्वेन साम्यं

विवक्षितं परिपूर्व्वाद्धुवो घञसौ स्वभावादवगमार्थता न गच्छ तीति नगः ह्वनजनादिति डः ॥ ५४ ॥

भ्रेमुः शिलोच्चयांस्तुङ्गानुत्तेरुरतरान्नदान्। आशं
सवोलवं शत्रोः सीतायाश्च विनिश्चयं ॥ ५५ ॥

भ्रेमुरित्यादि। उत्पूर्व्वाच्चिनोतेः एरजित्यच् शिलाभिरुच्चयो ज०म० येषां तान् शिलोच्चयान् भ्रेमुः भ्रमणक्रियाया व्याप्यत्वात्सकर्म्म कता नदान् अतरान् तरितुमशक्यान् उत्तेरुः उत्तीर्णवन्तः शत्रोर्लवमुच्छेदनं सीतायाश्च विनिश्चयं विनिर्णयमाशंसवः आशं सनशीलाः सनाशंसभिक्ष उः तरलवौ च्छेदारविति अप्प्रत्यया न्तौ विनिश्चयइति ग्रहेरित्यप्॥ ५५ ॥

भ्रेमुरित्यादि। ते भीमान् भयदान् शिलोच्चयान् पर्व्वतान् भ० भ्रेमुः तृफलेत्यादिना अतएत्वं खिलोपश्च भ्रमणस्य गतिविशेष त्वात् सकर्म्मकता शिलाभिरुच्चयो वृद्धिर्येषां उच्चीयतइति वा उच्चयस्तूपः शिलाभिरुच्चयः शिलोच्चयः अतरान् अन्यैस्तरितु मशक्यान् नदान् उत्तेरुः तृतरेऽभिभवमुत्यां ऋच्छत्यॄतां गुणः किक्षां शत्रोर्लवं छेदं आशंसवइच्छवः सीतायाविशेष्य निश्चयञ्च आशं सवः सनभिक्षाशंसउः चितृलूभ्योऽल्॥ ५५ ॥

आदरेण गमञ्चक्रुर्विषमेष्वप्यसंघसाः। व्याप्नुवन्तो
दिशोऽन्यादान् कुर्व्वन्तः सव्यधान् हरीन्॥ ५६ ॥

ज॰म॰ आदेत्यादि। विषमेष्वपि प्रदेशेषु गमं गमनं चक्रुः आदरेणा नवज्ञया ग्रहैरित्यप् अप्रघसाः त्यक्ताहाराः उपसर्गेऽदइति अपि घञपाश्चेति अदे र्घस्लादेशः हरीन् सिंहान् सव्यधान् सप्र हारान् व्यधजपोरित्यप् सप्रहारत्वादन्यादान् परित्यक्ताहा रान् कुर्व्वन्तः नौणचेति निपूर्व्वाददेरणप्रत्ययः तस्मिन्नदेर्न घस्ला देशः चकारादपि तत्र नियमः दिशाव्याप्नुवन्तः सर्व्वव्यापिनः ॥ ५६ ॥

म॰ आदेत्यादि। ते विषमेष्वपि देशेषु गमं चक्रुः रामस्य कार्य्यमि त्यादरेण न तु परस्य कार्य्यमित्यवज्ञया कीदृशाः अप्रघसाः सम्य गाहाररहिताः निरन्तरभ्रमणात् दिशाव्याप्नुवन्तः हरीन् सिंहान् सव्यधान् सप्रहारान् अतएवान्यादान् आहाररहि तान् कुर्व्वन्तः गमश्चदव्यधिभ्योऽल् घस्लदःसनव्यल्घञोति अदे र्घसादेशः निपूर्व्वाददेर्नाम्न्यकर्त्तरिति णप्रत्ययः घञि तु घसा देशप्रसङ्गात् नेरदोणाल्वाविति परः अभ्नेऽपि आहारेऽपि घसा न्यादइत्यपीत्यमरः॥ ५६॥

सञ्चेरुः सस्मिताः केचिदस्वनाः केचिदाटिषुः। संया मवन्तोयतिवन्निगदानपरेऽमुचन् ॥ ५७ ॥

ज॰म॰ सञ्चेरित्यादि। सहमाः सस्मिताः अस्वनास्तूष्णीकाः स्वनहसो र्व्वेत्यप् यतिवत् संयामवन्तः नियमवन्तः यमः समुपनिविषुचेति घञ् आटिषुः अटितवन्तः अटेर्लुङि रूपं अपरे निगदान्स्वना न्यमुचन् नौगदेत्यादिना विकल्पेनापोविधानात् घञ्॥ ५७॥

मञ्जूनरित्यादि। केचिद्वानराः महमाः मन्नूरेनः तृफनेति भ०
अतएव खिन्नापस्य केचिदस्वनामानिनः यतिवत्संयामवन्तः
संयमिनः मन्नश्चाटिषुर्गतवन्तः अटगतौ ग्लांभिः अनुस्मिदेरिति
अनतम् अपरे निगदान् अमुचन् अन्तःस्थितस्य शब्दस्य वहिर्निः
मारणं मासः तं कृतवन्तइत्यर्थः महस्वननिगदाअलन्ताः
संयामाघत्रन्तः॥ ५७॥

अथ क्रमादनिःक्वाणानगाः चीणपणाइव। अम
दाः सेदुरेकस्मिन्नितम्बे निखिला गिरेः॥ ५८॥

अथेत्यादि। अथ परिभ्रमणादनन्तरं क्रमेन परिश्रमेण अम ज०म०
दाः गतहर्षाः मदोऽनुपसर्गइत्यप् अतएव निःक्वाणाः निश्शब्दाः
क्वणावीणायाञ्चेत्यपाविकल्पेन घञ् वीणादिविषयमेतत् क्वणेर्नि
पूर्वादनुपसर्गाद्वीणादिविषयाच्च विकल्पेनाणप्रत्ययइत्युक्तं एक
स्मिन् गिरेर्नितम्बे सेदुः निषणाः निखिलाः समस्तावानराः चीण
पणाइव अर्थरहितानराइव पण्यन्तइति पणाः व्यवहाराय
कृतं पणं व्यवस्थाप्यन्ते नित्यं पणः परिमाणे इत्यप्॥ ५८॥

अथेत्यादि। भ्रमणानन्तरं ते निखिलाः सर्वे वानराः कस्य भ०
चिद्गिरेर्नितम्बे सेदुर्निषणाः कीदृशाः क्रमेन श्रमेण निःक्वाणा
निःशब्दाः अमदाहर्षरहिताः चीणपणानष्टधनाइव निःक्वाणो
घञन्तः क्वणः शब्दमात्रे घञलौ सप्रादेरपि वीणाध्वनौ तु समा
देरेवेति परः स्वमते अभिधानं नियामकमित्युक्तेः सएव नियमः
क्रमपणमदाअलन्ताः पण्यते व्यवह्रियतेऽनेनेति पणः पणोव

राटमात्रे स्वाम्भृत्ये कार्षापणे ग्रहे । क्वच्याकटिकाद्यूतव्यवहारे भृतौधनइति विश्वः ॥ ५८ ॥

ततः ससम्मदास्तत्र निरैक्षन्त पतत्त्रिणः । गुहा द्वारेण निर्यातः समजेन पशूनिव ॥ ५९ ॥

ज॰ म॰ ततइत्यादि । ततो विश्रामानन्तरं ते तत्र तस्मिन् पर्व्वते पतत्त्रिण पक्षिणानिरैक्षन्त ईक्षितवन्तः ईक्षेर्लङि रूपं कीदृशान् गुहाद्वारेण निर्यातः निर्गच्छतः निष्पूर्व्वाद्यातेः शत्रन्तस्य शसि रूपं ससंमदाः सहर्षाः प्रमदसंमदाविति निपातितं समजेन वृन्देन पशूनिव निर्यातः समुदारजपशुष्वित्यप् ॥ ५९ ॥

भ॰ ततइत्यादि । उपवेशानन्तरं ते ससम्मदाः सहर्षाः सन्तस्तत्र पर्व्वते गुहाद्वारेण निर्यातोनिर्गच्छतः पतत्त्रिणः पक्षिणानिरैक्षन्त दृष्टवन्तः समजेन समूहेन निर्गच्छतः पशूनिव तद्वदतिस्थूलानित्यर्थः समदसमजावलक्षौ व्यजोरे इत्यादौ अलन्तवर्ज्जनात्राजेर्व्यादेशः संप्राभ्यां मदोहर्षे समजास्मजः पशुसंहप्रेरणयोरलिति परेषां विशेषसूत्रं निःपूर्व्वादिचर्घो यातेः शतृः ॥ ५९ ॥

वीनामुपसरं दृष्ट्वा तेऽन्योन्योपह्वागुहां । प्राविशन्नाह्वप्रश्नाश्राद्धावमुपलिप्सवः ॥ ६० ॥

ज॰ म॰ वीनामित्यादि । वीनां पक्षिणामुपसरं नैरन्तर्य्येण निर्गमनं दृष्ट्वा उपसरइव उपसरनैरन्तर्य्यमात्रेणोपलक्षितत्वात् उपसरोहि

स्त्रीगवीषु पुंगवानामभिगमनमुच्यते सच नैरन्तर्य्येण भवति प्र जनेसर्त्तेरित्यप् वानरा अन्योन्योपसरवाः परस्परमाक्रान्तं येषां आगच्छताऽगच्छत प्रविशामइति ह्वः संप्रसारणमित्यप् संप्रसा रणञ्च गुहां प्राविशन् प्रविष्टवन्त आहवप्रज्ञाः युद्धप्रज्ञाः आह्व यते युद्धाय स्पर्द्धतेऽनेनेत्याङि युद्धइत्यप् संप्रसारणञ्च आहाव मुपलिप्सवः उदकाधारमुपलब्धुमिच्छवः निपानमाहावइति घञि संप्रसारणं निपात्यते वृद्धिरस्येव अणप्रत्यये लब्धवृद्धिः॥ ६० ॥

वीनामित्यादि। वीनां पक्षिणामुपसरं उपर्य्यधोगमनं दृष्ट्वा भ० ते वानरागुहां प्राविशन् कीदृशाः अन्योन्यस्य उपसरमाक्रान्तं येषां ते तथा आहवे युद्धे प्रज्ञाः पण्डिताः अतएव गुहाप्रवेशे निर्भयत्वं आहावमुदकाधारमुपलब्धुमिच्छवः उपसरोऽलन्तः अभिधानात् उपर्य्यधोगमनार्थः उपसरो हि स्त्रीगवीषु पुङ्गवा नामभिगमनमुच्यते सचोपर्य्यधोभावेन भवतीत्युपमानादिह उपसरशब्देन उपर्य्यधोगामित्वमुच्यतइति केचित् गर्भग्रहणा र्थोपसरणे सर्त्तेरणिति परस्त्वं तन्मते उपसरोगर्भार्थं ग्राम्य धर्म्माचरणं तच वहिर्निःसरतां पक्षिणां सम्भवत्येव ऊलिहामेऽ दने इत्यस्मादलघञौ उपसर्गेणान्यार्थता परेषां मते क्रेञोरूपं अभ्युपनिविभ्योह्वेञोऽलूक्ष्वेति तथा आङोयुद्धेह्वेञोऽलूक्ष्वे ति आङोनिपाने क्ष्वेति तेषां सूत्रचयं॥ ६० ॥

कुर्व्वन्तोहवमाप्तानां पिपासावधकाङ्क्षिणः। द्वारं तमोघनप्रख्यं गुहायाः प्राविशन् द्रुतं॥ ६१ ॥

ज॰म॰ कुर्व्वन्नित्यादि। गुहां प्रविश्य तस्याः द्वारमपरं प्राविशन् आप्ता नां स्निग्धानां ह्रवमाक्रानं कुर्व्वन्तः भावेऽनुपसर्गस्येत्यप् संप्रसा रणं च पिपासा पातुमिच्छा तस्यावधोऽपनयनं हनश्च वध इत्यप् वधादेशश्च तं काङ्क्षितुं शीलं येषामिति काङ्क्षिमाच्चिकाङ्क्षाया इत्यस्मात्सुप्यजातौ णिनिः इति ताच्छील्ये साधुकारिणि वा कीदृशं द्वारं तमोघनप्रख्यं तमसोघनः मूर्त्तिः काठिन्यं तेन सदृशं मूर्त्तौ घनइति हन्तेरप्प्रत्ययो धनादेशश्च निपात्यते मूर्त्तिमत्तमइव द्वारमित्यर्थः॥ ६१॥

भ॰ कुर्व्वन्नित्यादि। ते आप्तानां स्निग्धानां ह्रवमाक्रानं कुर्व्वन्तो गुहा याद्वारं द्रुतं प्राविशन् कीदृशाः पिपासायास्तृष्णायावधं हननं काङ्क्षन्तीति ग्रहादित्वात् णिन ताच्छील्य आभीक्ष्ण्ये वा णिन्निति प रः स्वमतेऽपि तदर्थता प्राप्यते यतो णिनविधायकसूत्रे अर्थविशे षानोक्तः किन्तु दधिकतीत्यादौ भव्यर्थाणिन्नित्युक्तं तेनाभिधाना दर्थविशेषेऽपि णिन् ग्रहादिति ज्ञापितं द्वारं कीदृशं तमोघनप्रख्यं तमसां घनेन काठिन्येन प्रख्यं सदृशं मूर्त्तिः काठिन्यमुच्यते तद् पचारात् मूर्त्तिमत्तमइवेत्यर्थः मेघप्रख्यं तमश्च प्राविशन्निति केचित् ह्रवमिति ह्वेञ् स्पर्द्धायामे इत्यस्याल्लन्तस्य रूपं धातूनामनेका र्थत्वात् आक्रानार्थता ह्वेञोऽल् ऋच्च भावे नत्वपसर्गादिपरः हन्ते रल् हनवधयोरल्लीति वधादेशः काठिन्यादौ हन्तेरल् घना देशश्चेति परः स्वमते निपातः॥ ६१॥

तस्मिन्नन्तर्घणे पश्यन् प्रघाणे सौधसद्मनः। लौहो द्घनघनस्कन्धाल्ललितापघनां स्त्रियं॥ ६२॥

तस्मिन्नित्यादि। द्वारमतिक्रम्य यः सावकाशप्रदेशः सोऽन्तर्घण जं०म०
इत्युच्यते तथा ह्यन्तर्हन्यते क्रीडीभवत्यस्मिन्निति अनुगतार्थत्वं
अन्तर्घणादेश इत्यन्तःपूर्व्वाद्धन्तेरप् घनादेशः घणादेशो वा ये ण
कारं पठन्ति यत्तु संज्ञीभूतो वाह्लीकेषु देशविशेषइत्युक्तं तत्संज्ञा
शब्दमाश्रित्य तस्मिन्नन्तरे यत्सौधमस्य धवलगृहं तस्य प्रघाणे
एकदेशे प्रघणः प्रघाणश्चेति निपातितं स्त्रियं ललितापघनां
ललिताङ्गीमपश्यन् अपघनोऽङ्गमिति निपातनं लोहोद्घनघन
स्कंधाः यस्मिन् स्थापयित्वा काष्ठादीनि संस्क्रियन्ते स उद्घनः
आधानं तद्वत् घनः स्कन्धो येषामिति उद्घनोऽत्याधानमिति
निपातनं॥ ६२॥

तस्मिन्नित्यादि। तस्मिन् गुहाभ्यन्तरे अन्तर्घणे द्वारसमीप भ०
सावकाशप्रदेशे यत् सौधस्य धवलगृहं तस्य प्रघणे द्वारप्रकोष्ठा
भ्यां वहिःप्रदेशे ललितापघनां मनोहरशरीरां स्त्रियं तेऽपश्यन्
कीदृशाः लोहोद्घनघनस्कन्धाः यस्मिन् स्थापयित्वा काष्ठादिकं
हन्यते स उद्घनः लोहस्य य उद्घनस्तद्वद्घनो निविडः स्कन्धो येषां
ते तथा लोहवदुद्घनः काष्ठविशेष इत्यन्ये परमते अन्तर्हन्यते
यस्मिन्नित्यन्तर्घणोऽभ्यन्तरदेश उच्यते अन्तरोहन्तेरलि देशे
घनादेशः विभाषया णत्वं लभते मूर्द्धन्यान्तत्वे घणोऽलि रूपं
दन्त्यान्तत्वे तु हन्तेर्निपातः परमते प्रकृष्टं हन्यते गम्यते ऽस्मि
न्निति प्रघाणः प्राङ्गृहद्वारवाह्यपिण्डके हन्तेर्घञलौ घनादेशस्य
पूर्व्वपदस्थान्निमित्तात् संज्ञायां णत्वं लभते घणो घञि रूपं प्रघा
णप्रघणालिन्दा वहिर्द्वारप्रकोष्ठके इत्यमरः परमते ऊर्द्ध्वं हन्यते
यस्मिन् स उद्घनः उदः प्रतिकाष्ठके हन्तेरल् घणादेशश्च लभते

निपातः निधाय तक्ष्यते यत्र काष्ठे काष्ठं सउद्घनइत्यमरकोषे काष्ठ इत्युपलक्षणं घनः पूर्ब्बवत् परमतेऽपहन्यतेऽनेनेत्यपघनो देहः अपादङ्गेहन्तेरल् घनादेशश्च स्वमते निपातः वस्तुतः अमर्षणा इयोरूढाः व्युत्पत्तिस्तु यथा कथञ्चिदेव॥ ६२॥

सा स्तम्बघ्नपदन्यासान् विघनेन्दुसमद्युतिः। परिघोरुभुजानाह हसन्ती स्वागतं कपीन्॥ ६३॥

अ॰म॰ सास्तमित्यादि। सा स्त्री हसन्ती कपीन् स्वागतं वचनमाह कीदृशी विघनेन्दुसमद्युतिः विहन्यते अभिभूयते अन्या द्युतिर्येन सविघनः करणेपोविदुश्चित्यप् घनादेशश्च सचेन्दुश्चेति सः तत्समा द्युतिर्य्यस्याः स्तम्बोहन्यते येन पादन्यासेन सस्तम्बघ्नः तृणकाष्ठादिः स्तम्बेकचइति करणे कः गमहनेत्युपधालोपः तादृशः पादन्यासा येषां कपीनामिति परिहन्यते येन परीघइत्यप् चादेशश्च परिघो अर्गलः तदनुकारिणौविपुलावाहूयेषामिति॥ ६३॥

भ॰ सेत्यादि। सा हसन्ती स्वागतमिति कपीनाह कीदृशान् स्तम्बघ्नपदन्यासान् स्तम्बोहन्यते तृणकाष्ठादिकमुपमर्द्दते येन तादृशः पदन्यासोयेषां तान् हनचरगत्यादिरिति कर्त्तरि विहितष्टक् तद्वाः कभावइति अन्यत्र दृश्यते घेऽपि न चातिः हनगमित्युक्तेऽपि हनो ध्नाघः स्तम्बघ्नश्चस्तम्बघनः स्तम्बोयेन निहन्यते स्तम्बो गुच्छस्तृणादिन इत्यमरः परिघवदुरवो विपुलाभुजायेषां परिघोऽस्त्रविशेषः परमते परिहन्यतेऽनेनेति हन्तेर्झोऽलस्य रूपं रूढशब्दोऽयं सा कीदृशी विघनेन्दुसमद्युतिः विगतोघनोमेघोयस्मात् तादृशस्य शरत्कालीनस्य चन्द्रस्येव दीप्तिर्यस्याः परमते हन्तेरप् मेघे घनादेशश्च स्वमते निपातः॥ ६३॥

पिप्रायाद्रिगुहोपघ्नानुद्घान् संघसमागमान्। फलै
र्नानारसैश्चित्रैः स्वादुशीतैश्च वारिभिः ॥ ६४ ॥

पिप्रेत्यादि। तांश्चिविधैः फलैर्वारिभिश्च पिप्राय तर्पितवती जं०म०
अद्रिगुहोपघ्नान् अद्रिगुहैव उपघ्न आश्रयो येषां कपीनां उपघ्न आ
श्रय इत्यप् उपधालोपश्च निपात्यते संघसमागतान् समूहेनाग
तान् उद्घान् प्रशस्तान् संघोद्घौ गणप्रशंसयोरिति समुदोरुपपदयो
र्हन्तेरपि टिलोपश्च निपात्यते ॥ ६४ ॥

पिप्रेत्यादि ॥ सा फलैर्वारिभिश्च तान् पिप्राय तर्पितवती कीदृ भ०
शान् अद्रिगुहा उपघ्न आश्रयो येषां तान् उपादाश्रये हन्तेरल्
घश्चेति परः स्वमते हनचरगहृगित्यस्य कद्धोःकभावइत्यन्यत्र
प्रवृत्तिः अभिधानादाश्रयार्थता स्यादुपघ्नोऽन्तिकाश्रय इत्यमरः
उद्घान् प्रशस्तान् परमते ऊर्द्धं हन्यते ज्ञायत इति उदः प्रशस्ते
हन्तेरल् घादेशश्च स्वमते हनजनादित्यस्य कद्धोःकभाव इत्य
न्यत्र प्रवृत्तेर्गमादित्वात् घणोडः संघेन समूहेनागतान् संहननं
संहन्यते वाऽस्मिन्निति समोहन्तेरल् समूहे घादेशश्चेति परः स्व
मते उद्घवत् फलैः कीदृशैः नानारसैः नानाविधरसयुक्तैः चित्रै
रद्भुतैः वारिभिः कीदृशैः स्वादुशीतैः मधुरशीतलैः ॥ ६४ ॥

निघानिघतरुच्छन्ने तस्मिंस्ते लब्धिमैः फलैः। तृप्ता
स्तां भ्राजथुमतीं पप्रच्छुः कस्य पूरियं ॥ ६५ ॥

निघेत्यादि। तस्मिन्प्रघणे निघानिघैर्निमितानिमितैस्तरुभिः जं०म
छन्ने निघोनिमितमिति निपूर्व्वाद्धन्तेरपि टिलोपे निपात्यते समा

रोहपरिणाहाभ्यां निमित्तमित्युच्यते ते कपयः लम्भितैर्लाभनिर्वृत्तैः क्लितःक्लिः फलैस्तृप्ताः सन्तस्तां स्त्रियं भ्राजथुमतीं शोभावतीं पप्रच्छुः पृष्टवन्तः कस्येयं पुरिति क्लितोऽथुच् तदन्तात्मतुप्॥ ६५॥

भ० निघेत्यादि। तस्मिन् सौधसद्मनः प्रघाणे ते वानरास्तां पप्रच्छुः तस्मिन् कीदृशे निघानिघैर्दैर्घ्यविस्ताराभ्यां तुल्यातुल्यैस्तरुभिर्वृतैः स्कन्ने आवृते परमते निःशेषेण हन्यन्ते स्थायन्तेऽदति नेस्तुल्यारोहपरिणाहे हन्तेर्डोघादेशश्च स्वमते घणोक्तपं विस्वकमर्मनिघ इत्यमरः ते कीदृशाः लम्भितैर्लाभेन निर्वृत्तैः फलैस्तृप्ताः लभडुाडुपप्राप्तौ क्लितस्तत्त्वे त्रिमक् डभात्तयोर्थः तां कीदृशीं भ्राजथुमतीं शोभावतीं टुभ्राजृन्दीप्तौ क्लितोऽथुर्भावे किं पप्रच्छुरित्याह कस्येयं पूरिति आदिमश्लोकेनाप्यन्वयः॥ ६५॥

रक्षणं करोषि कस्मात्त्वं यत्नेनाख्यायतां शुभे।
स्वप्ने निधिवदाभाति तव सन्दर्शनं हि नः॥ ६६॥

ज०म० रक्षणमित्यादि। हे शुभे कस्माद्वा रक्षणं रक्षां करोषि एतद्यत्नेनादरेण नोऽस्माकमाख्यायतां उभयत्रापि यजयाचेति नङ् यस्मात्स्वप्ने निधिवत् निधिरिव तव संदर्शनमाभाति नोऽस्माकमतिदुर्लभत्वात् स्वप्नइति स्वपोनन् निधिरिति उपसर्गेघोःकिः॥ ६६॥

रक्षणमित्यादि। हे शुभे कस्माद्वा त्वं रक्षणं रक्षां करोषि अर्थात् पूर्य्याः एतत् यत्नेनादरेणाख्यायतां कथ्यतां हि यस्मात् स्वप्ने निधिरिव तव सन्दर्शनं अतिदुर्लभत्वान्नोऽस्माकमाभाति अतः पर्व्वमननुभूतत्वात् एवं पृच्छामइति भावः स्वपरक्षयतेत्या

दिना सर्व्वत्र मङ् इत्येत्वं निषिद्धिरिति किर्ह्रोऽन्तर्गेरिति किः उखेवीत्यालोपः ॥६६॥

ततोजलधिगम्भीरान् वानरान् प्रत्युवाच सा। इयं दानवराजस्य पूः सृष्टिर्व्विश्वकर्म्मणः॥ ६७॥

ततइत्यादि। ततस्तस्मादनन्तरं सा प्रत्युवाच जलं धीयते अस्मिन्निति अधिकरणेचेति किः जलधिः समुद्रः तद्वद्गम्भीरान चोभ्यत्वात् इयं पूः दानवराजस्य विश्वकर्म्मणः सृष्टिः सृज्यतइति सृष्टिः कर्म्मणिस्त्रियांक्तिन्। इतः स्त्रीलिङ्गमधिकृत्योच्यते॥ ६७॥ जं०म०

ततइत्यादि। तदनन्तरं सा वानरान् प्रत्युवाच कीदृशान् जलधिवत् गम्भीरान् अचोभ्यान् जलानि धीयन्तेऽत्रेति ढाङ्के इति किः किं प्रत्युवाचेत्याह दानवराजस्य इयं पूः विश्वकर्म्मणः सृष्टिः पूर्व्वं कस्य पूरिति स्वामिनःकर्त्तुश्च प्रश्नइत्युभयमुक्तं सृज्य तइति क्तिः क्तिस्त्यपेइति कर्म्मणि स्त्रियां क्तिः। इतः स्त्रीत्वदधि कारः॥ ६७॥ भ०

निहतस्य स्थितिं भिन्दन् दानवोऽसौ बलद्विषा। दुहिता मेरुसावर्णेरहं नाम्ना स्वयम्प्रभा॥ ६८॥

निहेत्यादि। असौ दानवराजः स्थितिं मर्य्यादां भिन्दन् स्थागापापचोभावइति क्तिन् बलद्विषा इन्द्रेण निहतः यस्य चाहं दुहिता सपिता नाम्ना मेरुसावर्णिः अहञ्च नाम्ना स्वयंप्र भेति॥ ६८॥ जं०म०

निहेत्यादि। बलद्विषा इन्द्रेण असा दानवराजोनिहतः भ०

यतः क्षितिं मर्य्यादां भिन्दन् त्यजन् अहं मेरुसावर्णिनाम्नोद्
हिता कन्या नाम्ना च स्वयंप्रभा पितुरात्मनस्य प्रसिद्धनाम्नोत्को
र्त्तनेन दानववधानन्तरमिन्द्रेणाहमिह नियुक्तेति किम्वदन्ती
सूचिता तिष्ठतेः क्तिः दोषोमास्यामिति ङिः मर्य्यादाधारणा
स्थितिरित्यमरः स्वयंप्रभेति स्वयं प्रभाति शोभतइति आतो
ऽन्तःअङ्गेरिति ङः स्वयमात्मना प्रभा यस्यादति वा॥ ६८॥

## जूतिमिच्छथ चेत्तूर्णं कीर्त्तिं वा पातुमात्मनः। करोमि वोवहिर्यूतीन् पिधध्वं पाणिभिर्दृशः॥ ६९॥

ज०म० जूतिमित्यादि। यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ कीर्त्तिं वा आत्मनः पातुं रक्षितुं वः युष्मान् वहिर्यूतीन् वहिर्भूतान् ऊति यूतीत्यादिना निपातितः तत्र यौतेर्जवतेश्च क्तिन् दीर्घत्वञ्च निपात्यते कीर्त्तिरपि कृतसंशब्दने स्वार्थिकाणिच् उपधायास्रेतील्वं तस्मात् क्तिन् अतः पाणिभिः दृशोदृष्टीः पिधध्वं छादयध्वं अपि पूर्व्वाद्धाञोलोटि दिर्व्वचनेदधस्तथोश्चेति अभ्यासस्य भष्भावे आभ्यस्तयोरित्याकारलोपे झलांजश्झशीति धातोर्द्दकारे वष्टि भागुरिरित्युपसर्गाकारलोपे च रूपं॥ ६८॥

भ० जूतिमित्यादि। यूयं चेत् यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ प्रभुकार्य्यं कृत्वा आत्मनश्च कीर्त्तिं पातुं रक्षितुमिच्छथ तदा पाणिभिर्हस्तैर्दृशश्चक्षूंषि पिधध्वं आच्छादयत ततोऽहं वोयुष्मान् वहिर्यूतीन् वहिर्देशे यूतिर्मिश्रणं येषां तादृशान् वहिर्गतानि त्यर्थः. जुगत्यां युञ्मिश्रणे मातिहेतीति जूतियूती भावेऽस्ते निपात्येते कृत्कृसंशब्दे किन्त्वाचुरादिः कीर्त्त्यते येति कर्म्मणि क्तिः

कीर्णक्षतइति कीर्णादेशः अल्लोपः अपिपूर्व्वात् धाञोगोध्वं भा दीरेदिः खेर्द्दलं आङ्गोरित्यालोप. अभाक्तयेति खेर्द्दस्य धत्वं अ अमोरिति मूत्रधातोर्द्दलं वातोऽवाप्योरिति पच्चे अपेरतोलुक् ॥ ६९ ॥

अज्यावती निरुद्धाचान् विद्येवानुष्ठितक्रियान्।
निरचिक्रमदिच्छातोवानरांश्चंक्रमावतः॥ ७० ॥

अज्येत्यादि। सा अज्यावती प्रशस्तगमनवती अजयञोर्भावे जं०म० क्यप् प्रशंसायां मतुप् वानरान्निरुद्धाचान् निरचिक्रमत् निष्का सितवती क्रमेर्ण्यन्तस्य लुङि सन्वल्लघुनीति सन्वद्भावात् सन्यत इतोत्वं दीर्घोलघोरिति न दीर्घत्वं संयोगपरस्य गुरुत्वात् अनु ष्ठितक्रियानाचरिततदुपदिष्टव्यापारान् क्रञः शश्चेति शः सार्व्व धातुकेयक् रिङादेशस्य चङ्क्रमावतः कुटिलगतिमतः अःप्रत्य यादित्यकारः इच्छातइति वानराणामिच्छायाः इच्छेति निपा तितं इषेः शप्रयः क्रभावश्च निपात्यते विद्यासंज्ञायामिति क्यप् यथा विद्या अनुष्ठितक्रियान् कृतपुरश्चरणान् पुरुषानिच्छातोऽभी ष्टं सम्पादयति तद्वत्तेति ॥ ७० ॥

अज्येत्यादि। सा अज्यावती प्रशस्तगतिमती वानरानिच्छातो भ० निरचिक्रमत् निष्क्रामयामास यथा विद्या तत्त्वज्ञानं इच्छातः अनुष्ठितक्रियान् विहितध्यानधारणादीन् संसारान्निष्क्रामयति तद्वत् वानरानपि अनुष्ठितक्रियान् आचरिततदुपदिष्टव्यापा रान् यतोनिरुद्धाचान् आच्छादितहशः सक्थ्यक्ष्णःषःस्वाङ्ग इति षः पच्चे जितेन्द्रियान् अचशब्दइन्द्रियवचनः चंक्रमावतः

अन्धकारे कुटिलगतियुक्तान् पक्षे तीर्थादिचंक्रमणकारिणः व्रज गतौ श्रीव्रजयजविदेत्यादिना क्यप् ततोऽस्त्यर्थे प्रशंसायां वतुः विद ज्ञाने पूर्ववत् क्यप् क्रियतइति क्रिया कुःशस्येति शः श्वदिः श्नुध्वोरितीयः क्रमेर्य्यन्तात् त्रिश्रिद्रुसुइत्यङ् खेःसन्वत् ख्यस्येत् खःस्येरिति गुरुत्वान्न दीर्घः इषुइच्छायां तुलेत्यादिना निपातः क्रमेर्यङन्तात् शंस्यादः यङोलुक् ततोवतुः ॥ ७० ॥

निष्क्रम्य शिक्षया तस्यास्त्रपावन्तो रसातलात्। ज्ञात्वा मासमतिक्रान्तं व्यथामवललम्बिरे॥ ७१ ॥

ज०भ० निष्क्रम्येत्यादि। तस्याः शिक्षया उपदेशेन गुरोश्चहलइत्यकारः तस्माद्रसातलान्निष्क्रम्य निर्गम्य त्रपावन्तः स्त्रिया उपदेशेन निष्क्रान्तावयमिति त्रपेति षिद्भिदादिभ्योऽङ् मासमतिक्रान्तं ज्ञात्वा बहिर्निर्गताः सन्तः व्यथां भयं भिदादित्वादङ् अवललम्बिरे वयं मासावधिना प्रेषिताः स च मासोविलेव कार्य्येणाति क्रान्तइति स्वामिनोभयं ॥ ७१ ॥

भ० निष्क्रेत्यादि। तस्याः स्वयम्प्रभायाः शिक्षया उपदेशेन रसातलात् निष्क्रम्य स्वयं निष्क्रमाशक्त्या त्रपावन्तोलज्जायुक्ताः सन्तः राज्ञा अवधित्वेन निश्चितं मासं अतिक्रान्तं ज्ञात्वा ते व्यथां राज्ञः सकाशाद्भयं अवललम्बिरे प्रापुः शिक्षः समक्रात्मरोरिति अप्रत्ययः त्रपूषलज्जायां पित्वात् भीषिचिन्तिपूजीत्यादिना ङः व्यथषभङ्दुःखेचालेभये घटादित्वात् पूर्व्वेण ङः यद्यपि कविकल्पद्रुमे घटादेः षानुबन्धत्वं दृश्यते तथापि पूर्व्वाचार्य्यक्रमदर्श

मात् मुग्धबोधस्य कविकल्पद्रुमात् प्राक् क्ततेन भीषिचिन्ती त्यादौ आत्वर्घटादेरित्यस्य न वैयर्थ्यं ह्रुआमिति पाठे तेनैव भिदादित्वात् ङः॥ ७१॥

चिन्तावन्तः कथाश्चक्रुरुपधाभेदभीरवः। अकृत्वा नृपतेः कार्य्यं पूजां लप्स्यामहे कथं॥ ७२॥

चिन्तेत्यादि। उपधानमुपधा परीक्षा आतश्चोपसर्गे इत्यङ् ज०भ० तत्परिगृह्यैव हि भृत्यः कार्य्येषु नियुज्यते तदकरणादुपधाया भेदोऽभावः तस्माद्भीरवः चिन्तावन्त इति कर्त्तव्यतामूढाः कथां चक्रुः कृतवन्तः कीदृशमित्याह अकृत्वा नृपतेः कार्य्यं पूजां लप्स्यामहे कथमिति नैवेत्यर्थः चिन्तादयः चिन्तिपूजीत्यादिना अङन्ताः॥ ७२॥

चिन्तेत्यादि। नृपतेः कार्य्यं अकृत्वा कथं वयं पूजां लप्स्यामहे भ० अपि तु अवज्ञाताएव भविष्यामइति कथां ते चक्रुः कीदृशाः उपधाभेदभीरवः राज्ञा धर्म्मादिभिर्भृत्यानां या परीक्षा क्रियते सोपधा तस्याभेदः कार्य्यासामर्थ्येन भङ्गः तद्भीरवः अतएव चिन्तावन्तः चिन्तिकथिपूजिभ्योभीषिचिन्तीत्यादिना ङः उपपूर्व्वात् धाञआतोऽन्तः अङैरिति ङः उपधाधर्म्माद्यैर्यत्परीक्षणमित्यमरः॥ ७२॥

प्रायोपासनया शान्तिं मन्वानोवालिसम्भवः। युक्त्वा योगं स्थितः शैले विवृण्वंश्चित्तवेदनां॥ ७३॥

ज०म० प्रायइत्यादि। उपासनेति आसअन्नोयुच् प्रायेण उपवासे नोपासना अनशनेनासनमित्यर्थः तया शान्तिं कल्याणं मन्वानो ऽवगच्छन् उपायान्तराभावात वालिसम्भवो ऽङ्गदः योगश्चित्त वृत्तिनिरोधः तं युक्त्वा संबध्य शैले स्थितः वित्तवेदनां चित्तपीडां विवृण्वन् घट्टिविदिवन्दिभ्योयुम्वक्तव्यइति युच्॥ ७३॥

भ० प्रायइत्यादि। वालिसम्भवो ऽङ्गदोयोगं चित्तवृत्तिनिरोधं युक्त्वा आत्मना सह संबध्य शैले स्थितः किं कुर्व्वन् प्रायेण उप वासेन उपासनया स्थित्या तस्य सेवया वा तदाचरणरूपया शान्तिं कल्याणं मरणं वा मन्वानः मन्यमानः प्रायश्चानशने मृत्यौ तुल्यवाक्ल्ययोरपि। शान्तिः शमे ऽपि कल्याणे इति च विश्वः ञिलासङ्गउपवेशे उपपूर्व्वो ऽयं सेवायामपि ण्यासश्रन्थिघ न्योत्यादिना अनः चित्तवेदनां मनःपीडां विवृण्वन् प्रकाशयन् विदेः पूर्व्वेण अनः॥ ७३॥

प्रस्कन्दिकामिव प्राप्तोध्यात्वा ब्रूते स्म जाम्ववान्।
धिक् शालभञ्जिकाप्रख्यान् विषयान् कल्पनारुचीन्
॥ ७४॥

ज०म० प्रस्केत्यादि। त्वया का क्रिया कर्त्तव्येत्यन्यैः पृष्टः सन् जाम्ब वान् ध्यात्वा विचिन्त्य ब्रूते स्म प्रस्कन्दिकामिव रोगविशेषमिव प्राप्तोयातः उत्साहाभावात् रोगाख्यायांण्वुल्बहुलं शालभञ्जि का क्रीडाविशेषः संज्ञायामिति ण्वुल् नित्यंक्रीडेत्यादिना सः तत्प्रख्याविषयारूपादयः अतितुच्छत्वात् अतस्तान् धिक् किन्तु कल्पनारुचीन् कल्पनीयान्॥ ७४॥

प्रस्कैत्यादि। त्वया किं कार्य्यमित्यन्यैः पृष्टोजाम्बवान् चपप तिर्थ्यात्वा ब्रूते स्म उक्तवान् प्रस्कन्दिकां चयरोगं प्राप्तइव उत्सा हाभावात् स्कन्दिरशोषणेगत्यां नाम्न्यत्रेतिककेति रोगार्थे एकः स्त्रीत्वमभिधानात् काप्यनाशीरिति अतइत्वं किं ब्रूते स्म इत्याह विषयान् रूपादीन् धिक् यतः शालभञ्जिका नागरक्रीडाविशेष स्तत्तुल्यान् भञ्जोधीमोटने प्रस्कन्दिकावत् संज्ञायां एकः तुल्यत्व माह कल्पनया विकल्पवशेन पचे स्वयं रचनया रुचिरभिलाषो यत्र तान् एतेन सर्व्वेषां काल्पनिकत्वमिति वेदान्तमतं दर्शितं रूपैर्म्यंत्वात् जीविषन्तीति अनः रूपः कूपः॥ ७४॥ भ०

यां कारिं राजपुत्रोऽयमनुतिष्ठति तां क्रियां। अह मप्यनुतिष्ठामि सोऽप्युक्त्वैवमुपाविशत्॥ ७५॥

यामित्यादि। अयं राजपुत्रोऽङ्गदोयाङ्कारिं क्रियामनुतिष्ठ ति तां क्रियां अहमप्यनुतिष्ठामि विभाषाख्यानपरिप्रश्नयोरिञ्चे ति करोतेरिञ् पचे कञःशचेति शः सोऽप्येवमुक्त्वा उपाविशत् अनशनेन स्थितः॥ ७५॥ ज०म०

यांकेत्यादि। विषयाणां काल्पनिकत्वेन जीवनं विफलमिति यां कारिं क्रियां अयं राजपुत्रोऽङ्गदोऽनुतिष्ठति करोति अह मपि तां क्रियां प्रायोपाशनां अनुतिष्ठामि इत्युक्त्वा सोऽपि जाम्ब वान् उपाविशत् अनशने स्थितः कञः प्रश्नाख्याने निरिति निः॥ ७५॥ भ०

उवाच मारुतिर्वृद्धे संन्यासिन्यत्र वानरान्। अहं पर्य्यायसंप्राप्तां कुर्व्वे प्रायोपवेशिकां॥ ७६॥

ज०म० उवाचेत्यादि। मारुतिर्वानरानुवाच वृद्धे जाम्बवति संन्यासिनि अनशनवति अहमप्यत्र शैले पर्य्यायेण परिपाट्या सम्प्राप्तां प्रायोपवेशिकां अनशनं कुर्व्वे पर्य्यायार्हेत्यादिना ण्वुल्॥ ७६॥

भ० उवाचेत्यादि। मारुतिर्हनूमान वानरान् उवाच किमुवाचेत्याह अत्र जाम्बवति वृद्धे संन्यासिनि त्यक्ताहारे सति अहमपि पर्य्यायेण क्रमेण प्राप्तां प्रायेण उपवासेन उपवेशिकां स्थितिं कुर्व्वे प्रायः स्याद्भोजनत्यागः सन्न्यासोऽनशनं स्मृतमिति हलायुधः उपपूर्व्वाद्विशः पर्य्यायेणकइति परः स्वमते न्यभावेत्यादौ स्त्र्यणकइत्यनेन स्त्रियां भावे णकः स्यादिति ज्ञापितं॥ ७६॥

अभावे भवतां योऽस्मिन् जीवेत्तस्यास्त्वजीवनिः। इत्युक्ता सर्व्वएवास्थुर्व्वध्वा योगासनानि ते॥ ७७॥

ज०म० अभावइत्यादि। अभावे विनाशे भवतां योऽस्मिन् लोके जीवेत् तस्यास्त्वजीवनिः धिग्जीवितं आक्रोशे नञ्यनिः एवमुक्ता सर्व्वएव अस्थुः स्थिताः तिष्ठतेर्गातिस्थेति सिचोलुक् वध्वा योगासनानि विरचय्य पद्मासनादीनि॥ ७७॥

भ० अभावइत्यादि। भवतामभावे विनाशेऽस्मिन् लोके योजीवेत् तस्याजीवनिर्मरणं धिग्जीवनं वास्तु नञोन्याक्रोशेस्तीति अनिः इत्युक्ता सर्व्वएव ते वानरायोगासनानि पद्मासनानि वद्धा अस्थुः स्थिताः तिष्ठतेर्घ्रा भूस्थेति सलुक् अनउस् उसिपीत्या लोपः॥ ७७॥

अक्लेश्यमसिनाऽगन्यन्तं कबन्धवधमभ्यधुः। धिङ्नः प्रपतनं घोरं क्लेदान्तत्वमनाथवत्॥ ७८॥

अक्लेत्यादि। इतः स्त्रीलिङ्गभावं निवर्त्य क्लदादाक्रियते। ज०म० कबन्धवधं योजनवाहोर्वधमभ्यधुः अभिहितवन्तः अभिपूर्वो धा ञभिधाने वर्त्तते कीदृशं अक्लेश्यं प्रयासरहितं कस्मात् असिना सुखमरणात् तस्मान्न्यन्तं अन्ते तस्याग्निरभूत् अस्माकं धिक् प्रपतनं विनाशं दुःखेन घोरत्वात् क्लेदान्तत्वं अन्ते पूतीभावन्त यत्रास्ति अर्श आदित्वादच् अनाथवत् अनाथानामिव अक्लेश्य प्रपतनशब्दौ भावसाधनौ क्यप्ल्युटौ वक्तव्यमिति॥ ७८॥

स्त्रीलिङ्गक्लदधिकारं निवर्त्य क्लदुच्यते। अक्लेश्यमित्यादि भ० ते कबन्धस्य योजनबाह्वोर्वधं मरणं अभ्यधुः उक्तवन्तः अभिपूर्व धाञश्चां रूपं अस्थुरितिवत् कीदृशं असिना अक्लेश्यं क्लेशाजनकं खड्गेन शीघ्रहननात् नातिदुःखदमित्यर्थः अग्न्यन्तं दाहेन अग्निर न्तोऽवसानं यत्र अतएव परकालेऽपि न दुःखदमिति भावः अना थवत् नाथरहितानामिव नोऽस्माकं प्रपतनं मरणं धिक् इत्यप्य भ्यधुरिति सम्बन्धः यतो घोरं उपवासदुःखवाहुल्यात् क्लेदान्तत्वं दाहाभावात् क्लेद एवान्ते यस्य तस्य भावः क्लेदान्तत्वं तद्विद्यते ऽस्येति अर्श आदित्वादः क्लेदस्यान्तत्वं यत्रेति वा क्लेदमन्त भूतं त्वचति संवृणोतीति गमादित्वाड्डुः इति वा अस्माकं प्रप तनं क्लेदान्तत्वश्चेत्युभयं धिक् घोरत्वादिह परत्र चेति केचित् न क्लिश्नातीत्यक्लेश्यः स्वस्थावोरिति डभावविहितोऽप्यण् कृद्धोःक भावइत्युक्तेरत्र कर्त्तरि स्यात् यदा क्लेशं क्लेशः भावे घञ् न वि

यते क्लेश्यं यत्रेति विग्रहः प्रपतनमिति भावे घञलनटोऽघे इत्य नट्॥ ७८॥

ततोमन्दगतः पक्षी तेषां प्रायोपवेशनं। अशनीय मिवाशंसुर्म्महानायादशोभनः॥ ७९॥

ज०म० ततइत्यादि। ततोऽभिहितानन्तरं महान् पक्षी सम्पातिनामा जटायुभ्राता आयात् आगतः मन्दगतोमन्दगमनः नपुंसके भावे क्तः आहिताग्निवात्परनिपातः तेषां यत्प्रायोपवेशनं तदशनीय मिव भोजनीयमिव कृत्य ल्युटोवहुलमिति कृत्यः आशंसुः आशंस नशीलः अशोभनः शोभारहितः दावाग्निना सृष्टशरीरत्वात् ल्युडि ति भावे ल्युट् कर्म्मणि च येनेत्येतत्परिहृत्योदाहृतत्वात्॥ ७८॥

भ० ततइत्यादि। तदनन्तरं महान् पक्षी सम्पातिनामा तत्रा यात् आगतः यातेर्ल्यां रूपं कीदृशः मन्दगतः मन्दं गतं गमनं यस्य गमेर्भावे क्तः येषां वानराणां यत्प्रायोपवेशनं तत् अशनीय मिव स्वभक्ष्यमिव तृप्तिजनकत्वात् आशंसुः आशंसनशीलः भावे ऽसट् अनीयस्य कृत्ोःकभावइत्युक्तेः करणे वानीयः तदा अशनीयं भोजनसाधनं अशोभनः शोभारहितः सूर्य्यतेजसा दग्धपक्षत्वात् नन्द्यादित्वात्कर्त्तरि अनः न विद्यते शोभनं यस्ये ति वा भावेऽनट॥ ७८॥

देहप्रश्नतुण्डाग्रं तं विलोक्याशुभाकरं। पापगो चरमात्मानमशोचन् वानरामुहुः॥ ८०॥

देहेत्यादि। वृश्च्यते येन तुण्डाग्रेण करणाधिकरणयोश्चेति करणे ल्युट् देहस्य व्रश्चनमिति कृद्योगात् षष्ठी देहव्रश्चनं तुण्डाग्रं यस्य तं विलोक्य वानरा अशुभाकरं पापस्योत्पत्तिस्थानं आकर इवाकरः पुंसि संज्ञायां घः तत्र हि करणाधिकरणयोरिति वर्त्तते एवं उत्तरत्रापि चात्मानं पापगोचरं पापविषयं पापविषये पतितावयमिति मुहुरग्रोचन् ग्रोचितवन्तः गोचर सञ्चरेत्यधिकरणे निपातितः ॥ ८० ॥ ज०म०

देहेत्यादि। तं पक्षिणं विलोक्य वानराः पापगोचरं पापविषयमात्मानं मुहुर्व्वारं वा[illegible]अग्रोचन् पापविषयोमदात्मेति सर्व्वे ऊचुरित्यर्थः कीदृशं पक्षिणं देहव्रश्चनतुण्डाग्रं वृश्चति अनेनेति व्रश्चनं करणेऽनट् देहस्य व्रश्चनं तुण्डाग्रं यस्य तं यद्वा देहं वृश्चति छिनत्तीति देहव्रश्चनं कभावेऽमी इति वचनात् कर्त्तरि अनट् नन्द्यादित्वाद्वा अनः अशुभाकरं अशुभस्य पापस्य आकरमुत्पत्तिस्थानं आकुर्व्वन्त्यस्मिन्निति संज्ञायामल् गावश्चरन्त्यस्मिन्निति गोचरोऽलन्तः स्वभावात् प्रत्यासन्नवाची ॥ ८० ॥ भ०

जटायुः पुण्यकृत्पक्षी दण्डकारण्यसञ्चरः। कृत्वा राघवकार्य्यं यः स्वरारूढोऽग्निसंस्कृतः ॥ ८१ ॥

जटेत्यादि। कृत्वा राघवकार्य्यं अग्निसंस्कृतः अग्निना कृतसंस्कारः स्वः स्वर्गमारूढः जटायुः पुण्यकृत् संचरत्यस्मिन्निति संचरः पूर्व्ववत् निपातितः दण्डकारण्यं संचरोऽवस्थानं यस्येति ॥ ८१ ॥ ज०म०

भ० जटेत्यादि। जटायुः पक्षी पुण्यकृत् पुण्यं कृतवान् चामुचिति क्विप् स्वस्थतम् कीदृशः दण्डकारण्यं मध्वरः स्थानं यस्य सतथा मध्वरत्यस्मिन्नित्याधारेऽच् योराघवकार्य्यं सीताहरणविज्ञाप नादिकं कृत्वा अग्निना संस्कृतः कृतसंस्कारः सन् स्वः स्वर्गमारूढः गत्यर्थाद्रेत्यादिना रुहेः कर्त्तरि क्तः होढः ढभादिति धः ष्टुभि रिति ढः ढोढ़ेति ढलुक् दीर्घश्च॥ ८१॥

नरकस्यावतारोऽयं प्रत्यञ्चोऽस्माकमागतः। अचे
ष्टायदिहान्यायादनेनात्स्यामहे वयं॥ ८२॥

ज०म० नरेत्यादि। अवतीर्य्यते येन कर्म्मणेति अवेस्तृस्त्रोर्घञ् सएवायं नरकस्यावतारः प्रत्यञ्चोऽस्माकमागतः यद्यस्मादयमचेष्टाः निश्चलाः अनेन पक्षिणा अन्यायादयुक्त्या नीयते अनेनेति निपूर्व्वा दिणः अध्यायन्यायेति निपातनात् घञ् अत्स्यामहे भक्षयिष्यामहे कर्म्मणि ऌट्॥ ८२॥

भ० नरेत्यादि। नरकमवतरति येनाधर्म्मेण सएव प्रत्यञ्चदृश्यमानोऽयं पक्षिरूपोऽस्माकमागतः रूपकालङ्कारोवा पक्षिविशेषणं वा अवपूर्व्वात्तरतेः करणे घञ् नरकस्येति कर्म्मणि षष्ठी यद्यस्मात् इह प्रदेशे अनेन पक्षिणा अन्यायादनौचित्याद्युक्त्या वा वयमत्स्यामहे भक्षणीयाः यतोऽचेष्टाश्चेष्टारहिताः नीयतेऽनेनेति न्यायः निपूर्व्वादिणः करणे घञ् अदःकर्म्मणि तौ॥ ८२॥

हृदयोदङ्कसंस्थानं कृतान्तानायसन्निभं
खनतुण्डाग्रं प्राप्यामुं शर्म्म दुर्लभं ॥ ८३ ॥

हृदेत्यादि। अमुं पक्षिणं प्राप्य कीदृशं हृदयोदङ्कसंस्थानं ज०म०
उदञ्चते आकृष्यते अनेनेति उत्पूर्व्वादञ्चतेरुदङ्कोदकइति
घञ् निपात्यते हृदयस्योदङ्कः संदंशः तत्संस्थानं तत्सदृशं कृता
न्तानायसन्निभं यमजालतुल्यं तत्प्रविष्टस्य दुःखेन निर्गमत्वात्
जालमानायइति नयतेराङ्पूर्व्वात्करणे घञ् निपात्यते आख
न्यते येन तुण्डाग्रेण खनोघच् शरीरस्याखनं तादृक् तुण्डाग्रं
यस्येति प्राप्य शर्म्म सुखं दुर्लभं कृच्छ्रलभ्यं ईषदित्यादिना खल्
अत्र करणाधिकरणयोश्चेति निवृत्तं तयोरेव कृत्यक्तखलर्था
इति योज्यं उपसर्गात् खलघञोरिति प्राप्तस्य नुमः नसुदुर्भ्या
मिति प्रतिषेधः ॥ ८३ ॥

हृदेत्यादि। अमुं पक्षिणं प्राप्य अस्माकं शर्म्म सुखं दुर्लभं दुः भ०
खेन लभ्यतइति ईषद्दुःसुष्विति खल् अमुं कीदृशं हृदयोदङ्कसं
स्थानं हृदयमुदच्यते ऊर्द्ध्वमाकृष्यते येन तादृशं संस्थानमाकृति
र्यस्य तं ऊर्द्ध्वहृदयाकृतिमित्यर्थः हृदयोद्वेजकाकृतिमिति वा
उत्पूर्व्वादञ्चतेः करणे घञ् चजोः कगाविति कत्वं गत्यर्थस्याञ्चतेः
शेमकत्वाभावात् अञ्चधातोरूपमित्यन्ये कृतान्तानायसन्निभं यम
जालसदृशं जाले प्रविष्टस्य दुःखेन निर्गमइति भावः आनीयते
ऽनेनेति आनायोजालं करणे घञ् आनायः पुंसि जालं स्यादित्य
मरः शरीराखनतुण्डाग्रं आखन्यते समन्ताद्विदार्य्यते येन त
दाखनं करणेऽल् शरीरस्याखनं तुण्डाग्रं यस्य तं आखरेति
पाठे खनोडडरेति डरः ॥ ८३ ॥

ईषदाढ्यङ्करोऽप्येष न परत्राशुभक्रियः। अस्मान
त्तुमितोऽभ्येति परिग्लानो बुभुक्षया॥ ८४॥

ज०म० ईषदित्यादि। य एष अस्मानत्तुमितः प्रदेशादभ्येति आगच्छति सपरत्र परलोके ईषदाढ्यङ्करोऽपि अनाढ्यैरीषदाढ्योऽपि न कृतः अशुभेन कर्म्मणेत्यर्थात कर्त्तृकर्म्मणोश्च भूकृञोरिति च्व्यर्थे कर्म्मोपपदात्करोतेः खल् यतः परिग्लानोबुभुक्षया यो हि कर्म्मणाशुभेन ईषदाढ्यङ्करोऽपि न कृतः स कथं न बुभुक्षया पीड्यते परिग्लायतीति कर्त्तरि बहुलवचनात् ल्युट् निष्ठान्तोवा संयोगादेरित्यादिना निष्ठानत्वं अशुभक्रियः सत्वङ्गाशाभिर मत्वात्॥ ८४ ॥

भ० ईषदित्यादि। एषपक्षी बुभुक्षया परिग्लानः सन् अत्तुं भक्षयितुं इह प्रदेशे अभ्येति आभिमुख्येनागच्छति इतइति पाठे स्वस्थानादित्यर्थः न एष परत्र परलोके ईषदाढ्यङ्करोऽपि भविष्यति अनाढ्योऽयमीषदाढ्योऽपि न करिष्यते केनचित् कर्म्मणेत्यर्थः किम्वा यस्मात् परलोक ईषदाढ्योऽपि न कृतः शुभकर्म्मणार्थात् तेनायं बुभुक्षया ग्लानः परलोके शुभकर्म्मणा यद्याढ्यः कृतः स्यात् तदा बुभुक्षया न पीडितः स्यादित्यर्थः ईषद्दुःसुषुरिति खल् खित्करणेन कर्त्तृकर्म्मणोर्च्व्यर्थविधानमपि प्राप्तं तच्च ईषदाढ्यम्भवमित्युदाहरणेन स्वीकृतं करोतेरिहाभूतप्रादुर्भावार्थत्वात् च्व्यर्थोलभ्यते परे तु सुदुरीषद्भ्यः कर्त्तृकर्म्मभ्यामभूततद्भावे भूकृञःखलभावकर्म्मणोरित्याहुः अशुभक्रियः अशुभकर्म्मा परद्रोहित्वात् परिग्लानइति कर्म्मकर्त्तर्यनट् किम्वा गत्यर्थाकर्म्मकेत्यादिना

कर्त्तरि क्तः सुक्लाद्योदित्यादिना मलं इत्येवमोचन् वानरा मुरुरित्यन्वयः ॥ ८४ ॥

संप्राप्य वानरान् पक्षी जगाद मधुरं वचः। के यूयं दुरुपस्थाने मनसाप्यद्रिमूर्द्धनि ॥ ८५ ॥

इति क्रदधिकारः।

संप्रेत्यादि। वानरान् संप्राप्य पक्षी जगाद गदितवान् के यूयं अद्रिमूर्द्धनि पर्व्वतशिरसि दुरुपस्थाने दुःखेनोपस्थातुं शक्ये मनसापि किं पुनः शरीरेण आतो युच् तत्रापि ईषदादयोऽनुवर्त्तन्ते कर्तृकर्म्मणोरिति न स्मर्य्यते। इति कृदधिकारः॥ ८५ ॥ ज०म०

संप्राप्येत्यादि। वानरान् संप्राप्य पक्षी मधुरं वचोजगाद भ० किन्तदित्याह के यूयमद्रिमूर्द्धनि पर्व्वतशिखरे स्थिताः मनसापि दुरुपस्थाने दुःखेनैवोपस्थातुं शक्ये किं पुनः शरीरेण आते ऽोऽ इरिद्रइति क्तनः। इति कृदधिकारः॥ ८५ ॥

आत्मनः परिदेवध्वे कुर्व्वन्तोरामसंकथां। समानो दर्य्यमस्माकं जटायुञ्च स्तुथादरात्॥ ८६ ॥

इतः प्रकीर्णकश्लोकानाह। आत्मेत्यादि आत्मनः परिदेवध्वे ज०म० शोचथ तेन्टदेन्टदेवनइति भौवादिकः शपि मसंयोगादमन्नादि त्यलोपेन भवति जटायुञ्च समानोदर्य्यं भ्रातरमस्माकं समा नोदरे शयितइति यत् आदरात्प्रस्तुथ प्रस्तुतिं कुरुथ जटायुः

पुष्पहरित्यादिना रामसत्कथाञ्च कुर्व्वन्तः अतः के यूयमिति ॥ ८६ ॥

भ० अथ प्रकीर्णकाः। आत्मेत्यादि। यूयं आत्मनः परिदेवध्वं विलपथ देवृङ् देवने रामस्य संकथां कुर्व्वन्तोऽस्माकं समाना दर्य्यं सहोदरं जटायुञ्च आदरेण स्तुथ जटायुः पुष्पहरित्यादिना तत्स्तुतिं कुरुथ अतः के यूयमिति पूर्व्वेणान्वयः समानः समानोदरे शयितइत्यर्थे ढघेकादिति यः रूपनामेति विकल्पविधानात् न समानस्य सादेशः ॥ ८६ ॥

शङ्काधवित्रवचनं प्रत्यूचुर्व्वानराः खगं। वयं शत्रुलवित्रेषोर्दूतारामस्य भूपतेः ॥ ८७ ॥

ज०म० शंकेत्यादि। धुनोत्यपनयत्यनेनेति धवित्रं अर्त्तिलूधूइत्यादिना करणे इत्रः किमयं करिष्यतीति शङ्कया धवित्रं वचनं यस्य तं खगं वानराः प्रत्यूचुः शत्रुलवित्रादिषवोबाणायस्य रामस्य भूपतेस्तस्य वयं दूताः पूर्व्ववदित्रं कृत्वा सः ॥ ८७ ॥

भ० शङ्केत्यादि। वानराः खगं प्रत्यूचुः कीदृशं किमयं खगः करिष्यति इत्येवंरूपायाः शङ्कायाधवित्रं अपनयनकारकं वचनं यस्य तादृशं किमित्याह वयं रामस्य भूपतेर्दूताः कीदृशस्य शत्रूणां लवित्राश्छेदकरणानि इषवोयस्य धूञ्कम्पने लूञ्छेदने आभ्यां लूधूखनेति करणे इत्रः ॥ ८७ ॥

केनापि दौष्कुलेयेन कुन्यां माहाकुलीं प्रियां। हृतां माहाकुलीनस्य तस्य लिप्सामहे वयं ॥ ८८ ॥

केनेत्यादि। तस्य रामस्य प्रियां केनापि दौष्कुलेयेन हृतां जं०
दुष्कुलस्यापत्यमिति दुष्कुलाड्ढञ् कुल्यां कुले साध्वीं तत्र साधु
रिति यत् माहाकुलीं माहाकुलीनस्येति महाकुलस्यापत्यमिति
महाकुलादञ्खञाविति अञ्खञौ लिप्सामहे वयं लब्धुमिच्छा
महे ॥। ८८ ॥

केनेत्यादि। तस्य रामस्य प्रियां वयं निप्सामहे लब्धुमि भ०
च्छामः लभेः सनिमिमीत्यादिना इस् खिलोपश्च स्यादेरिति
सोलोपः झपष्मसोरिति पत्वं प्रियां कीदृशीं केनापि दौष्कुलेयेन
दुष्कुलोत्पन्नेन हृतां दुष्कुलशब्दात् अत्र्यादित्वात् ण्यः निष्प
तन्त्यदतिवत् मूर्द्धन्यः कुल्यां कुले साध्वीं ढघेकादिति यः माहा
कुलीं महाकुलात् जनकात् जातां वाक्याद्यतदति श्रिवादित्वात्
ष्णः तस्य कीदृशस्य महाकुलीनस्य महाकुलोत्पन्नस्य परमते
महाकुलादपत्यार्थे षीनः ततः श्रिवादित्वात्ष्णः किम्बा महा
कुलाद्वशरथाज्जातइत्यर्थे ढघेकादिति षीनः ॥ ८८ ॥

त्रिंशत्तममहर्यातं मत्वा प्रत्यागमावधिं। अकृ
तार्थाविषीदन्तः परलोकमुपास्महे ॥ ८९ ॥

त्रिंशदित्यादि। त्रिंशतः पूरणं विंशत्यादिभ्यइति तमट् त्रिंश जं०
त्तमं यदहः तत्प्रत्यागमावधिं प्रत्यागमनस्यावधिं यातं अतीतं
मत्वा अकृतार्था अनिष्पादितप्रयोजना विषीदन्तो विषादं गच्छन्तो
वयं परलोकमुपास्महे प्रायोपवेशनेन म्रियामहे ॥ ८९ ॥

भ० चिंशदित्यादि। राज्ञा अस्माकं प्रत्यागमनस्यावधित्वेन नि श्चितं चिंशतः पूरणं दिनं यातं गतं मत्वा वयं अस्मनार्थाअनिष्पा दितस्वप्रयोजनाः सन्तः विषीदन्तोविषादं कुर्व्वन्तः प्रायोपवेश नया परलोकं उपास्महे गन्तुमिच्छामः चिंशच्छब्दात् विंशत्या देर्व्वेति तमट्॥ ८९ ॥

म्रियामहे न गच्छामः कौशल्यायनिवल्लभां। उप लभ्यामपश्यन्तः कौमारीं पततां वर॥ ९०॥

एते प्रकीर्णकाः।

ज०भ० म्रियेत्यादि। हे पततां पक्षिणां वर म्रियामहे न गच्छामः कौमारीं अकृतपूर्व्वदारपतिं लब्धवतीं कौमारापूर्व्ववचनइति माधः कौशल्यायनिवल्लभां कौशल्याया अपत्यं कौशल्यायनी रामः कौशल्यकार्म्मार्य्याभ्यां चेति फिञ् फस्यायनादेशः तस्य वल्लभां दृष्टां उपलभ्यां प्रशस्तां पोरदुपधादिति यत् उपात्प्रशंसा यामिति यत्प्रत्यये नुम् अपश्यन्तोऽनुपलभमानाः। एते प्रकी र्णकाः ॥ ९०॥

भ० म्रियेत्यादि। हे पततां वर पक्षिणां श्रेष्ठ वयं म्रियामहे न तु गच्छामः अर्थात् प्रभुपार्श्वे यतः कौशल्यायनिवल्लभां रामप्रियां अपश्यन्तः कौशल्याया अपत्यमिति नडादित्वात् फायनः ततः स्वार्थेष्णिः कीदृशीं उपलभ्यां स्तुत्यां पूज्यकमहेति यः उपात्स्तुता विति नुम् कौमारीं जितकार्त्तिकेयभार्य्यां अतिरूपवतीमित्यर्थः कुमारस्य कार्त्तिकेयस्य पत्नी कुमारी पत्न्यामपालकान्तादिति ङीप् स्कन्दोमन्दमतिर्व्विवाहविमुखोधत्तेकुमारव्रतमिति काल्प

निकं मतु प्रकृतं देवसेना नामेन्द्रकन्या कार्त्तिकेयस्य पत्नी प्रसिद्धा तथाहि शतक्रतोरूपवती देवसेनेति वै सुता। सा महेन्द्रेण रत्यर्थं भार्य्यार्थे नोपपादितेति स्कन्दपुराणीयं वचनममरढीकायां मधुमाधवेन धृतं अयोपयन्त्रा महासेन युक्तां स्कन्देन साक्षादिव देवसेनामिति कालिदासः कुमारीं जयतीति ढघेकादिति ण्यः पित्तेभिः ययोर्लोपः पित्वाद्दीप् किम्वा कौ पृथिव्यां मारीं माया लक्ष्म्या रोर्गतिर्यस्यां लक्ष्मीरूपामित्यर्थः एतेनाद्दरातिशयउक्तः मा लक्ष्मीश्च प्रकीर्त्तिता घने रा रोर्गतिः ख्याता रोदने च प्रकीर्त्तिता इति चैकाक्षरकोषः वक्रप्रेयसी इत्युदाहरणा घृतःक इत्यस्य व्यभिचारोदर्शितः तेनात्र काभावः किम्वा कुमारएव कौमारः स्वार्थे ष्णः कौमारस्य भार्य्यां रामस्य प्रथमपत्नीमित्यर्थः एतेनाप्यादरातिशयउक्तः अन्ये तु कुमारात् प्रथमपत्न्यां ष्णइत्याहुः स्वमतेऽपि प्रथमपत्नीत्वमर्थाद्गम्यते तथाहि कुमार शब्देन अकृतदारपरिग्रहउच्यते तदूढात्वेन प्रथमपत्नीत्वं। एते प्रकीर्णकाः॥ ९०॥

जगाद वानरान् पक्षी नाध्यगीढ्वं ध्रुवं स्मृतीः। यूयं सङ्कुटितुं यस्मात् कालेऽस्मिन्नध्यवस्यथ॥ ९१॥

इतः ङिन्तिशेषमधिकृत्याह जगेत्यादि। ध्रुवं अवश्यं स्मृतिं अ०म० स्मृतिशास्त्रं नाध्यगीढ्वं नाधीतवन्तइति पक्षी वानरान् जगाद विभाषालुङ्लृङोरिति विभाषागाङादेशः गाङ्कुटादिभ्य

इति सिचोऽङित्त्वं घुमास्थेतीत्वं धिर्व्वति सिचो लोप इण:षीढ्ढ मिति मूर्द्धन्य: यस्माद्यूयमस्मिन् काले संकुटितुं अवमातुमध्य वस्यथ अभिप्रायं कुरुथ कुटादित्वात् ङित्त्वं ॥ ८१ ॥

भ० अथ किदतिदेशाधिकार:। पाणिनिमते कुटादिसूत्रममहे: कानुबन्धत्वातिदेशात् स्वमते त्वगुणाधिकार:। जगेत्यादि। सपचो वानरान् जगाद किमित्याह ध्रुवं निश्चितं उत्प्रेक्षे वा यूयं स्मृतीर्धर्म्मसंहितानाध्यगीढ्वं नाधीतवन्त: इङश्चाध्वं गीङ्ष्ठी घ्योर्व्वेति गीरादेश: धत्वान्न ण: धेसलोपावेति सलुक् टोठी ढोधोढीति धस्य ढ: यस्मादस्मिन् काले संकुटितुं मर्त्तुं यूयं अध्य वस्यथ इच्छथ कुटिश्चौटिल्ये प्रभुकार्य्यं त्यक्त्वा मरणमेवात्र कौटिल्यं धातोरनेकार्थत्वाद्वा कुटादिणुकौञ्छितीति नियमादगुणत्वं अध्यवपूर्व्वस्य षोयनाशे इत्यस्य यन्योत्वमादौति ओकारलोप: ॥ ८१ ॥

नायमुद्विजितुं काल: स्वामिकार्य्याद्भवादृशां। हृत भार्य्ये च्युते राज्याद्रामे पर्य्युत्सुके भृशं ॥ ८२ ॥

ज०म० अयमेवात्रमितुं काल इति चेदाह नायमित्यादि। भवादृशां युष्मद्विधानां स्वामिकार्य्यादुद्विजितुं नायं काल: विजइडिति ङित्त्वं किमिति न भवतीति चेदाह राज्याच्च्युते भ्रष्टे रामे निर्व्वासित त्वात् तत्रापि हृतभार्य्ये भृशमत्यर्थं पर्य्युत्सुके सीतायां ॥ ८२ ॥

नायमित्यादि। भवादृशां युष्मद्विधानां मत्पुरुषाणां स्वामि भ०
कार्य्यात् उद्विजितुं चलितुं नायं कालः समयः कुत इत्याह राज्यात्
च्युते भ्रष्टे रामे तत्रापि हृतभार्य्ये भृशमत्यर्थं पर्य्युत्सुके च सति तु
भार्य्यां युष्मद्वचनेन ज्ञातुमित्यर्थात् विजेर्णुर्नित्यगुणत्वं॥८२॥

यत्नं प्रोर्णुवितुं तूर्णं दिशं कुरुत दक्षिणां। प्रोर्णु
विचीं दिवस्तत्र पुरीं द्रक्ष्यथ काञ्चनीं॥८३॥

यत्नमित्यादि। दक्षिणां दिशं प्रोर्णुवितुं आच्छादयितुं तुमुन् ज०म०
तूर्णं शीघ्रं यत्नं कुरुत तस्यान्दिशि पुरीं द्रक्ष्यथ काञ्चनीं प्राणि
रजतादिभ्योऽञ् प्रोर्णुविचीं अभिव्यापिनीं दृश्चि रूपं दिवश्चाका
शस्य कर्म्मणि षष्ठी विभाषोर्णोरिति ङित्त्वपक्षे उवङ् अङित्त्वपक्षे
च गुणः कुरुतेति सार्व्वधातुकमपिदिति ङित्त्वे विकरणस्य गुणो न
भवति तस्य चार्द्धधातुकत्वात् अङित्त्वे धातोर्गुणः अत उत् सार्व्व
धातुकमपिदिति ङित्त्वे विकरणस्य गुणो न भवति॥८३॥

यत्नमित्यादि। दक्षिणां दिशं प्रोर्णुवितुं आच्छादयितुं तूर्णं भ०
शीघ्रमेव यूयं कुरुत तत्र दिशि काञ्चनीं स्वर्णनिर्म्मितां पुरीं द्रक्ष्य
थ कीदृशीं दिवश्चाकाशस्य प्रोर्णुविचीं अभिव्यापिकां कर्म्मणि
षष्ठी ङिदिस्वोर्णोरिति ङित्त्वादगुणत्वे अचिश्नुधातुभ्रुवां य्वोरियुवङुवाविति यु पक्षे गुणः
काञ्चनस्य विकार इत्यर्थे विकारसंघेति ष्णः वर्द्धेऽकिज्ञत्सइति
इत्येस्यकारस्य रः॥८३॥

लङ्कां नाम्ना गिरेर्मूर्द्ध्नि राक्षसेन्द्रेण पालितां। निर्जित्य शक्रमानीता ददृशुर्य्यां सुरस्त्रियः॥ ८४॥

ज०म० लङ्कामित्यादि। याम्पुरीं नाम्ना लङ्कां सुरस्त्रियो ददृशुः दृष्टवत्यः असंयोगाल्लिट्किदिति कित्त्वं तां यातेति वक्ष्यमाणेन सम्बन्धः गिरेः सुवेलस्य मूर्द्ध्नि स्थितां राक्षसेन्द्रेण पालितामिति दुर्गमत्वमाख्यातं शक्रं निर्जित्य सुरस्त्रियश्चानीता इति च रावणस्य माहात्म्यं॥ ८४॥

भ० लङ्कामित्यादि। यां पुरीं नाम्ना लङ्कां सुरस्त्रियो ददृशुः तां इत्यथेति पूर्व्वेण सम्बन्धः कित्ठीढोपमिति कित्त्वाद गुणत्वं गिरेः सुवेलस्य मूर्द्ध्नि स्थितां आस्रवाधारसम्बन्धात् स्थितामिति लभ्यो राक्षसेन्द्रेण रावणेन पालितां रक्षितां सुरस्त्रियः कं दृष्टा शक्रमिन्द्रं निर्ज्जित्यानीताः राक्षसेन्द्रेण इत्यनुषञ्जनीयं एतेन तस्य वीर्य्यमपि ज्ञापितं॥ ८४॥

वभूव याधिशैलेन्द्रं त्रिदिवेन्द्रगोचरं। कुपित्वा जगतां मारं सैका शङ्के कृता भुवि॥ ८५॥

ज०म० वभूवेत्यादि। अधिशैलेन्द्रं शैलेन्द्रस्य सुमेरोरुपरि सप्तम्यर्थेऽव्ययीभावः इन्द्रगोचरमिन्द्रनिलयममरावत्याख्यं त्रिदिवं तिरस्कृत्येव वभूव इन्द्रभवनिभ्यां चेति कित्त्वं जगतां मारङ्कुपित्वा निष्कृष्य सैका भुवि कृता निर्मितेत्यहं शङ्के तां यात त्रिदित्वाकुपित्वेति नक्त्वा सेडिति कित्त्वप्रतिषेधे प्राप्ते मृडमृदेत्यादिना कित्त्वं॥ ८५॥

बभूवेत्यादि। या पुरी शैलेन्द्रस्य सुमेरोरुपरि इन्द्रस्य गोचरं विषयं अमरावत्याख्यं मृदित्वा अभिभूय बभूव अधिशैलेन्द्रं सुरालयं वा सप्तम्यर्थेऽव्ययीभावः अहमेवं शङ्के तर्कयामि जगतां सारमुत्कृष्टभागं कुषित्वा आकृष्य सैवैका भुवि कृता निर्म्मिता विश्वकर्म्मणेत्यर्थात् सेमघुधकुषेत्यादौ क्षुधादिवर्ज्जनात् कित्त्वं ॥ ८५ ॥ भ०

अमृडित्वा सहस्राक्षं क्लिशित्वा कौशले निजे। उदित्वालञ्चिरं यत्नात् सैका धात्रा विनिर्म्मिता ॥ ८६ ॥

अमृडीत्यादि। सहस्राक्षमिन्द्रममृडित्वा असुखिनं कृत्वा निजैः आत्मीयैः कौशलैः चिरं क्लिशित्वा प्रयत्नं कृत्वा उदित्वा अभिधायालम्पर्य्याप्तमेवं करिष्यामीति यत्नात् महता प्रयासेन सैका धात्रा विनिर्मिता पूर्व्ववत्कित्त्वं ॥ ८६ ॥ ज०म०

अमृडीत्यादि। सहस्राक्षं इन्द्रं अमृडित्वा असुखिनं कृत्वा निजे आत्मीये कौशले नैपुण्ये चिरं क्लिशित्वा क्लेशमनुभूय अलं पर्य्याप्तमेवमेवं करिष्यामीत्युदित्वा कथयित्वा चिरकालेन यत्नात् सैका धात्रा निर्म्मिता इत्यपि अहं शङ्क इत्यनेनान्वयः मृडगण सौदे वमोरश्नेतीम् क्लिशयुञ्चोपतापे पूक्लिशोऽदितइति वेम् क्लिशूगण्डविरोधे इत्यस्य तु वेमूदित्यादिना वदेवापि सर्व्वत्र सेम घुधेत्यादिवर्ज्जनात् कित्त्वं वदेर्यजादित्वात्सिः कुशलस्य भावः कर्म्म वेति विकारसंघेति ष्यः ॥ ८६ ॥ भ०

मुषित्वा धनदं पापो यां गृहीत्वावसद्द्विषन्। तां रुदित्वेव शक्रेण यात लङ्कामुपेक्षितां ॥ ९७ ॥

मुषित्वेत्यादि। मुषित्वा धनदम्वैश्रवणं तस्मात्पुरं पुष्पकञ्च विमानमपहृतं पापः पापाचरणात् यां गृहीत्वा अवसत् उषितः द्विषन् शत्रुः शक्रेण रुदित्वेवोपेक्षितामवधीरितां रुदविदेति कित्त्वं तत्र चकारेणत्क्त्वेत्यनुवर्त्तते ॥ ९७ ॥

भ० मुषीत्यादि। धनदं कुवेरं मुषित्वा वञ्चित्वा तत एव यां लङ्कां गृहीत्वा पापः कुत्सिताचारो द्विषन् शत्रुरावणोऽवसत् तां यूयं यात गच्छत कीदृशीं शक्रेण इन्द्रेण रुदित्वा क्रन्दित्वेव उपेक्षितां त्यक्तां न तु पारयित्वेति भावः मुषगन्लुटने लधिरक्रुदरोदे व्यु ङ्कोवोक्रमादेरित्यादिना कित्वादगुणत्वं ग्रहेः सेमचुधेत्यादिना कित्वात् ग्रहस्वपाद्यारिति जिः ग्रहेरिभाघंदति दीर्घत्वं ॥ ९७ ॥

विदित्वा शक्तिमात्मीयां रावणं विजिघृक्षवः। उक्तां पिपृच्छिषूणां वो मास्मभूत सुषुप्सवः ॥ ९८ ॥

ज०म० विदीत्यादि। आत्मीयां शक्तिं सामर्थ्यं विदित्वा पूर्व्ववत्कित्त्वं रावणं विजिघृक्षवः विगृहीतुमिच्छवः सुषुप्सवः शयितुमिच्छवो मास्मभूत न प्रमत्ताभवतेत्यर्थः रावणस्य बलीयस्त्वादिदमुक्तं मया वो युष्माकम्पिपृच्छिषूणां प्रष्टुमिच्छूनां अत्र रुदविदेति सनः कित्त्वे सम्प्रसारणं प्रच्छः किरश्च पञ्चभ्य इतीडागमः ॥ ९८ ॥

विदित्वेत्यादि। आत्मीयां शक्तिं सामर्थ्यं विदित्वा ज्ञात्वा रावणं विजिघृक्षवो विरोधयितुमिच्छवः यूयं सुषुप्सवः शयितुमिच्छवो मा स्मभूत मा लघ्वा अवधानाय न भवतेत्यर्थः रावणस्य मायाविवाद्दलवत्त्वाच्च एतत्सर्व्वं पिपृच्छिषूणां प्रष्टुमिच्छतां वायु स्माकं कृते मया उक्तं एतेनापृष्टभाषणं औचित्यं परिहृतं सम्बन्ध विवक्षया षष्ठी विदज्ञाने व्युडोऽवदति किन्नं ग्रहउपादाने सन् नमुगुहग्रहइति अनिम् ग्रहस्वपप्रच्छांजिरिति जिः पृनानि मीत्यगुणत्वं होढः प्रभावास्त्रेति षत्वं षढोःकइति कः किद्वादि ति षः सन्भित्वेति उः प्रच्छेःसमि स्मिङपूङित्यादिना इम् ॥ ९८ ॥ अ॰म॰

नाविविदिषुमभ्येति सम्पद्रुरुदिषुं नरं। किं मुमुषि षुवद्यात द्विषोनापचिकीर्षया ॥ ९९ ॥

नावीत्यादि। वेदितुं ज्ञातुमिच्छुर्यो न भवति तं नरमविविदिषुं रुरुदिषुं रोदितुमेषणस्वभावं सम्पद्विभूतिर्नाभ्येति नागच्छतीति वोमयोक्तमिति योज्यं किन्न यात न गच्छत मुमुषिषुवत् चौरवदि त्यर्थः पूर्व्ववत्कित्त्वं द्विषः शत्रोरपचिकीर्षया अपकर्त्तुमिच्छया इकोझलीति कित्त्वे गुणो न भवतीति अज्झनगमांसनीति दीर्घः ऋतइद्धातोः ॥ ९९ ॥ अ॰म॰

नावीत्यादि। सम्पत् सम्पत्तिरविविदिषुं वेदितुं ज्ञातुमनिच्छुं रुरुदिषुं अनध्यवसायात् रोदनेच्छुं नरं पुरुषं न अभ्येति न भ॰

अभिगच्छति तेन ज्ञापनार्थं प्रब्रवीमि वदति वक्ष्यमाणेन सम्बन्धः द्विषः शत्रोरपचिकीर्षया अपकारेच्छया मुमुषिषुवत् चौरवत् यूयं किं न यात तत्रैव सीतादर्शनसम्भवात् ब्रुञोऽवदत्यादिना विदहदमुषः सनः किलादगुणत्वं कृत्वः सनि घोऽज्झनिगमा मिति दीर्घः णुर्नामिनीत्यगुणत्वे च्छदिरणाविति द्दर् यंनचृत यीति दीर्घः संख्यादद्दति ज्ञः ॥ ८८ ॥

बुभुत्सवोद्रुतं सीतां भुत्सीद्वं प्रब्रवीमि वः। मा च भद्धं मृषोक्तं नः कृषीद्वं स्वामिने हितं ॥ १०० ॥

१०म० बुभुत्सेत्यादि। बुभुत्सवो ज्ञातुमिच्छवः यदि सीतां बुधेस्सनन्ता द्धलन्तावेति कित्त्वं एकाचइति भष्भावः तदा द्रुतं तां भुत्सीध्वं जानीतेति वो युष्मान् ब्रवीमि लिङ्सिचाविति कित्त्वं मृषोक्तं मिथ्यो क्तं नोऽस्माकं मा च भुद्ध्वं न जानीत अपितु सत्यं झलोझलीति सिचोलोपः झलांजशझसि कित्त्वं पूर्ववत् अतोयूयं स्वामिने रामाय हितं कृषीद्वं कुरुत उश्चेति कित्त्वं इणः षीध्वमिति मूर्द्धन्यः ॥ १०० ॥

भ० बुभुदित्यादि। सीतां बुभुत्सवो वोद्धुमिच्छवो यूयं द्रुतं शीघ्र मेव भुत्सीध्वं जानीत इति वो युष्मान् अहं प्रकटं ब्रवीमि अस्माक मुक्तं वचनं मृषा मिथ्या मास्म भुद्ध्वं न जानीत अपितु सत्यमेव अस्मदएकत्वे वा बहुत्वमभिधानात् स्वामिनो रामस्य हितं कृषीद्वं कुरुत समार्थैनेत्यादिना षष्ठी स्वामिने इति पाठे क्रियार्थवप त्तिति चतुर्थी बुधोरुबेदने सनि णुर्नामिनीत्यगुणत्वं झभान्त

सेति भत्वं अन्यत्र त्या: सीध्वं इगुडुर्मढोति किञ्चादगुणत्वं अपर
च मायोगेऽमोऽभाव: झलज्ञादिति सेर्लोप: हञ्ञोत्या:मीध्वं पूर्व्व
वत् कित्त्वं टोठीढोधोढिति धस्य ढत्वं ॥।१००॥

समगध्वं पुर:शत्रोर्मोदयध्वं रघूत्तमं। नोपायध्वं भयं सीतां नोपायंस्त दशाननः॥१०१॥

समेत्यादि। इदमहमाशंसे यदुत शत्रो: रावणस्य पुर: अग्रत: जं०म०
समगध्वं सङ्गताभवत आशंसायां भूतवच्चेति लुङ् समोगम्ट
च्छीति तङ् वागमइति सिच: कित्त्वे अनुदात्तेत्यनुनासिकलोप:
ह्रस्वादङ्गादिति सिचोलोप: मोदयध्वं रघूत्तमं हर्षयत तत्का
र्य्यकरणात् मा च भयमुपायध्वं सूचयत भयं माकार्ष्टेत्यर्थ:
आङोयमहनइति तङ् यमोगन्धनइति सिच: कित्त्वे अनुनासिक
लोप: गन्धनं सूचनं अन्यथा युष्मासु गन्धितभयेषु नियतममी
दशानन: सीतामुपायंस्त स्वीकृतवान् स्यात् तस्य दुर्वृत्तत्वात्
आशंसायां भूतवच्चेति अनिष्टाशंसायां लुङ् उपाद्यम:स्वीकरण
इति तङ् स्वीकरणञ्चात्र विवाहनमुक्तं विभाषोपयमइति
अकित्त्वपचे रूपं॥१०१॥

समेत्यादि। इदमहमाशंसे यत् शत्रोरावणस्य पुरोऽग्रतो भ०
यूयं समगध्वं सङ्गताभवत अभिधानादाशंसायां टो आशंसायां
भूतसामान्यविहिताञ्चेति पर: समोगम्टच्छेति मं इगुडुर्मटोत्या
दिना से:कित्त्वात् वनतनाद्यनिमामिति मलोप: झलज्ञादिति
सिलोप: रघूत्तमं रामं यूयं मोदयध्वं हर्षयत तत्कार्य्यकरणात्

भयं न उपायध्वं न सूचयत न कुरुतेत्यर्थः यमःसूचनइति सिः कित्त्वात् सलोपः आत्मनेपदाधिकारमध्ये यमःसूचनइत्यस्य करणादेव सूचनार्थे यमआत्मनेपदं किम्वा उपयमोविवाह इत्यनेन सं तत्र विवाहः स्वीकारः उपायमः स्वीकरणइति पर सूत्रं यमःसूचनेवाहूद्वाहे इत्यत्रापि उद्वाहः स्वीकारः स्वीकरणे वेति परसूत्रं स्वीकारार्थेन परिणयेऽपि गम्यते तदा भयं न उपायध्वं न स्वीकुरुत दशाननः सीतां न उपायंस्त विवाहेन न स्वीकृतवान् न स्वीकरोतु वा अत्राप्याशंसायां टी वाहूद्वाहइति कित्त्वाभावपक्षे सलोपाभावः इत्येवं जगाद वानरान् पक्षीत्यन्वयः॥ १०१ ॥

ततः प्रास्थिषताद्रीन्द्रं महेन्द्रं वानराद्रुतं। सर्व्वे किलकिलायन्तो धैर्य्यञ्चाधिषताधिकं॥ १०२॥

ज०म० ततइत्यादि। ततः सम्पातिवचनानन्तरं सर्व्वेवानरामहेन्द्रं पर्व्वतं प्रास्थिषत प्रस्थितवन्तः धैर्य्यञ्चाधिकमाधिषत आहितवन्त आत्मनि तिष्ठतेर्द्धातेश्च स्थाघ्वोरिच्चेति कित्त्वमित्त्वञ्च तिष्ठतेः समवप्रविभ्यःस्थइति तङ् किलकिलायन्तः किलकिलाध्वनिं कुर्व्वाणाः अव्यक्तानुकरणेत्यादिना डाच् तदन्तात् लोहितादिडाज्भ्यःक्यष् वाक्यषइति परस्मैपदं॥ १०२॥

भ० ततइत्यादि। सम्पातिवचनानन्तरं सर्व्वे वानरा महेन्द्रं पर्व्वतं प्रास्थिषत प्रस्थितवन्तः द्रुतं शीघ्रं मुहुरिति पाठे किलकिलायन्त इत्यनेन सम्बन्धः प्रपूर्व्वात्तिष्ठतेः प्रतिज्ञानिर्णयेत्यादिना सं स्था

ईङ्किरिति ङ्किरगुणत्वञ्च मान्तोऽदनतइत्यत् अधिकं धैर्य्यञ्च आत्मनि आधिषत आहितवन्तः धाञोञ्जिल्य्यन्तेत्यादिना मं अन्यत् पूर्व्ववत् कीदृशाः किलकिलायन्तः किलकिलाशब्दं कुर्व्वन्तः नैकाचोऽव्यक्तानुकरणादिति डाच् द्वित्वञ्च डाज्लोहिताहेरिति क्यः पञ्च ॥१०२॥

निकुञ्जे तस्य वर्त्तित्वा रम्ये प्रक्ष्वेदिताः परं। मणि रत्नाधिशयितं प्रत्युदैक्षन्त तोयधिं ॥१०३॥

निकुञ्जइत्यादि। तस्य पर्व्वतस्य निकुञ्जे लतादिपिहितस्थाने वर्त्तित्वा स्थित्वा नक्त्वामेङ्गिति कित्त्वप्रतिषेधः परं प्रक्ष्वेदिताः उच्चैरव्यक्तशब्दङ्कुर्व्वाणाः निष्ठाशीङिति कित्त्वप्रतिषेधः तोयधिं प्रत्युदैक्षन्त दृष्टवन्तः लङि रूपं कीदृशं मणिरत्नाधिशयितं क्तोऽधिकरणेचेति क्तः पूर्व्ववत्कित्त्वप्रतिषेधः कीदृशं मणिरत्नाधिशयितं मणिर्यद्रत्नमिति स्तोरत्नादावपि रत्नशब्दस्य दृष्टत्वात् एकपदव्यभिचारं विशेषणविशेष्यभावः तस्याधिशायितमवस्थानमित्यर्थः ॥१०३॥ ज॰म॰

निकुञ्जइत्यादि। तस्य पर्व्वतस्य निकुञ्जे लतादिपिहितस्थाने रम्यत्वात् वर्त्तित्वा स्थित्वा परमतिशयेन प्रक्ष्वेदिताअव्यक्तशब्दं कर्त्तुमारब्धावानरास्तोयधिं समुद्रं प्रत्युदैक्षन्त दृष्टवन्तः कीदृशं मणिरत्नाधिशयितं मणिरत्नैर्मणिश्रेष्ठैरधिशयितं अधिष्ठितं. कर्म्मक्रियेत्यादिना अधिपूर्व्वशीङआधारस्य कर्म्मत्वात् कर्म्मणि क्तः आधारेक्तइति केचित् ञिक्ष्विदकूजने घेचादिडेक्तइति भ॰

कर्त्तरि क्तः भावादिकर्म्मणोर्वेति पक्षे इम् उभयत्र पूङ्धीधृषेत्यादिना गुणः वर्त्तिलेत्यत्र सेमसुधेत्यादिना किक्त्वनिषेधात् गुणः॥ १०३॥

अमर्षितमिव घ्नन्तं तटाद्रिं सलिलोर्म्मिभिः। श्रिया समग्रं द्युतितं मदेनेव प्रलोठितं॥ १०४॥

ज०म० अमेत्यादि। सलिलोर्म्मिभिः कल्लोलैः तटाद्रीन् तटस्थान् पर्व्वतान् घ्नन्तं प्रत्युद्यन्तं अमर्षितमिव मृषस्तितिक्षायामिति किक्त्वप्रतिषेधः पश्चात् नञ्समः श्रिया हेतुभूतया समग्रं संपूर्णं द्युतितमिति कर्त्तरि निष्ठा यदि वा श्रिया कर्तृभूतया द्युतितं शोभितं अस्येत्यध्याहृत्य तमेवन्नेति योज्यं एवञ्च कृत्वा उदुपधादित्यादिना भावे निष्ठायां विकल्पेन किक्त्वप्रतिषेधात् किक्त्वमुदाहृतं मदेनेव मत्ततयेव श्रिया हेतुभूतया प्रलोठितं घूर्णितुमारब्धं आदिकर्म्मणि निष्ठायामकिक्त्वमुदाहृतं॥ १०४॥

भ० अमेत्यादि। तोयधिं प्रत्युद्यन्तमित्यत्रान्वयः सलिलोर्म्मिभिर्जलवेगैस्तटाद्रीन् तटसम्बन्धिनः पर्व्वतान् घ्नन्तं अमर्षितमिव क्रुद्धमिव पूङ्धीधृषेत्यादिना क्षमार्थमृषेर्गुणः पश्चान्नञ्समासः उर्म्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोरिति मेदिनी वीचिवाचित्वेऽत्र सलिलपदं स्वरूपकथनार्थं श्रिया हेतुभूतया समग्रं सम्पूर्णं यथा स्यात्तथा द्युतितं शोभमानं गत्यर्थाकर्म्मकेति कर्त्तरि क्तः दीपितुमारब्धं वा तदा भावादिकर्म्मणोर्वोदुपधोऽन्यतरस्यामिति पक्षे गुणाभावः मदेन मत्ततयेव प्रलोठितं घूर्णितुमारब्धं सदाचारस्थलत्वात् आदिकर्म्मणि क्तः पूर्व्ववत् पक्षे गुणः॥ १०४॥

पूतं शीतैर्नभस्वद्भिर्ग्रन्थित्वेव स्थितं रुचः। गुम्फित्वेव निरस्यन्तं तरङ्गान् सर्व्वतोमुहुः॥ १०५॥

पूतमित्यदि। नभस्वद्भिर्व्वायुभिः शीतैः पूतं पवित्रीकृतं पूञ स्वेति विकल्पेनेट् अतएव पक्षे पूञः क्तानिष्ठयोः कित्त्वप्रतिषेधोऽत्र न भवति तत्र सेडित्यनुवर्त्तते रुचोदीप्तीर्ग्रथित्वेव संदर्भ्येव स्थितं नोपधात्थफान्ताद्वेति कित्त्वप्रतिषेधपक्षे रूपं सर्व्वतस्तरङ्गान् गुम्फित्वेव निरस्यन्तं क्षिपन्तं नोपधादिति विकल्पेन कित्त्वप्रतिषेधः यत्रेत्यध्याहृत्य तमैक्षन्तेति योज्यं॥ १०५॥ अ॰ म॰

पूतमित्यादि। शीतैः शीतलैर्नभस्वद्भिर्व्वायुभिः पूतं पवित्रीकृतं तोयधिं प्रत्युदैक्षन्तेत्यनेन सम्बन्धः पूङ्क्लिशवमेति इमोऽभावपक्षे पूशीधूषेत्यादौ सेमग्रहणान्न गुणः नभःशब्दान्मोङ्मस्यापाहतुरिति वतुः नदंतसाविति पदत्वनिषेधात् सोर्व्विफद्दत्यस्य पदान्तविषयत्वात् विसर्गाभावः रुचोदीप्तीर्ग्रन्थित्वेव स्थितं सर्व्वत्र दीप्तिमत्त्वात् उत्प्रेक्षेयं ग्रन्थकिगसन्दर्भे थफान्तुद्वेति विकल्पेनाकित्वात् नलोपाभावः सर्व्वत्र तरङ्गान् गुम्फित्वेव मुहुः पुनःपुनर्निरस्यन्तं क्षिपन्तं गुन्फग्रग्रन्थे पूर्व्वेण पक्षे कित्त्वात् हस्युङ्क्लोपरति नलोपः॥ १०५॥ भ॰

वञ्चित्वाप्यम्बरं दूरं स्वस्मिंस्तिष्ठन्तमात्मनि। तृषित्वेवानिशं स्वादु पिबन्तं सरितां पयः॥ १०६॥

ज०म० वश्चीत्यादि। स्थित्यनतिक्रमादम्बरं दूरम्बश्चित्वातिक्रम्य वश्चिलुञ्चीति क्त्वप्रतिषेधः तस्मिन्नात्मनि स्वरूपे तिष्ठन्तं अच नश्छव्यप्रशानिति नकारस्य रुत्वं पूर्व्वस्य त्वनुनासिकादेशः तृषि त्वेव तृषितद्दव भूत्वा तृषिमृषीत्यादिना प्रतिषेधः तस्मिलस्या स्वादुत्वात् सरितामपयः स्वादु पिवन्तं अनिशमजस्रं॥ १०६॥

भ० वश्चित्यादि। पुनः कीदृशं तोयधिं अम्बरमाकाशं वश्चित्वापि अतिक्रम्यापि स्वस्मिन् स्वकीये आत्मनि स्वरूपे तिष्ठन्तं मर्य्यादानतिक्रमात् पृथ्वगाउत्वोऽपि भूत्वा तां नातिक्रामतीति भावः वञ्चुगत्यां तृषमृदकृषेत्यादिना विकल्पेनाकित्त्वात् नलोपाभावः तृषित्वेव अनिशं सततं स्वादु मधुरं सरितां पयोनदीनां जलं पिवन्तं स्वजलस्य चारत्वात् त्रिटृपापिपासायां पूर्व्वेण कित्त्वादगुणत्वं॥ १०६॥

द्युतित्वा शशिना नक्तं रश्मिभिः परिवर्द्धितं। मेरोर्ज्जेतुमिवाभोगमुच्चैर्दिद्योतिषुं मुहुः॥ १०७॥

भ० द्युतीत्यादि। शशिना नक्तं रात्रौ द्युतित्वा दीप्तिमता भूत्वा रश्मिभिः परिवर्द्धितं वृद्धिं नीतं सन्तं तोयधिं मेरोराभोगमायत्वं जेतुमिव मुहुरुच्चैर्दिद्योतिषुं वर्द्धितुमिच्छुमित्यर्थः अनेकार्थत्वाद्धातूनां द्युतित्वा दिद्योतिषुमिति रलोव्युपधादिति क्त्वाकित्त्वे तत्र व्युकारोपधादिकारोपधाच्च रलन्ताद्धलादेर्धातोः परौ क्त्वासनौ वा न कितौ भवतइति सूत्रार्थः॥ १०७॥

द्युतित्वेत्यादि। पुनः कीदृशं तोयधिं ग्रमिना नक्तं रात्रौ भ० द्युतित्वा दीप्तिमता सता रश्मिभिः परिवर्द्धितं वृद्धिं नीतं द्युतस्ढ् दीप्तौ व्युङ्ग्ऽवोदमादेरिति वा कित्त्वाद्गुणाभावः मेरोराभोगं परिपूर्णतां जेतुमिव ततउच्चैरधिकं मुहुः पुनःपुनः दिद्योतिषुं द्योतनमिच्छन्तं उच्चैर्भूत्वा द्युतिमिच्छन्तं वा धातोरनेकार्थतया उच्चैरूर्द्धं वर्द्धितुमिच्छन्तमिति केचित् द्युतेः सनि द्युत्स्वाप्यो रिति खेर्ज्जिः पूर्व्वेण पचे कित्त्वाभावात् गुणः १०१

विलोक्य सलिलोच्चयानधिसमुद्रमभ्रंलिहान् भ्रम न्मकरभीषणं समधिगम्य चाधः पयः। गमागमसहं द्रुतं कपिवृषाः परिप्रैषयन् गजेन्द्रगुरुविक्रमं तरुम्ट गोत्तमं मारुतिं ॥१०८॥

इति भट्टिकाव्येऽधिकारकाण्डे द्वितीयः काव्यस्य सप्तमः सर्गः॥ ७॥

विलोक्येत्यादि। कपिवृषाः कपिमुख्यामारुतिं हनूमन्तं द्रुतं ज०म० परिप्रैषयन् व्यसर्ज्जयन् परिप्रपूर्व्वोदिषुगतावित्यस्मात् हेतुमण्य न्तात् लङिरूपं किं कृत्वेत्याह विलोक्य सलिलोच्चयान् सलिलो र्मीन् ऊर्द्धच्चीयतइत्येरच् अधिसमुद्रं समुद्रस्योपरि अभ्रंलि हान् दूरमुच्छ्रितान् अधश्च पयः समधिगम्य ज्ञात्वा कीदृशं भ्रम द्भिर्म्मकरैर्भीषणं भयानकं भीषयतीति नन्द्यादित्वाल्ल्युः गमागम सहं गमनागमनयोग्यं मारुतिं गजेन्द्रस्येव गुरुर्व्विक्रमोयस्य

तरूम्टगेषु वानरेषूत्तममिति सप्तमीति योगविभागात्सः। इति ङित्वातिदेशाधिकारः॥ १०८॥

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे द्वितीयः परिच्छेदः काव्यस्य सीतान्वेषणः सप्तमः सर्गः॥

भ० विलोक्येत्यादि अधिसमुद्रं समुद्रस्योपरि सलिलोच्चयान् तरङ्गान् अभ्रंलिहान् अत्युच्छ्रितान् विलोक्य अधस्य पयोजलं भ्रमद्भिरितस्ततो गच्छद्भिर्मकरैर्जलजन्तुविशेषैर्भीषणं भयानकं समधिगम्य ज्ञात्वा भयात् स्वयं गन्तुमशक्ताः कपिवृषाः कपिश्रेष्ठा मारुतिं हनूमन्तं द्रुतं परिप्रेषयन् व्यसर्जयन् परिप्रपूर्व्वादिषगताविस्यस्मात् प्रेरणे ण्यन्तात् घो मारुतिं कीदृशं गमने चागमने च समर्थं गजेन्द्रस्येव ऐरावतस्येव गुरुर्द्धिमायस्य तं अतएव तरूम्टगेषु वानरेषु उत्तमं श्रेष्ठं ऊर्द्धं चायतइत्यन्ये उच्चयः अधिसमुद्रमिति सप्तम्यर्थेऽव्ययीभावः अभ्रंलिहानिति वृभृदृहजीत्यादिना अभिधानादसंज्ञायामपि खः गुणाभावोऽप्यभिधानात् भीषणमिति नन्द्यादित्वादनः कभावेऽसौ इत्यनेन वा अनट्। इति कृदतिदेशाधिकारः॥ १०८॥

इति मद्देश्वहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायां अधिकारकाण्डे सप्तमः सर्गः॥

अगाधत ततो व्योम हनूमानुरुविक्रमः। अत्यगे इत तद्वेगं न सुपर्णार्कमारुताः॥ १।

आत्मनेपदमधिकृत्याह। अगाधतेति ततोविसर्जनानन्तरं हनुमान् समुद्रलङ्घनाय व्योमाकाशमगाधत प्रस्थितवान् गाधृ प्रतिष्ठालिप्सयोरित्यस्माल्लङ् अनुदात्तङित इति अनुदात्तेत्वादात्मनेपदं उरुविग्रहः कामरूपित्वात् तदानीमुत्पादितविपुलकायः तस्य चोत्पततोवेगं गरुडादित्यपवनाः नात्यशेरत नातिशयित वन्तः ङित्त्वात्तङ् शीङोरुट् शीङः सार्व्वधातुके गुणः ॥ १ ॥ ज०म०

आत्मनेपदाधिकारः स च स्वमते साधिकारः। अगेत्यादि ततः प्रेषणानन्तरं हनूमान् समुद्रलङ्घनाय व्योम आकाशमगाधत प्रस्थितवान् गाधृङ्प्रतिष्ठालिप्सयोः ङित्त्वात्तङ् आत्मनेपदमिति सं अगाहतेति पाठे ङगाहूविलोडे इत्यस्मात् घो उरुविग्रहः कामरूपित्वात्तदानीमुत्पादितमहाशरीरः सुपर्णार्कमारुतागरुडसूर्य्यवायवोऽपि तस्य हनूमतोवेगं न अत्यशेरत नाति चक्रमुः शीङ्लङिस्वप्ने लानुबन्धत्वादादादिकः ङानुबन्धात्सं शीङोरंर्णुरिति गुणः सान्तोर्मिति रम् सान्तोऽदनतइति अत् शोभनानि पर्णानि पक्षायस्य हिरण्मयत्वात् ससुपर्णः ॥ १ ॥ भ०

अभायत यथार्केण सुप्रातेन शरन्मुखे। गम्यमानं न तेनासीदगतं क्रामता पुरः ॥ २ ॥

अभेत्यादि। यथा अर्केण सुप्रातेन सुप्रभातेन नीहाराद्य भावात् शोभनं प्रातरनेनेति सुप्रातः सुश्वेति समासान्तनिपातनं ज०म

शरन्मुखे शरदारम्भे अभायत दीप्यते स्म भावकर्म्मणोरिति भावे तङ् तदृत्तेनाभायत पुरोऽयतो यदर्केण गम्यमानमवगम्यमानं वर्त्मेत्यर्थात् कर्म्मण्यात्मनेपदं तेन हनूमता क्रामता गच्छता श्रिति क्रमइति दीर्घत्वं नागतमासीत् अपितु सर्व्वमेव गतमिति ॥ २ ॥

भ० अभेत्यादि। शरन्मुखे शरदारम्भे सुप्रातेन सुप्रभातेनार्केण यथा अभायत दीप्यते स्म तथा तेन हनूमता अभायतेति सम्बन्धः भातेर्भावे घ्यामं शोभनं प्रातरस्येति भाःस्वःप्रातर्भ्योऽडइति परः स्वमते प्रातरेव प्रातं स्वार्थेऽणः व्यटलोपइति टिलोपः तेन समासः पुरोऽयतोऽर्केण गम्यमानं वर्त्मेत्यर्थात् क्रामता गच्छता तेन हनूमता अगतं नासीत किन्तु गतमेव तेजसा वेगेन च हनूमतः सूर्य्य साम्यमुक्तं गमेः कर्म्मणि क्तः ॥ २ ॥

वियति व्यत्यतन्वातां मूर्त्ती हरिपयोनिधी। व्यत्यैतान्चोत्तमं मार्गमर्केन्द्रेन्दुनिषेवितं ॥ ३ ॥

ज०म० वियत्यादि। हरिपयोनिधी हनुमत्समुद्रौ मूर्त्ती स्वदेहौ वियत्याकाशे व्यत्यतन्वातां व्यतिविस्तारितवन्तौ तनोतेर्लङ् कर्त्तरि कर्म्मव्यतीहारइत्यात्मनेपदं उत्तमञ्च मार्गं अर्केन्द्रेन्दुनिषेवितं व्यत्यैतां व्यतिगतवन्तौ इणः परस्य लङ् कर्म्मव्यतीहारइत्यात्मनेपदं प्राप्तं नगतिहिंसार्थेभ्यइति गत्यर्थत्वात् प्रतिषिद्धं तेन तसस्तामादेशः तत्र हरेर्गच्छतः पुरतोऽयं समुद्रमिति स्वमूर्त्तिं विस्तारितुमवसरोभविता तत्र पयोनिधिरूर्म्मिभिः स्वमूर्त्तिं वितस्तार पयोनिधिश्च वेलातटङ्गच्छतीयत्र स्वमूर्त्तिं वितस्तार

तथा पयोनिधेर्यन्मार्गं गन्तुमवसरोभविता हरिस्तत्यत्य तं मार्गं गन्तुमैच्छत् यच्च हरेर्मार्गं गन्तुमवसरोभविता तं मार्गं पयोनिधिरम्भेलिहैर्हर्म्मिभिरैच्छत् यत्र यत्क्रियावसरे क्रियां करोति सतत्र तत्क्रियाकारीत्युपचर्य्यते यथा देवदत्तसाध्यां क्रियां यज्ञदत्तः कुर्व्वन् तत्कारीत्युच्यते ततश्चेतरेणेतरसम्बन्धिन्याः क्रियायाः करणात् अन्यतरसम्बन्धिन्याश्चेतरकरणात्सम्भवति कर्म्मव्यतीहारः ॥ २ ॥

वियतीत्यादि। हरिपयोनिधी हनूमत्समुद्रौ वियत्याकाशे भ० मूर्त्ती स्वदेहौ व्यत्यतन्वातां अन्योन्यं विस्तारितवन्तौ तनद्गन्विस्तृतौ व्यतीहारे गतिहिंसेत्यादिना सं सूर्य्येन्द्रचन्द्रनिषेवितं अतएव उत्तमं मार्गं आकाशं तौ व्यत्यैतां परस्परं जग्मतुः व्यतीहारे गतिहिंसाशब्दार्थहसान्येति गत्यर्थादिवर्ज्जनात् न व्यतीहारे सं इणाभ्यां रूपं॥ ३ ॥

व्यतिजिग्ये समुद्रोऽपि न धैर्य्यन्तस्य गच्छतः। अगच्छत्वास्य न गतं प्रचण्डोऽपि प्रभञ्जनः॥ ४ ॥

व्यतीत्यादि। तस्य हरेर्गच्छतः स्वदेहस्याल्पतां कर्त्तुं योऽवसरो ज०म० भावी तत्र समुद्रानातिशयधैर्य्यं कृतवान् तेन तस्य धैर्य्यं न जितं तदानीं तस्योद्धतकल्लोलत्वात् अपिशब्दाच्च हनूमानपि समुद्रस्य शान्तत्वं कर्तुं योऽवसराभावो तत्र नातिशयधैर्य्यं कृतवान् तेन तस्य धैर्य्यं वा न जितं तदानीं तस्य विपुलकायत्वात् तदेवं हनूमतः समुद्राहनूमानपि समुद्रस्य धैर्य्यं न व्यतिजिग्ये नाभिवभूव

एकवचनस्य प्रत्येकाभिसम्बन्धात् कर्म्मव्यतीहारे पूर्ब्बवदात्मनेपदं षंक्लिष्टोर्जैरिति कुलं तस्य हनूमतोगतं गमनं प्रचण्डोऽपि महान् प्रभञ्जनोवायुर्न व्यत्यगच्छत् न प्राप्तवान्॥ ४॥

भ० व्यतीत्यादि। गच्छतस्तस्य हनूमतोधैर्य्यं समुद्रोऽपि न व्यतिजिग्ये नाभिभूतवान् निर्भयत्वात् अपिशब्दात् सोऽपि समुद्रस्य धैर्य्यं न व्यतिजिग्ये उद्वेगात् चोभेऽपि मर्य्यादालङ्घनात् एकवचनेऽपि उभयोरुभयापेचित्वाद्व्यतीहारः जेर्गिःसन्योरिति ग्यादेशः प्रचण्डोऽपि प्रभञ्जनोवायुरस्य हनूमतोगतं गमनं न व्यगच्छत् न प्राप्तवान् तस्यातिवेगत्वात् अस्येति ल्यभावक्तेति भावक्तेन योगे कर्त्तरि षष्ठी॥ ४॥

व्यतिघ्नतीं पथिघ्नन्तं राक्षसीं पवनात्मजः। जघान्नाविश्य वदनं निर्यान् भित्त्वोदरं द्रुतं॥ ५॥

ज०म० तस्यातिजवेन गच्छतः पथि राक्षसी संप्राप्ता तामसौ व्यापादितवानित्याह व्यतीत्यादि हनिष्याम्येनमिति राक्षस्यायोवधकरणावसरः तत्र घ्नन्त्यः कश्चित्प्राप्तः तस्यैनां हनिष्यामीति योवधकरणावसरः तत्र घ्नतीन्तदेवमितरेतरक्रियाकरणेन व्यतिघ्नतीं राक्षसीं नगतीत्यादिना हिंसार्थत्वादात्मनेपदप्रतिषेधः सां पवनात्मजोहनूमान् जघान कथं वदनमाविश्य उदरम्भित्त्वा द्रुतं निर्यान् निर्गच्छन् यातेःशतरि रूपं॥ ५॥

व्यतीत्यादि। पवनात्मजो हनूमान् गच्छन्नेव पथि संप्राप्तां राक्षसीं जघान किं कुर्व्वन् द्रुतं वदनं प्रविश्य उदरं भित्त्वा विदार्य्य निर्यान् निर्गच्छन् यातेः शतृ: कीदृशीं घ्नन्तं जनं व्यतिघ्नतीं अन्योन्यं घ्नतीं हिंसार्थवर्ज्जनात् व्यतीहारेऽपि न मं॥५॥ भ०

अन्योन्यं स्म व्यतियुतः शब्दान् शब्दैस्तु भीषणान्।
उदन्वांश्चानिलोद्धूतो म्रियमाणा च राक्षसी॥६॥

अन्योन्यमित्यादि। अन्योन्यमित्यन्योन्यस्येत्यर्थः कर्म्मव्यतीहारे सर्व्वनाम्नोर्द्वे भवतोऽसमासवच्च बहुलं यदा नासमासवत् तदा पूर्व्वपदस्योत्तरपदस्य च प्रथमैकवचने स्त्रीनपुंसकयोराम भावइति वक्तव्यं अन्योन्यस्य सम्बन्धिभिः शब्दैः उदन्वद्राक्षस्यौ शब्दान् भीषणानात्मीयान् व्यतियुतः स्म मिश्रितवन्तौ युमिश्रणइत्यस्मात् लट् स्मइति भूते लट् इतरेतरेत्यादिना कर्म्मव्यतीहार आत्मनेपदप्रतिषेधः तत्रोदन्वतः शब्दकरणाद्यो भीषणशब्दमिश्रणावसरोऽभावो तत्र राक्षसी म्रियमाणा शब्दान् भीषणानुदन्वच्छब्दैर्युयाव राक्षस्याः शब्दकरणाद्यो भीषणशब्दमिश्रणावसरो भावो तत्रोदन्वाननिलोद्धूतः शब्दान् भीषणान् राक्षसीशब्दैर्युयाव॥६॥ ज०म०

अन्योन्यमित्यादि। तदानीं हनूमद्वेगेनानिलोद्धूतउदन्वान् समुद्रः म्रियमाणा राक्षसी उभावेतौ शब्दैर्भीषणान् शब्दान् अन्योन्यं व्यतियुतः स्म संमिश्रितवन्तौ युलमिश्रणे कौमोगातोलइति की अन्योन्यार्थे इत्युक्ते व्यतीहारेऽपि मं अन्योन्यार्थइति व्याप म०

कात् व्यतीहारेऽन्योन्यादयोममीषादित्वान्निपातिता: उदकस्य वनौ लोकोपचारादुदनादेश: उदन्शब्दोऽप्यस्ति उक्तं हि पद्, दय: पृथक्शब्दादित्येके इति ॥ ६ ॥

न्यविक्षत महाग्राहसङ्कुलं मकरालयं। सैका बह्वनां कुर्व्वाणा नक्राणामाश्रितम्भवं ॥ ७ ॥

ज०म० न्यवीत्यादि। महद्भिर्ग्राहै: सङ्कुलं मकरालयं समुद्रं न्यविक्षत प्रविष्टवती नेर्व्विश इत्यात्मनेपदं शल इगुपधादनिट: क्स: बह्वनां नक्राणामेकापि सती स्वाश्रितम्भवं सुष्ठु दृप्तिं कुर्व्वाणा आश्रितेभुव इति भावे खच् ॥ ७ ॥

भ० न्यवीत्यादि। राक्षसी एकापि सती बह्वनां नक्राणां कुम्भीराणां आश्रितम्भवं सुष्ठु दृप्ततां महाशरीरत्वात् कुर्व्वाणा मकरालयं समुद्रं न्यविक्षत प्रविष्टवती विपराजीत्यादिना निपूर्व्वविशतेर्ग्म इश: पाऽनिमिगुडइति सक कीदृशं महद्भिर्ग्राहैर्जलजन्तुभि: संकुलं व्याप्तं आङ्पूर्व्वोऽम्नातिस्तृप्त्यर्थ: भावधेनाश्रिताद्भुव इति खः ॥ ७ ॥

कृतेनोपकृतं वायो: परिक्रीणानमुत्थितं। पिता संगिरितं शक्रात्समैनाकाद्रिमैक्षत ॥ ८ ॥

ज०म० कृतेत्यादि। महनूमान् समुद्रादुत्थितं मैनाकाद्रिमैक्षत वायोरुपकृतमुपकारं कृतेन प्रत्युपकारेण परिक्रीणानं परिक्रयं विधि

अर्णं परिव्यक्रीणः क्रियमत्वकर्त्तभिप्रायविषय आत्मनेपदं पित्रा वायुना रचितं यस्मात् तेन हि पक्षच्छेदकाले महता वेगेन समुद्रं नीत्वा रचितइति श्रूयते ॥ ८ ॥

इतेरित्यादि। स हनूमान् समुद्रादुत्थितं मैनाकनामानमद्रिं ऐक्षत दृष्टवान् ईषद्दर्शने क्रानुबन्धावसं कीदृशं यस्मात् पक्षच्छेदोद्यतात् पित्रा वायुना संरचितं अतएव वायोरुपकृतं उपकारं इतेन प्रत्युपकारेण परिक्रीणानं परिवर्त्तयन्तं विपराजीति परि पूर्व्वक्रीञोमनं आत्मनः ॥ ८ ॥ भ०

खं पराजयमानोऽसावुन्नत्या पवनात्मजं। अगादद्रिर्विजेषीष्ठा मयि विश्रम्य वैरिणं ॥ ९ ॥

खमित्यादि। असावद्रिः उन्नत्या उन्नततया खम्पराजयमानोऽभिभवन् पवनात्मजं अगाद मयि विश्रम्य स्थित्वा वैरिणं शत्रुं विजेषीष्ठाः त्वमभिभूयाः आशिषि लिङ् उभयत्रापि विपराभ्यां जेरिति तङ् ॥ ९ ॥ ज०म०

खमित्यादि। असौ अद्रिः पवनात्मजं अगाद कीदृशः सन् उन्नत्या उच्चतया खमाकाशं पराजयमानः अभिभवन् विपराजीति सं किं अगादेत्याह मयि विश्रम्य विश्रामं कृत्वा वैरिणं विजेषीष्ठाः अभिभूयाः आशिषि पूर्ववत्सं ॥ ९ ॥ भ०

फलान्यादत्स्व चित्राणि परिक्रीडस्व सानुषु। साधु संक्रीडमानानि पश्य वृन्दानि पक्षिणां ॥ १० ॥

७ ज०भ० फलानीत्यादि। चित्राणि नानाविधानि फलानि आदत्स्व गृहाण आङोदोनास्यविहरणइत्यात्मनेपदं सानुषु ममैकदेशेषु परिक्रीडस्व विहर पक्षिणाञ्च वृन्दानि साधु शोभनं अनुक्रीडमानानि विहरन्ति सन्ति पश्य उभयत्र क्रीडानुसम्परिभ्यश्चेति तङ्॥१०॥

भ० फलेत्यादि। चित्राणि अद्भुतानि फलानि त्वमादत्स्व गृहाण आदाञोऽस्वप्रसारेइति सं आमन्त्रणं गी आङोरित्यालोपः मम सानुषु एकदेशेषु परिक्रीडस्व विहर पर्य्यन्तवाङः क्रीडइति सं पक्षिणां वृन्दानि पश्य कीदृशानि साधु शोभनं अनुक्रीडमानानि विहरन्ति पूर्व्ववत्सं॥१०॥

क्षणं भद्रावतिष्ठस्व ततः प्रस्थास्यसे पुनः। न तत्संस्थास्यते कार्य्यं दक्षेणाङ्गीकृतं त्वया॥११॥

ज०म० क्षणमित्यादि। हे भद्र कल्याण क्षणमवतिष्ठस्व ततः पश्चात्प्रस्थास्यसे यास्यसि यच्च कार्य्यं करणीयं दक्षेणानलसेन त्वया उरीकृतमङ्गीकृतं न च संस्थास्यते अपितु निष्पत्स्यत एवेत्यर्थः सर्व्वत्र समवप्रविभ्यस्थः इति तङ्॥११॥

भ० क्षणमित्यादि। हे भद्र कल्याणयुक्त त्वं क्षणं अवतिष्ठस्व ततः पुनः प्रस्थास्यसे यास्यसि दक्षेण अनलसेन त्वया उरीकृतं अङ्गीकृतं कार्य्यं न च संस्थास्यते न नाशं गमिष्यति सम्पत्स्यत एवेति भावः प्रतिज्ञानिर्णयेत्यादिना अववप्रपूर्व्वतिष्ठतेर्सं॥११॥

त्वयि नस्तिष्ठते प्रीतिस्तुभ्यं तिष्ठामहे वयं। उत्तिष्ठमानं मित्रार्थे कस्त्वां न बहु मन्यते॥१२॥

त्वयीत्यादि। त्वयि विषये अस्माकं प्रीतिरस्ति तेन संशये अस्माभिरन्यो निर्णेता नान्वेषणीयः किन्तु नोऽस्माकं प्रीतिरेव निर्णयं पश्यन्ती त्वयि तिष्ठते प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदं विवादपदनिर्णेता स्थेय उच्यते तुभ्यन्तिष्ठामहे वयमिति त्वयि विषये अस्माकं चेतोवर्त्तत इति स्वाभिप्रायं तुभ्यं तिष्ठामहे स्वाभिप्रायं निवेदयामह इत्यर्थः अत्र प्रकाशनञ्च स्वाभिप्रायकथनं श्लाघह्नुङ्स्थाशपांज्ञीप्स्यमान इति सम्प्रदानसंज्ञायां चतुर्थी कस्मादेवं मां श्लाघस इति चेदाह उत्तिष्ठमानं यतमानं उदोऽनूर्द्ध्वकर्म्मणीत्यात्मनेपदं कस्त्वां न बहुमन्यते न श्लाघते॥१२॥ जं॰मं॰

त्वयीत्यादि। त्वयि नोऽस्माकं प्रीतिस्तिष्ठते निश्चयेनास्ति तद्विषयेऽस्माकं प्रीतिरस्ति न वेति सन्देहे अस्माभिरन्यो निर्णेता नान्वेषणीयः किन्त्वस्माकं प्रीतिरेव त्वां निर्णेतारं करोतीति निर्णयार्थोऽत्र स्थाधातुः त्वमस्मदाप्तो न वेत्यत्र त्वद्विषये प्रीतिर्निर्णयं करोतीत्यन्ये वयं तुभ्यं तिष्ठामहे स्थित्वा स्वाभिप्रायं प्रकाशयामः प्रकाशार्थोऽत्र स्थाधातुः यस्मादित्स्वेत्यादिना संप्रदानत्वं प्रतिज्ञानिर्णयेत्यादिना सं अत्र प्रकाशः स्वाभिप्रायकथनं कथं मत्स्थं श्लाघसे इत्याह मित्रार्थे रामार्थे उत्तिष्ठमानं यतमानं त्वां को न बहुमन्यते न श्लाघते अपि तु सर्व्व एव उदोऽनूर्द्ध्वेहे इति सं॥१२॥ भ॰

ये सूर्य्यमुपतिष्ठन्ते मन्त्रैः सन्ध्यात्रयं द्विजाः। रक्षोभिस्तापितास्तेऽपि सिद्धिं ध्यायन्ति तेऽधुना॥१३॥

ज॰म॰ यइत्यादि। ये द्विजा मन्त्रैः करणभूतैः सूर्य्यमुपतिष्ठन्ते प्रत्युपासते उपान्मन्त्रकरणइत्यात्मनेपदं सन्ध्यात्रयं त्रिसन्ध्यं अत्यन्तसंयोगे द्वितीया तेऽपि रक्षोभिस्तापिताः उपद्रुताः अधुना ते सिद्धिं ध्यायन्ति किंपुनरहं यस्ते पितुः सुहृत् तदेव दर्शयन्नाह ॥ १३ ॥

भ॰ यइत्यादि। ये द्विजा ब्राह्मणा मन्त्रैः करणभूतैः सन्ध्यात्रयं व्याप्य सूर्य्यमुपतिष्ठन्ते उपासते मन्त्रेणोपादिति सं तेऽपि द्विजा रक्षोभिस्तापिता उपद्रुताः सन्तः अधुना इदानीं तव सिद्धिं ध्यायन्ति चिन्तयन्ति अहन्तु तव पितुः सुहृत् सुतरां तथेति भावः यद्वा द्विजानुकूलत्वादपि त्वं साध्यइति भावः सन्ध्यात्रयमिति सदा ध्वादीति द्वितीया ॥ १३ ॥

अव्यग्रमुपतिष्ठस्व वीर वायोरहं सुहृत्। रवि वितपतेऽत्यर्थमाश्वस्य मयि गम्यतां ॥ १४ ॥

ज॰म॰ अव्येत्यादि। हे वीर अव्यग्रमनाकुलं मय्युपतिष्ठस्व सन्निहितो भव अकर्म्मकाच्चेत्यात्मनेपदं यतो वायोस्तव पितुरहं सुहृत् रविरत्यर्थं वितपते दीप्यते उद्विभ्यामित्यात्मनेपदं तत्राकर्म्मकादिति वर्त्तते तस्मादाश्वस्य विश्रम्य गम्यतां ॥ १४ ॥

भ॰ अव्येत्यादि। हे वीर अव्यग्रमनाकुलं यथा स्यात्तथा त्वमुपतिष्ठस्व सन्निहितो भव अकादिति सं यतोऽहं वायोस्तव पितुः सुहृन्मित्रं विश्रामाचित्यं दर्शयति रविरत्यर्थं वितपते दीप्यते व्युत्पइति सं अकत्वात् अतएव मयि आश्वस्य प्राणमिष्टतिं प्राप्य त्वया गम्यतां ॥ १४ ॥

तीव्रमुत्तपमानोऽयमशक्यः सोढुमातपः। आघ्नान इव सन्दीप्तैरलातैः सर्व्वतोमुहुः ॥ १५ ॥

तीव्रेत्यादि। तीव्रं सुष्ठु उत्तपमानोदीप्यमान आतपः सोढुमशक्यः पूर्व्ववदात्मनेपदं अलातैः उल्मुकैः सन्दीप्तैः सर्व्वत आघ्नानइव ताडयन्निव आङोयमहनइत्यविवक्षितकर्म्मकत्वादात्मनेपदं गमहनेत्युपधालोपः होहन्तेरिति कुत्वं ॥ १५ ॥ ज०म०

तीव्रेत्यादि। पुनर्व्विश्रामौचित्यमाह तीव्रमुत्तपमानोदीप्यमानोऽयमातपः सोढुं न शक्यः पूर्व्ववन्मं सन्दीप्तैरलातैरङ्गारैर्मुहुर्व्वारं वारं सर्व्वतआघ्नानइव ताडयन्निव आत्माङ्गादङ्गाघ्नानयमइति सं अविवक्षितकर्म्मत्वात् अङ्गारोऽलातमुल्मुकमित्यमरः आलातैरिति पाठे स्वार्थे ष्णः विद्यादलातमालातमिति द्विरूपकोषः ॥ १५ ॥ भ०

संशृणुष्व कपे मत्कैः सङ्गच्छस्व वनैः शुभैः। समारन्त ममाभीष्टाः सङ्कल्पास्त्वय्युपागते ॥ १६ ॥

संशृणुष्वित्यादि। हे कपे संशृणुष्व आकर्णय समोगम्यृच्छीत्यादि विवक्षितकर्म्मकत्वादात्मनेपदं शुभैः शोभमानैः इगुपधलक्षणः कः वनैर्म्मत्कैः मत्स्वामिकैः अहं स्वामी येषामिति सएषां ग्रामणीरिति कः प्रत्ययोत्तरपदयोश्चेति मदादेशः सङ्गच्छस्व सङ्गतो भव पूर्व्ववदात्मनेपदं समारन्त ममाभीष्टाइति ममाभिप्रेताये ज०म०

सङ्कल्पा अभिप्रायाः कदा नु मे सुहृत्तया वा कश्चिद्वेत्स्यति यस्या हमुपयोगी स्यामिति ते समारन्ता आगताः त्वय्युपागते सति अर्त्त र्लुङि पूर्व्ववदात्मनेपदं सर्त्तिशास्त्यर्त्तिभ्य इत्यङि ऋदृशोऽङि गुणः आङ्जादीनाम् भाषाविषयस्य प्रयोगः ॥ १६ ॥

भ० समित्यादि। हे कपे संश्रुणुष्व आकर्णय मत्कैर्मत्स्वामिकैः प्रभुभिः शोभमानैर्निर्भयत्वेन कल्याणयुक्तैः पावनैः सह सङ्गच्छस्व सङ्गतो भव अहं स्वामी येषामिति विकारसंघेत्यादिना कः समे मानो त्यर्थे वा त्वयि उपागते सति ममाभीष्टावाञ्छिताः सङ्कल्पा अभि प्रायाः सुहृद्दर्शनादिरूपाः समारन्ताः सङ्गतवन्तः सङ्गतौ सर्व्वत्र समोगम्यृच्छ इत्यादिना सं अर्त्तः अर्त्तेरिति अः जिस्य वत्सस्येत्यादिना अर्त्तेर्ङः हृस्योर्णुरिति गुणः ॥ १६ ॥

के न संविद्रते वायोर्मैनाकाद्रिर्यथा सखा। यत्ता दुपाक्षये प्रीतः संक्षयस्व विवचितं ॥ १७ ॥

ज०म० न चैवमिथ्या वायुर्मे सुहृदित्याह केनेत्यादि। वायोर्मैनाकाद्रिर्य था सखेति के न संविद्रते न जानन्ति वेत्तेः पूर्व्ववदात्मनेपदं वेत्तेर्वि भाषेति रुट तस्मात्प्रीतः सन् अहं यत्नादुपाक्षये भवन्तमाक्षयामि ततः संक्षयस्व कथय विवचितमभिप्रेतं निसमुपविभ्यो ह्व इत्यकर्त्त निनाथे सम्प्रदानात्मनेपदं ततोऽकर्म्मकादिति निवृत्तं सामा न्येन प्रधानं ॥ १७ ॥

भ० केनेत्यादि। मत्पितुः सखा त्वमसीति किं प्रमाणमित्याशङ्क्याह मैनाकाद्रिर्वायोर्यथा सखा तथा के जनाम संविद्रते न जानन्ति

अपि तु सर्व्वएव समागमच्छेति सं अविवक्षितकर्म्मत्वात् माक्रो रमिति रम अतएवाहं प्रीतः सन् यत्नादुपाह्वये त्वामाह्वयामि त्वमपि विरुद्धितं वक्तुमिष्टं संह्वय संह्वयय इति मगादाद्रिरिति सम्बन्धः निसंव्युपेभ्यो ह्वइ इति सं॥१७॥

स्पर्द्धामिवाह्वयमानन्तमवोचद्भूधरं कपिः। उपकुर्व्वन्तमत्यर्थं प्रकुर्व्वाणोऽनुजीविवत्॥१८॥

स्पर्द्धामित्यादि। स्पर्द्धामिवाकाशमिवाह्वयमानं महत्तया स्पर्द्धमानं स्पर्द्धायामाङ इत्यात्मनेपदं अत्यर्थमुपकुर्व्वन्तं आतिथ्येन तमीदृशं भूधरमवोचत् कपिः प्रकुर्व्वाणः सेवमानोऽनुजीविवत् भृत्यवत् गन्धनेत्यादिना सेवने तङ्॥१८॥ जं॰म॰

स्पर्द्धामित्यादि। कपिर्हनूमान् तं भूधरं मैनाकं पर्व्वतं अवोचत् उक्तवान् कीदृशं स्पर्द्धामाकाशमाह्वयमानमिव महत्त्वेन स्पर्द्धमानमिव स्पर्द्धायामाङ इति सं अत्यर्थमुपकुर्व्वाणमुपकारोद्यतं कीदृशः कपिः अनुजीविवत् भृत्यवत् प्रकुर्व्वाणः सेवमानः सूचनावक्षेपणेत्यादिना सेवायां सं॥१८॥

कुलभार्य्यां प्रकुर्व्वाणमहं द्रष्टुं दशाननं। यामि त्वरावान् शैलेन्द्र मा कस्यचिदुपह्वयाः॥१९॥

कुलेत्यादि। अहं दशाननं द्रष्टुं यामि कुलभार्य्यां प्रकुर्व्वाणं कुलनारीमभिगच्छन्तं तस्यां सहसा प्रवर्त्तमानमित्यर्थः साह- जं॰म॰

नपि प्राणान् वा विनेष्ये स्वाम्यर्थे त्यक्ष्यामि प्राणार्थोऽत्तेपदस्यो दिना व्ययार्थे मं व्ययो धर्म्मादिषु विनियोगः अथवा यश उदानेष्ये ऊर्द्धं नेष्यामि पूर्व्वेण चेपणं मं ॥ २१ ॥

विनेष्ये क्रोधमथवा क्रममाणोऽरिसंसदि। इत्यु क्त्वा खे पराक्रंस्त तूर्णं सूनुर्नभस्वतः ॥ २२ ॥

ज॰म॰ विनइत्यादि। यदि वा क्रोधमात्मनोविनेष्ये अपनेष्यामि कर्त्तृ स्थेचेति तङ् कर्तृस्थस्य क्रोधकर्म्मणोऽशरीरत्वात् अत्र व्ययोन सम्भ वतीति अरिसंसदि शत्रुसभायां क्रममाणः अप्रतिबन्धेन प्रवर्त्त मानः वृत्तिसर्गेत्यादिना वृत्तौ तङ् वृत्तिरप्रतिबन्धः इत्येव मुक्त्वा सूनुर्नभस्वतः वायोस्तनयः खं तूर्णं पराक्रंस्त शीघ्रमुत्पेहे उपपराभ्यामित्यनेन सर्गे तङ् सर्ग उत्साहः ॥ २२ ॥

भ॰ विनेष्यइत्यादि। अथवा क्रोधं विनेष्ये अपनेष्यामि शत्रुहन नात् घञ्याम् र्त्तठादिति मं अमूर्त्तमशरीरं कर्तृस्थाद्यकर्म्मका द्विपूर्व्वनीञ्आत्मनेपदमिति विद्यासागरः स्वमतेऽपि शब्दठाठा दं रित्येतामण्ड़कप्लुत्या वेरित्यनुवर्त्तते इति वाच्यं क्रोधं विन यतइत्युदाहरणदर्शनात् अन्ये तु विपूर्व्वत्वं न वदन्ति तन्न साधु त्रिगणय्य नयन्ति पौरुषं विजितक्रोधजयाजिगीषवइत्यादिदर्श नात किं कुर्व्वन् अरिसंसदि शत्रुसभायां क्रममाणः अप्रतिबन्धेन चेष्टमानः वृत्त्युत्साहेत्यादिना मं वृत्तिरप्रतिबन्धः इत्येवमुक्त्वा नभस्वतोवायोः सूनुः पुत्रो हनूमान् खं आकाशं तूर्णं शीघ्रं परा

क्रंस्त उत्साहं चकार पूर्व्वेणोत्साहे मं आस्फालनरूपोऽत्रोत्साहः सुक्रमोऽमे इति नेम्॥२२॥

परीक्षितुमुपाक्रंस्त राक्षसी तस्य विक्रमं। दिवमाक्रममाणेव केतुताराभयप्रदा॥२३॥

परीत्यादि। तस्य हनूमतोविक्रमं शौर्य्यं परीक्षितुं राक्षसी उपाक्रंस्त उत्सेहे पूर्व्ववत्तङ् दिवमाक्रममाणेव यथा केतुः स्वर्भानुः तारा नभस्युद्गच्छति भयङ्करा आङउद्गमनइति तङ् तत्र हि ज्योतिरुद्गमनइत्युक्तं केतुतारायाश्च ज्योतिःस्वभावत्वात्॥२३॥ ज॰म॰

परीत्यादि। तस्य हनूमतोविक्रमं शौर्य्यं परीक्षितुं राक्षसी उपाक्रंस्त उत्सहते स्म पूर्व्ववत्तं दिवमाकाशमाक्रममाणा उद्गमपूर्व्वकं प्राप्नुवती केतुस्वभावा तारेव भयप्रदा भयं प्रददातीति हनजनादिति डः आङोभोद्गमइति मं आक्रामति धूमः खमित्यत्र उद्गमोन विवक्ष्यते किन्तु व्याप्तिमात्रं॥२३॥ भ॰

जले विक्रममाणायाहनूमान् शतयोजनं। आस्यं प्रविश्य निरगादणूभूयाप्रचेतितः॥२४॥

जलइत्यादि। विक्रममाणयाः पद्भ्यां विचरन्त्याः वेःपादविहरणइति तङ् जलग्रहणात् गतिविशेषन्दर्शयति आस्यं शतयोजनं शतं योजनानि यस्य प्रमाणतः तदणूभूय सूक्ष्मीभूय प्रविश्य ज॰म॰

निरगात् निर्गत उदरं विदार्य्येत्यर्थात् अप्रचेतितः अविज्ञातः ॥ २४ ॥

भ० जलइत्यादि। जले विक्रममाणायाः पद्भ्यां विहरन्त्यारा च स्याः शतयोजनमास्यं प्रविश्य हनूमान् अणूभूय सूक्ष्मीभूय अप्रचेतितस्तया अपरिज्ञातः सन् निरगात् निर्गतः कर्णपथेनेत्यर्थात् उदरं भित्त्वेत्यन्ये तत्तु रामायणविरुद्धं शतं योजनानि प्रमाणेनास्यस्येति विग्रहः वेःपद्भिरिति सं पद्भिरिति वक्तव्यनिर्देशेन पादमात्रस्य करणत्वे वेःक्रमोममिति बोध्यं न तु साधु विक्रमते वाजीत्युदाहरणदर्शनात् वक्तपादकरणत्वं वाच्यं वेःपद्भ्यामिति कातन्त्रसूत्रे ङित्वमुपलक्षणं तेन तन्मते साधु विक्रमते वाजीत्यादिसिद्धं ॥ २४ ॥

द्रष्टुं प्रक्रममाणोऽसौ सीतामम्भोनिधेस्तटं। उपाक्रंस्ताकुलं घोरैः क्रममाणैर्निशाचरैः ॥ २५ ॥

ज०म० द्रष्टुमित्यादि। असौ हनूमान् सीतां द्रष्टुं प्रक्रममाणः आरभमाणः आदिकर्म्म यथा भोक्तुं प्रक्रमतेइति उदधेस्तटमुपाक्रंस्त गन्तुं प्रारब्धवानित्यर्थः ततश्च प्रोपयोरादिकर्म्मणि समानार्थत्वात् प्रोपाभ्यांसमार्थाभ्यामिति तङ् घोरैः रौद्रैः निशाचरैराकुलं व्याप्तं तटं क्रममाणैः इतस्ततोगच्छद्भिः अनुपसर्गाद्देति तङ् ॥ २५ ॥

भ० द्रष्टुमित्यादि। असौ हनूमान् निर्गतः सन् सीतां द्रष्टुं प्रक्रममाण आरभमाण उदधेस्तटमुपाक्रंस्त गन्तुमारभते स्म यद्यपि

भोक्तुमुपक्रमते इत्यादावारम्भमात्रमुपक्रमेरर्थस्तथापीह गमना रम्भोवाच्यः लाक्षणिकत्वात् दृष्टुमित्यस्यानुषङ्गेन भ्रमोनिषेधस्त टमुपाक्रंस्तेति वा प्रोपादारम्भेइति सं घोरैर्भयानकैर्निशाचरै राकुलं व्याप्तं क्रममाणैरितस्ततोगच्छद्भिः वाणैरिति सं॥ २५॥

**आत्मानमपजानानः शशमात्रोऽनयद्दिनं। आ स्से रात्राविति प्राज्ञः प्रत्यज्ञास्त क्रियापटुः॥ २६॥**

आत्मेत्यादि। मा कश्चिन्नाज्ञोदिति तथाविधमात्मानं शरी रमवजानानः अपन्हुवानः अपह्नवे ज्ञइति तङ् योहि शशमात्रो भूत्वा स्थितः तेन कथमात्मा लोके नापलपितः स्यात् अनयद्दि नं अगमयद्दिवसं आस्से रात्राविति प्रत्यज्ञास्त प्रतिज्ञातवानि त्यर्थः सम्प्रतिभ्यामनाध्यानइत्यात्मनेपदं लुङाभवति आत्मान स्त्वात्कण्ठनं आस्सेइत्यकर्म्मकास्तेत्यकर्म्मकक्रियावचनत्वादात्मने पदं प्राज्ञः क्रियापटुरिति बुद्धिकौशलं कर्म्मकौशलञ्च दर्शयति॥ २६॥ ज०म०

आत्मानमित्यादि। असौ शशमात्रः शशपरिमाणोभूत्वा दिनमनयत् गमयामास इन्नमात्रइयसट्मानेइति मात्रट् कथं तथाविधस्याल्पकायत्वमित्याह आत्मानमपजानानः अपह्नुवानः निह्नवे ज्ञइति सं रात्रावहं आस्सेइति प्रत्यज्ञास्त प्रतिज्ञातवान् संप्रतेरस्मृताविति सं आस्सेइति अकादिति सं अविवक्षितकर्म्म त्वात् ञिकुन्यस्तेत्यादिना वा प्राज्ञः क्रियापटुरिति पदद्वयेन बुद्धिकौशलं क्रियाकौशलञ्च दर्शितं॥ २६॥ भ०

संजानानान् परिहरन् रावणानुचरान् बहून्।
लङ्कां समाविशद्रात्रौ वदमानोऽरिदुर्गमां॥ २७॥

ज०म० सञ्जेत्यादि। रावणस्यार्थेषु कार्य्येषु ये चरन्तीति चरैष्टः तान् बहून् सञ्जानानान् चेतयतः परिहरन् अनाध्यानं तङ् रात्रौ लङ्कां समाविशत् प्रविष्टवान् अरिदुर्गमां राक्षसदुर्गमां वदमानोभासमानः भासनोपसम्भाषेत्यादिना आत्मनेपदं॥ २७॥

भ० समित्यादि। असौ हनूमान् रात्रौ लङ्कायां समाविशत् प्रविष्टवान् कीदृशः वदमानः शोभमानोवदन् शोभापन्नचितं शोभाहेतुकं वा यथा स्यात्तथा कथयन् वा ज्ञानयत्नप्रलोभेवद इति सं ज्ञानपदेन ज्ञानपूर्व्वकत्वात् शोभाप्युच्यतइति कातन्त्र टीकायां व्याख्यातत्वात् प्रकाशनादौ वदइति क्रमदीश्वरस्तच्च दर्शनाच्च शोभा च वदत्यर्थस्य लक्षणभावेन हेतुभावेन वा विशेषणं न तु तन्मात्रं वाच्यमिति न्यासः बहून रावणस्यानुचरान् सेवकान् परिहरन् कीदृशान् संजानानान् चेतयमानान् संप्रतेरस्मृताविति सं कीदृशीं लङ्कां अरिदुर्गमां शत्रुभिर्दुष्प्रापां॥ २७॥

कञ्चिन्नोपावदिष्टासौ केनचिद्व्यवदिष्ट न। शृण्वन् संप्रवदमानाद्रावणस्य गुणान् जनात्॥ २८॥

ज०म० कञ्चिदित्यादि। असौ प्रविष्टः सन् न कञ्चिदुपावदिष्ट उपसान्त्वितवान् उपसम्भाषायां तङ् केनचिद्व्यवदिष्ट न न भाषितवान् विमतौ तङ् विमतिर्नानामतिः संशृण्वन् आकर्णयन् जनात् प्रवद

मानात् रावणस्य सम्बन्धिनो गुणान् सम्भूय भाषमाणान् व्यक्त वाचामित्यात्मनेपदं जनानां व्यक्तवाक्यं ॥ २८ ॥

किञ्चिदित्यादि। असौ हनूमान् प्रविष्टः सन् न किञ्चिदुपावदिष्ट न किञ्चित्प्रलोभनवाक्यं भाषते स्म भाषः यत्नेत्यादिना प्रलोभने सं केनचित् सह न व्यवदिष्ट नानामतिपूर्व्वकं विचित्रं न भाषते स्म विमतिपूर्व्वकं विचित्रकथनमत्र वदत्यर्थः विमतिव्यक्तसहोक्त्योरिति विमतौ सं संप्रवदमानात् सम्भूय व्यक्तं भाषमाणात् जनात् रावणस्य गुणान् शृण्वन् पूर्व्वेण व्यक्तसहोक्तौ सं ॥ २८ ॥ भ०

जल्पितोत्क्रुष्टसङ्गीतप्रनृत्तस्मितवल्गितैः। घोषस्यान्ववदिष्टेव लङ्का पूतक्रतोः पुरः ॥ २९ ॥

जल्पीत्यादि। पूतक्रतोरिन्द्रस्य या पूः तस्या अमरावत्याः सम्बन्धिनो घोषस्यान्ववदिष्टेव लङ्का अनुशब्दः सादृश्ये सदृशं वादं कृतवती तैर्जल्पितादिभिः उभयत्रापि जल्पितादिघोषस्य तुल्यत्वात् लङ्केति तत्स्थोजन उच्यते तेन व्यक्तवाग्विषयत्वात् अनोरकर्म्मकादिति तङ् न तत्र व्यक्तवाचामिति अनुवर्त्तते न मनुष्यारणइति ॥ २९ ॥ अ०म०

जल्पितइत्यादि। लङ्का जल्पितादिभिः पूतक्रतोरिन्द्रस्य पुरोऽमरावत्याघोषस्य शब्दस्य अन्ववदिष्टेव सदृशभाषणं कृतवतीव उभयत्रापि जल्पितादिघोषणानां तुल्यत्वात् अनुशब्दः सदृशभाषणद्योतकः तद्गतजनानां भाषणेन तद्भाषणमुत्प्रेक्ष्यते अनोरकर्म्मकादिति सं अनुपूर्व्वादकर्म्मकाद्वदेरुक्तौ व्यक्तवाचामात्मनेपदमिति भ०

केचित् तत्रमते सद्वाक्शब्देन सम्यग्या सद्वाक्चितमनश्च यमे व्यक्तवाचामिति तु वेपरीत्येन नाङ्गीकृतं यमोरकर्मकरति कातन्त्रस्य चेऽपि व्यक्तवाचामित्यस्य समन्वोनाङ्गीकृतः अन्यितं व्यक्तभावश्च उत्कृष्टमाक्रान्तं सङ्गीतं सम्यक् गानं प्रनृत्तं नर्त्तनशब्दः स्मितं वा स्यशब्दः वल्गितं मत्तवचनं ॥ २८ ॥

## ऐद्विप्रवदमानैस्तां संयुक्तां ब्रह्मराक्षसैः। नयात्र गिरमाणैश्च पिशाचैर्मांसशोणितं ॥ ३० ॥

म॰ज॰ ऐदित्यादि। तां ब्रह्मराक्षसैः संयुक्तां हनूमानैत् जगाम रक्षो लङ्कि रूपं विप्रवदमानैः परस्परविरुद्धार्थाभिधायिभिः विप्रलापात्मकं व्यक्तवाचां समुच्चारणं विभाषाविप्रलापइति तङ् तथा पिशाचैर्मांसशोणितमवगिरमाणैः भक्षयद्भिः संयुक्तां गिरतेरभ्यवहारार्थत्वादवाङ्गरति तङ् मांसशोणितमिति जातिरप्राणिनामित्येकवद्भावः ॥ ३० ॥

भ॰ ऐदित्यादि। हनूमान तां लङ्कां ऐत गतवान् रणाच्यां रूपं कीदृशीं ब्रह्मस्वरूपैस्तत्सम्बन्धिभिर्वा राक्षसैः संयुक्तां कीदृशैः विप्रवदमानैः मम्यग विरुद्धप्रलापिभिः एकोयाहक वदति अपरस्ताद्दृक् न वदति वितण्डां कुर्वद्भिरित्यर्थः तद्योगेवेति सं तद्या गदति तयोः पृर्वोक्तयो विमतिव्यक्तसंज्ञायोगे युगपत्प्रवृत्तो विमतिरिह विरुद्धप्रलापमात्रं तथा पिशाचैः संयुक्तां कीदृशैर्मांसशोणितस्यावगिरमाणैर्भक्षयद्भिः अवाद्गिरतेरिति सं मांस

प्रोषितमिति समाहारद्वन्द्वः पिशितमश्नातीति पिशिताशास्तेषामपीपा
दिसात्सव्ययात् ॥ २० ॥

यथास्वं सङ्गिरन्ते स्म गोष्ठीषु स्वामिनोगुणान्।
पानशौण्डाः पथः क्षीवावृन्दैरुदचरन्त च ॥ २१ ॥

यथेत्यादि। मधुराक्षसाः पिशाचाश्च यथास्वमात्मीयस्य स्वा ज०म०
मिनोगुणान् गोष्ठीषु गोष्ठीमध्ये सङ्गिरन्ते स्म अभ्युपगतवन्तः समः प्रतिज्ञान इति तङ् पानशौण्डाः पानासक्ताः क्षीवामत्ताः सन्तः पथोमार्गानुदचरन्त उत्क्रम्य गच्छन्ति स्म उदश्चरः सकर्मकादिति तङ् वृन्दैरिति सम्भूयेत्यर्थः ॥ २१ ॥

यथेत्यादि। मधुराक्षसाः पिशाचाश्च यथास्वं स्वीयस्य स्वामि भ०
नोगुणान् गोष्ठीषु गोष्ठीमध्ये सङ्गिरन्ते स्म अभ्युपगतवन्तः समः प्रतिज्ञायामिति तं पाने शौण्डाः पानासक्ताः अतएव क्षीवाः मत्ताः सन्तः वृन्दैः सम्भूय पथोमार्गान् उदचरन्त उत्क्रम्य जग्मुः उदश्चरः सकर्मकादिति तं ॥ २१ ॥

यानैः समचरन्तान्ये कुञ्जराश्वरथादिभिः। संप्रा
यच्छन्त वन्दीभिरन्ये पुष्पफलं शुभं ॥ २२ ॥

यानैरित्यादि ॥ अन्ये यानैः कुञ्जरादिभिः समचरन्त सञ्च ज०म०
रन्ते स्म समस्तृतीयायुक्तादिति तङ् अन्ये वन्दीभिरानीताभिः सम्प्रदाने तृतीया अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवतीति वच

नाइन्दोभ्य इत्यर्थः पुण्यफलं शोभनं सम्प्रायच्छन्त ददति स्म दान स्यमाचेच्चतुर्थ्यर्थ इति तङ् पुण्यफलमिति जातेरेकवद्भावः॥ ३२ ॥

भ० यानैरित्यादि। अन्ये कुञ्जरादिभिर्यानैः समचरन्त सञ्चरन्ते स्म समस्तृतीयेति सं अन्ये शुभं शोभनं पुण्यं फलस्य वन्दीभिः हठहृतस्तोभिः संप्रायच्छन्त संप्रददुः मन्दानेनाभेऽधर्म्मेनित्यमिति संप्रदाने तृतीया वन्दीभिः सह विहरणेच्छया ताभ्यो ददुरित्यधर्म्मः दानःमाचेच्चतुर्थ्ये इति सं सेत्यनेन समस्तृतीययस्मात् त्वौ आत्मनेपदं ॥ ३२ ॥

कोपात्काश्चित्प्रियैः प्रत्तमुपायंसत नासवं। प्रेम जिज्ञासमानाभ्यस्ताभ्योऽशप्सत कामिनः॥ ३३ ॥

ज०म० कोपादित्यादि। काश्चित स्त्रियः कोपात् अन्यस्त्रीगमनजनितात् आसवं मद्यविशेषं नोपायंसत न स्वीकृतवत्यः विभाषोपयम इत्यकिच्चपक्षे उप उपायमः स्वीकरणइति तङ् पाणिग्रहणपूर्व्वस्य स्वीकरणे च तत्र न्यितत्वादौपचारिकमत्र स्वीकरणं द्रष्टव्यं समुदाङ्भ्यो यमोऽग्रन्थ इति वा तङ् उदाङ्पूर्व्वस्य यमआदानार्थत्वात् अत्रमरप्राप्तन्तु सन्नद्धयमुदायतं स्यात् प्रियैः प्रत्तन्दत्तं अचउपसर्गात्तः प्रेम जिज्ञासमानाभ्यः किमस्मासु प्रेमास्ति वा नवेति छलकोपप्रकाशेन ज्ञातुमिच्छन्तीभ्यः ज्ञाश्रुस्मृदृशांसनइति तङ् ताभ्यो योषिद्भ्यः कामिनः अशप्सत न मे त्वदन्या प्रियास्तीति तदीयशरीरस्पर्शेन शपथञ्चक्रुः शपाउपलम्भने इत्यात्मने

पदं वाचा उपलम्भनं शरीरस्पर्शनं श्लाघह्नुङित्यादिना सम्प्रदान संज्ञायां चतुर्थी तासां ज्ञापयितुमिष्यमाणत्वात् ॥ ३३ ॥

कोपादित्यादि। काश्चित् स्त्रियः कोपात् सपत्नीसङ्गजनितात् भ० प्रियैः प्रत्तं प्रदत्तमासवं मद्यविशेषं नोपायंसत न स्वीकृतवत्यः उपयमोविवाह इति सं विवाहः स्वीकारः उपायमः स्वीकरणे इति क्रमदीश्वरसूत्रदर्शनात् यमःसूचनेवाप्युढाह इति सेः किम्वा भावपक्षे सन्तापाभावः अत्राप्युद्वाहः स्वीकारः स्वीकरणंचेति परसूत्रदर्शनात् उपयमोविवाह इत्यत्र विवाहः पाणिग्रहणमेवेति चेत् जिनत्यन्तपिवेत्यादौ अग्न्योत्समायमइति फलवत्कर्त्तरि उपाङ्पूर्व्वात्स्म प्रत्तमिति ययत्रमवेति दान्त्रः के तादेशः अन्यास् प्रियस्य स्नेहोऽस्ति न वेति सन्दिह्य कृतकोपेन प्रेम ज्ञातुमिच्छन्तीभ्यः ताभ्यः स्त्रीभ्यः कामिनोऽशपत न मेऽन्या प्रियास्तीति ज्ञापनार्थं शपथं चक्रुः शपथाभीर्गत्यनुकारे शपेति सं मिथ्यानिरासार्थं ज्ञापनमिह शपथः वाचा शरीरस्पर्शनमिति पाणिनीयाः यस्मादित्सेत्यादिना संप्रदानत्वं स्पृष्टमननुक्तेति शेषं ॥ ३२ ॥

प्रादिद्वत नोनृत्यं नाशुश्रूषत गायनान्। रामं सुस्मूर्षमाणोऽसौ कपिर्व्विरहदुःखितं ॥ ३४ ॥

प्रादीत्यादि। असौ कपिर्लङ्कायां नोनृत्यं प्रादिद्वत गाय ज०म० नान् गायकान् गन्धकन् युष नाशुश्रुषत न श्रोतुमिष्टवान् किमिति रामं विरहदुःखितं सुस्मूर्षमाणः स्मर्तुमिच्छन् समन्तोभ्यः पूर्व्ववदात्मनेपदं अज्झनगमांसनीति दीर्घत्वं उदोष्ठ्यपूर्व्वस्येत्युत्वं ॥ ३४ ॥

भ० प्रादीत्यादि। असौ कपिर्लङ्कायां नृत्यं नटनं न प्रादिदृचत न द्रष्टुमिच्छति स्म गायनान् नाशुश्रूषत न श्रोतुमिच्छति स्म तद्धी तच्छ्रवणेन गायनश्रवणमुपपद्यते यतोऽसौ विरहेण दुःखितं रामं सुस्मूर्षमाणः स्मर्त्तुमिच्छन् सर्व्वत्र सन्दृशनगुप्त्यादिना सनि मं पुर्नानिमीत्यगुणत्वं द्वयः सङ्क्राजिति षड् घढोःकःसे अस्मृधान्वे:धी:अस्त्रमिङ्क्रमामिति दीर्घः स्मरतेर्चदिरणावुरि त्युर् गायतेर्गोणनद्यकाविति णनट्। २४॥

अनुजिज्ञासते वाथ लङ्कादर्शनमिन्दुना। तमो पहविमुक्ताशुपूर्व्वस्यां दिश्युदैयत॥ २५॥

अ०म० अन्वित्यादि। अथैतस्मिन्प्रस्तावे इन्दुना चन्द्रेण उदैयत उदितं इणोभावे लङि रूपं पूर्व्वस्यां दिशि पूर्णेनेति दर्शयति दृश्यते यत् दर्शनं रूपं लङ्काया रूपमनुजिज्ञासतेव पूर्व्वेण प्राप्तस्यात्मने पदस्य नानोर्ज्ञ इति प्रतिषेधः तमोपहास्तमोविध्वंसमानाः विमुक्ताः प्रेरिता अंशवो यस्मिन उदय इति॥ २५॥

म० अन्वित्यादि। अथानन्तरमिन्दुना पूर्व्वस्यां दिशि उदैयत उदितं इणोभावे घो पूर्व्वस्यां दिशीत्युपादानेन इन्दोः पूर्णत्वं सूचितं कृष्णपचः सूचितो वा किङ्कुर्व्वता लङ्काया यद्दर्शनं हनूमतेत्यर्थात् तदनुज्ञातुमनुमन्तुमिच्छतेव चन्द्रोदये सत्येव हनूमता लङ्का द्रष्टव्येति तत्र तदनुमतिरुत्प्रेच्यते अन्ये तु दृश्यत इति दर्शनं रूपं लङ्काया रूपं ज्ञातुमिच्छतेवेत्याह सन्दृशनगुप्त्यत्र

अनुवर्त्तनात्र सं तमोपहा अन्धकारविध्वंसकाविमुक्ताः प्रेरिता संशयवायवेत्युदयक्रियाविशेषणं यद्यपि परमते क्तान्तस्य पूर्व्वनिपातोदृश्यते तथापि विमुक्तशब्दस्याच न पूर्व्वनिपातोगमकत्वात् अत एव दैक्यं सोऽन्ययमतोत्युक्तं केचित्तु द्रव्यभावेक्विप् तमोपहन माय विमुक्ताः संशयवायवेत्याहुः ॥ २५ ॥

आग्ड्रमूषन् समैथिल्यावार्त्तां हर्म्येषु रक्षसां। प्रीय मानान्धकारेषु समचारीदशङ्कितः ॥ २६ ॥

आश्वित्यादि। सकपिर्मैथिल्याः सीतायावार्त्तामाग्ड्रमूषन् आतु अ०म० मिच्छन् सत्याङ्भ्यां श्रुवइत्य त्मनेपदप्रतिषेधः रक्षसां हर्म्येषु गृहेषु समचारीत् सञ्चान्तवान् अतोत्वान्तस्येति वृद्धिः प्रीयमा नान्धकारेषु अपगच्छत्तमस्सु शद्लशातने शदेःशितइति तङ् पाघ्रे ति शीयादेशः अशङ्कितः शङ्कारहितः ॥ २६ ॥

आश्रित्यादि। हनूमान् मैथिल्यावार्त्तामाश्रोतुमिच्छन् भ० रक्षसां हर्म्येषु सौधगृहेषु समचारीत् संचरति स्म इतोयायोगा भावात् सभस्येति न सं शजवदेति ञिः सृहप्रनन्तुश्रेत्यादावाङ् वर्जनान्न सं कीदृशेषु शीयमानाअपगच्छन्तोऽन्धकारायेभ्यः शदोऽपि ममिति सं अशङ्कितः निर्भयः कर्त्तरि क्तः अकर्मकत्वात् भावेक्तोवा शङ्काजाताऽस्येति इतोऽस्य जातइति इतोवा ॥ २६ ॥

शतसाहस्रमारक्षं मध्यगं रक्षसां कपिः। ददर्श यं कृतान्तोऽपि म्रियेतासाद्य भीषणं ॥ २७ ॥

०म० शतेत्यादि। मध्यमं मध्यप्रकोष्ठगतं आरक्षं गोपकं शतसाह स्रं रक्षसां लक्षमात्रं ददर्श विलोकितवान् शतसहस्रं परिमाण मस्येति प्रान्ते: संख्यापूर्व्वपदानां तदन्तग्रहणमलुकीति वचनात् शतमानविंशतिकेत्यादिना अणि संख्याया: संवत्सरेत्युत्तरपदवृद्धि: भीषणं भयानकं आमाद्य प्राप्य कृतान्तोऽपि यमोऽपि स्वियेत प्राणान् मन्यजेत् स्त्रियतेर्लुङ्लिङोश्चेति तङ् तत्र हि शित इत्य नुवर्त्तते ॥ ३७ ॥

भ० शतेत्यादि। कपिर्मध्यगं मध्यकोष्ठगतं रक्षसामारक्षं ददर्श शत साहस्रं शतसहस्रं परिमाणमस्येति विकारसंघेत्यादिना तदस्य परिमाणमित्यर्थे णः मुपञ्चालादित्वादुत्तरपदे वृद्धिः यं भीषणं भयङ्करं आसाद्य प्राप्य कृतान्तोऽपि स्वियेत प्राणान् त्यजति किमु तान्य: विधिनिमन्त्रणेत्यादिना सम्भावनायां लिङ् क्रोष्टीक्षेममिति मं ॥ ३८ ॥

अध्यासिसिषमाणेऽथ वियन्मध्यं निशाकरे। कासा ञ्चक्रे पुरी सौधैरतीवोद्भासिभिः सितैः ॥ ३८ ।

ज०म० अध्येत्यादि। अथ निशाकरे चन्द्रमसि वियन्मध्ये अध्यासितुमा रोढुमिच्छति सति पूर्व्ववत्सन इत्यात्मनेपदं आस्तेरनुदात्तेत्त्वमा त्मनेपदनिमित्तं तेनैव सनन्तादपि भवति अत्र सनि इटि कृते अजादेर्द्वितीयस्येति द्विर्व्वचनं पुरी लङ्का कासाञ्चक्रे शोभते स्म सौधैः सौधानां ज्योत्स्नया चोद्भास्यमानत्वात् आमत्ययवदिति तङ् ॥ ३८ ॥

मध्येत्यादि। अथानन्तरं निशाकरे चन्द्रे आकाशस्य मध्य भ०
मध्यामितुमारोढुमिच्छति सति पुरी लङ्का वीथीशृङ्गैर्विशेषैः
कामाश्चक्रे शुशुभे काष्ठङ्कुशब्दइत्यस्यानेकार्थत्वात् दीप्त्यर्थता
काष्ठङ्दीप्तौ इत्यस्मात्ऽस्तीति विद्यासागरः केचित्तु काशाश्च
क्रइति तालव्यशकारवान् पाठः काष्टङ्गुनावित्यस्य रूपं वदन्ति
॥ ३८ ॥

इन्दुं चषकसंक्रान्तमुपायुङ्क्त यथामृतं। प्रयु
ञ्जानः प्रियावाचः समाजानुरतोजनः॥ ३९ ॥

इन्दुमित्यादि। एवं शोभितायां लङ्कायां समाजानुरतः ज०म०
पानगोष्ठीरतोजनः चषकसंक्रान्तं मद्यभाजने प्रतिविम्बेन संक्रा
न्तमिन्दुमुपायुङ्क्त उपभुक्तवान् प्रतिविम्बावच्छिन्नस्य मद्यस्योप
लक्ष्यमाणत्वादेवमुक्तं यथाऽमृतं अमृतमिव प्रियाअनुकूला
वाचः प्रयुञ्जानः अभिदधानः प्रोपाभ्यामिति तङ्॥ ३८ ॥

इन्दुमित्यादि। एवं शोभितायां लङ्कायां समाजानुरतः भ०
पानगोष्ठीरतोजनश्चषकसंक्रान्तं मद्यपात्रे प्रतिविम्बेन सङ्गतं
चन्द्रमुपायुङ्क्त दर्शनादिक्रियाव्याप्यं चकार चन्द्रस्योपयोगोद
र्शनादिरूपएव जयमङ्गलायान्तु चन्द्रमुपायुङ्क्त वुभुजे चन्द्र
शब्देन तत्प्रतिविम्बावच्छिन्नमद्यभागस्य लक्षितत्वात् यथामृतमि
वेत्युक्तं किं कुर्व्वन् यथामृतं तद्वत् प्रियावाचः प्रयुञ्जानः पीयता
मित्याद्यनुकूलवाचोऽभिदधानः युजिरयङ्क्तचइति मं मद्याका
ङ्क्षोचितं मधुपानवर्णनमिदं॥ ३८ ॥

संक्वणद्वानरेवोत्कण्ठामुपाभुङ्क्त सुरामलं। ज्योत्स्नायां विगलन्मानस्तरुणो रक्षसां गणः ॥ ४० ॥

ज॰ म॰ संक्वणद्वानरेत्यादि। रक्षसां तरुणो गणः उत्कण्ठां प्रियासंस्मारणं संक्वणद्वानर इव समुत्तेजयन्निव समन्तादिति तङ्। ज्योत्स्नायां सुरां अलमत्यर्थमुपाभुङ्क्त अभ्यवहृतवान् भुक्तवानिति तङ्। विगलन्मानः ॥ ४० ॥

भ॰ संक्वणद्वानरेत्यादि। तरुणो युवा रक्षसां गण उत्कण्ठां प्रियाभिलाषं संक्वणद्वानर इव समुत्तेजयन्निव ज्योत्स्नायां सुरां मदिरां अलमत्यर्थं उपाभुङ्क्त भक्षितवान् सुरापानादेव विगलन्मानः अपगतमानः संक्वणः संजातध्वनिरिति सं उत्कण्ठाकाऽमवाप्तौ योऽभिलाषस्तद्वाचकः इति ॥ ४० ॥

मध्वपाययत स्वच्छं सौत्पन्नं दयितान्तिके। आत्मानं सुरताभोगविश्रम्भोत्पादनं मुहुः ॥ ४१ ॥

ज॰ म॰ मध्वित्यादि। कीदृशं मधु स्वच्छत्वात् सौत्पन्नतया सुरभित्वात् शोभनं जातं यतः स्वयमात्मानं मुहुरपाययत पायितवत् णेरणाविति तङ्। दयितान्तिके दयितस्य समीपे सुरताभोगः सुरतविमर्दः तत्र विश्रम्भः तस्योत्पादनं जनकं उत्पादयतीति कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् ॥ ४१ ॥

भ॰ मध्वित्यादि। रक्षसां गणो दयितान्तिके रमणीसमीपे आत्मानं मधु मुहुर्वारं वारं अपाययत णिजन्तपिबतिः स यदा

मध्वेव कर्तृभूतमात्मानं अपाययत् निस्पृहमपि रक्षोगणं सुरापानमकारयत मधुगुणादेव पानात् अर्दैऽऔधेरिति मं अन्ञो मधुनः कर्तृत्वात् मधु कीदृशं स्वच्छं निर्मलं सोत्पलं प्रियाकर्णोत्पलप्रतिविम्बात् आरभाय प्रचिन्तोत्पलं वा सुरताभोगे सुरतविमर्दे विश्रम्भस्य विश्वासस्य उत्पादनं जनकं कभावेऽमोति कर्त्तरि अनट् भावेऽनटि रूपकालङ्कारोवा नन्द्यादित्वाद्वाऽनः उत्पादनचममिति पाठस्तु सुगमएव॥ ४१॥

अभीषयन्त ये शक्तं राक्षसा रणपण्डिताः। अविस्मापयमानस्तान् कपिराटीद्गृहाद्गृहं॥ ४२॥

अभीत्यादि। एवं रक्षःसु यथायथं चेष्टमानेषु ये राक्षसा रणपण्डिताः संग्रामविज्ञाः शक्तमभीषयन्त भीषितवन्तः भीस्म्योर्हेतुभयइति तङ् भियोहेतुभये षुक् भयग्रहणमुपलक्षणं तेन स्मयतेरपि भवति तानसौ कपिरविस्मापयमानः विस्मयमकारयन्नित्यं स्मयतरित्यात्वं गृहाद्गृहमाटीत् गतवान् लुङि रूपं॥ ४२॥ ज॰म॰

अभीषयन्तेत्यादि। रणे पण्डिताः कुशलाये राक्षसाः शक्तुम् अभीषयन्त त्रासितवन्तः तान् अविस्मापयमानः विस्मितानकारयन् मधुपानाद्यासक्ततया तैरविज्ञातइति भावः असौ कपिर्गृहात् एकस्मात् गृहमपरमाटीत् जगाम भीर्भीषेति सौ मं भीषादेशस्य अत्र षाद्धर्थइत्यनुवर्त्तते अत्र धर्योभयं भ॰

तन्तु राचसकर्तृकाण्व स्मिङः स्मिभ्योर्घाङ्क्र्येमच्चेति औ इकार स्यात्वं मच्च अटंस्थां किः ॥४२॥

सीतां दिदृक्षुः प्रच्छन्नः सोऽगर्द्धयत राक्षसान्। अवञ्चयत मायाश्च स्वमायाभिर्नरद्विषां ॥४३॥

ज०म० सीतामित्यादि। सकपिः सीतां दिदृक्षुः सीतां द्रष्टुमिच्छुः प्रच्छन्नः राक्षसानगर्द्धयत व्यामोहयत् स्वमायाभिश्च नरद्विषां मायाश्च अवञ्चयत अतिसंहृतवान् गृधिवञ्च्योः प्रलम्भनइति तङ्॥ ४३॥

भ० सीतामित्यादि। सीतां दिदृक्षुर्द्रष्टुमिच्छुः प्रच्छन्नो गुप्तः सकपिः राक्षसान् अगर्द्धयत व्यामोहयत स्वमायाभिर्नरद्विषां राक्षसानां मायाश्च अवञ्चयत वृथा चकार प्रतारं वञ्चिगर्द्धेरिति संप्रतारं विसम्वादनं मिथ्याख्यानमिति केचित् ॥४३॥

अपलापयमानस्य शत्रूंस्तस्याभवन्मतिः। मिथ्याकारयते चारैर्घोषणां राक्षसाधिपः ॥४४॥

ज०म० अपेत्यादि। तस्य कपेः शत्रून् राक्षसान् अपलापयमानस्य न्यक्कुर्व्वतः विभाषालीयतेरित्यात्वे मिथःसंमानेत्यादिना शालिनीकरणेन्यग्भावने आत्मनेपदं मतिरभवत् कीदृशीत्याह मिथ्याकारयतइति अयं राक्षसाधिपतिश्चारैर्दण्डवाहकैः यां घोषणां पुनः पुनः कारयति जागृत जागृतेति तां मिथ्या कारयते येना

हमविज्ञातएव प्रविष्टः मित्योपपदात्कृञोऽभ्यासइति तङ् अ भ्यासस्य पुनःपुनःकरणं ॥ ४४ ॥

अपेत्यादि। अवन् राचमान् अपलापयमानस्य वञ्चयमानस्य भ० मस्य कपेरित्थं मतिरभवत् मिथ्येति नियोज्य पुनाभिभवेव लापयिति चकारात प्रतारे मं कीदृशी मतिरित्याह राचसाधि पारावणस्यारैर्घोषणां मिथ्या कारयतं जागृत जागृतस्य घुष्टं मिथ्येव चारैः कारयति तां कर्त्तुं चरान् पुनःपुनः प्रयुक्तं निष्फल मेव येनाहमविज्ञातएव भ्रमामि मिथ्याकारैरभ्यासइति मं अभ्यासः पानःपुन्यं चरएव चारः स्वार्थे ष्णः ॥ ४४ ॥

गूहमानः स्वमाहात्म्यमटित्वा मन्त्रिसंसदः। नृभ्यो ऽपवादमानस्य रावणस्य गृहं ययौ ॥ ४५ ॥

गूहेत्यादि। स्वमाहात्म्यं स्वपराक्रमं गूहमानः आहृण्वन् अ०म० ऊदुपधायागोहइत्यूत्वं स्वरितञितइति तङ् अटित्वा मन्त्रि संसदः शुकसारणादिगृहाणि गत्वा रावणस्य गृहं ययौ कीदृ शस्य नृभ्योऽपवदमानस्य कुप्यतः असूयतोवा अपाद्वदइति तङ् नृभ्यइति क्रुधद्रुहेति सम्प्रदानसंज्ञायां चतुर्थी ॥ ४५ ॥

गूहेत्यादि। असौ स्वमाहात्म्यं स्वपराक्रमं गूहमानः संवृ भ० एवन् मन्त्रिणां संसदो गृहाणि अटित्वा गत्वा रावणस्य गृहं ययौ कीदृशस्य नृभ्योऽपवादमानस्य असूयतः जिनस्यमपित्यादिना अपवादैर्मे यशोंदित्सेत्यादिना असूयार्थेन संप्रदानत्वं गुह्म

संवृतौ उभयपदो णुर्णुङ्इति गुणः गुहीणोर्ह्रस्वोकारस्य ऊत्वं॥४५॥

दिशोद्योतयमानाभिर्दिव्यनारीभिराकुलं। श्रिय मायच्छमानाभिरुत्तमाभिरनुत्तमां॥४६॥

ज०म० कीदृशं गृहमित्याह। दिश इत्यादि द्योतयमानाभिः भासय मानाभि णिचश्चेति तङ् दिव्यनारीभिः उत्तमाभिः प्रधाननायि काभिराकुलं व्याप्तं श्रियमनुत्तमामतिशयवतीं आयच्छमानाभिः स्वीकुर्व्वाणाभिः समुदाङ्भ्य इति तङ्॥४६॥

भ० दिश इत्यादि। कीदृशं गृहं यथा दिव्यनारीभिर्दिवि भवाभिः स्त्रीभिराकुलं व्याप्तं कीदृशीभिः दिशोद्योतयमानाभिः भासयमा नाभिः ज्वलत्वादुभयपदं उत्तमाभि. श्रेष्ठाभिः अनुत्तमां अत्यु त्कृष्टां श्रियं आयच्छमानाभिः स्वीकुर्व्वाणाभिःत्रिन्ज्वलेत्यादिना आङ्पूर्व्वयमेः मं न विद्यते उत्तमं यस्मादिति विग्रहः उत्तमेऽनु त्तमं विद्यादिति द्विरूपकोषः॥४६॥

नित्यमुद्यच्छमानाभिः स्मरसम्भोगकर्म्मसु। जाना नाभिरलं लीलाकिलकिञ्चितविभ्रमान्॥४७॥

ज०म० नित्येत्यादि। स्मरसम्भोगकर्म्मसु कामोपभोगक्रियासु नित्य मुद्यच्छमानाभिः पूर्व्ववत्तङ् लीलाः स्त्रीणां शृङ्गारचेष्टाविशेषाः

तथाचोक्तं लीला: सलीला: किलकिञ्चितानि विव्वोकमाप्याथित विभ्रमाणि। विच्छिन्नमाकुट्टमितंचितानि याञ्यानि तञ्ज्ञ: सुकुमार नृत्यइति लक्षणञ्चैषां नृत्यशास्त्रे॥ ४७॥

नित्यमित्यादि। कट्टशीभि: सुरतसम्भोगकर्म्मसु कामोप भ० भोगक्रियासु नित्यमुद्यच्छमानाभि: उद्यमं कुर्व्वतीभि. त्विन्‌त्यन्नै त्यादिना उत्पूर्व्वयमोसं लीलाकिलकिञ्चितविभ्रमान् शृङ्गार चेष्टाविशेषान् अलमत्यर्थं जानानाभि: पूर्व्ववत् प्रगिभ्यामं प्रिया नुकरणे लीलावेशभाषादिचेष्टितं क्रोधाश्रुहर्षभीत्यादे: सङ्कर: किलकिञ्चितं विभ्रमस्त्वरया काले भूषास्थानविपर्य्यय: ईदृशो भिर्दिव्यनारीभिराकुलं गृहं ययाविति सम्बन्ध:॥ ४७॥

स्वं कर्म्म कारयन्नास्ते निश्चिन्तोयात्रपध्वज:। स्वार्थं कारयमाणाभिर्यूनोमदविमोहितान्॥ ४८॥

स्वङ्कित्यादि। स्वमात्मीयं मोहनादिकर्म्म दिव्यनारी: कार ज०म० यन् अनुष्ठापयन् एषझषध्वज: कामदेव: निश्चिन्तआस्ते ताभिरा कुलमिति योज्यं हृक्रोरन्यतरस्यामिति द्विकर्म्मकता यून: स्वार्थं स्वप्रयोजनं मैथुनाख्यङ्कारयमाणाभि: आकुलं तान् हनूमानिति वक्ष्यमाणेन सम्बन्ध: कीदृशान् मदविमोहितान् मधुपानमद परवशान् ताभि:॥ ४८॥

स्वमित्यादि। या दिव्यनारी: स्वं कर्म्म मोहनादि कारयन् भ० झषध्वज: कामोनिश्चिन्तोनिराकुल: सन्नास्ते यासां कामएवाधि

न चिन्ता तद्विरोधिनी ताभिराकुलं गृहं ययौ योऽग्नेरित्या दिना प्रयोज्यस्य कर्मत्वं मदेन विमोहितान् यनसहणान् स्वार्थं स्वप्रयोजनं कारयमाणाभिः ग्यन्तस्योभयपदित्वात् प्रत्ययानो दर्शितौ ॥ ४८ ॥

कान्तिं स्वां वहमानाभिर्यजन्तीभिः स्वविग्रहान्।
नेत्रैरिव पिबन्तीभिः पश्यतां चित्तसंहतीः ॥ ४९ ॥

ज॰म॰ कीदृशाभिरित्याह कान्तिमित्यादि। स्वाङ्कान्तिं शोभां वहमानाभिः यजन्तीभिः स्वविग्रहान ददतीभिः कामिभ्यः तत्र स्वद्ग्मे ति णिचर्यत्यन्य विषयः कान्ति स्वां स्वविग्रहानिति स्वरितेतद्रत्य स्य विषयः विभाषोपपदेनप्रतीयमानइति विभाषात्मनेपदं इत्यात्मनेपदाधिकारः शेषभूतत्वात्परस्मैपदविधानमाह नेत्रै रिति पश्यतां चित्तसंहतीः चित्तसन्दोहान् पिबन्तीभिरिव गृह न्तीभिरिव शेषात्कर्त्तरि परस्मैपदं ॥ ४९ ॥

भ॰ कान्तिमित्यादि। स्वां कान्तिं वहमानाभिः धारयन्तीभिः वहोऽन्यगापणे त्रिनन्यन्तपिवति फलवत्कर्त्तरि सं मन्मथेनार्पिता छाया सैवकान्तिरिति स्मृता। स्वविग्रहान् स्वदेहान् यजन्तीभिः कामिभ्योददतीभिः यजैरादेवार्षादासमङ्गनिहतौ ञमन्यन्ती त्यादौ त्रिद्धातोः फलवत्कर्त्र्यात्मनेपदस्यानित्यत्वं नित्यत्वे चि नवशःपमेरत्यनेन त्रिद्धातोरुभयपदकथनमनर्थकं स्यात् फल वत्कर्तृनियमितात्मनेपदादन्यत्र परस्मैपदस्य सम्यमानत्वात्

टीकैवमिमिति नियमादन्यत्र किं परस्मैपदं मन्यते नैतात्र यतः फलवत्कर्त्तर्य्यपि परस्मैपदं फलवत्कर्त्तरि आत्मनेपदमेव अन्यत्रोभयपदमिति नवग्रःपर्मञ्जितइत्यस्य साफल्यमिति चेत् कश्चिद् पवादविषयं ऽप्युत्सर्गोऽभिनिविशतइति न्यायात् नवग्रःपर्मञ्जितइत्यनेनोभयपदित्वं नियामागरस्तु फलवत्त्वाविवचायां पदं संस्कृत्य पश्चात् स्वशब्दादि सम्बन्धात् वाक्यं क्रियाफलस्य कर्त्तृगामित्वइत्याह अपरं तु कर्त्रभिप्रायेऽपि क्रियाफले विनोपपदेन प्रतीयमानइति सूत्रेण पचे आत्मनेपदाभावमाहुः। इत्यात्मनेपदाधिकारः अथ परस्मैपदमुच्यते । पश्यतां जनानां चित्तमम हान् नेत्रैरिव पिबन्तीभिः स्त्रीभिराकुलं गृहं ययाविद्धत्रयः पापानि नवग्रःपर्म इति पं ग्रहः॥ ४६ ॥

तादृनूमान् पराकुर्व्वन्नगमत् पुष्पकं प्रति। विमानं मन्दरस्याद्रेरनुकुर्व्वद्दिवश्रियं॥ ५० ॥

तादृत्यादि । तादिव्यनारीः पराकुर्व्वन्नपक्षिपन् अगमत्पुष्पकमिति पुष्पकविमानं प्रति येन पुष्पकविमानेन जगाम कीदृशं मन्दरस्याद्रेः श्रियमनुकुर्व्वदिव अनुपराभ्यांकृञः कर्त्रभिप्राये चात्मनेपदस्य प्राप्तत्वात् ॥ ५० ॥ जः म०

तादृत्यादि । हनूमान् तादिव्यनारीः पराकुर्व्वन् विक्षिपन् पुष्पकनामानं विमानं प्रति लक्षीकृत्य अगमत् कीदृशं मन्दरनाम्नोऽद्रेः श्रियमनुकुर्व्वदिव स्वश्रिया सदृशीकुर्व्वदिव कृञोञित्त्वादुभयपदप्राप्ते चेपपरेति पं तादृत्यच ताम् इति पठित्वा ताम् यूनः म०

स्वार्थं कारयमाणाभिराकुलं गृहं ययौ तान् पराकुर्व्वन्निति तृतीयश्लोकेनान्वयोजयमङ्गलायामुक्तः व्योमयानं विमानोऽस्त्री त्यमरः॥ ५०॥

तस्मिन् कैलाससङ्काशं शिरःशृङ्गं भुजद्रुमं। अभिक्षिपन्तमैक्षिष्ट रावणं पर्व्वतश्रियं॥ ५१॥

ज॰ म॰ तस्मिन्नित्यादि। तस्मिन् विमाने रावणमैक्षिष्ट कैलाससङ्काशं कैलासतुल्यं शिरःशृङ्गं शिरांसि शृङ्गाणीव यस्य भुजद्रुमं भुजा द्रुमा इव यस्य तं पर्व्वतस्य श्रियोऽभिक्षिपन्तं अभिभवन्तं अभिप्रत्यतिभ्यः क्षिप इति परस्मैपदं तस्य स्वरितेत्त्वात् कर्त्रभिप्रायआत्मनेपदं प्राप्तं॥ ५१॥

भ॰ तस्मिन्नित्यादि। हनुमान् तस्मिन् विमाने रावणमैक्षिष्ट दृष्टवान् कीदृशं कैलाससङ्काशं कैलासतुल्यं तुल्यतां दर्शयति शिरांसि शृङ्गाणीव यस्य भुजास्तु द्रुमा इव यस्य तादृशं अन्येषां पर्व्वतानां श्रियं अभिक्षिपन्तं अभिभवन्तं घेपमित्यादौ प्रत्यभ्यतिक्षिपेति सं कैलासेति केलिःप्रयोजनमस्येति विकारसंघेत्यादिना णः कैलः आस्यतेऽस्मिन्नित्यासः पश्चात् कर्म्मधारयः केलीनां समूहः कैलं पूर्व्ववत्षणः तस्यास इति वा॥ ५१॥

प्रवहन्तं सदामोदं सुप्तं परिजनान्वितं। मघोने परिमृष्यन्तमागमन्तं परंस्मरे॥ ५२॥

प्रवत्यादि। सदामोदं कस्तूरिकादिपरिमलमावहन्तं प्राद जं०म०
इदति परस्मैपदं स्वरितेत्वात् सुप्तं शयने संविष्टं परिजनान्वितं
पारिपार्श्विकाधिष्ठितं मघोने इन्द्राय परिमृष्यन्तं असूयन्तं
परेर्मृषइति परस्मैपदं मृषः स्वरितेत्वात् क्रुधद्रुहेति सम्प्रदान
संज्ञायां चतुर्थी स्मरे कामे परमत्यर्थं आरमन्तं सक्तिं कुर्व्वाणं
व्याङ्परिभ्योरमइति परस्मैपदं रमेरनुदात्तेत्वात्॥ ५२॥

प्रवहन्तमित्यादि। कीदृशं रावणं सन्तमुत्कृष्टं आमोदं कस्तू भ०
रिकादिपरिमलं सदा सर्व्वदा वा आमोदं प्रवहन्तं घेपमित्यादौ
प्रवहति पं सुप्तं शयानं परिजनैः पारिपार्श्विकैरन्वितं मघोने
इन्द्राय परिमृष्यन्तं असूयन्तं घेपमित्यादौ परिमृषेति पं यस्मै
दित्सेत्यादिना संप्रदानत्वं स्मरे कामे परमत्यर्थं आरमन्तं क्रीड
न्तं घेपमित्यादौ व्यापरिरमइति पं॥ ५२॥

व्यरमत् प्रधनाद्यस्मात्परित्रस्तः सहस्रदृक्। क्षणं
पर्य्यरमत्तस्य दर्शनात्पवनात्मजः॥ ५३॥

व्यरेत्यादि। यस्माद्रावणात्सहस्रदृगिन्द्रः परित्रस्तः भीत्रा जं०म०
र्थानामित्यपादाने पञ्चमी प्रधनात् युद्धात् व्यरमत् उपरतव्या
पारोऽभूत् व्याङ्परिभ्योरमइति परस्मैपदं जुगुप्साविरामप्रमा
दार्थानामपादाने पञ्चमी तस्य दर्शनात्मारुतात्मजः हनूमान्
क्षणं पर्य्यरमत् तुष्टिमानभवदित्यर्थः साधु रावणेति पूर्व्ववत्तदुक्तः
परस्मैपदं॥ ५३॥

भ० व्यरमदित्यादि। सहस्रदृगिन्द्रो यस्मात् रावणात् परित्र स्तोभीतः सन् प्रधनात् युद्धात् व्यरमत् उपरतोऽभूत् यतोऽपा येत्यादिना भीविरामयोरपादानं पूर्व्ववत्पं सहस्रदृगिति पदोप न्यासायुक्तः परित्रस्तस्य सर्व्वत्र प्रतिवर्त्तनबलात् तस्य दर्शनात् सा हतात्मजोऽहनमात् क्षणं पर्य्यरमत् तुष्टोऽभवत् पूर्व्ववत्पं॥ ५३॥

उपारंसीच्च संपश्यन् वानरस्तं चिकीर्षितात्। रम्यं
मेरुमिवाधूतकाननं श्वसनोर्म्मिभिः॥ ५४॥

ज०म० उपेत्यादि। तं रावणं पश्यन् वानरः चिकीर्षितात्कर्तुमि ष्टात् संतानीपणादुपारंसीत् निवृत्तः उपारंसीत्यविकल्प्य विभाषा कर्म्मकादिति लुङ् परस्मैपदं तस्य मेरोरिव रम्यत्वात् यदाह मे रुमिव श्वसनोर्म्मिभिः वातसमूहैः आधूतकाननं प्रचलितवनं मरु तया कम्पितकलापैः आधूतानि शिरांस्याननानि च यस्येति॥ ५४।

भ० उपेत्यादि। वानरस्तं रावणं संपश्यन् चिकीर्षितात् कर्त्तुमि ष्टात् संतानीपणादपि उपारंसीत् निवृत्तः घपमित्यादौ वात्रप रमदति पदं पं यमरमति इममतो मेरुवत् रम्यं श्वसनोर्म्मिभि र्निश्वासवेगैराधूतानि ईषत्कम्पितानि काननानि गृहाणि येन कानि शिरांसि आननानि च यस्येति वा मेरुपक्षे श्वसनोर्म्मिभि र्व्वायुवेगैराधूतानि काननानि वनानि यत्र उर्म्मिस्तरङ्गे पीडायां वेगे भङ्गप्रकारयोः। काननं विपिनं गेहे परमेष्ठिमुखेऽपि चेति विश्वः। कं शिरोऽम्बुनोरित्यमरः॥ ५४॥

दृष्ट्वा दयितया साकं रहीभूतं दशाननं। नात्र सीतेत्युपारंस्त दुर्म्मनावायुसम्भवः॥ ५५॥

दृष्ट्वेत्यादि। रहीभूतम्विजनस्थं दशाननं अरुर्मनश्चक्षुरित्यादिना च्वौ सलोपः दयितया साकं दृष्ट्वा नात्र सीतेति कृत्वा उपारंस्त विमनानिवर्त्तते स्म विभाषाकर्म्मकादिति तङ् वायुसम्भवोहनूमान्॥ ५५॥ ज०म०

दृष्ट्वेत्यादि। दयितया साकं सह रहीभूतं विजनदेशस्थं दशाननं दृष्ट्वा अत्र सीता नास्तीति ज्ञात्वा दुर्म्मनाद्ःखितचित्तो वायुसम्भवोहनुमान् उपारंस्त निवर्त्तते स्म तस्माद्देशादित्यर्थात् पूर्व्ववत् पत्ते सं अरहसि रहसि भवन्तमिति मनश्चचुरित्यादिना सलोपः॥ ५५॥ भ०

ततः प्राकारमारोहत् चपाटानविबोधयन्। नायोधयत्समर्थोऽपि सीतादर्शनलालसः॥ ५६॥

•

ततइत्यादि। ततउत्तरकालं प्राकारमारोहत् आरूढवान् चपाटान् राचसान् अविबोधयन् अचेतयन् णिचश्चेत्यात्मनेपदे प्राप्ते बुधयुधेत्यादिना वा लटः परस्मैपदं बुधेरणौ सकर्म्मकस्य चित्तवत्कर्त्तृकत्वात् हनूमतश्चित्तवत्त्वात् तत्र ह्यकर्म्मकार्ये तेषामचित्तवत्कर्त्तृत्वार्थमुपादानमित्युक्तं नाप्ययोधयत् समर्थोऽपि न संग्रामितवान् यतः सीतादर्शनलम्पटः अयात्रकर्म्म ज०म०

कादित्यनेन उभयत्रापि लङः परस्मैपदं युधेरेकस्याचिरस्य त्वकर्मकत्वात्॥५६॥

भ० ततइत्यादि। ततोऽनन्तरं हनुमान् प्राकारमारोहत् आरूढ वान् किङ्कुर्वन् उत्पाटान् राक्षसान् अविबाधयन् अचेतयन् सम र्थोऽप्यसौ तान् न बाधयत् यतः सीतायादर्शनं लालसामस्याभिला षोऽस्य त्वन्तादुभयपदे प्राप्ते कस्मात्त्वार्येह्नित्यादिना पं॥५६॥

अध्यासीद्राघवस्याहं नाशयेयं कथं शुचः। वैदेह्या जनयेयं वा कथमानन्दमुत्तमं॥५७॥

ज०म० अथेत्यादि। राघवस्याहं कथं केन प्रकारेण शुचं शोकं नाश येयं जयेयं वा वैदेह्याः सीताया आनन्दं जनयेयमिति हनुमान ध्यासीत् चिन्तितवान् ध्यै चिन्तायामित्यस्य लुङि रूपं नशिजन्यो रकर्मकत्वात् अणाविन्यनेन णिङः परस्मैपदं नबुधेत्यादिना जनिजृषित्यादिना जनेर्मित्संज्ञायां ह्रस्वत्वं॥५७॥

भ० अथेत्यादि। अहं राघवस्य शुचः शोकान् केन प्रकारेण नाशयेयं कथं वा वैदेह्याः सीतायाउत्तममानन्दं जनयेयं इति हनुमान् अध्यासीत चिन्तितवान् ध्यै चिन्तायां णशोऽदर्शने इत्या यस रमेति इसमनो त्वन्तनशजनाभ्यां कस्मात्त्वार्येइत्यादिना पं जने र्घटादित्वानीति ह्रस्वः॥५७॥

ह[illegible] राक्षकान्तानां द्रावयिष्यामि राक्षसान्। तस्या[illegible]नात्पूर्वं विक्रमः कार्य्यनाशकृत्॥५८॥

दृष्टेत्यादि। इयमसाविति राघवस्य कान्तां दृष्ट्वा द्रावयिष्यामि राक्षसान् पलाययिष्यामि अच अणाविल्यनेन नवुधेत्यादिना तस्याकर्म्मकस्य चित्तवत्कर्तृकत्वात् हि यस्मात् तस्याः सीतायादर्शनात् पूर्व्वं विक्रमः कार्य्यस्य सीतादर्शनरूपस्य नाशकृत्॥ ५८॥ ज॰म॰

दृष्टेत्यादि। तां राघवस्य कान्तां सीतां दृष्ट्वा अहं राक्षसान् द्रावयिष्यामि पलायनपरान् करिष्यामीति पूर्व्ववत्पं हि यस्मात तस्य राघवस्य कान्तायादर्शनात् पूर्व्वकाले विक्रमः कार्य्यस्य सीतादर्शनस्य नाशमभावं करिष्यति इत्थं चिन्तयन्निति वक्ष्यमाणश्लोकेनान्वयः॥ ५८॥ भ॰

चिन्तयन्नित्थमुत्तुङ्गैः प्लावयन्तीं दिवं वनैः। अशोकवनिकामारादपश्यत् स्तवकाचितां॥ ५९॥

चिन्तेत्यादि। इत्थं पूर्व्वोक्तप्रकारेण चिन्तयन्नारात्समीपे अशोकवनिकामपश्यत उत्तुङ्गैरुच्चैर्व्वनैर्दिवमाकाशं प्लावयन्तीं व्याप्नुवानां वृधयुधेत्यादिना तिप् प्रवर्तरकर्म्मकस्याणितवत्त्वात् स्तवकाचितां अशोकपुष्पस्तवकैः कृतां॥ ५९॥ ज॰म॰

चिन्तेत्यादि। इत्थं पूर्व्वोक्तप्रकारेण चिन्तयन् आरात् समीपे ऽशोकवनिकां अपश्यत् कीदृशीं उत्तुङ्गैरुच्चैर्व्वनैर्दिवमाकाशं प्लावयन्तीं व्याप्नुवतीं पूर्व्ववत् पं नगैरिति पाठे नगैरुच्चैरित्यर्थः स्तवकैः पुष्पगुच्छकैराचितां व्याप्तां॥ ५९॥ भ॰

तां प्राविशत्कपिव्याघ्रस्तरूनचलयन् शनैः। अत्रा सयन्वनेशयान् सुप्तान् शाखासु पक्षिणः॥ ६०॥

ज०म० तामित्यादि। तामशोकवनिकां कपिव्याघ्रः कपिर्व्याघ्र इव शनैर्मन्दं प्राविशत् तरूनचलयन् अकम्पयन् चलेरकर्म्मकत्वान्मित्वम् त्कर्त्तृकादणावित्यनेन च ल्वटः परस्मैपदं ननिगरेत्यादिना न हि तत्र सकर्म्मकार्थं अचित्तवत्कर्त्तृकार्थं स्वित्युक्तं वनेशयान् पक्षिणः शाखासु सुप्तान् अत्रासयन् अणावित्यनेन परस्मैपदं वने शेरत इति अधिकरणे शेतेरित्यच शयवासवासिष्वित्यादिना सप्तम्या अलुक्॥ ६०॥

भ० तामित्यादि। कपिव्याघ्रः कपिश्रेष्ठो हनुमान् तामशोकवनिकां शनैर्मन्दं प्राविशत् किङ्कुर्व्वन् तरून् अचलयन् अकम्पयन् पातेन पं घटादित्वात् ह्रस्वः वनेशयान् वनचरान् शाखासु सुप्तान् पक्षिणोऽत्रासयन् कम्पात्रार्थे ङित्यादिना अचित्तमाणिधादादिति पं वने शेते इति पचादित्वादच् अभिधानात् सप्तम्या अलुक् असमासेऽपि न क्षतिः अकालवाचिनः शयवासवासिषु इति सप्तम्या अलुगिति परः एओमुद्धा अवर्णमिलिप्लाविलक्षइति वचनान्नेदत्यस्य लघुत्वं गुरुत्वे जिह्वाकष्टं वनशयानिति केचित् पठन्ति अकालवाचिन इत्यादि परसूत्रस्यानित्यत्वेन विभक्तिलोपात्॥ ६०॥

अवादयुः शनैर्यस्यां लतां नर्त्तयमानवत्। नायासयन्त संत्रस्ताच्चटवोऽन्यान्यसम्पदः॥ ६१॥

अवादित्यादि। यस्यामशोकवनिकायां वायुर्वातः शनैर्मन्द अवात् वाति स्म तामाटेति वक्ष्यमाणेन सम्बन्धः लतां नर्त्तयमानवत् नृत्तमिव कारयन् नृतिश्चलने वर्त्तते ततश्च निगरणेत्यादिना परस्मैपदं प्राप्तं नपादमीत्यादिना प्रतिषिद्धं ऋतवोऽन्योन्यं सम्पदं परस्परस्य विभूतिं नायामयन्त नापपीडयन्ति स्म सम्बस्ता रावणात् आकुपूर्व्वार्थः चित्तवत्कर्त्तृकत्वात् अणावित्यादिना परस्मैपदं प्राप्तं नपादमीत्यादिना प्रतिषिद्धं॥ ६१॥ ज॰म॰

अवादित्यादि। यस्यामशोकवनिकायां वायुः शाखाभङ्गभयात् शनैर्मन्दं अवात् वाति स्म तां प्राविशदिति पूर्व्वेण तामाटेति वक्ष्यमाणेन वा सम्बन्धः लतां नर्त्तयमानइव णिचश्चेत्यनेन फलवत्कर्त्तरि सं फलवत्कर्त्तृत्वाभावे तु नृतेः कम्पार्थत्वात् परस्मैपदं स्यादिति पुरुषोत्तमः यत्र रावणात् संत्रस्ताभीता ऋतवो वसन्तादयः परस्परसम्पद्धीर्न आयासयन्त न पीडयन्ति स्म अञि प्राणिघाढार्थेति पं प्राप्ते पूर्व्ववत्सं॥ ६१॥ भ॰

ज्योत्स्नामृतं शशी यस्याम्वापीर्व्विकसितोत्पलाः।
अपाययत सम्पूर्णः सदा दशमुखाज्ञया॥ ६२॥

ज्योत्स्नेत्यादि। यस्यां रावणाज्ञया शशी सदा संपूर्णः सन् ज्योत्स्नामृतं वापीरपाययत पायितवान् निगरणार्थत्वात्तिपि प्राप्ते नपादमीत्यादिना प्रतिषिद्धे चिचवेति तङ्॥ ६२॥ ज॰म॰

ज्योत्स्नेत्यादि। यस्यां रावणाज्ञया सदा सम्पूर्णः शशी भ॰

ज्योत्स्नाद्रूपममृतं वापीर्दृंहदीर्घिका अपाययत पायितवान् अन्नार्थत्वात् षे प्राप्ते पूर्व्ववत्कर्म्म म्राच्छादात्वात्केत्यादिना यन् अतएव विकसितानि उत्पन्नानि यासु तास्तथा ज्योतिरस्यामस्तीति ज्योत्स्ना निपातनात्॥ ६२ ॥

प्रादमयन्त पुष्पेषु यस्यां वन्द्यः समाहृताः। परिमोहयमाणाभीराक्षसीभिः समावृताः॥ ६३ ॥

ज०म० प्रादेत्यादि। यस्यां वन्द्यः समाहृताः समानीताः पुष्पेषु कामम्प्रादमयन्त भ्रमितवत्यः तन्मतस्याचरणात् कीदृश्यः परिमोहयमाणाभिः व्यामोहयन्तीभिः राक्षसीभिः परिवृताः दंभिपरिमुह्योः अणावित्यादिना प्राप्तस्य परस्मैपदस्य नपादमेत्यादिना प्रतिषेधे णिचश्चेत्यात्मनेपदं॥ ६३ ॥

भ० प्रादेत्यादि। यस्यामशोकवनिकायां समाहृताआनीताएकत्र कृतावा वन्द्योहठहृताः स्त्रियः पुष्पेषु कामं प्रादमयन्त प्रभ्रमितवत्यः अतिदुःखात् यतः परिमोहयमाणाभिर्व्यामोहयन्तीभी राक्षसीभिः समावृताः परिवृताः दमुपरिमुहोरञ्जि माणिधातावति षे प्राप्ते पूर्व्ववत्कर्म्म॥ ६३ ॥

यस्यां वासयते सीतां केवलं स रिपुः स्मरात्। न त्वरोचयतात्मानं चतुरोबुद्धिमानपि॥ ६४॥

यस्यामित्यादि। रिपुर्दशाननः स्मरात्कामाद्धेतोः केवलं नि ष्फलं यस्यां सीतां वासयते स्म वासितवान् न त्वरोचयत् आत्मा नमेवात्मानमुपरोचितवान् चतुरोऽपि योषिदाराधनकुशलो ऽपि मानपि सम्पन्नोऽपि रोचिवास्योरण्णावित्यादिना प्राप्त परस्मैपदस्य नपादम्यांतिप्रतिषेधे णिच इति तङ्॥ ६४॥ ज॰म॰

यस्यामित्यादि। यस्यामशोकवनिकायां रिपुर्दशाननः स्मरात् कामात् केवलं सीतां वासयते स्म वसतिं कारयति स्म न तु आत्मा नं तस्यै अरोचयत रोचितवान् चतुरोऽपि योषिदाराधनकुशलो ऽपि बुद्धिमानपि स्मरज्ञाननवानपि वसद्योरक्रि पूर्वणिचा णिचेति पे प्राप्ते पूर्ववत्॥ ६४॥ भ॰

मन्दायमानगमनोहरितायत्तद्रूं कपिः। द्रुमैः शकशकायद्भिर्मारुतेनाट सर्व्वतः॥ ६५॥

मन्देत्यादि। कपिः सर्व्वतः सर्व्वत्र तामाट विचचार यत्नरो नित्यमन्वेष्यामिति गम्यते मन्दायमानगमनः मन्दीभवद्गम नः कीदृशीं हरितायत्तद्रूं महत्लोभवद्भां अप्राप्तिजातेत्यूङ् द्रुमैरुपलक्षितां कीदृशैः शकशकायद्भिः शकस्वभावैः शकीभवद्भिः केन मारुतेन भृशामन्दं मन्दं भवति अहरिता हरिताभवन्तीति लोहितादिभ्यः क्यष् अशकाः शकाभवन्तीति वाक्ये भव्यक्ता नुकरणादिति डाच् तस्मिन्विषयभूते डाचि वक्तव्ये द्वे भवतः ज॰म॰

ज्योत्स्नारूपमस्तं वापीर्हंष्टदीर्घिका अपाययत पायितवान् अत्रा र्थत्वात् पे प्राप्ते पूर्ब्ववत् नाच्छायाद्यौत्यादिना यत् अतएव विक सितानि उत्पलानि यासु ता तथा ज्योतिरस्यास्तीति ज्योत्स्ना निपातनात् ॥ ६२ ॥

प्रादमयन्त पुष्पेषु यस्यां वध्वः समाहृताः। परि मोहयमाणाभीराक्षसीभिः समावृताः ॥ ६३ ॥

ज०म० प्रादेत्यादि। यस्यां वध्वः समाहृताः समानीताः पुष्पेषु काम मादमयन्त प्रमितवत्यः तत्र तस्याचरणात् कीदृश्यः परिमोह यमाणाभिः व्यामोहयन्तीभिः राक्षसीभिः परिवृताः दमिपरिमु होः अणावित्यादिना प्राप्तस्य परस्मैपदस्य नपादमेत्यादिना प्रतिषेधे णिचश्चेत्यात्मनेपदं ॥ ६३ ॥

भ० प्रादेत्यादि। यस्यामशोकवनिकायां समाहृता आनीता एकत्र कृता वा वध्वो वठवृताः स्त्रियः पुष्पेषु कामं मादमयन्त प्रमि तवत्यः अतिदुःखात् यतः परिमोहयमाणाभिर्व्यामोहयन्तीभी राक्षसीभिः समावृताः परिवृताः दमुपरिमुहोरत्रि माणिधाता वति पे प्राप्ते पूर्ब्ववत् ॥ ६३ ॥

यस्यां वासयते सीतां केवलं स्म रिपुः स्मराम्। न त्वरोचयतात्मानं चतुरोबुद्धिमानपि ॥ ६४ ॥

यस्यामित्यादि। रिपुर्दशाननः अरात्कामाद्धेतोः केवलं नि जं॰म॰
क्षलं यस्यां सीतां वासयते स्म वासितवान् न त्वरीचयत् आत्मा
नमेवात्मानमुपरोचितवान् चतुरोऽपि योषिदाराधनकुशलो
ऽपि बुद्धिमानपि मन्मथोऽपि रोचिवासोरयावित्यादिना प्राप्त
परस्मैपदस्य नपादम्यातिप्रतिषेधे णिच इति तङ्॥ ६४॥

यस्यामित्यादि। यस्यामशोकवनिकायां रिपुर्दशाननः अरात् भ॰
कामात् केवलं सीतां वासयते स्म वसतिं कारयति स्म नत् आत्मा
नं तस्यै अरोचयत रोचितवान् चतुरोऽपि योषिदाराधनकुशलो
ऽपि बुद्धिमानपि अरमाक्सदाननवानपि वसरुचोरञ्जि सुणिया
द्वाचेति पे प्राप्ते पूर्व्ववत्॥ ६४॥

मन्दायमानगमनोऽचरितायमानां कपिः। द्रुमैः
शकशकायद्भिर्म्मारुतेनाट सर्व्वतः॥ ६५॥

मन्देत्यादि। कपिः सर्व्वतः सर्व्वत्र तामाट विचचार यत्तरो जं॰म॰
नित्यमस्यन्धां तामिति गम्यते मन्दायमानगमनः मन्दीभवद्गम
नः कीदृशीं चरितायमानां शारदीभवद्यां अप्रापिजातेर्वेत्युक्
द्रुमैरुपलक्षितां कीदृशैः शकशकायद्भिः शकशभावैः शकीभवद्भिः
केन मारुतेन अमामन्दं मन्दं भवति अचरिताचरिताभवन्तीति
लोहितादिमाद्भ्यष् अशकाः शकाभवन्तीति वाक्ये अव्यक्ता
नुकरणादिति डाच् तस्मिन्नित्यभूते डाचि परवचने द्वे भवतः

नित्यमाम्रेडिते डाचीति पररूपत्वं डाजन्तात् शकशकायश्चा त्वचष् वाक्यष् इति परस्मैपदं आत्मनेपदञ्च ॥ ६५ ॥

भ० मन्देत्यादि। कपिः सर्व्वतः सर्व्वत्र तामशोकवनिकामाट बभ्राम कीदृशः मन्दायमानगमनः अमन्दं मन्दं भवति मन्दा यमानं तादृशं गमनमस्येति विग्रहः भृशादिस्यच्व्यर्थे इति क्यङः क्लिन्नाम्नं तां कीदृशीं हरितायत्तरुं हरिद्वर्णिभवद्वृक्षां अहरि ताहरिताभवन्ति हरितायन्तस्ताहृशास्तरवोयत्र डाज्लोहितादि रिति च्व्यर्थे क्यङः पत्ते पक्ष मारुतेन वायुना शकशकायद्भिः शक त्शकदिति शब्दं कुर्व्वद्भिः द्रुमैरुपलक्षितां द्रुमैः करणभूतैराटेति वा शकीदित्यनुकरणशब्दात् नैकाचोऽव्यक्तानुकरणादिति डाच् द्वित्वञ्च तत्तोपाऽत इति प्रकृतेर्द्दस्य तलोपः अशकशकाः शकशका भवन्तीति डाज्लोहितादेरिति च्व्यर्थे क्यः पत्ते पक्ष शकदित्यस्य शब्दवाचकस्यापि लक्षणया तदिति वृत्ते वृत्तिः ॥ ६५ ॥

अस्यन्दन्निन्दुमणयोव्यरुचन् कुमुदाकराः। अलो ठिषत वातेन प्रकीर्णास्तवकोच्चयाः ॥ ६६ ॥

ज०म० अस्येत्यादि। चन्द्रोदयादिन्दुमणयः अस्यन्दन् स्यन्दन्ते स्म तामाटेति योज्यं व्यरुचन् कुमुदाकराः विराजितवन्तः स्तवको च्चयाः गुच्छराशयः वातेन प्रकीर्णाः इतस्ततोविक्षिप्ताः सन्तः अलोठिषत लुठन्तेस्म सर्व्वत्र द्युद्भ्योलुङीति विभाषा परस्मैपदं द्युतादयश्च कृपूपर्य्यन्ताः ॥ ६६ ॥

असीत्यादि। इन्दुमणयश्चन्द्रकान्ता अस्यन्दन् स्रवन्ति स्म चन्द्र भ०
रश्मिभिरित्यर्थात् यस्यां नामाटेति सम्बन्धोबोध्यः यस्यां कुमु
दानामाकरा उत्पत्तिस्थानानि व्यरुचन् विरेजुः यस्यां लवङ्गा
श्चयाः पुष्पगुच्छसमूहावातेन प्रकीर्णा इतस्ततोविक्षिप्ताः सन्तः
अलोठिषत लुलुठुः स्यन्दरुचिलुठः रघुकुप्रीतिप्रकाशयोः रूचु
ठरूवादिवत् एषां ङित्वादात्मनेपदे सिद्धे द्युतादिभ्यो लुङि पदाद्वे
रिति द्युतादित्वात् टौ पेरूविधानं तेनैव पं अतएव द्युतादेरुभयमु
भयपदित्वं गम्यते परे तु लुङि द्युतादेरिति स्वेनेव विकल्पेनात्म
नेपदमाहुः रूंस्यन्दर्नलोपाभावोवाच्यात् देवीदासचक्रवर्त्ती
तु द्युतादिभ्योलुङीत्यादौ ग्लुचुनैवेष्टसिद्धौ ग्लुचुपादानेन ङे क
चित् नलोपाभावोज्ञापितइत्याह केचित्तु कचिदात्मनेपदिनो
ऽपि परस्मैपदित्वं स्यादिति ज्ञापनाय द्यां रूपं दर्शितमित्याहुः
अलोठिषतेति पाठोऽदन्तइत्यतादेशः॥ ६६॥

सीतान्तिके विवृत्सन्तं वर्त्स्यत्सिद्धिं प्रवङ्गमं। पत
त्रिणः शुभामन्द्रमानुवानास्वजिह्लदन्॥ ६७॥

सीतेत्यादि। सीतासमीपे विवृत्सन्तं वर्त्तितुमिच्छन्तं प्लवङ्गमं अ०म०
वर्त्स्यत्सिद्धिं वर्त्स्यन्ती भविष्यन्ती सिद्धिः सीतादर्शनलक्षणा यस्य
वृत्भ्यःस्यसनोरिति विभाषातिप् तं पक्षिणः शुभाः प्रशस्ता अजि
ह्लदन् सुखयन्ति स्म णिचि लुङि चङि रूपं कीदृशाः मन्द्रं गम्भीरं

मधुरमानुवानाः वाश्यमानाः आङिनुप्रच्छोरुपसंख्यानमिति तङ् णुस्तुताविल्यादादिकस्य परस्मैपदित्वात् ॥ ६७ ॥

भ० सीतेत्यादि। शुभाश्रनुकूलाः पतत्त्रिणः पक्षिणः प्रवङ्गमं हनूमन्तं प्रजिह्लदन् आनन्दयामासुः ह्लादीकर्मोदने णौ चा रूपं किं कुर्व्वन्तः मन्द्रं गभीरं आनुवानाः उत्कण्ठापूर्व्वकं शब्दं कुर्व्वाणाः आङ्पूर्व्वोणौतिरुत्कण्ठायां शब्दे वर्त्तते विपराजी त्यादिना सं कीदृशं सीतासमीपे विष्टसन्तं वर्त्तितुमिच्छन्तं वर्त्स्यन्ती भविष्यन्ती सिद्धिः सीतादर्शनरूपा यस्य तं शुभशब्देन भाविनीं सिद्धिमनुमाय कपेरानन्द इति ध्वनिः वृद्भ्योनेम्पेस्य सोर्व्वात्मनेइति इम्निषेधः अतएव पं तेन वृतादेःस्यसनोरु भयपदित्वं गम्यते ॥ ६७ ॥

वर्त्तिष्यमाणमात्मानं सीता पत्युरिवान्तिके। उद पश्यत्तदा तथ्यैर्निमित्तैरिष्टदर्शनैः ॥ ६८ ॥

ज०म० वर्त्तीत्यादि। सीतापि तदा तस्मिन् काले पत्यूरामस्यान्तिके आत्मानं वर्त्तिष्यमाणमिव उदपश्यत् उत्प्रेचते स्म वृद्भ्यःस्यसनो रिति विभाषावचनात्तङ् निमित्तैश्चक्षुःस्पन्दनादिभिः तथ्यैरवि सम्वादिभिः इष्टदर्शनैः इष्टार्थप्रकाशकैः दर्शनमिति कृत्यल्युटो वहुलमिति कर्त्तरि ल्युट् ॥ ६८ ॥

भ० वर्त्तीत्यादि। तदा तस्मिन् काले सीतापि पत्यूरामस्या न्तिके वर्त्तिष्यमाणमिवात्मानं निमित्तैश्चक्षुःस्पन्दनादिभिरुद

पश्यत उत्प्रेक्षितवती तथ्यैरविसम्वादिभिः दृष्टः प्रियोदृश्यते यैः करणेऽनट् दृष्टं दर्शयन्तीति कर्त्तरि वा दृष्टस्य दर्शनं येभ्यइति वा कृतादेः पे स्यसनोरिम्निषेधः मे तु इम् भवत्येव इवार्थोऽच साद्यश्यं सम्भावना वा ॥ ६८ ॥

निरवर्त्स्यन्न चेद्वार्त्ता सीतायावितथैव नः। अक्लृप्स्यदुद्यतिः सर्व्वा हनूमानित्यचिन्तयत् ॥ ६९ ॥

आत्मनेपदाधिकारः ॥

निरेत्यादि। चेदिति यद्यर्थे यदि सीतायावार्त्ता न निरवर्त्स्यत् निर्वृतिं नायास्यत् तदा वृथैव निष्फलैव नोऽस्माकमुद्यतिः सर्व्वा अयमुद्यमः समुद्रलङ्घनादिकः अकल्प्स्यत् अभविष्यत् इत्येवं हनूमानचिन्तयत् क्रियातिपत्तौ लृङ् तत्र निरवर्त्स्यदिति वृद्भ्यःस्यसनोरिति विभाषापरस्मैपदं अकल्प्स्यदिति लुटि चक्लृपइति चकारात् स्यसनोरपि भवति विभाषापरस्मैपदं उद्यतिरिति यमेः स्त्रियां क्तिन् अनुदात्तेत्यादिना अनुनासिकलोपः ॥ आत्मनेपदपरस्मैपदाधिकारः ॥ ६९ ॥ ज०म०

निरेत्यादि। चेद्यदि सीतायावार्त्ता न निरवर्त्स्यत् न निष्पत्स्यते तदास्माकं सर्व्वा समुद्रलङ्घनादिरूपा उद्यतिरुद्यमो वितथैव निष्फलैव अकल्प्स्यत् अभविष्यत्इति हनूमान् अचिन्तयत् कृतादेः पूर्व्ववदुभयपदं यमिम् च यां रूपं निष्पूर्व्वोवृतिर्निष्पत्त्य भ०

र्थः अपूपक्कुर्वकल्पने अपकुर्पोऽअपादाविति कृपादेशः यमेःका वनतनाद्यनिमामिति मलोपः। इतिपरस्मैपराधिकारः॥ ६६॥

वृक्षाद्वृक्षं परिक्रामन्रावणाद्बिभ्यतीं भृशं। अन्वेस्त्राणमपश्यन्तीमदृश्यो जनकात्मजां॥ ७०॥

ज०म० इतः प्रभृतिकारकमधिकृत्याह। वृक्षादित्यादि। तां जनकात्मजां सीतां सकपिकुञ्जरोऽपश्यदिति वक्ष्यमाणेन सम्बन्धः वृक्षात् वृक्षं परिक्रामन् गच्छन् ध्रुवमपायेऽपादानमित्यपादानसंज्ञायां पञ्चमी रावणाद्बिभ्यतीं भृशं त्रस्यन्तीं अत्यर्थं अन्वेस्त्रावणाद्वाम पश्यन्तीं यतोभयन्ततः कुतोरक्षेति भीत्रार्थानामित्यपादान संज्ञा अदृश्यः प्रकाशीभूत्वा ऋदुपधेत्यादिना क्यप्॥ ७०॥

भ० अथ कारकाधिकारः। वृक्षादित्यादि तां जनकात्मजां कपि कुञ्जरोऽपश्यदिति तृतीयश्लोकेनान्वयः किं कुर्व्वन् अदृश्योभूत्वा वृक्षादेकस्मादपरं वृक्षं परिक्रामन् गच्छन् तां कीदृशीं रावणाद्बिभ्यतीं त्रस्यन्तीं अन्वेस्त्रावणात् त्राणं रक्षणं अपश्यन्तीं यतोऽपायेत्यादिना सर्व्वत्रापादानत्वं अपायः संश्लेषः अपाययोगे यच्छब्दोऽवधिवचनः यतोभीर्भयमित्यत्र यच्छब्दोभयहेतुवचनः तेन भयार्थयोगे भयहेतोरपादानत्वं त्राणं रक्षणं तत्र भीतस्य तेनाचापि यच्छब्दोभयहेतुवचनः तेन त्राणार्थयोगेऽपि भयहेतोरपादानत्वं इभृञुवेत्यादिना ऋदुक्रत्वात् इशेः क्यप्॥ ७०॥

तां पराजयमानां सप्रीतेरक्ष्यां दशाननात्।
अन्तर्दधानां रक्षोभ्यो मलिनां ध्याममूर्द्धजां॥ ७१॥

तामित्यादि। प्रीतेः रावणसम्बन्धिन्याः पराजयमानां विमुखीभवन्तीं पराजेरसोढ़ इत्यपादानत्वं असोढाऽर्थः प्रीतिः रक्ष्यां दशाननात् रावणविषये स्वयं निवार्य्यप्रसरां वारणार्थानामीप्सित इत्यपादानत्वं प्रवृत्तिविघातलक्षणया रक्षणक्रियया आत्मसम्बन्धिन्या दशाननस्य व्याप्तुमभिप्रेतत्वात् अन्तर्दधानां रक्षोभ्यः मा मां रक्षांसि द्राक्षुरिति ततस्वान्तर्द्धौ येनादर्शनमित्यपादानसंज्ञा अन्तर्द्धिनिमित्तं हि रक्षोभिरात्मनोदर्शनस्यानीप्सितत्वात् मलिनां शरीरेण ध्याममूर्द्धजां मलिनकेशां बद्धवेणीत्वात्॥ ७१॥ ज॰म॰

तामित्यादि। तां कीदृशीं प्रीतेरावणसम्बन्धिन्या इत्यर्थात् पराजयमानां प्रीतिमसहमानामित्यर्थः यतोऽपायेत्यादौ पराजयोऽसहनं पराजयपदनिर्द्देशेन परापूर्व्वजेरसहनविषयीभूतोगम्यते पराजेरसोढ इति पाणिनिसूत्रदर्शनात् पराजेः सोढुमशक्यमिति क्रमदीश्वरसूत्रदर्शनाच्च अशक्त्या निवर्त्तनं वा पराजयः रावणप्रीतेः सकाशात् अशक्त्या निवर्त्तमानामित्यर्थः यद्यपि प्रीतिं बुद्ध्या प्राप्य ततोनिवर्त्तत इति बुद्धिकृतापाय एवापादानत्वं घटते तथापि पराजयेति कृतं प्रपञ्चार्थं दशाननात् रक्ष्यां रक्षणीयां वारणार्थेऽपादानत्वं रक्ष्यां निवारणीयां वा तदा वारणार्थेऽपादानत्वं रक्षोभ्योऽन्तर्दधानां रावणकर्त्तृकर भ॰

र्शनाभावेच्छया व्यवहितोभवन्तीं भन्तर्द्धांवपादानमं भन्तर्द्धिर्व्य वधानं तच्च यदीयदर्शनाभावेच्छया तस्यापादानत्वं रक्षांसि विलोक्येति वा यवर्थे पञ्चमी मलिनां शरीरेण श्याममूर्द्धजां म लिनकेशां वेणीबन्धात् मणमन्त्रात् फलादित्वात् गोत्रचमेधे त्यादिना इनः॥ ७१ ॥

रामादधीतसन्देशो वायोर्जातस्तुतस्मितां। प्रभ वन्तीमिवादित्यादपश्यत्कपिकुञ्जरः॥ ७२॥

ज म॰ रामादित्यादि। सत्कृत्य अधीतसन्देशो गृहीतसन्देशः कपिकु ञ्जरः आख्यातोपयोग इत्यपादानसंज्ञा रामस्याख्यातृत्वात् सा व धानतया सन्देशग्रहणात् नियमपूर्वकविद्यावत्सन्देशग्रहणं वायो र्जातइति जनिकर्त्तुरित्यपादानसंज्ञा अन्यर्थस्य जन्मनः कर्त्ता हनूमान् तस्य वायुः प्रकृतिः कारणं च्युतस्मितं शोकाक्रान्तत्वात् प्रभवन्तीमिवादित्यात् भुवःप्रभवइत्यनेन भवत्यर्थस्य सीतायाः कर्तृभूतायाः प्रथमतउपलभ्यमानत्वात् अतः प्रभवआदित्यः तस्यातेजस्वित्वात्॥ ७२ ॥

भ॰ रामादित्यादि। च्युतं स्मितं यस्याः शोकाक्रान्तत्वात् तां आदित्यात् प्रभवन्तीमिव उत्पन्नामिव प्रथमतउपलभ्यमानां वा एतेन तेजोऽतिशयोदर्शितः यतोऽपायेत्यादिना यतोभूरित्यपा दानत्वं भूरुत्पत्तिः उत्पत्तिस्तु लक्षणया प्रथमोपलम्भश्चाप च बुद्धिसंश्लेषपूर्वकव्यापारस्य वस्मात् यतोऽपायइत्यपादानत्वं

वा यत्र प्रकाशनं प्रभवइत्याधारख्यापादानत्वमिति श्रीपतिः भुव श्चाद्योपलम्भस्थानमित्यपादानसंज्ञार्थं क्रमदीश्वरमूत्रं ईदृशीं तां कपिकुञ्जरः कपिश्रेष्ठोहनूमान् अपश्यदित्यन्वयः यकीदृशः रामादधीतसन्देशः गृहीतवाचिकः यतआदानमित्यपादानत्वं वायोर्जातः यतोभूरित्यपादानत्वं॥ ७२॥

रोचमानः कुदृष्टिभ्योरक्षोभ्यः प्रत्तवान् श्रियं।
श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिपः॥ ७३॥

रोचेत्यादि। तत्र तस्यामशोकवनिकायां राक्षसाधिपो रा वणः आगात् आगतः रोचमानः कुदृष्टिभ्यः त्यक्तत्रयीधर्मत्वात् ये कुदृष्टयः कुबुद्धयः तान् स्वविषये स्पृहावतः कारयन्नित्यर्थः रुच्यर्थानां प्रीयमाणइति सम्प्रदानसंज्ञायां चतुर्थी रुचेरभिला षस्य तत्रावस्थानात् कुदृष्टयः प्रीयमाणाः रक्षोभ्यः श्रियं विभू तिं प्रत्तवान् कर्मणा यमभिप्रैतीति सम्प्रदानं ददातिक्रियया राक्षसानामभिप्रीयमाणत्वात् श्लाघमानः परस्त्रीभ्यः कुत्सित चेऽस्माकं श्लाघेति परकलत्राणि ज्ञापयितुमेवयन् श्लाघह्नुङित्या दिना सम्प्रदानत्वं श्लाघया बध्यमानेन ज्ञापयितुमिष्यमाणत्वा त्तासां॥ ७३॥ क॰म॰

कुलकं। रोचेत्यादि। तत्र तस्यामशोकवनिकायां राक्षसाधिपो रावणो आगात् आगतः कीदृशः कुदृष्टिभ्योरोचमानः ये कुदृष्टयः कुबुद्धयः त्यक्तधर्मत्वात् तेभ्योरोचमानस्तेषां प्रीतिमुत्पादयन् म॰

यस्मैदित्सेत्यादिना यस्मैदित्सेरिति संप्रदानत्वं इचिरभिलाषोत्पा दनं तेन रुच्यर्थस्य कर्त्ता यस्य प्रीतिमुत्पादयति तस्य संप्रदा नत्वमिति पर्य्यवसितोऽर्थः रक्षोभ्यः श्रियं प्रजवान् कृतसम्पत्ति दानः ग्यचम्नवेति दाञ्चस्तादेश: यस्मैदित्सेति संप्रदानत्वं पर स्त्रीभ्यः श्लाघमानः तासां श्लाघया तास्तोषयन् स्वकीयश्लाघां ता ज्ञापयन् वा तास्वात्मश्लाघां कथयन् वा यस्मैश्लाघार्थइति सम्प्र दानत्व यस्मैश्लाघार्थइति श्लाघार्थेन योज्ञोप्यमानस्तस्य सम्प्र दानत्वमित्यर्थः॥ ७३॥

अशपन्निह्नुवानोऽसौ सीतायै स्मरमोहितः। धारय न्निव चैतस्यै वसूनि प्रत्यपद्यत॥ ७४॥

ज०म० अशपेत्यादि। सीतायै निह्नुवानः कार्य्यादिकं न मेऽस्तीति सीतां ज्ञापयितुमेपयन्नित्यर्थः तस्यै सीतायै अशप्यत् शपथं सीतां ज्ञापयितुमैपदित्यर्थः किमित्येवमाह स्मरमोहितः अत्र शपथा पक्कृतिक्रियया सीतामाज्ञापयितुमिय्यमाणत्वात पूर्ववत्सम्प्रदान संज्ञा किञ्चास्मै सीतायै स्वामिनीभूतायै वसूनि द्रव्याणि प्रत्यप द्यत अङ्गीकृतवान् धारयन्निव गृहीतविभव इव अत्र धारेरुत्त मर्णइति सीतायाः कयाचिदुत्तमर्णया तुल्यत्वात्॥ ७४॥

भ० अशपेत्यादि। असौ रावणः स्मरेण मोहितः सन् सीतायै अशप शपथं मिथ्यानिरथ्भं तां ज्ञापयितुमिच्छति स्म स्वशपथ पूर्वकं वा किञ्चित् ज्ञापयितुमिष्टवान् शपथाश्रीमंत्यनुसारइति

अपथें मं तस्मै निह्नुवानः कपटापह्नवेन सीतां स्वाभिप्रायं ज्ञाप
यितुमिच्छन् किञ्च एतस्मै सीतायै वसूनि धारयन्निव तत्सम्बन्धी
नि धनानि आत्मनि स्थापयन्निव गृहीतवित्तोऽधमर्ण इव तस्मै
वसूनि प्रत्यपद्यत दातुमङ्गीकृतवान् यस्मै दित्सेत्यादिना सर्व्वत्र
सम्प्रदानत्वं अपह्नुधात्वर्थयोगे यच्छब्दो ज्ञीप्स्यमानवचनः धार्य्य
र्थयोगे यच्छब्द उत्तमर्णवचनः॥ ७४॥

तस्मै स्पृहयमाणोऽसौ बह्वप्रियमभाषत। सानुनी
तिश्च सीतायै नाक्रुध्यन्नाप्यसूयत॥ ७५॥

तस्मा इत्यादि। असौ राक्षसाधिपः स्पृहयमाणः सीतामाप्तुमि ज०म०
च्छन् बहु प्रियमभाषत वक्ष्यमाणं स्पृहेरीप्सितइति स्पृहयतेः
स्वार्थिकण्यन्तस्य प्रयोगे सीतायाईप्स्यमानत्वात् सानुनीतिश्च सानु
नयः सीतायै नाक्रुध्यत् तां प्रति कोपं न कृतवान् नाप्यसूयत
दोषाविष्करणलक्षणामसूयां न कृतवान् क्रुधतिसूयत्योर्द्दिवादि
कयोरुदात्तेत्त्वात् तात्स्रिप्रयोगे क्रुधद्रुहेत्यादिना सम्प्रदानं
॥ ७५॥

तस्मा इत्यादि। असौ रावणो बह्वप्रियं वक्ष्यमाणं अभाषत भ०
तस्मै सीतायै स्पृहयमाणः स्पृहां कुर्व्वन् यस्मै दित्सेत्यादिना सम्प्र
दानत्वं स्पृहार्थे यच्छब्द ईप्सितवचनः सानुनीतिः सानुनयः सन्
सीतायै मा क्रुध्यत् न कोपं कृतवान् नापि असूयत दोषाविष्का
रणं नापि कृतवान् अयोऽसूनावित्यस्यानेकार्थत्वात् इदं रूपं

र्थां कणद्धादावस्य धातोर्णिटोषोऽभमित्यस्य कथिन्न्रभिचारादमो ऽभाव इति केचित् माण्यस्यतेति केचित् पठन्ति पूर्व्ववत् सम्प्रदानत्वं॥ ७५॥

संक्रुध्यसि मृषा किन्त्वं दिदृक्षुं मां मृगेक्षणे। ईक्षितव्यं परस्त्रीभ्यः स्वधर्म्मो रक्षसामयं॥ ७६॥

ज०म० संक्रुध्य इति। किं त्वं शुभाशुभे दिदृक्षुं द्रष्टुमिच्छुं मां हे मृगेक्षणे संक्रुध्यसि क्रुधद्रुहोरुपसृष्टयोः कर्म्मेति कर्म्मसंज्ञा क्रुधेरुपसर्गेण युक्तत्वात् कुतस्ते परिज्ञानं यत्परस्त्रीषु शुभाशुभं निरूपयसि अन्यत्र दृष्टाश्रयत्वात् अथ कथं मृषा संक्रुध्यामीति चेदाह ईक्षितव्यं परस्त्रीभ्यः का शुभा न शुभेति यदीक्षितव्यमीक्षणीयं तदयं स्वधर्म्मो रक्षसां राधीक्ष्योर्यस्य विप्रश्न इति सम्प्रदानसंज्ञा यतः स्त्रीविषये विविधस्य प्रश्नस्य क्रियमाणत्वात्॥ ७६॥

भ० संक्रुध्यादि। किं प्रियमभाषतेत्याह हे मृगेक्षणे त्वं शुभा न वेति द्रष्टुमिच्छन्तं मां किं मृषा त्वं संक्रुध्यसि क्रुधद्रुहोरुपसर्गे सम्प्रदानस्य कर्म्मत्वमिति केचित् स्वमते स्वभावादिमौ सोपसर्गौ सकर्मकाविति दुर्गवाक्यमाहतं क्रियाव्याप्यस्य कर्म्मत्वात् परस्त्रीदर्शने युक्त एव क्रोधः कथं मृषेति चेदाह परस्त्रीभ्य ईक्षितव्यं विविधप्रश्नपूर्व्वकं तद्दर्शनं तासां शुभाशुभनिरूपणं वा कर्त्तव्यमित्ययं रक्षसां स्वधर्म्मः यस्मैदित्सेत्यादिना ईक्षार्थयोगे सम्प्रदानत्वं

ईक्षिरं च विविधप्रश्नपूर्व्वकदर्शनार्थः शुभाशुभपर्य्यालोचनार्थो वा ॥ ७६ ॥

शृण्वद्भ्यः प्रतिशृण्वन्ति मध्यमा भीरु नोत्तमाः।
गृणद्भ्योऽनुगृणन्त्यन्ये कृतार्था नैव मद्विधाः ॥ ७७ ॥

शृण्वदित्यादि। अनेनात्मना प्रभावं दर्शयति शृण्वद्भ्यः ज०म० प्रार्थयमानेभ्यः स्वामिन्निदं क्रियतामिति मध्यमाः प्रभवः प्रतिशृण्वन्ति ओमित्युपगच्छन्ति हे भीरु नोत्तमा मादृशाः ते हि स्वातन्त्र्यात्स्वयमेव हितम्प्रतिपद्यन्त इति भावः प्रत्याङ्भ्यां श्रुवः पूर्व्वस्य कर्त्तेति सम्प्रदानसंज्ञा पूर्व्वस्याः प्रार्थनक्रियायाः प्रार्थयितुः कर्त्तृत्वात् अन्ये प्रभवोऽकृतार्थाः अलब्धलाभाः गृणद्भ्यः अनुयाचमानस्य भृत्यस्य कस्यचित्र स्तुतिं कुर्व्वद्भ्यो मन्त्रिभ्यः अनुगृणन्ति तान् प्रोत्साहयन्ति अनुगृणीत अनुगृणीतेति ममानुगतो भवतीति नैव मद्विधा अनुगृणन्ति कृतार्थत्वात् गृशब्द इत्यस्य प्रयोगे अनुप्रतिगृणश्चेति सम्प्रदानसंज्ञा गृणातेः स्तुतिक्रियापेक्षया कर्त्तृत्वात् ॥ ७७ ॥

शृण्वदित्यादि। इदानीमात्मोत्कर्षः कथ्यते हे भीरु शृण्वद्भ्यः भ० प्रार्थयमानेभ्यः स्वामिन्निदं क्रियतामित्युपदेष्टृभ्यो मध्यमा एव प्रभवः प्रतिशृण्वन्ति तैः प्रयुक्ताः सन्तस्तथा कर्त्तव्यमित्युपगच्छन्ति न तु मद्विधा मादृशा उत्तमाः ते हि स्वातन्त्र्यात्स्वयमेव हिताहितं जानन्तीति भावः अन्ये तु अकृतार्थाः प्रभवो गृणद्भ्यः

स्तुतिं कुर्व्वन्त एव अनुगृणन्ति तैः प्रयुक्ताधनादिकं दातुमभ्युपग च्छन्ति स्वप्रसिद्धये स्तावकेभ्यो यच्छन्तीत्यर्थः नत्वेवं मद्विधाः स्वतः प्रसिद्धत्वेन परस्तुत्यनपेक्षत्वात् यस्मैदित्सेत्यादिना उभ यत्र सम्प्रदानत्वं अत्र आप्रतिशृप्रत्यनुग्रर्थयोगे यच्छब्दोगम्य पूर्व्वक्रियाकर्त्तृवचनइति तु वामं वदन्तं प्रोत्साहयामासेत्यर्थइ त्यनेन सूचितं अत्र हि प्रार्थनमेव पूर्व्वक्रिया गम्या तस्याः कर्त्ता प्र स्वच्छन्दः एवं स्तुतिकरणमेव पूर्व्वक्रिया गम्या तस्याः कर्त्ता गृ णच्छन्दः॥ ७७॥

इच्छ स्नेहेन दीव्यन्तो विषयान् भुवनेश्वरं। सम्भो गाय परिक्रीनः कर्त्तास्मि तव नाप्रियं॥ ७८॥

ज॰म॰ इच्छेत्यादि। ईदृशं पूजितं भुवनेश्वरं त्रिलोकविजयिनमि च्छ अङ्गीकुरु आत्मानमुद्दिश्य स्नेहेन प्रेम्णा साधकतमत्वकरणमिति करणसंज्ञा दीव्यन्तो क्रीडन्तो विषयान् शब्दादिभिरित्यर्थः दिवःकर्म्मचेति करणसंज्ञापवादात्कर्म्मसंज्ञा सम्भोगाय परि क्रीतः त्वद्विषयभोगेन परिक्रीतइत्यर्थः परिक्रयणं सम्प्रदानमिति सम्प्रदानत्वं तव नाप्रियं कर्त्तास्मि न करिष्यामि॥ ७८॥

भ॰ इच्छेत्यादि॥ ॥ भुवनानामीश्वरं मां त्वं स्नेहेन प्रेम्णा इच्छ अङ्गीकुरु साधकतमत्वेनिति करणत्वं किं कुर्व्वती विषयान् दीव्यन्ती विषयैः स्रक्चन्दनादिभिः क्रीडन्ती दिवोऽधवेति पक्षे करणे द्वितीया सम्भोगाय सम्भोगेन परिक्रीतः नियतकालं त्वया सेवाये

स्त्रीजनोऽहं तवाप्रियं अहं न कर्त्तास्मि न करिष्यामि परिक्षिपोधे वेति पचे करणे चतुर्थी॥ ७८॥

आस्स्व साकं मया सौधे मा धिष्ठा निर्ज्जनं वनं।
मा धिवात्सीर्भुवं शय्यामधिशेष्व स्मरोत्सुका॥ ७९॥

आस्स्वेत्यादि। मया साकं सार्द्धं सौधे धवलगृहे आस्स्व तिष्ठ आसेर्लोटि रूपं आधारोऽधिकरणमित्यधिकरणसंज्ञायां सप्तमी मा धिष्ठा निर्ज्जनं वनं अधिशीङ्स्थासांकर्मेत्यधिकरणे कर्म्मसंज्ञा लुङि रूपं मा धिवात्सीः भुवं भूमौ मा शयिष्ठाः माङि लुङि रूपं उपान्वध्याङ्वसइति अधिकरणे कर्म्मसंज्ञा किन्तु शय्याम धिशेष्व शीङोलोटि रूपं अधिशीङिति कर्म्मसंज्ञा स्मरोत्सुका कामार्थिनी॥ ७९॥ ज०म०

आस्स्वेत्यादि। मया साकं सह सौधे धवलगृहे आस्स्व तिष्ठ जि तासङ्उपवेशे आमन्त्रणे प्रार्थने वा सौ कालभावाधारमित्या श्लेषाधारत्वं निर्ज्जनं वनं त्वं मा धिष्ठाः निर्ज्जने वने न तिष्ठ कर्म्म क्रियेत्यादिना अधिपूर्व्वस्य आधारस्य कर्म्मत्वं भूस्वेति सेर्लुक् सौकः स्तुस्तुभेत्यादिना षत्वं भुवं मा धिवात्सीः भूमौ मा शयिष्ठाः पूर्व्ववदधिवसेराधारस्य कर्म्मत्वं सत्सरइति तः स्मरोत्सुका कामासक्ता सती त्वं शय्यां अधिशेष्व पूर्व्ववदधिशीङआधारस्य कर्म्मत्वं॥ ७९॥ भ०

अभिन्यविक्षथास्त्वं मे यथैवाव्याहता मनः। तथाप्य
ध्यावसन्तं मां मारौत्सीर्हृदयं तथा ॥ ८० ॥

ज°म° अभीत्यादि। यथैव त्वमव्याहता अनिवारिता सती मे मम मनः अभिन्यविक्षथाः अभिनिविष्टासि लुङि रूपं नेर्विश इति तङ् अभिनिविशस्येत्यधिकरणे मनसः कर्मसंज्ञा तथा त्वमपि तद्धृद यमध्यावसन्तं मां मा रौत्सीः मा निवारय रुधेर्लुङि रूपं उपान्व ध्येति हृदयस्य कर्मसंज्ञा ॥ ८० ॥

भ° अभीत्यादि॥ यथैव येनैव प्रकारेण त्वमव्याहता मया अनिवारिता सती मम मनोऽभिन्यविक्षथाः अभिनिविष्टासि भी विशमवे ऽ विपराजीति मं हस्तो ऽनिमिजुक इति सक अभिन्यवि क्षथा इति पाठे श्री पूर्ववदाधारस्य कर्मत्वं तथा तेनैव प्रकारेण तव हृदयमध्यावसन्तं मां त्वमपि मा रौत्सीः न निवारय मां हृदि कुर्विति भावः रुधिरोऽभिधत् आवृतौ टो पूर्ववदधिवसे राधारस्य कर्मत्वं ॥ ८० ॥

मावमंस्थानमस्यन्तमकार्य्यज्ञे जगत्पतिं। संदृष्टे
मयि काकुत्स्थमधन्यं कामयेत का ॥ ८१ ॥

ज°म° मावेत्यादि। हे अकार्यज्ञे अविशेषज्ञे मां जगत्पतिं नमस्यन्तं मावमंस्थाः लुङि रूपं कर्तुरीप्सिततममिति कर्मसंज्ञा अवमान क्रिया कर्तृसम्बन्धिन्या जगत्पतेराप्तुमिष्टत्वात् संदृष्टे मयि

काकुत्स्थमधन्यं मन्दभाग्यं का कामयेत का इच्छेत् नैवेत्यर्थः तथा युक्तं चानीप्सितमिति कर्म्मसंज्ञा येनैव प्रकारेण कर्तुरीप्सिततमं क्रियया युक्तं तेनैवेप्सितादन्यस्य रामस्य प्रयुज्यमानत्वात्॥ ८१॥

मावेत्यादि। हे अकार्य्यवेदिनि अविज्ञे पण्डे नमस्यन्तं प्रणमन्तं जगत्पतिं मां त्वं मावमंस्थाः मावजानीहि जगन्नमस्योऽप्यहं त्वां नमस्यामीति मावज्ञा युक्तेति भावः कर्मक्रियेति कर्मत्वं कर्मक्रियेत्यत्र कर्मक्रियाख्यातं तच्च चतुर्विधं प्राप्यनिर्वर्त्यविकार्य्यानीप्सितभेदात् इदन्तु प्राप्यं कर्म प्राप्तुमिष्टत्वात् तच्च पूर्व्वमवमननक्रियया जगत्पतिर्व्याप्यते पश्चात्सम्प्रयोगेन वहिरङ्गेन न तन्निवृत्तिः नमः करोतीति नमस्यतीवरिवस्यति क्यः मयि संदृष्टे सति अधन्यं मन्दभाग्यं काकुत्स्थं रामं का कामयेत् इच्छेत इदमनीप्सितं कर्म ॥ ८१॥

यः पयोदोग्धि पाषाणं स रामाद्भूतिमाप्नुयात्। रावणं गमय प्रीतिं बोधयन्तं हिताहितं॥ ८२॥

यःपेत्यादि। यथा पाषाणात् पयोन सम्भवति तथा रामादपि विभूतिरिति नैराश्यं दर्शयति पयसः पूर्व्ववैव कर्म्मसंज्ञा. पाषाणस्याकथितत्वेत्यनेन रावणं गमय प्रीतिं भवत्या सह प्रीतिं गच्छन्तं गमय प्रीतिं स्वयमेव हिताहितं भवतीं बुध्यमानां बोधयन्तं गतिबुद्धीत्यादिना कर्म्मसंज्ञा गतिबुध्योरण्यन्तावस्थायां तयोः कर्तृत्वात्॥ ८२॥

भ० यइत्यादि। यः पाषाणं पयोदोग्धि पाषाणेन हेतुना पयांसि क्षारयति सएव रामाद्भूतिं प्राप्नुयात् सम्भावनायां लिङ् यथा पाषाणात् पयोन सम्भवति तथा रामादपि भूतिरिति भावः या ञ्चार्थेत्यादिना दुहेर्द्विकर्म्मकत्वं पाषाणमिति कर्म्म हेतोः कर्म्मत्वं पयइति निर्व्वर्त्यं कर्म्म तस्मात् रावणं मां प्रीतिं गमय प्रापय हितस्याहितस्य बोधयन्तं भवतीमित्युत्तरश्लोकस्यमिहानुषज्यते णोऽञ्जौञेरिति गतिज्ञानार्थयोः प्रयोज्यकर्त्तुः कर्म्मत्वं॥ ८२ ॥

प्रीतोऽहं भोजयिष्यामि भवतीं भुवनत्रयं। किं विलापयसेऽत्यर्थं पार्श्वे शायय रावणं॥ ८३ ॥

ज०म० प्रीतइत्यादि। अहं प्रीतः सन् भुवनत्रयं तत्समुत्थं भोज्यं भोक्तुं योग्यां भवतीं भोजयिष्यामि प्रत्यवसानार्थत्वात्कर्म्मसंज्ञा प्रत्यव मानमभ्यवहारः अकर्त्रभिप्राये णिचस्तेत्यात्मनेपदं न भवति वि लपन्तीं विविधं भाषमाणां किं विलापयसेऽत्यर्थं नाहं त्वामिच्छा मीति ब्रुवाणा अत्र शब्दकर्म्मकत्वात् कर्म्मसंज्ञा कर्त्रभिप्राये णिच स्तेत्यात्मनेपदं तस्मादिदं प्रार्थये पार्श्वे रावणं शायय अत्राकर्म्म कत्वात्कर्म्मसंज्ञा॥ ८३ ॥

भ० प्रीतइत्यादि। अहं प्रीतः सन् भवतीं त्वां भुवनत्रयं भोजयि ष्यामि भुवनत्रयसम्बन्धिसुखोपभोगो भुवनत्रयभोगेन लक्ष्यते पूर्व्व वद्गत्यर्थस्य प्रयोज्यकर्त्तुः कर्म्मत्वं किं रावणं मां अत्यर्थं विलाप

यमे विविधं भाषयमि शब्दार्थत्वात् प्रयोज्यस्य कर्मत्वं तस्मादिदं प्रार्थये मां पार्श्वं शायय स्वापय प्रार्थनायां गी शीङोऽकर्मकत्वात् प्रयोज्यस्य कर्मत्वं ॥ ८३ ॥

आज्ञां कारय रक्षोभिर्मां प्रियाण्युपहारय। कः शक्रेण कृतं नेच्छेदधिमूर्द्धानमञ्जलिं ॥ ८४ ॥

इति कारकाधिकारः ॥

आज्ञामित्यादि। रक्षांसि तदाज्ञां कुर्व्वन्त्येव कारय प्रियाणि च तत्सम्बन्धीनि मामुपहरन्तमुपहारय उत्पादय हृक्रोरन्यतरस्यामिति कर्मसंज्ञा शक्रेण कृतं विरचितं अञ्जलिमधिमूर्द्धानं अधिगतः प्राप्तो मूर्द्धा येनेति कोनेच्छेत् स्वतन्त्रस्य इति कर्तृसंज्ञा शक्रेण प्रणतोऽहमित्यर्थः प्रयोज्यकर्त्ता नोदाहृतोऽवस्थावस्थाया मुदाहृतत्वात्। इति कारकाधिकारः ॥ ८४ ॥ ज०म०

आज्ञामित्यादि। रक्षोभिराज्ञां कारय तान्याज्ञाकरणाय प्रेरय मां प्रियाणि अभिलषणीयानि उपहारय प्रियाण्युपहर्त्तुमानेतुं मां प्रेरय हृक्रमाभिवादिदृशस्त्विति प्रयोज्यस्य विकल्पेन कर्मत्वं कर्मत्वाभावपक्षे साधकतमेत्यादिना कर्त्तरि तृतीया कोजनः शक्रेण कृतं विरचितं अधिमूर्द्धानमञ्जलिं न इच्छेत् अपि तु सर्व्व एवेच्छति इन्द्रेणाहं प्रणतः त्वामपि मत्प्रियामसौ नमस्करिष्यतीति भावः मूर्द्धानमधिगतः प्राप्तः अधिमूर्द्धा अधिगतो मूर्द्धा येनेति वा अत्र स्वतन्त्रकर्त्तोदाहृतः नोप्रयोज्यकर्त्ता भ०

दर्शितएव स्थर्यैत्यादिना उक्तकर्त्तरि प्रथमा कर्त्ता क्रियामुख्यः प्रयोजकश्च। इति कारकाधिकारः॥ ८४॥

वचनं रक्षसां पत्युरनुक्रुद्धा पतिप्रिया। पापानुव सितं सीता रावणं प्राब्रवीदिदः॥ ८५॥

ज०म० इतः प्रभृति कर्म्मप्रवचनीयमधिकृत्याह। वचनमित्यादि रक्ष सां पत्यू रावणस्य वचनमनुलक्ष्यीकृत्य अनुर्लक्षणइति कर्मप्रवच नीयसंज्ञायां द्वितीया क्रुद्धा सती सीता पतिप्रिया पतिः प्रियोय स्याइति रावणं प्राब्रवीदवीवक्ष्यमाणं पापानुवसितं पापेन संयुक्तं तृतीयार्थइत्यनेन कर्म्मप्रवचनीयसंज्ञायां द्वितीया पाप मन्ववसितइति द्वितीयेति योगविभागात्सः सुप्सुपेति वा॥ ८५॥

भ० अथ कर्मप्रवचनीयाधिकारः सच लक्षणे धिक्समयेत्यादि सूत्रसमूहनिर्दिष्टविभक्त्यधिकारः। वचनमित्यादि पतिः प्रियो यस्याः सा सीता रक्षसां पत्यूरावणस्य वचनमनुलक्ष्यीकृत्य तेन हेतुना वा क्रुद्धा सती रावणं वचोवक्ष्यमाणं प्राब्रवीत् राव णं कीदृशं पापानुवसितं पापमनु पापेन सह वसितं समङ्कुमिति द्वितीयासमासः षिञ्गन्धने अवपूर्व्वात् क्तः वातावाप्योरिति अवस्यालोपः धिक्समयेत्यादिना अनुयोगे द्वितीया वीप्सेत्थम्भा वचिह्नेऽभितोपुभागेपरिप्रती। अनुरेषु सहार्थे च हीनेऽनूपो मताविहेति वीप्सादिसम्बन्धं द्वितीया वक्ति अभ्यादयोद्योतका अनुरत्र चिह्नार्थे सहार्थे च चिह्नं लक्षण हेतावप्यनुयोगे द्विती येति केचित्॥ ८५॥

न भवाननुरामश्चेदुपशूरेषु वा ततः। अपवाह्य च्छलाद्वीरौ किमर्थं मामिहाहरः॥ ८६॥

नेत्यादि। यदि भवाननुरामं रामाद्धीनइत्यर्थः हीन इत्यनेन कर्म्मप्रवचनीयसंज्ञा अनुशब्दस्य तद्योगार्थद्योतकः हीन योत्कृष्टापेक्षः उपशूरेषु वा शूरेभ्योवा यद्यधिकोभवान् उपोधिकेचेति चकाराद्धीने उपशब्दस्य कर्म्मप्रवचनीयसंज्ञा यस्मादधिकमित्यनेन सप्तमी उपशब्दस्याधिकद्योतनात् किमर्थं कनकमृगच्छलेन वीरौ रामलक्ष्मणौ अपवाह्य अन्यतोनीत्वा मामिहाहरः लङ्कामानीतवान्॥ ८६॥ ज॰म॰

नेत्यादि। किं माब्रवीदित्याह। चेद्यदि भवान् अनुरामं रामात् हीनो नभवेत् यदि वा उपशूरेषु शूरेभ्यः यद्यधिकोभवान् तदा किमर्थं किंनिमित्तं कनकमृगच्छलेन वीरौ रामलक्ष्मणौ अपवाह्य अन्यतोनीत्वा त्वं मामिहाहरः लङ्कायामानीतवानसि समर्थोहि जित्वैवानयति अओघो पूर्व्ववदनुयोगे द्वितीया अनुरच हीनार्थे अधिकेशार्थोपाधिभ्यामिति अधिकार्थोपयोगे सप्तमी॥ ८६॥ भ॰

उपशूरं न ते वृत्तं कथं रात्रिञ्चराधम। यत्संप्रत्यपलोकेभ्योलङ्कायां वसतिर्भयात्॥ ८७॥

उपेत्यादि। हे रात्रिञ्चराधम कथं ते वृत्तं चरितं नोपशूरं शूरेभ्योन हीनं उपोधिकेचेतिचकाराद्धीने उपशब्दस्य कर्म्म ज॰म॰

प्रवचनीयसंज्ञा यद्यस्मात्सम्प्रत्यधुना भयाल्लङ्कायां जलपर्व्वत दुर्गायां वसतिः वसेरति वसिवर्तिभ्यश्चेत्यौणादिकः अपलोकेभ्यो लोकान् वर्जयित्वा अपपरीवर्जनइति कर्म्मप्रवचनीयसंज्ञायां पञ्चम्यपाङ्परिभिरिति पञ्चमी॥ ८७॥

भ० उपेत्यादि। हे रात्रिञ्चराधम कथं ते तव वृत्तं चरितं नोप शूरं शूरेभ्यो न हीनं शूरशब्दोऽत्र लक्षणया शूरवृत्तवाची धिक्समयेत्यादिना द्वितीया उपोऽत्र हीनार्थे यत् यस्मात् सम्प्रति भयाद्धेतोरपलोकेभ्यो लोकान् वर्जयित्वा लङ्कायां जलपर्व्वतदुर्गायां तव वसतिर्निवासः अन्यारभ्येत्यादिना अपयोगे पञ्चमी अपस्त्यागार्थे आङ्व्याप्तिसीमयोस्त्यागेऽन्यौ प्रतिदानप्रतिनिधौ प्रतीति अन्यौ पर्य्यपौ॥ ८७॥

आरामदर्शनात्पाप विद्योतस्व स्त्रियः प्रति। सद्वृत्तान्ननु दुर्वृत्तः परिस्त्रीं जातमन्मथः॥ ८८॥

ज०म० आरेत्यादि। हे पाप आरामदर्शनात् रामदर्शनं यावत् आङ्मर्यादावचने पूर्व्ववत्पञ्चमी स्त्रियः प्रति योषितो लक्ष्यीकृत्य विद्योतस्व शोभस्व लक्षणेत्थंभूतेति कर्म्मप्रवचनीयत्वं परिस्त्रींजातमन्मथः अत्र वीप्सायां कर्म्मप्रवचनीयत्वं॥ ८८॥

भ० आरामेत्यादि। हे पाप दुराचार आरामदर्शनात् रामदर्शनं यावत् स्त्रियः प्रति लक्ष्यीकृत्य विद्योतस्व शोभस्व पूर्व्ववत् सीमार्थाङ्योगे पञ्चमी धिक्समयेत्यादिना चिह्नार्थप्रतियोगे

द्वितीया त्वं कीदृशः सद्वृत्तान् सदाचारान् अनु दुर्व्वृत्तः दुश्चरि
तः सदाचारेषु कथञ्चित् प्रकारं द्रोहादिकमापन्नोदुर्व्वृत्तोभव
सीत्यर्थः पूर्व्ववदित्यम्भावार्थानुयोगे द्वितीया इत्यम्भावः कस्य
चित्प्रकारस्यापत्तिः स्त्रीःपरि लचीकृत्य स्त्रीषु कथञ्चित्प्रकारं
विहारिलादिकमापन्नोवा जातकामः पूर्व्ववच्चिह्नार्थे इत्यम्भावा
र्थे वा परियोगे द्वितीया वीप्सायां परिशब्दस्य कर्म्मप्रवचनी
यत्वमिति अयमनुक्ता न युक्ता वीप्सायां द्वित्वं लोकतः सिद्ध
मिति टीकायामुक्तत्वात् क्वचित् मन्नुद्यन्तमिदं विशेषणद्वयं दृ
श्यते ॥ ८८ ॥

अभिद्योतिष्यते रामोभवन्तमचिरादिह। उद्गूर्ण
बाणः संग्रामे योनारायणतः प्रति ॥ ८९ ॥

अभीत्यादि। भवन्तमभि भवन्तं लचीकृत्य अभिरभागइति क॰प्र॰
कर्म्मप्रवचनीयत्वं अचिरादिह लङ्कायां रामोद्योतिष्यते प्रकाशते
जाभविष्यति य उद्गूर्णबाणः उद्यतबाणः सङ्ग्रामे नारायणतः प्रति
तेन तुल्यः प्रतिनिधिः प्रति प्रतिनिधौति प्रतिनिधौ कर्म्मप्रवचनी
यत्वं प्रतिः प्रतिनिधि प्रतिदाने च यस्मादिति पञ्चमी प्रतियोगे
पञ्चम्यास्तसिः मुख्यसदृशः प्रतिनिधिः ॥ ८९ ॥

अभीत्यादि। भवन्तमभि लचीकृत्य रामोऽचिरादिह भ॰
लङ्कायां द्योतिष्यते प्रकाशतेआभविष्यतीत्यर्थः पूर्व्ववत् चिह्नार्था
भियोगे द्वितीया योरामः संग्रामे उद्गूर्णबाणउद्यतकार्म्मुकः सन्

नारायणतः प्रति मेन तुल्यः अन्यारभ्येत्यादिना प्रतिनिध्यर्थ प्रतियोगे पञ्चमी प्रश्नैरिति पञ्चम्यास्तम् ॥ ८६ ॥

कुतोऽधियास्यसि क्रूर निहतस्तेन पत्रिभिः। न ह्युक्तं भवतात्युग्रमतिरामं महोद्धत ॥ ९० ॥

ज०म० कुतइत्यादि। हे क्रूर तेन रामेण उद्गर्णवाणेन पत्रिभिः शरैः निहतः सन् कुतोऽधियास्यसि केन प्रकारेण निःसरिष्यसि अधि परीअनर्थकाविति अधिःकर्म्मप्रवचनीयसंज्ञा धात्वर्थव्यतिरेकेणा र्थस्यानभिधानादनर्थकत्वं संज्ञा च गत्युपसर्गसंज्ञावाधनार्था तेन तिङि चोदात्तवतीति निघाताभावोद्रष्टव्यः पञ्चमी च प्रश्नाख्या नयोरित्युपसंख्यानात् भवति किमिति हनिष्यतीति चेत् यतो भवता न सूक्तं प्रशस्तमुक्तं सुः पूजायामिति कर्म्मप्रवचनीयत्वं गतिरनन्तर इति स्वराभावः अत्युग्रमतिरौद्र अतिरामं राम मधिक्षिप्य काकुत्स्थमधन्यमिति अतिरतिक्रमणे चेति कर्म्मप्रवच नीयत्वं चकारात्पूजायाञ्च तच्चाप्युक्तमिति प्रयोगः हे महोद्धत ॥ ९० ॥

भ० कुतइत्यादि। हे क्रूर तेन रामेण संग्रामे पत्रिभिः शरैर्निहत सन् कुतस्त्वं अधियास्यसि सर्व्वतोभावेन कस्मात् निःसरिष्यसि त्वं महोद्धत अतिरामं राममतिक्रम्य अवक्षिप्य अत्युग्रं अतिरौद्र भवता न सूक्तं न शोभनमुक्तं रामाक्षेपकं तत्र पूर्व्ववचनं मिथ्येति भावः धिक्समयेत्यादिना अतियोगे द्वितीया ॥ ९० ॥

परिक्षेपं न नामापि स्थापयिष्यन्ति ते विभुः। अपि स्थाणुं जयेद्रामो भवतोग्रहणं कियत्॥ ९१॥

परीत्यादि। रामोविभुः प्रभुः ते परिक्षेपं नामापि संज्ञामपि न स्थापयिष्यति किमु देहं अपिः पदार्थेत्यादिना पदार्थे कर्म्मप्रवचनीयसंज्ञा पदस्य देहस्याप्रयुज्यमानस्यार्थे अपिशब्दोव र्त्तते अपि स्थाणुं जयेद्रामोयमाराध्याधिपत्यं प्राप्तवानपि तमपि स्थाणुं महादेवं जेतुं सम्भाव्यते भवतोग्रहणं कियत् वस्त्वेव न भव ति अत्र संभावनायां कर्म्मप्रवचनीयत्वं सम्भावने लिङ् उप सर्गबाधनत्वात्संज्ञाया उपसर्गात्सुनोतीत्यादिना षत्वं न भवति॥ ९१॥ ज॰म॰

परीत्यादि। मम प्रभू रामस्ते तव परिक्षेपं नामापि संज्ञामपि न स्थापयिष्यति किं पुनः शरीरं अत्रापिशब्देन देहस्य समुच्चयात् अयाच्चायां सत्यां नातिक्रमेऽर्त्तिः पर्य्यधी गतौ। अपिः पदार्थ संभाव्यगर्हानुज्ञासमुच्चये इत्यनेनोपसर्गत्वाभावः तेन व्यस्यन्त कारेत्यादिना न समासः धातुपूर्व्वत्वनियमाभावः गोकःसुस्तुभे त्यादिना न षत्वम् परेस्त्वेतदर्थे कर्म्मप्रवचनीयसंज्ञा कृता कुत स्तस्यैव सामर्थ्यमित्याह रामः स्थाणुमपि जयेत् यमाराध्य लङ्का धिपत्यं प्राप्तवान् तमपि स्थाणुं महादेवं जयेदिति सम्भाव्यते अपिशब्दः सम्भावनाद्योतकः तस्यैव स्त्री तेन रामेण भवतोग्रहणं कियत् अल्पायाससाध्यमेव पूर्व्ववत्षत्वनिषेधः॥ ९१॥ भ॰

अपिसुह्यपिस्तेऽथास्तां तथ्यमुक्तं नराशन। अपि सिञ्चेः कृशानौ त्वं दर्पं मय्यपि योऽभिकः॥ ९२॥

ज॰म॰ अपीत्यादि। हे नराशन मया तथ्यमुक्तं यन्नामापि न स्थापयिष्यतीति अस्मानपि स्तुहि साधूक्तमिति प्रशंस सेर्प्यमपिधेति अपिति ङित्त्वाद्गुणाभावः अपिसेध निराकुरु यथेच्छं तथा क्रियतां मया तु सत्यमेवोक्तमिति भावः अत्रानुपसर्गे कामचारानुज्ञाने कर्म्मप्रवचनीयसंज्ञा किन्तु कृशानावग्नौ दर्पं अपिसिञ्चेः क्षरेस्त्वं अत्र गर्हायां लिङि रूपं योऽयं मय्यपि मद्विषयेऽपि अभिकः काम

भ॰ यिता अनुकाभिकेत्यादिना निपातितः उपसर्गसंज्ञाबाधनार्थत्वात् सौतिसेधिसिचां षत्वं न भवति॥ ९२॥

अपीत्यादि। हे नराशन परिशेषं न नामापि स्थापयिष्यतीति तथ्यं सत्यमेव मयोक्तं त्वमस्मान् अपिस्तुहि साधूक्तमिति प्रशंस अपिसेध निराकुरु यथा तवेच्छा तथैव क्रियतां मया तु सत्यमेवोक्तमिति भावः अत्रापिशब्दः समुच्चयेऽनुज्ञायां वा पूर्व्ववत्षत्वनिषेधः हुझल्भ्यस्तेर्हि धिः विभाषेत्यस्य रूपं त्वं कृशानौ वह्नावेव दर्पं अपिसिञ्चेः सुञ्च अत्रापिशब्दो गर्हायां पूर्व्ववत् षत्वनिषेधः यद्यपि जातुपिश्रां सदाऽर्पं इति कालसामान्ये गर्हायां लिङ् विहिता तथापि पदसंस्कारात् विधौ वो भवतः स्यात् अत्र दर्पशब्देन दर्पजनकत्वादेतदुच्यते यस्त्वं मय्यपि मद्विषये अभिकः कामुकः॥ ९२॥

अधिरामे पराक्रान्तमधिकर्त्ता स ते जयं। इत्युक्ता मैथिली तूष्णीमासाञ्चक्रे दशाननं ॥ ९३ ॥

अधीत्यादि। पराक्रान्तस्य शौर्य्यस्य रामईश्वितेत्यभिप्राय अधिरामे पराक्रान्तं नपुंसके भावे क्तः अधिरीश्वरइति स्वस्वामिसम्बन्धे अधेः कर्म्मप्रवचनीयसंज्ञा यस्मादधिकमित्यादिना सप्तमी यद्येवं सरामस्ते जयमधिकर्त्ता करिष्यति अत्र कर्म्मण्येव द्वितीया न कर्म्मप्रवचनीययुक्तइति विभाषाकृञीति या संज्ञा तस्या गत्युपसर्गसंज्ञाबाधनार्थत्वात् संज्ञापक्षे तिङ्ङि चोदात्तवतीति निघाताभावो दृष्टव्यइति एवमुक्ता दशाननं मैथिली तूष्णीमासाञ्चक्रे तूष्णीं स्थितवती। इति कर्म्मप्रवचनीयाधिकारः ॥ ९३ ॥ ज॰म॰

अधीत्यादि। रामः पराक्रमस्य स्वामीत्यर्थे अधिरामे अधिके शार्थोपाधिभ्यामिति सप्तमी पराक्रान्तमिति भावे क्तः अधिरामे पराक्रान्तं यथा भवति तथा सरामस्ते तव जयं अधिकर्त्ता अधिकं करिष्यति स्वकीयपराक्रमेण जयं करिष्यतीत्यर्थः इति दशाननमुक्ता मैथिली तूष्णीं मौनेन आसाञ्चक्रे स्थितवती स्थिराहीत्याम्। इति कर्म्मप्रवचनीयाधिकारः ॥ ९३ ॥ भ॰

ततः खड्गं समुद्यम्य रावणः क्रूरविग्रहः। वैदेहीमसरा क्रुद्धः क्षणमूचे विनिश्वसन् ॥ ९४ ॥

ज॰ इत:प्रभृत्यनभिहितइत्यधिकृत्य विभक्तिविधानमाह। तत इत्यादि ततः सीतावचनादुत्तरकालं रावणः खड्गं समुद्यम्य उत्क्षिप्य कर्मणि द्वितीया क्रूरविग्रहः दुःप्रेक्ष्यत्वात वैदेहीम न्तरा क्रुद्धः वैदेह्यामध्ये कुपितः अन्तरान्तरेण युक्ते इति यथाप वादाद्द्वितीया अन्तराशब्दो मध्यमाधेयप्रधानमाचष्टे चाधेय त्वात क्रुद्धो रावणः क्षणमुचे उक्तवान् उक्तिक्रियया क्षणस्य कालस्य साकल्येन सम्बन्धात् कालाध्वनोरिति द्वितीया विनिश्व सन् क्रोधात् ॥ ८४॥

भ॰ अथानभिहिताधिकारः। अथानभिहितइत्यधिकृत्य पाणिनि ना या द्वितीयादिविभक्तयोविहितास्ताः कथ्यन्ते स्वमतेऽनभि हिताधिकाराभावेऽपि उक्ते कर्म्मादौ प्रथमा स्यात् पारिशेष्यादन भिहितइत्यवगम्यते। ततइत्यादि सीतावचनानन्तरं रावणः क्रूरविग्रहःशरीरात् दुष्प्रेक्ष्यशरीरः सन् खड्गमुद्यम्य उत्क्षिप्य क्षणं विनिश्वसन् ऊचे कीदृशः वैदेहीमन्तरा सीतायामध्ये क्रुद्धः मध्य भागं छेत्तुमुद्यतइत्यर्थः किम्वा रावणपरिजनस्येत्याध्याहार्य्यं वैदेहीं रावणःपरिजनस्यान्तरा क्रुद्धः वैदेह्यारावणपरिजनस्य चान्तरामध्ये कुपितः सन्नित्यर्थः खड्गमिति कर्म्मणि द्वितीया अन्त राशब्दोमध्यार्थः तद्योगे धिक्उपमयेत्यादिना द्वितीया क्षणमिति कालाध्वादिव्याप्ताविति द्वितीया विनिश्वासक्रियया वचनेन वा तस्यातिसंयोगसम्बन्धात् ॥ ८४॥

चिरेणानुगुणं प्रोक्ता प्रतिपत्तिपराङ्मुखी। न मासे प्रतिपत्तासे मांचेन्मर्त्तासि मैथिलि॥ ८५॥

चिरेत्यादि। हे मैथिलि चिरेणापि कालेनानुगुणमनुकूलं अ॰म॰ मया प्राप्तापि त्वमी प्रतिपत्तिपराङ्मुखी उपचारार्थयानुगताम् प्रतिपत्तिः तस्यां पराङ्मुखी इदानीं यदि त्वं मासे चिंशद्दिवस व्यवधे मां त्वं प्रतिपत्तासे नाङ्गीकरिष्यसि तदा मर्त्तासि मरिष्यसि उभयमपि लुटि रूपं तत्र चिरेण प्राप्तेत्यपवर्गे तृतीया विवक्षितार्थप्रकाशनं फलं तस्य प्राप्तौ तत्क्रियापरिसमाप्तिरपवर्ग इति मां मासेन प्रतिपत्तासे इति सप्तमीपञ्चम्यौ कारकमध्य इति सप्तमी कर्मकर्त्रोः कारकयोर्मध्यत्वात् मासस्य॥ ८५॥

चिरेणेत्यादि। हे मैथिलि चिरेण कालेन मयानुगुणं अनु भ॰ कूलं प्राप्तापि तस्योपकस्य प्रतिपत्तिरनुमतिस्ततः पराङ्मुखी त्वमधुना चेद्यदि मासे चिंशद्दिनपरिमिते काले मां न प्रतिपत्तासे नाङ्गीकरिष्यसि तदा मर्त्तासि मरिष्यसि खड्गप्रहारेणेत्यर्थात् मामिति व्याप्यविवक्षया न द्वितीया सत्यामपि व्याप्तौ निर्धारं अधिकेन क्रियान्तःकालाध्वनोश्च पोषेति सप्तमी आद्यैका वचन क्रिया अपरा च प्रतिपत्तिक्रिया तन्मध्ये मासः कालस्तेन तद्विषयः मासे अनतिक्रान्ते सतीत्यध्याहृत्य परं साध्विति श्रीपतिः प्रतिपूर्व्वपदोऽन्तङस्य त्र्यां रूपं॥ ८-५॥

प्रायुङ्क्त राक्षसीर्भीमा मन्दिराय प्रतिव्रजन्। भयानि दृप्त सीतायै सर्व्वायूयं क्षते ममे॥ ८६॥

प्रायुङ्क्तेत्यादि। रावणो राक्षसीर्भीमाभयानकाः प्रायुङ्क्त अ॰म॰ समादिष्टवान् लङि रूपं मन्दिराय प्रतिव्रजन् गृहाय प्रतिव्रजन्

गत्यर्थकर्म्मणीत्यादिना तु चतुर्थी कर्म्मप्रवचनीयाधिकारएव दर्शितत्वात् किमादिशब्दित्याह सर्व्वायूयं सीतायै भयानि दत्त लोटि रूपं चतुर्थीसम्प्रदाने संपूज्याद्रत्य प्रकर्षेण दीयतइति सम्प्रदानं मम क्वते मदनुग्रहनिमित्तं ॥ ८६ ॥

भ० प्रायुङ्क्तेत्यादि। रावणोमन्दिराय प्रतिव्रजन् गृहं प्रति गच्छन् भीमाभयानकाराक्षसीः प्रायुङ्क्त समादिष्टवान् गत्यर्थ मन्यछेइति कर्म्मणिचतुर्थी किमादिशब्दित्याह सर्व्वायूयं मम क्वते मन्निमित्तं मत्कार्य्याय वा सीतायै भयानि दत्त प्रयच्छत संप्रदाने चतुर्थी यद्यपि स्वस्वत्वध्वंसपूर्व्वेत्यादिलक्षणं दानं भयस्य न सम्भवति आरोपणार्थएव ददातिस्तथापि दिशाशब्दस्य विवक्षामात्रदचनत्वात् साधुत्वं क्वतेशब्दोनिमित्तार्थोऽव्ययः क्विपि तादर्थ्ये वा चतुर्थी ॥ ८६ ॥

गते तस्मिन् समाजग्मुर्भयाय प्रति मैथिलीं। राक्षस्यो रावणप्रीत्यै क्रूरञ्चोचुरलं मुहुः ॥ ८७ ॥

अ०ट० गतइत्यादि। तस्मिन् रावणे गते सति राक्षस्यः समाजग्मुः सम्भूय गताः समोगम्यृच्छीत्यादिना आत्मनेपदं न भवति आङा व्यवहितत्वात् मैथिलीं प्रति लक्षीकृत्य भयाय सीतायै भयं दातुं क्रियार्थोपपदस्य कर्म्मणिस्थानिनइति चतुर्थी ददातेः क्रियार्थोपपदस्य स्थानिनः प्रयुज्यमानस्य भयं कर्म्म क्रिया चात्र समागमः

तत्रोपपदं क्रियार्थमिति क्रूरञ्च भयानकं मुहुः प्रतिक्षणं अलं पर्य्याप्तमूचुः उक्तवत्यः रावणप्रीत्यै रावणस्यैवं प्रीतिः स्यादिति तुमर्थाच्चभाववचनादिति चतुर्थी क्रियायांक्रियार्थायामिति तुमुना समानार्थत्वात् भाववचनाश्चेत्यनेन विहितस्य क्तिनः क्रियार्थं उपपदं क्रूराभिधानं॥ ८७॥

गतेइत्यादि। तस्मिन् रावणे गते सति मैथिलीं प्रति अच्छो भत्य भयाय सीतायै भयं दातुं राक्षस्यः समाजग्मुः आङ्व्यव धानात् समीागमन्नच्छेति न सं भयायेति नित्यं कर्म्मणि तुमोऽप्र योगिनइति चतुर्थ्यर्थं परस्तु चं स्नमते तादर्थ्यएव मैथिलीमिति धिक्समयेत्यादिना प्रतियोगे द्वितीया अथ रावणप्रीत्यै क्रूरं कठोरं अलं अत्यर्थं मुहुर्व्वारं वारं ऊचुः क्रूरमिति क्रियाविशेषणे द्वितीया॥ ८७॥ भ०

रावणाय नमः कुर्य्याः स्यात्सीते स्वस्ति ते ध्रुवं। अन्यथा प्रातराशाय कुर्य्याम त्वामलं वयं॥ ८८॥

रावेत्यादि। हे सीते रावणाय नमः कुर्य्या रावणं नमस्कुरु एवञ्च सति ते तुभ्यं स्वस्ति कल्याणं ध्रुवं स्यात् युष्मच्छब्दस्य चतुर्थ्येकवचनान्तस्य ते आदेशः नमस्कृत्वेति पाठान्तरं तत्र नमस्कृत्वा स्थिताये तुभ्यमित्यध्याहृत्य योज्यं अन्यथा असमानकर्त्तृकत्वात् क्त्वाप्रत्ययोन घटते नमस्कुर्य्येति पाठान्तरं सायात्प्रभृतिषु नम जं०स०

शब्दस्य विकल्पेन गतिसंज्ञा गत्यभावपक्षे नित्यं गतिसमासा भावे ल्यबादेशः नमस्पुरसोर्गत्योरिति विसर्जनीयस्य सकारादे शस्य न सम्भवतीति अन्यथेति यदि न नमस्कुर्य्याः तदा अलमा तराशाय प्रातर्भोजनाय त्वां कुर्य्याम वयमित्यूचुः नित्यंङ्कित इति सलोपः रावणायेत्यादिषु नमःस्वस्तीत्यादिना चतुर्थी ॥ ९८ ॥

भ० रावणायेत्यादि। किमूचुरित्याह हे सीते त्वं रावणाय नमः प्रणामं कुर्य्याः तेनैव ध्रुवं ते तुभ्यं स्वस्ति कुशलं स्यात् शक्तार्थवष डित्यादिना नमःस्वस्तियोगे चतुर्थी नमःशब्दोऽयं यदा वाच कएव तदा तद्योगे चतुर्थीति बोध्यं नारायणं नमस्कृत्येत्यादिषु नमःशब्दो द्योतकः कृञेव प्रणामं वक्ति तेन तद्योगे न चतुर्थी किन्तु द्वितीया नमस्कुर्य्यादिति सकारवत्पाठे हस्लोपाणावित्यादिना साचादादित्वात्पक्षे समासः सेतुकस्वपर्फवेति पक्षे विसर्गस्य स कारः नमस्कृत्येति पाठे स्थितायादत्यध्याहार्य्यं विष्णुं नत्वा स्तौ तीत्युदाहरणेन एककर्तृकधातुद्वययोगे पूर्व्वकालेक्त्वाचोज्ञा पितत्वात् अन्यथा यदि रावणं न प्रणमसि तदा प्रातराशाय प्रा तर्भोजनायालं समर्था त्वां वयं कुर्य्याम प्रातर्भोक्ष्यामइत्यर्थः अलंशब्दः शक्तार्थस्तेन तद्योगे चतुर्थी ॥ ९८ ॥

तृणाय मत्वा ताः सर्व्वावदन्तीस्त्रिजटावदत्।
आत्मानं हत दुर्व्वृत्ताः स्वमांसैः कुरुताशनं ॥ ९९ ॥

ज०म० तृणेत्यादि। अथानन्तरं राक्षसीर्व्वदन्तीः त्रिजटा रावण स्वसा अवदत् उक्तवती तृणाय मत्वा तृणमिव सङ्गणय्य मन्य

कर्म्मण्यनादर इति चतुर्थी तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तं इह मा भूत् तृणं मत्वेति किमवदत् आत्मानं हत मारयत दुर्व्वृत्ताः दुराचाराः स्वमांसैः कुरुताशनमिति करणे तृतीया ॥ ९८ ॥

तृणायेत्यादि। इति वदन्तीस्ताः सर्व्वा राक्षसीस्तृणाय मत्वा तृणवन्मत्वा त्रिजटानाम राक्षसी वक्ष्यमाणमवदत् गत्यर्थमन्यत इति अवज्ञाबोधकत्वात् कर्म्मणि चतुर्थी राक्षसीशब्दो नावज्ञा बोधकः तेन तच्छब्दात् कर्म्मणि न चतुर्थी किन्तु द्वितीया किमव ददित्याह हे दुर्व्वृत्तादुराचारा यूयं आत्मानं हत मारयत स्वकीयैर्म्मांसैरशनं भोजनं कुरुत यतः सीताभोजनोद्यताः करणे तृतीया वनतमाद्यनिमामिति हन्तेर्नलोपः ॥ ९८ ॥ भ०

अद्य सीता मया दृष्टा सूर्य्यं चन्द्रमसा सह। स्वप्ने स्पृशन्ती मध्येन तनुः श्यामा सुलोचना ॥ १०० ॥

किमर्थमेव माहेत्याह अद्येत्यादि। स्वप्ने मयाद्य सीता दृष्टा कर्त्तरि तृतीया सूर्य्यं स्पृशन्ती चन्द्रमसा सह सहयोगे तृतीया सूर्य्याचन्द्रमसाविति रामलक्ष्मणाविति भावः मध्येन तनुः तन्वी इत्थंभूतलक्षणे तृतीया वोतोगुणवचनादिति ङीष्भावपक्षे रूपं श्यामः वर्णेन सुलोचना शोभननेत्रा ॥ १०० ॥ ज०म०

अद्येत्यादि। अद्य स्वप्ने मया सीता दृष्टा कर्त्तरि तृतीया की दृशी चन्द्रमसा सह सूर्य्यं स्पृशन्ती एतादृशः स्वप्नः सामान्यलक्षण मिति केचित् सूर्य्याचन्द्रमसाविव रामलक्ष्मणाविव्याश्वदति भ०

अयमङ्गुला सहवारणेति सहयोगे तृतीया मध्येन तनूः तन्वी भेद के तृतीया श्यामा शीते सुखोष्णसर्व्वाङ्गी ग्रीष्मे या सुखशीतला। तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते। श्यामवर्णेनेत्यन्ये सुलो चना शोभननेत्रा ॥ १०० ॥

तास्तया तर्ज्जिताः सर्व्वामुखैर्भीमायथागतं। ययुः सुषुप्सवस्तल्पं भीमैर्वचनकर्म्मभिः ॥ १०१ ॥

ज०म० तादृत्यादि। ताराचस्यस्तया त्रिजटया तर्जिताभर्त्सिताः सुषुप्सवः स्वप्तुमिच्छवस्तल्पं शयनीयं ययुर्गताः यथागतं यतोयत स्तस्मादित्यायागताः यथासादृश्यइति वीप्सायामव्ययीभावः मुखै र्भीमा रौद्राः मुखानां विकृतत्वात् येनाङ्गविकारइति तृतीया भीमैर्व्वचनकर्म्मभिः उपलक्षिताः इत्थंभूते तृतीया ॥ १०१ ।

भ० तादृत्यादि। ताः सर्व्वाराचस्यः तया त्रिजटया तर्ज्जिताभ र्त्सिताः सत्यः सुषुप्सवः शयितुमिच्छवस्तल्पं ययुः यथागतं यस्मा द्यस्मात् उत्थायागतास्तत्र तत्रैव वीप्सायामव्ययीभावः मुखैर्भी माः मुखविकारोपलक्षिताः भेदके तृतीया येनाङ्गेनाङ्गिनोविकृ तिर्लक्ष्यते तस्मादिति परः भीमैर्व्वचनकर्म्मभिरुपलक्षिताः विशे षणे तृतीया तल्पं शय्याट्टदारेष्वित्यमरः ॥ १०१ ॥

गतासु तासु मैथिल्यामसंजानानोऽनिलात्मजः। आयातेन दशास्यस्य संक्षिनोऽन्तर्हितस्थिरं ॥ १०२ ॥

गतेत्यादि । तासु राक्षसीपु गतासु अनिलात्मजो हनूमान् राम संकथां प्रास्तावीदिति वक्ष्यमाणेन सम्बन्धः मैथिल्या सञ्जानानः इयं मेत्यवगच्छन् संज्ञोऽन्यतरस्यामिति कर्म्मणि तृतीया सम्प्रति स्यामिति तङ् दशास्यस्यायातेनागमनेन हेतुना चिरमन्तर्हितो निलीनः स्थितः हेताविति तृतीया ॥ १०२ ॥ ज०म०

गतास्वित्यादि । तासु राक्षसीपु गतासु सतीषु अनिलात्मजो हनूमान् रामसङ्कथां प्रास्तावीत् प्रावर्त्तयदिति वक्ष्यमाणश्लोकेनान्वयः कीदृशः मैथिल्या संजानानः सैवेयमित्यवगच्छन् संज्ञा स्मृताविति कर्म्मणि तृतीया सम्प्रतेरस्मृताविति सं दशास्यस्यायातेनागमनेन हेतुना अन्तर्हितोविलीनः सन् चिरं संस्थितः हेतौ तृतीया न्यभावक्तेति दशास्यात् कर्त्तरि षष्ठी सम्बन्धविवक्षया वा ॥ १०२ ॥ भ०

क्षणादद्वहुरवोन्मुक्तो वियोगेन क्रतुद्विषः। हेतो र्व्वोधस्य मैथिल्याः प्रास्तावीद्रामसंकथां ॥ १०३ ॥

क्षणादित्यादि । क्षणाद्धेतोर्व्वद्धुरवोन्मुक्तोयथा स्थानान्तरं गतवान् अकर्त्तृक्षणइति पञ्चमी क्षणस्याकर्त्तृहेतुत्वात् क्षणेन वञ्चितइवेति नोक्तं अप्रयोजक कर्त्तृत्वादृणस्य उन्मुक्तः क्रतुद्विषो रावणस्य वियोगेन विश्लेषेण विभाषागुणेऽस्त्रियामिति पक्षे तृतीयोदाहृता न पञ्चमी वियोगस्य गुणपदार्थत्वात् किमिति संकथां प्रास्तावीदित्याह हेतोर्बोधस्य मैथिल्याः एषरामदूतइति मैथि ज०म०

स्यावबोधोऽवगमः स्यात् षष्ठीहेतुप्रयोगइति बोधशब्दस्य षष्ठी प्रास्तावीदिति स्तुसुधूञ्भ्यः परस्मैपदेष्विति इट् नेटीति हलन्तलक्षणायाः वृद्धेः प्रतिषेधः नेगन्तलक्षणायाः ॥ १०३ ॥

भ० ऋणादित्यादि। हनूमान् कीदृशः क्रतुद्विषो रावणस्य वियोगेन निक्षेपेण हेतुना उन्मुक्तः स्वच्छन्दः यथा ऋणाद्धेतोर्बद्धः सन् उन्मुक्तः स्थानान्तरं गतस्तद्वत् हेतौ पञ्चमी तृतीया च दर्शिता किमर्थं रामस्तद्व्यां प्रास्तावीदित्याह एषरामदूतइति मैथिल्यायोबोधस्तस्य हेतोस्तदर्थं प्रयोजनमपि हेतुरुच्यते तदुद्देशेन कार्य्योत्पत्तेः व्याहयोऽर्थावैकरोरिति षष्ठी सुस्तुधूञ्भ्यः परस्मैपदेष्विति इट् अजवदेति त्रिः ॥ १०३ ॥

तं दृष्ट्वाचिन्तयत्सीता हेतोः कस्यैषरावणः। अवरुह्य तरोरारादेति वानरविग्रहः ॥ १०४ ॥

ज०म० तमित्यादि। तं हनूमन्तं रामं स्तुवन्तं दृष्ट्वा सीता अचिन्तयत् कस्य हेतोः रावणोवानरविग्रहः सन् एति आयाति आङ्पूर्व्वस्येणोरूपं सर्व्वनाम्नस्तृतीयाचेति षष्ठी किंशब्दस्य सर्व्वनामत्वात् आरात् अन्तिके तरोरिति अन्यारादित्यारात्शब्दयोगे पञ्चमी अवरुह्यावतीर्य्येति अवरोहणापेक्षयेत्यपादाने पञ्चमी अपेक्षायायोगपक्षाभावादुपपदविभक्तेः कारकविभक्तिर्बलीयसी आरायोगे न वर्त्तते ॥ १०४ ॥

तमित्यादि। तं रामं स्तुवन्तं हनुमन्तं दृष्ट्वा सीताचिन्तयत् भ०
किं चिन्तितवतीत्याह कस्य हेतोः किमर्थं रावणोऽयं वानरमूर्त्तिः
सन् अवरस्मात् वृत्तान्तरादर्थात तरोरारात् तदाश्रितवृक्षस्य
समीपे ऐति आगच्छति आङ्पूर्व्वइणगतौ कस्य हेतोरिति व्या
दर्थाऽर्थार्थैकक्तेः अन्यसर्व्वाइति षष्ठी तरोरित्यावृत्त्या उभयत्र
सम्बन्धादेकत्रापादाने पञ्चमी अपरत्र अन्यारभ्येत्यादिना इय
मेवोदाहृतं अपादानपञ्चम्याः कारकाधिकारे दर्शितत्वात्तरो
रित्यस्यावरस्मेत्यनेन सम्बन्धेन विवक्षितः आरादित्यनेनैव सम्ब
न्धइति कश्चित् उपपदविभक्तेः कारकविभक्तिर्गरीयसीत्यपादान
एव पञ्चमीति केचित्॥ १०४॥

पूर्व्वस्मादन्यवद्भाति भावाद्दाशरथिं स्तुवन्। ऋते
क्रौर्य्यात्समायातो मां विश्वासयितुं नु किं॥ १०५॥

पूर्व्वेत्यादि। पूर्व्वस्माद्रावणादन्यवद्भाति भायते अन्येन तुल्यं ज०म०
वर्त्ततइति कृत्वा अन्यशब्दयोगे पञ्चमी यतोभावात्स्नेहाद्दाश
रथिं स्तुवन् किन्तु क्रौर्य्याहृते क्रौर्य्यं वर्जयित्वा ऋतेशब्दयोगे पञ्च
मी मां विश्वासयितुं सम्भावयितुं किमागतइत्यचिन्तयत्॥ १०५॥

पूर्व्वस्मादित्यादि। अयं पूर्व्वस्माद्रावणारन्यइव भाति प्रका रा०
शते अन्यारभ्येति पञ्चमी कुतइत्याह भावादभिप्रायाद्धेतोर्दाश
रथिं स्तुवन् हेतौ पञ्चमी क्रौर्य्यात् ऋते रामविषये क्रूरतां विना
मां विश्वासयितुं किम् समायातः नु वितर्के ऋतेयोगे पूर्व्वर

त्पञ्चमी भावः स्वभावेऽभिप्राये चेष्टात्मजन्मसु। क्रिया लीलापदार्थेषु स्वद्भुजन्तुविभूतिष्विति विश्वः॥१०५॥

इतरोरावणादेषराघवानुचरोयदि। सफलानि निमित्तानि प्राक्प्रभातात्ततोमम॥१०६॥

ज॰म॰ इतइत्यादि। यदि रावणादितरः प्रतियोगी राघवानुचरः राघवार्थकारी इतरयोगे पञ्चमी ततोमम सफलानि स्वप्नलक्षणानि दर्शनादीनि निमित्तानि प्राक् प्रभातात् आदित्योदयात्पूर्व्वस्मिन् काले अन्यस्य हि प्रभातादुत्तरकालं सफलानि उत्तरपदयोगे पञ्चमी॥१०६॥

भ॰ इतरइत्यादि। एषयदि रावणादितरोऽन्यः राघवानुचरः रामप्रयोजनकारी भवेत् मम प्राक् प्रभातात् सूर्य्योदयात् पूर्व्वकाले यानि शुभस्य निमित्तानि स्वप्नदर्शनादीनि तानि मम सफलानि स्युः इतरशब्दोऽन्यार्थः तद्योगे दिक्शब्दयोगे च पञ्चमी दिक्शब्दाद्दिग्देशकालेष्वात्तस्य लुक्च॥१०६॥

उत्तराहि वसन्रामः समुद्राद्रक्षसां पुरं। अवैल्लवणतोयस्य स्थितां दक्षिणतः कथं॥१०७॥

ज॰म॰ उत्तरेत्यादि। रामदूतोऽयमिति न सम्भाव्यते यतः समुद्रादुत्तरा या दिक् तस्यामुत्तराहि वसन् रामः आहिचदूरे

उत्तराश्चेति तथादिप्रत्ययान्तेन उत्तरादिशब्देन योगे समुद्रा
दिति पञ्चमी लवणतोयस्य लवणसमुद्रस्य दक्षिणतोदक्षिणस्यां
दिशि स्थितां रक्षसां पुरीं लङ्कां कथमवैत् ज्ञातवान् दक्षि
णतस्तसि दक्षिणोत्तराभ्यामतसुच् तदन्तेन योगे षष्ठ्यतसर्थप्रत्य
येनेति षष्ठी ॥ १०७ ॥

उत्तरेत्यादि। अथ रामदूतोऽयं न सम्भाव्यते यतस्ततः समु भ०
द्रादुत्तरस्यां दिशि वसन् रामो लवणतोयस्य समुद्रस्य दक्षिणस्यां
दिशि स्थितां रक्षसां पुरं लङ्कां कथमवैत् ज्ञातवान् दक्षिणोत्त
रादाचीति सप्तम्याश्चाहि अन्यारादिति दिक्शब्दयोगे पञ्चमी
तसृक्रेरिति सप्तम्यास्तसृ तद्योगे समार्थेनेत्यादिना षष्ठी॥ १०७ ॥

दण्डकान्दक्षिणेनाहं सरितोऽद्रीन् वनानि च।
अतिक्रम्याम्बुधिश्चैव पुंसामगममाहृता ॥ १०८ ॥

दण्डेत्यादि। दण्डकानामदूरे वा दक्षिणा दिक् तस्यामिति ज०म०
एनवन्यतरस्यामिति सप्तम्यकादेनप्प्रत्ययः तदन्तेन योगे एन
पाद्वितीयेति द्वितीया दक्षिणेन दण्डकानां दक्षिणस्यां दिशि
सरितोऽद्रीन्वनानि च अम्बुधिं चातिक्रम्य पुंसामगममगम्यं यत्
स्थानंनिश्चिगमस्तेत्यप् अहमाहृता आनीता तत्कथमवेदित्यपि
ज्ञायत् ॥ १०८ ॥

दण्डकानित्यादि। दण्डकानामदूरे दक्षिणस्यां दिशि स्थि भ०
तानि सरितोऽद्रीन् वनानि च अम्बुधिं चातिक्रम्य पुंसामगममा

ख्यातं यथा स्यात्तथा स्वमातृता पुंसामगम्यं देशं माधिता वा न विद्यते गमो यामं यत्र तत्कथमवेदिति सम्बन्धः वेनोऽपीति यत्र स्याएनः तद्योगे धिक्समयेत्यादिना द्वितीया एनोऽपञ्चम्याइति परस्परत्वात् कृत्तद्धितसमासानामभिधानं नियामकमित्युक्तेः दूरार्थमपि बोध्यं दण्डकाशब्दोवनेऽपि स्त्रीलिङ्गः निव्ययज्ञवच नान्तः पुंलिङ्ग इत्यन्ये तन्मते दण्डकानिति पाठः ॥ १०८ ॥

पृथङ्नभस्वतश्चण्डाद्वैनतेयेन वा विना। गन्तुमुत्सहते नेह कश्चित्किमुत वानरः ॥ १०९ ॥

ज॰म॰ पृथगित्यादि। नभस्वतो वातात् चण्डात् पृथक् वायुं त्यक्त्वा वैनतेयेन वा विना गरुडं वा वर्जयित्वा पृथग्विनेत्यादिना तृतीया पञ्चम्यौ इह लङ्कायां कश्चित् गन्तुं नोत्सहते किमुत वानरः ॥ १०९ ॥

भ॰ पृथगित्यादि। चण्डान्नभस्वतोवातात् पृथगन्यः वैनतेयेन गरुडेन वान्यः कश्चिदिह गन्तुं न उत्सहते किं पुनर्वानरः इत्येवम चिन्तयदिति सम्बन्धः पृथक्शब्दोऽन्यार्थस्तेन तद्योगे विना योगे च अन्यारभेत्यादिना पञ्चमी नभस्वान् वैनतेयश्च वर्ज्जयित्व त्यर्थ इति केचित् किमुतेत्यव्ययं पुनरर्थे ॥ १०९ ॥

इति चिन्तावतीं हृष्टः समासाद्य कपिद्विपः। मुक्तां स्तोकेन रक्षोभिः प्राचेऽर्थं रामकिङ्करः ॥ ११० ॥

इतीत्यादि। एवमुक्तेन प्रकारेण चिन्तावतीं कपिद्विपो हनू जं०म०
मान् छ्क्रात्समासाद्य कथमप्युपगम्य अहं रामकिङ्करः रामप्रे
षणकर इति प्रोचे मुक्तां स्तोकेनाल्पेन रक्षोभिः कर्त्तृभिः करणे
न च स्तोकाल्पेत्यादिना तृतीयापञ्चम्यौ कृच्छ्रस्तोकयोरसत्त्ववचन
योः करणत्वात्॥ ११०॥

इतीत्यादि। कपिद्विपः कपिश्रेष्ठो हनुमान् तां सीतां कृच्छ्रात् भ०
चिरकालान्वेषणेन समासाद्य प्राप्य अहं रामस्य किङ्करः परिचा
रक इति प्रोचे वदति स्म कीदृशीं एवमुक्तप्रकारेण चिन्तायुक्तां
रक्षोभिः स्तोकेनाल्पेन मुक्तां त्यक्तां करणे कतिपयस्तोकाल्पकृच्छ्रा
ण्यसत्त्व इति सूत्रेण विभाषया पञ्चमीमाह परः स्मरते कृच्छ्रादि
ति इतो पञ्चमी स्तोकेनेति करणे तृतीया॥ ११०॥

विप्रकृष्टं महेन्द्रस्य न दूरं विन्ध्यपर्व्वतात्। नान
भ्यासे समुद्रस्य तव माल्यवति प्रियः॥ १११॥

यदि त्वं रामकिङ्करः कथमवित्याह विप्रेत्यादि। माल्यवति जं०म०
पर्व्वते तव प्रियो रामः महेन्द्रस्य पर्व्वतस्य विप्रकृष्टं दूरं विन्ध्य
पर्व्वताच्च न दूरं दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामिति षष्ठीपञ्चम्यौ
महेन्द्रपर्व्वतविन्ध्ययोर्दूरविप्रकृष्टयोस्तु दूरान्तिकार्थेभ्यो द्वितीया
चेति द्वितीया नानभ्यासे न दूरे समुद्रस्य दूरान्तिकार्थैरिति
षष्ठी माल्यवति यस्यच्चाधिकरणेचेति सप्तमी चकाराद्दूरान्तिका
र्थेभ्यश्च यस्यचभावेनेत्यनेनानभ्यास इति सप्तमी॥ १११॥

विप्रेत्यादि। यदि मां रामकिङ्करस्तदा कामाविष्टत्वदम् ध्यते तव मिथो मा भवति पर्व्वते वर्त्तते महेन्द्रस्य पर्व्वतविशेष स्य न विप्रकृष्टं न दूरं विन्ध्यवासः पर्व्वतान् न दूरं समुद्रस्य मा लभ्य ये न दूरे आराद्‌र्थैरिति विन्ध्यपर्व्वतसम्बन्धात् पञ्चे पञ्चमी तद्‌प्रवृत्तिपञ्चे सम्बन्धे षष्ठ्येव आराद्‌र्थैरिति दूरान्तिकार्थैः दूरान्तिकार्थेभ्यः षष्ठ्यन्यतरस्यामिति परः समर्थ विप्रकृष्टा दयोऽत्र ऽर्थ्यते विवक्षिताः स्थितिक्रियात्वर्थाभ्भ्वतएव तेनाक्री त्यथाधारात् देशाध्वकालभाववाङ्कैरिति पाक्षिककर्म्मत्वं कर्म्म त्वाभावपक्षे सप्तमी ॥ ११ ॥

असंप्राप्ते दशग्रीवे प्रविष्टोऽहमिदं वनं। तस्मिन् प्रतिगते द्रष्टुं त्वामुपाक्रंस्यचेतितः ॥ ११२ ॥

ज०म० असमित्यादि। दशवदने असंप्राप्ते असमविष्टे अहमचेतितः सन् इदं वनमशोकवनिकाख्यं प्रविष्ट इति तस्मिन्प्रतिगते त्वां द्रष्टु मुपाक्रंसि समुद्यतः स्म यस्य च भावेनेति सप्तमी कर्षः प्रवेशोपक मयोः रावणसंप्राप्तिप्रतिगमनक्रियाभ्यां लक्ष्यमाणत्वात् उपाक्रं सीति उपपराभ्यामित्यनेन वृत्त्यादिषु सर्गतयासे क्रमेस्तङ् उत्त मपुरुषैकवचनं इट् स्नोकमोरनात्मनेपदनिमित्तइति चिवृद्ध नभवति ॥ ११२ ॥

भ० असमित्यादि। रावणे असंप्राप्ते अनायाते सति अहमचेतितो ऽज्ञातः सन्निदं वनं प्रविष्टः प्रवेशस्य गतिविशेषत्वात् गत्यर्थाकर्मेति कर्त्तरि क्तः तस्मिन् प्रतिगते सति त्वां द्रष्टुं साक्षात्कर्त्तुं अर्थं

उपार्जंत्रि उद्यतोऽस्मि गोपादारम्भाहदति सं आंवि: उपार्जंत्रि जल्मा षं क्लतवानस्मीति वार्थः तस्युतप्राहतानदति सं कासभावाधा रमिति उभयत्र भावे सप्तमी ॥ ११० ॥

तस्मिन् वदति रुष्टोऽपि नाकार्षं देवि विक्रमं। अविनाशाय कार्य्यस्य विचिन्वानः परापरं ॥ ११२ ॥

यद्यादावेव प्रविष्टोऽसि तर्हि किमिति स्वकर्म न दर्शितवानसी न्याह। तस्मिन्नित्यादि हे देवि तस्मिन्वदति रुष्टोऽपि विक्रमं नाका र्षं तं तथा वदन्तमनादृत्य विक्रमं नाकार्षमित्यर्थः षष्ठी चानादर इति चकारात्सप्तमी किमर्थं कार्य्यस्य सन्देशकथनादेरविना शाय विचिन्वानः परापरं पौर्व्वापर्य्यं निरूपयन् कर्मभिप्रायेतद् ॥ ११२ ॥ ज०म०

तस्मिन्नित्यादि। हे देवि तस्मिन् रावणे वदति वदन्तं तं अनादृत्य रुष्टोऽप्यहं विक्रमं नाकार्षं न कृतवान् स्वामीश्वराधि पतीत्यादिना अनादरे सप्तमी तस्मिन् वदति सतीति भावे सप्तमीति विद्यासागरः कुतइत्याह यतोऽहं कार्य्यस्य सन्देशकथ नस्य अविनाशाय अविघाताय परापरं विचिन्वानः परं यद्भवि ष्यति विरोधादि अपरञ्च यद्भूतं सन्देशकथनार्थमागमनादि तत्सर्व्वं विचारयन् उत्तरे सति कथं न पूर्व्वस्य बाधइति चिन्त यन् ॥ ११२ ॥ भ०

वानरेषु कपिः स्वामी नरेष्वधिपतेः सखा। जातो रामस्य सुग्रीवस्ततोदूतोऽहमागतः॥ ११४॥

ज०म० कथं वानरस्त्वं तस्य किंकर इत्याह। वानरेत्यादि वानरेषु स्वामी यः कपिः सुग्रीवः स नरेष्वधिपते रामस्य सखा जातः स्वामीश्वरेत्यादिना षष्ठीसप्तम्योर्विधानात् सप्तम्युदाहृता ततोऽहं दूत आगतः॥ ११४॥

भ० वानरेष्वित्यादि। रामस्यानुचरोवानरः कथमित्याह वानराणां कपिः सुग्रीवो नराणामधिपते रामस्य सखा जातः ततोऽहं दूत आगतः स्वामीश्वराधिपतीति सप्तमी॥ ११४॥

ईश्वरस्य निशाटानां विलोक्य निखिलां पुरीं। कुशलोऽन्वेषणस्याहमायुक्तोदूतकर्म्मणि॥ ११५॥

ज०म० आगत्य च लङ्कां प्रविश्य इहायात इत्याह। ईश्वेत्यादि निशाटानां राक्षसानामीश्वरस्य दशाननस्य अत्र षष्ठ्युदाहृता पुरीं निखिलां निःशेषां विलोक्य किं तत्र वर्त्तत इति प्राप्त इति वक्ष्यमाणेन सम्बन्धः कुशलोऽन्वेषणस्याहं सीताया अन्वेषणस्य निपुणः आयुक्तोदूतकर्म्मणि दूतकर्म्मणि दूतक्रियायां व्यापृतः आयुक्तकुशलाभ्यामिति षष्ठीसप्तम्यौ॥ ११५॥

भ० ईश्वरस्येत्यादि। निशाटानां राक्षसानां ईश्वरस्य रावणस्य निखिलां समस्तां पुरीं विलोक्य अहं प्राप्त इत्यभिसम्बन्धः किनाम्बधः

कीदृशः अन्वेषणस्य कुशलः सीतान्वेषणनिपुणः दूतकर्म्मणि चातु
र्य्यः तत्परः स्वामीश्वराधिपतीत्यादिना सप्तमीसमासौ ॥ ११५॥

दर्शनीयतमाः पश्यन् स्त्रीषु दिव्यास्वपि स्त्रियः। प्राप्तो
व्यालतमान् व्यस्यन् भुजङ्गेभ्योऽपि राक्षसान् ॥ ११६ ॥

दर्शेत्यादि । तत्र दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः जं०म०
पश्यन् यतश्च निर्द्धारणमिति सप्तमी दर्शनीयतमत्वेन गुणेन पृथ
क्करणात् भुजङ्गेभ्योऽपि व्यालतमान् हिंस्रान् राक्षसान् व्यस्यन्
अपक्षिपन् पञ्चमीविभक्तइति पञ्चमी भुजङ्गेभ्यः राक्षसानां विभा
गात् प्राप्तो देव्याः पादमूलमित्यर्थात् ॥ ११६ ॥

दर्शेत्यादि। दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः पश्यन् भ०
भुजङ्गेभ्योऽपि व्यालतमान् अतिहिंस्रान् राक्षसान् व्यस्यन् अव
क्षिपन् अहं प्राप्तो देव्याः स्थानमित्यर्थात् गम्यते स्त्रीष्वित्यत्र दर्श
नीयतमत्वेन गुणेन समुदायादेकदेशस्य निर्द्धारणात् स्वामीश्व
राधिपतीत्यादिना निर्द्धारे सप्तमी भुजङ्गेभ्य इत्यत्र पञ्चमीत्यति
रेके इति सूत्रेण पञ्चमीमाह परः व्यतिरेको हीनाधिकभाव इति
परः स्वमते निर्द्धारेऽर्थकेनेत्यादिना निर्द्धारे पञ्चमी केनचिद्गु
णेन समानधर्म्मिभ्यः पृथक्करणं यन्निर्द्धारः भुजङ्गराक्षसयोस्तु
सधर्म्मित्वं व्यालत्वेन वासवता अपि कश्चित् पञ्चमीत्यनेन निर्द्धा
रे पञ्चमीमाह ॥ ११६ ॥

भवत्यामुत्सुको रामः प्रसितः सङ्गमेन ते। मघासु
कृतनिर्व्वापः पितृभ्यो मां व्यसर्ज्जयत् ॥ ११७।

ज०म० किमवस्थो राम इत्याह भवेत्यादि। भवत्यां त्वयि उत्सुकः उन्मनाः रामः तव सङ्गमेन प्रसितः प्रसक्तः प्रसितोत्सुकाभ्यां तृतीया चेति चकारात्सप्तमी मघाभिर्युक्तः कालः तत्समीपे चन्द्रमसो वर्त्तमानत्वात् नक्षत्रेण युक्तः काल इत्यण् तस्य लुबविशेष इति लुप् तस्मिन्काले पितृभ्यः कृतनिर्व्वापः दत्तदानः मां व्यसर्जयत् नक्षत्रे च लुपीति सप्तमी तत्रापि लुपि युक्तवद्व्यक्तिवचन इति स्त्रीलिङ्ग बहुवचने भवतः व्यसर्जयदिति विभक्त्याप्रातिपदिकेत्यादिना प्रातिपदिकमात्रे प्रथमा ॥ ११७ ॥

भ० भवत्यामित्यादि। रामो मां व्यसर्ज्जयत् प्रास्थापयत् कीदृशः सन् भवत्यां त्वयि उत्सुकः उन्मनाः तव सङ्गमेन प्रसितः प्रसक्तः प्रसितोत्सुकाभ्यां तृतीयासप्तम्याविति परः स्मृते विषयविवक्षया सप्तमी करणत्वविवक्षया तृतीया मघासु मघानक्षत्रयुक्तकाले पितृभ्यः कृतनिर्व्वापः कृतदानः काले सप्तमी मघाशब्दस्य तद्युक्तकालवाचित्वं कालवाचिनोऽनक्षत्रपदादित्युक्तेरेव गम्यते लोकोपचारात् कालेऽपि स्त्रीलिङ्गत्वं बहुवचनान्तत्वञ्च परे तु मघानक्षत्रेणेन्दुयुक्तेन युक्तः काल इत्यर्थे इत्यण्लुबुक्त युक्तवद्व्यक्तिवचने इति स्त्रीत्वं बहुवचनत्वञ्चाहुः ॥ ११७ ॥

अयं मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुरीयकः। भवत्याः स्मरतात्यर्थमर्पितः सादरं मम ॥ ११८ ॥

सन्देहनिरासार्थं चाभिज्ञानं दर्शयन्नाह अयमित्यादि। काकु ज०म०
त्स्थस्यायमङ्गुलीयकोऽभिज्ञानं चिह्नमयमभिज्ञानमिति लिङ्गा
धिके प्रातिपदिकमात्रे प्रथमा मैथिलीति सम्बोधनाधिके सम्बोध
ने चेति चामन्त्रितं सम्बुद्धिस्त्वेव द्रष्टव्यं काकुत्स्थस्येति षष्ठीशेष
इति षष्ठी भवत्यास्त्वदर्थं स्मरता मम सादरमर्पितं अधीगर्थेत्या
दिना स्मरणार्थे कर्मणः शेषविवक्षायां षष्ठी॥ ११८॥

अयमित्यादि। सन्देहनिरासार्थमाह हे मैथिलि अयं काकु भ०
त्स्थस्य रामस्य अङ्गुलीयकमाभरणविशेषोऽभिज्ञानं चिह्नं त्व
र्थसम्प्रत्युक्तार्थं इति लिङ्गार्थे सम्बोधने च प्रथमा काकुत्स्थस्येति
सम्बन्धे षष्ठी त्वदर्थं भवतीं स्मरता रामेण सादरं यथा स्यात्त
था मम समर्पितः भवत्या इति समार्थनेत्यादिकर्मणि षष्ठी अन्ये
तु कर्मणोवा इत्यादेः स्मृत्यर्थस्य चेत्यादिविशेषसूत्रैः कर्मणि षष्ठी
मुक्ता कर्मादिविषयेऽप्यविवक्षिते कर्मादौ सम्बन्धविवक्षायां षष्ठ्ये
वेत्यनेनान्यत्रापि षष्ठीं स्वीकुर्वन्ति विशेषसूत्रविषयादन्यत्रापि
इष्टत्वात् ममेत्याधारे सम्बन्धविवक्षा अङ्गुलौ भवति तिष्ठतीति
ठघेकादिति ईयः तदन्तस्य वाच्यलिङ्गत्वात् अलङ्कारविशेषस्य
गम्यमानत्वात् पुंस्त्वमुदाहृतं अङ्गुलीयकमूर्मिकेत्यमरेण सामा
न्यत्वान्नपुंसकं प्रयुक्तं॥ ११८॥

रामस्य दयमानोऽसावध्येति तव लक्ष्मणः। उपा
स्कुर्वातां राजेन्द्रावागमस्येव मा चलीः॥ ११९॥ .

ज॰म॰ रामेत्यादि। असौ लक्ष्मणोरामस्य दयमानोरामं रक्षन् दुःखं मा कार्षीरिति दयतेः कर्म्मणि षष्ठी तवाध्येति त्वां स्मरति अधीगर्थे षष्ठी आश्वासनार्थमाह मा श्वसीः उद्वेगं मा कार्षीः श्वसेर्न दित्वान्निष्ठायामिट्प्रतिषेधात् विभ्यर्द् भवति यतोरा जेन्द्रौ रामलक्ष्मणौ इहागमस्यागमनस्य भावे अप् उपास्कृषातां प्रतियत्नं कृतवन्तौ आगमनस्य निश्चितत्वात् तथैव सुग्रीवस्यापि न गुणाधानात् तेन कृतः प्रतियत्न इति कर्म्मणि षष्ठी प्रतियत्ने लुङ् तङ् सुट्॥ ११८॥

भ॰ रामेत्यादि। असौ लक्ष्मणोरामस्य दयमानः शोकापनोद नेन रामं प्रतिपालयन् तव अध्येति त्वां स्मरति पूर्व्ववत्कर्म्मणि षष्ठी आश्वासार्थमाह राजेन्द्रौ क्षत्रियश्रेष्ठौ तौ इहागमस्य उपा स्कृषातां आगमनमुपस्कृतवन्तौ अतोमा श्वसीः भयं न कुरु स्कृष मावश्चेपणेत्यादिना प्रतियत्ने सं सम्परे:मुनुपादित्यादिना सुम् अतोगुणान्तराधानं प्रतियत्नः निश्चितत्वात् अतएव गमनस्य सुग्रीवसख्येन गुणान्तरस्योत्कर्षस्याधानात् पूर्व्ववत्कर्म्मणि षष्ठी कृञः प्रतियत्ने कर्म्मणि षष्ठीति परः श्वसीउद्वेगे टौ॥ ११८॥

रावणस्येह रोक्ष्यन्ति कपयोभीमविक्रमाः। धृत्या नाथस्व वैदेहि मन्योरुज्वासयात्मनः॥ १२०॥

ज॰म॰ रावेत्यादि। इह लङ्कायां कपयोभीमविक्रमाः भयद्भुपरा क्रमाः रावणस्य रोक्ष्यन्ति शरीरं रावणं करिष्यन्ति भीमविक्रमा

इति गुणप्रधानोनिर्द्देशः ततश्च विक्रमेरुजः भावकर्त्तृकत्वात् रुजा र्थानां भाववचनानामज्वरेरिति षष्ठी अतोवैदेहि धृत्या नाथस्व आशंसस्व धृतिं लभस्वेत्यर्थः आशिषिनाथइति कर्म्मणि षष्ठी आशि षिनाथइत्युपसंख्यानात्तङ् मन्योरुज्जासयात्मनः मन्युं नाशय जसुहिंसायां ताडने च चौरादिकस्य हिंसार्थत्वात्तेन जासिनि प्रहणेति कर्म्मणि षष्ठी ॥ १२० ॥

रावणस्येत्यादि। इह लङ्कायां कपयोभीमपराक्रमाः सन्तोरा म० वणस्य रोक्ष्यन्ति रावणं पीडयिष्यन्ति रुजोभङ्गे तौ कर्म्मणि षष्ठी अन्ये तु रुजार्थस्य भावकर्त्तृके इति सूत्रेण कर्म्मणि षष्ठ्याउदाह रणार्थं कपयस्तत्रस्थिनोभीमाविक्रमाश्च इह रावणस्य रोक्ष्य न्तीत्यन्वयं कुर्व्वन्ति हे वैदेहि धृत्या नाथस्व धृतिर्भूयादित्यात्म न्याशिषं कुरु धृतिं लभस्वेति भावः कर्म्मणि षष्ठी आशिषिनाथइति षष्ठ्यर्थं परसूत्रं प्रपद्यामीरित्यादिना मं आत्मनोमन्योरुज्जा सय आत्मनः शोकं नाशय अवकवधे कर्म्मणि षष्ठी जासिनिप्र हणनाटिक्राथिपिषांहिंसायामिति षष्ठ्यर्थं परसूत्रं ॥ ॥ १२० ॥

राक्षसानां मयि गते रामः प्रणिहनिष्यति। प्राणा नामपणिष्टासौ रावणस्वामिहानयन् ॥ १२१ ॥

राक्षेत्यादि। मयि गते रामोराक्षसानां प्रणिहनिष्यति राक्ष अ०म० सान् मारयिष्यति पूर्व्ववत्कर्म्मणि षष्ठी निप्रहणइति सङ्घातविगृ हीतविपर्य्यस्तग्रहणमित्युक्तं नेर्गदेत्यादिना णत्वं किञ्च प्राणाना

मपणिष्टायमिति अयं रावणस्वामिकानयन् प्राणानपणिष्ट विक्री तवान् व्यवहृपणोःसमर्थयोरिति षष्ठी प्राणानामपणायिष्टेति पाठान्तरं तदयुक्तं स्तुत्यर्थस्य पणेस्तत्र ग्रहणात् गुपूधूपेत्यादिना आयप्रत्ययेन भवति ॥ १२१ ॥

भ० राक्षसानामित्यादि। मयि गते सति रामो राक्षसानां प्रणि हनिष्यति राक्षसान् मारयिष्यति प्राणकर्मणइति मेर्णत्वं कर्मणि षष्ठी असौ रावणस्वामिक लङ्कायामानयन् प्राणानामपणिष्ट प्राणान् विक्रीतवान् व्यवहृपणोर्व्यवहारे इति षष्ठ्यर्थं परमत्र तत्र व्यवहारे इति क्रयविक्रयलक्षणे द्यूतक्रियायाञ्चेति व्याख्यातं पणङ्व्यवहृतोस्तुतौ चारेइत्यनेन कमत्वतइत्यादिना विहिता विलोचङ्गायाविभाषिता: तेन पक्षे नायप्रत्यय: अपणिष्टेति चिन्त्यमिति विद्याविनोदस्य प्रलपितं व्यवस्थितवाधिकारादाया दयोऽसार्वधातुके वा भवन्तीति पक्षे नायप्रत्ययइति विद्यासाग रेणोक्तत्वात् स्वमतं युक्तमेव ॥ १२१ ॥

अदेवीद्बन्धुभोगानां प्रादेवीदात्मसम्पदं। ग्लानक्ष त्वस्तवैकस्याः स्मरत्यक्षार घृत्तम: ॥ १२२ ॥

ज०म० अदेवीदित्यादि। न केवलं प्राणानपणिष्ट बन्धुभोगानामदेवीत् बन्धुभोगान्विक्रीतवान् दिवस्तदर्थस्येति षष्ठी दिवोऽव्यवहारार्थ त्वात् प्रादेवीदात्मसम्पदं विक्रीतवान् विभाषोपसर्गेइति पक्षे दि तीया प्रसङ्गेन युक्तत्वात् रामानुरागं पुनर्हर्षयत्याह रघूत्तम

स्मरति अधीगर्थेति षष्ठी अकृइति एकस्मिन्नप्यह्नि द्वयोऽर्थप्रयो गकालेऽधिकरणइति षष्ठी ॥१२१॥

अदेवीदित्यादि। न केवलं प्राणानामपणिष्टासौ रावणो भ० यन्स्व भोगांश्च अदेवीत क्रीतवान् त्यक्तवानिति यावत् कर्म्मणि षष्ठी आत्मसम्पदमपि प्रादेवीत् विक्रीतवान् कर्म्मणि द्वितीया परं तु व्यवहारे सोपसर्गस्य दिवः कर्म्मणि वा षष्ठी नित्यन्त्वनुपसर्गस्ये त्याह: अथ संक्षिप्य पुनरपि रामानुरागं दर्शयति अह्नः शतकृत्वो दिवसं शतं वारान् रामएकस्यास्तव एकां त्वां स्मरति सकृत्वम् वारेइति शतशब्दात् सकृत्वस् तद्योगे स्वामीश्वराधिपतीत्या दौ मृजर्थैरिति अहन्शब्दात्षष्ठी तवेति कर्म्मणि षष्ठी ॥१२२॥

तवोपशायिका यावद्राक्षस्यश्चेतयन्ति न। प्रतिसं दिश्यतां तावद्भर्त्तुः शार्ङ्गस्य मैथिलि ॥१२३॥

एवं तामाश्वास्य सन्देशन्दापयितुमाह तवेत्यादि। हे मैथिलि ज०म० तवोपशायिका परिपाट्या शयनं याभीराक्षसीभिः सहेत्यर्थात् पर्य्यायार्हणात्पत्तिषु एवु यावन्न चेतयन्ति न प्रतिबुध्यन्ते ताव त्प्रतिसन्दिश्यतां प्रतिसन्देशोदीयतां शार्ङ्गस्य भर्त्तुः शार्ङ्गं धनुर्धा रयतो रामस्य तव शार्ङ्गस्येति यथाक्रमं कर्तृकर्म्मणोः कृतीति षष्ठी ॥ १२३ ॥

तवेत्यादि। हे मैथिलि तवोपशायिका पर्य्यायशयनं याभीरा भ० क्षसोभि. सहेत्यर्थात् पर्य्यायप्राप्ता ताश्च राक्षसीश्चावन्न चेत

थन्ति न प्रतिबुध्यन्ते तावत् शार्ङ्गस्य भर्त्तुर्धनुर्धारयतो रामस्य कृत प्रतिसन्धित्सतां प्रतिसन्धेर्योद्धीयतां इत्येवं हनूमान् प्रोचे इति पूर्व्वेण सम्बन्धः उपपूर्व्वशीङ् पर्य्यायस्थाणवोधकः अध्यूणकेति ज्ञापकात् भावे णकः स्त्रीलस्य ढघेहतीत्यादिना तवेत्यत्र कर्त्त रि षष्ठी शार्ङ्गस्येत्यत्र कर्म्मणि नव उप समीपे शायिकाः शया नाः राक्षसः कर्त्तरि णकइति केचित् चित्कर्मास्थाने पूर्व्वोक्तिः ॥ १२३ ॥

पुरः प्रवेशमाश्चर्य्यं बुद्ध्वा शाखामृगेण सा। चूडाम णिमभिज्ञानं ददौ रामस्य सम्मतं ॥ १२४।

अ॰म॰ पुरइत्यादि। शाखामृगेण मर्कटेन पुरो लङ्कायाः दुःप्रवेशा यायाः प्रवेशः तमाश्चर्य्यमद्भुतं बुद्ध्वा सा सीता चूडामणिमभिज्ञा नं ददौ सर्व्वमुत्तमस्य सम्भाव्यतइति उभयप्राप्तौ कर्म्मणीति षष्ठी प्रवेशइत्युभयप्राप्तौ हृति लङ्कायनूमतोः कर्म्मकर्तृत्वात् रामस्य संमतं प्रियं मतिबुद्धीत्यादिना वर्त्तमाने निष्ठा मतेरिति षष्ठी प्रतिषेधे प्राप्ते क्तस्य च वर्त्तमानइति षष्ठी ॥ १२४ ॥

भ॰ पुरइत्यादि। शाखामृगेण वानरेण पुरोलङ्कायाः प्रवेश माश्चर्य्यं बुद्ध्वा मत्वा सा सीता चूडामणिमभिज्ञानं शिरोरत्नं स्वकीयचिह्नं ददौ रामस्य सम्मतं रामेण मन्यमानं ज्ञायमानं सदा स्मरणात् शीलेहार्थेति वर्त्तमाने क्तः तद्योगे कामुकतार्थ क्तइति कर्त्तरि षष्ठी प्रपूर्व्वविशेषंज्ञ् तद्योगे ढघेहतीति पुरइत्य

च कर्मणि षष्ठी क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशतइति न्यायात् शायामृगेणेत्यत्र क्तस्य च वर्त्तमाने इत्यनेन षष्ठीविषयेऽपि साधनकृत्येत्यादिना कर्त्तरि तृतीया इति केचित् वस्तुतस्तु यत्रैकक्तयोगे कर्त्तरि कर्मणि च षष्ठ्याविषयः स्यात् तत्र क्तस्य च वर्त्तमाने इत्यादिना कर्मणि नित्यं षष्ठी उभयप्राप्तौ कर्मणीत्यनेन तु कर्त्तरि विभाषया षष्ठी शब्दानुशासनस्याचार्येण इति प्रयुज्यमानेइत्यर्थः यत्तु कर्तृकर्मप्राप्तौ कर्मण्येवेति तदपि षष्ठ्यर्थं क्रमसूत्रोक्तस्य सूत्रं तत्तु प्रायिकं अन्यत्रापि दृश्यत्वेत्यपरे इति तेनैव पश्चादुक्तं शब्दानामनुशासनमाचार्येणाचार्यस्येत्याद्युदाहरन्ति प्राञ्चः ॥ १२४ ॥

रामस्य शयितं भुक्तं जल्पितं हसितं स्थितं। प्रक्रान्तञ्च मुहुः पृष्ट्वा हनूमन्तं व्यसर्ज्जयत् ॥ १२५ ॥

रामेत्यादि। रामस्य अभिज्ञानं रत्नं शयितादिकं मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत् प्रेषितवती तस्य शयितं शयनस्थानं किं भूमौ शेते अन्यत्रेति वा भुक्तं भोजनस्थानं किं गृहे भुङ्क्ते मुनिजनगृहे वेति जल्पितं मन्त्रस्थानं किं रहसि मन्त्रयते प्रकाशे वेति हसितं हसनस्थानं किं शृङ्गारवस्तुनि हसति वीरवस्तुनि वेति स्थितं निवासस्थानं किं गुहायां तिष्ठत्युत तरुतले वेति प्रक्रान्तं प्रचंक्रमणस्थानं अनुनासिकेत्यादिना दीर्घः किं मधुने क्राम्यते अन्यत्र वेति एषां भ्रौव्यगतिप्रत्यवसानार्थत्वात् क्तोऽधिकरणेचेति क्तः तस्य प्रयोगे अधिकरणवाचिनश्चेति षष्ठी ॥ १२५ ॥ अ०म०

भ० रामस्येत्यादि। अभिज्ञानं दत्त्वा रामस्य शयितादि मुहुर्मुहुर्वारं वारं पृष्ट्वा सीता हनूमन्तं व्यवर्जयत् प्रेषितवती शयितं शय नस्थानं भूमिः शय्या वेति भुक्तं भोजनस्थानं स्वगृहं मुनिगृहं वेति जल्पितं मन्त्रणास्थानं रहः प्रकाशितं वा हसितं हास्यस्थानं शृङ्गा रवस्तु वीरवस्तु वा स्थितं वासस्थानं तरुतलं गुहादिकं वा प्रक्रा न्तं चंक्रमणस्थानं अरण्यं वनं वा सर्व्वत्र ध्रौव्यगत्यर्थेति आधारे क्तः तद्योगे कामुकस्य शय्यादिकं इति कर्त्तरि षष्ठी यदि भा वे क्तः तदा न्यभावक्तेति षष्ठी सम्बन्धविवक्षया वा ॥ १२५ ॥

असौ दधदभिज्ञानं चिकीर्षुः कर्म्म दारुणं। गामु कोऽप्यन्तिकं भर्त्तुर्म्मनसाचिन्तयत्क्षणं ॥ १२६ ॥

ज०म० असावित्यादि। असौ हनूमान् दधत् धारयन्नभिज्ञानं चिह्नं कर्तृकर्म्मणोः कृतीति षष्ठ्यां प्राप्तायां नलोकेति लप्रयोगे प्रतिषेधः लट इति शानशाद्यादेशोता: दारुणमशोकवनिका भङ्गादिकं कर्म्म चिकीर्षुः कर्तुमिच्छुः उकारप्रयोगात् षष्ठ्याः प्रति षेधः भर्तुः स्वामिनः अन्तिकं समीपं गामुकोऽपि गमनशीलोऽपि उकप्रयोगे प्रतिषेधः मनसा क्षणं चिन्तितवान् वक्ष्यमाणं कर्म्म ॥ १२६ ॥

भ० असावित्यादि। असौ हनूमान् अभिज्ञानं चिह्नं दधत् धार यन् दारुणं कर्म्म चिकीर्षुः कर्त्तुमिच्छुः भर्त्तू रामस्य अन्तिकं समीपं गामुकोगमनशीलोऽपि क्षणं मनसाचिन्तयत् वक्ष्यमाणमिति धाञ्‌ञ्च ढधेकृञोति शत्रं त्याद्युदित्मानाम् न कर्म्मणि षष्ठी ॥ १२६ ॥

कृत्वा कर्म्म यथादिष्टं पूर्व्वकार्य्याविरोधि यः। करो त्यभ्यधिकं कृत्यं तमाहुर्दूतमुत्तमं ॥ १२७ ॥

कृत्वेत्यादि। योदूतोयथोद्दिष्टं कर्म्म कार्य्यं कृत्वा अत्र कृत्वेत्यव्य यप्रयोगे प्रतिषेधः ततउत्तरकालं पूर्व्वकर्म्माविरोधि पूर्व्वकृतस्य कार्य्यस्य यदविरोधि तदधिकं करोति तमुत्तमं दूतमाहुर्विदु र्नीतिविदइति शेषः मया च यथोद्दिष्टं सीतान्वेषणं कृतमिति भावः ॥ १२७ ॥ ज०म

कृत्वेत्यादि। यो दूतोयथादिष्टमाज्ञानतिक्रमेण कार्य्यं कृत्वा पूर्व्वकार्य्याविरोधि अधिकं कार्य्यान्तरं करोति तमुत्तमं दूतमा हुर्नीतिविदइति शेषः तस्मात् सीतान्वेषणमादिष्टं कर्म्म कृत्वा अधिकमपि करिष्यामीत्यपिमश्लोके वक्ष्यति कृत्वेति अव्ययत्वात् न तद्योगे षष्ठी ॥ १२७ ॥ भ०

वैदेहीं दृष्टवान् कर्म्म कृत्वान्यैरपि दुष्करं। यशो यास्याम्युपादाता वार्त्तामाख्यायकः प्रभोः ॥ १२८ ॥

तदेव च दर्शयन्नाह वैदेहीत्यादि। अहमद्य तावद्वैदेहीं दृष्ट वान् निष्ठाप्रयोगे प्रतिषेधः अन्यदपि कार्य्यमतिदुष्करं कृत्वा क्त्व प्रयोगे प्रतिषेधः ततोयशउपादाता आत्मसात्कर्त्ता इदमति दुष्करं तेन कृतमिति अकान्तस्य प्रयोगे प्रतिषेधः वार्त्तामाख्याय ज०म०

कः प्रभोर्वार्त्तामाख्याता ख्यातिभविष्यदधिकारात्तुमण्वुलौ क्रिया यामिति ण्वुल् अकेनोर्भविष्यदाधमर्ण्ययोरिति प्रतिषेधः॥ १२८॥

भ॰ वैदेहीमित्यादि। वैदेहीं दृष्टवानहं अन्यैरतिदुष्करं कर्म वक्ष्यमाणं वनभङ्गादिं कृत्वा यशउपादाता उपादानशीलः सन् प्रभोः समीपे वार्त्तामाख्यायकः आख्यातुं यास्यामि क्तवतुखल र्थशीलार्थतृणां योगे षष्ठीनिषेधोदर्शितः आख्यायकइति अस्य ण्वकेत्युक्ते तृन्ण्वकौ धेइति विधानादन्यत्रापि ण्वको भवतीति ज्ञापि तं तेनात्र तुमर्थे ण्वकोबोध्यः किम्वा तृण्वकौ धेइत्यनेनैव ण्वकः तत्र कालस्याविशेषात् सर्व्वस्मिन् काले तौ भवतइति प्राप्तं अत्र तु भविष्यत्कालोविवक्षितः आख्यायकः आख्यास्यन्नित्यर्थः क्वचि दपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्ततइति न्यायात् षष्ठीविषयेऽपि द्वितीया परे तु क्रियार्थायां भविष्यतीति सूत्रेण ण्वकं ण्वकस्तुम र्थप्रायइति सूत्रेण षष्ठीनिषेधश्चाहुः प्रायोग्रहणात् क्वचित् षष्ठी मपि॥ १२८॥

राक्षसेन्द्रस्य संरक्ष्यं मया लव्यमिदं वनं। इति सं
चिन्त्य सदृशं नन्दनस्याभनक् कपिः॥ १२९॥

ज॰म॰ राक्षेत्यादि। इदं वनमशोकवनिकाख्यं राक्षसेन्द्रस्य सं रक्ष्यं रक्षार्हं अर्हेकृत्यः तृचश्चेत्यर्थत् तन्मया लव्यं लवनीयं कृत्या नां कर्त्तरिवेति षष्ठी तृतीये कर्त्तरि भवतः इत्येवं सञ्चिन्त्य कपि र्नन्दनस्य वनस्य सदृशं तुल्यं तुल्यार्थैरिति पक्षे षष्ठी अभनक्

भग्नवान् भञ्जेर्लङि श्नाम्नलोपइति नलोपे हल्ङ्यादिलोपे जसे चर्त्वे च रूपं ॥ १२९ ॥

राघेत्यादि। इदं वनं राघवेन्द्रस्य संरक्ष्यं सम्यक्रक्षार्हं मया सर्वं छेदनीयं इति संचिन्त्य नन्दनस्य इन्द्रवनस्य सदृशं तद्वनं कपिर्हनूमान् अभनक् भग्नवान् भञ्जेर्ण्यां दधादित्वात् अण् स्वभावकर्मेति स्ययोगे कर्त्तरि विभाषया षष्ठी समार्थैनेति समार्थेन षष्ठी ॥ १२९ ॥ भ०

राघवाभ्यां शिवं दूतस्तयोरहमिति ब्रुवन्। हितो भनज्मि रामस्य कः किं ब्रूतेऽत्र राक्षसः ॥ १३० ॥

राघेत्यादि। राघवाभ्यां रामलक्ष्मणाभ्यां शिवं भद्रमस्तु तयो हनूमान् दूतो हितो रामस्य भनज्मीदं वनं एवञ्च क्रियमाणे कोभवतां मध्ये राक्षसः किं ब्रूते इत्येवं ब्रुवन् बभञ्ज पवनात्मजो रिपुवनमिति वक्ष्यमाणेन सम्बन्धः राघवाभ्यां शिवं हितोरामस्येति चतुर्थी चाशिष्येत्यादिना षष्ठीचतुर्थ्यौ। इति विभक्त्यधिकारः ॥ १३० ॥ ज०म

राघवाभ्यामित्यादि। हे राक्षसा राघवाभ्यां रामलक्ष्मणाभ्यां शिवं भूयादिति शेषः शक्रार्थवषडित्यादिना हितार्थत्वात् शिव शब्दयोगे चतुर्थी तत्र हि शक्त इत्यनेन शक्तार्थानां अलंप्रभु प्रोथपर्याप्तसमर्थादीनां ग्रहणं अर्थशब्दः प्रयोजनवाची तेन प्रयोजनार्थानां ग्रहणं हितमित्यनेन हितार्थानां भद्रशोभनशिवा भ०

दीनां कल्याणपर्य्यायपठितानां अन्येषाञ्च साध्वादीनां ग्रहणं हितार्थत्वेन स्वस्तिशब्दे गृहीतेऽपि स्वस्तिशब्दग्रहणं समार्थैर्न्ने त्यादिना हितार्थत्वेन प्राप्तषष्ठ्याश्चप्रवृत्त्यर्थं अतएव स्वस्तिवर्ण्णं कुशलार्थैरिति विभाषया चतुर्थ्यर्थं परसूत्रं एवं सुखार्थानां मुप्री त्यादीनां ग्रहणं अतएव गवाय साधुः चविय इत्युदाहृतं रामस्य हितः सन् इदं वनं भनज्मि समार्थैनेति सम्बन्धे हितयोगे च षष्ठी एवं क्रियमाणे अच कर्म्मणि कोरामः कि मूते इति ब्रुवन् पवनात्मजो रिपुवनं बभञ्जेत्ययिमश्लोकेनान्वयः ॥ १२० ॥

विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमं कुसुमनिपातविचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनं। शकुननिनादनादितककुब्विलोलविपलायमानहरिणं हरिणविलोचनाधिवसतिं बभञ्ज पवनात्मजोरिपुवनं ॥ १२१ ॥

॥ इति भट्टिकाव्येऽष्टमः सर्गः ॥ ८ ॥

ज॰म॰ विलित्यादि। कीदृशं बभञ्ज विलुलितानां पुष्पाणां रेणुभिः कपिशं पिङ्गं प्रशान्ताश्चवमग्नाः कलिकाः पलाशानि पत्राणि कुसुमानि च यत्र कुसुमानां निपातेन विचित्रा वसुधा यत्र सश ब्दैर्निपतद्भिर्द्रुमैरुत्का उन्मनसः शकुना यत्र शकुनानां पलाय मानानां निनादेन नादिताः सञ्जातनादाः ककुभोदिशो यत्र विलोलाव्याकुलाविपलायमानाहरिणायत्र हरिणस्येव लोचने

यस्याः सीतायाः तस्या अधिवसतिं निवासं। इत्यनभिहिता धिकारः॥ १३१॥

इति भट्टिकाव्यटीकायां जयमङ्गलायां अधिकारकाण्डे तृतीयः परिच्छेदः काव्यस्याशोकवनिकाभङ्गोनामाष्टमः सर्गः॥

विलुलितेत्यादि। पवनात्मजोऽरिपुवनं बभञ्ज कीदृशं विलु भ०
लितानां विघटितानां पुष्पाणां रेणुभिः कपिशं पिङ्गलं प्रशान्तानि अवसन्नानि कलिकाः पत्राणि पुष्पाणि च यत्र कुसुमानां निपातेन विचित्रा वसुधा यत्र सशब्दैः सशब्दं वा निपतद्भिर्द्रुमैरुत्काः स्थानान्तरं गन्तुमुन्मनसः शकुनाः पक्षिणो यत्र शकुनानां पलायमानानां निनादेन नादिताः संजातनादाः शब्दायमानीकृतावा ककुभोदिशो यत्र विलोलाव्याकुलाः सन्तोविपलायमानाहरिणायत्र हरिणस्येव विलोचने यस्याः सीतायास्तदधिवसतिं तन्निवासस्थानं॥ १३१॥

इति सर्वैद्यहरिहरस्यात्मजस्य भवगौराङ्गमल्लिकात्मजस्य भरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायामधिकारकाण्डेऽष्टमः सर्गः॥

अथ प्रकीर्णकाः।

द्रुमभङ्गध्वनिसंविग्नाः कुर्वत्यश्चिकुलाकुलाः। अकार्षुः क्षणदाचर्य्योरावणस्य निवेदनं॥ १॥

अत्रान्तरे प्रकीर्णकश्लोकानाह द्रुमभङ्गेत्यादि। क्षणदाचर्य्यो ज०म०
निशाचर्य्यः चरेष्टः रावणस्य निवेदनमकार्षुः कृतवत्यः कस्मा

चमत्कारेण द्रुभङ्गध्वनिवन्नियाः शाखाभङ्गशब्देन चञ्चलाः ओ विजीभयचलनयोः ओदितश्चेति निष्ठानत्वं नुवत्पक्षिकुलाः कूज द्भिः पक्षिकुलैः व्यस्तमानसाः शुशब्दे तौदादिकस्य उवङादेशः ॥१॥

भ॰ द्रुभङ्गेत्यादि। सीतावनिविधिस्थाः चणदाचर्य्योराक्षसीरावणस्य निवेदनं वक्ष्यमाणं अकार्षुः कृतवत्यः कृञस्ती अनुस्मिद्धेरित्युम् कीदृश्यः द्रूणां वृक्षाणां भङ्गशब्दैः संचस्ताः त्रिजको भीकम्पे ओ दित्त्वात् कस्य नः कुवद्भिः शब्दायमानैः पक्षिणां कुलैः समूहैरा कुलाव्यस्तचित्ताः कुङशब्देकुलचेत्यादादिकात् शतः कुशब्दे भीवादिकइति जयमङ्गलायां प्रमादस्तस्यात्मनेपदित्वात् शपो गुणित्वाच कूजत्पक्षिकुलाकुला इति क्वचित् पाठः॥१॥

यदताप्सीच्छनैर्भानुर्यत्रावासीन्मितं मरुत्।
यदाप्यानं हिमोस्रेण भनक्त्युपवनं कपिः॥२॥

ज॰म॰ यदित्यादि। यदनं भानुः शनैर्मन्दमताप्सीत्तपति स्म हलन्त लक्षणा वृद्धिः मरुत् मितं स्तोकमवासीत् वाति स्म हिमोस्रेण शिशिरगश्मिना आप्यानं वृद्धिं नीतं प्यायतेर्नीपोव्योर्म्मलीति यलोपः आदित्वान्नत्वं तदुपवनं कपिर्भिनक्ति चूर्णयतीति निवेद नमकार्षुः॥२॥

भ॰ यदित्यादि। निवेदनमाह यदुपवनं भानुः शनैर्मन्दं यता प्सीत् तपति स्म शजवदेति शिः अनिमूलात् यत्रोपवने वायुर्मित

मन्त्यं भवाचीत् वाति स्म यमरमेति इमम्भो यद्पवनं हिमोस्त्रेण चन्द्रेण आप्यानं दृद्धं ओप्यायोऽत्तृद्धो कर्मरि क्तः ख्यार्थोपदति यलोपः किरणोस्रमयूखांशुगभस्तिघृणिघृष्णयद्दत्यमरः तदुपवनं कपिर्भनक्ति इति निवेदनमकार्षुरिति पूर्व्वेण सम्बन्धः ॥ २ ॥

ततोऽशीतिसहस्राणि किङ्कराणां समादिशत्।
इन्द्रजित्सूर्विनाशाय मारुतेः क्रोधमूर्च्छितः ॥ ३ ॥

ततइत्यादि। निवेदनानन्तरमिन्द्रजित्सूः रावणः इन्द्रजितं सूतइति सत्सुद्विषेत्यादिनानुपसर्गे क्विप् मारुतेर्हनूमतोविनाशाय अशीतिसहस्राणि समादिशत् समादिष्टवान् किंकराणां किं कुर्व्वन्ति दिवाविभेत्यादिना टच् क्रोधमूर्च्छितः क्रोधोद्भूतः मूर्च्छः समुच्छ्राये वर्त्तमानत्वात् ॥ ३ ॥ ज० म०

ततइत्यादि। ततोऽनन्तरमिन्द्रजित्सू रावणः क्रोधेन मूर्च्छितः संजातमूर्च्छः सन् मारुतेर्हनूमतोविनाशाय किङ्कराणां अशीतिसहस्राणि समादिशत् आज्ञापयत् इन्द्रजितं सूते इति क्विप् ॥ ३ ॥ भ०

शक्त्यृष्टिपरिघप्रासगदामुद्गरपाणयः। व्यश्नवाना दिशः प्रापुर्वनं दृष्टिविषोपमाः ॥ ४ ॥

शक्तीत्यादि। ते किङ्करावनं प्रापुः प्राप्नवन्तः शक्त्यादयः प्रहरणविशेषाः पाणौ येषामिति प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ ज० म०

भवतः अम्बुवाना: द्विशोम्या भुवन्तः अमूर्ध्याप्तौ वैवादिकः दृष्टि विषोपमाः भुजङ्गवत् दृष्ट्यैव विनाशयन्त इत्यर्थः ॥ ४ ॥

म० अशीत्यादि। अस्त्रादयः पाणौ येषां ते किङ्करा वनं प्रापुः द्विशोव्यम्बुवानाव्याभुवन्तः अमूर्छव्याप्तिसंहत्योः दृष्टिविषैः सर्प विशेषैरुपमायेषां दृष्टिर्दर्शनं विषोपमा विषमिव येषामिति वा ॥ ४ ॥

दध्वान मेघवद्भीममादाय परिघं कपिः। नेदुर्दीप्ता युधास्तेऽपि तडित्वन्त इवाम्बुदाः ॥ ५ ॥

ज०म० दध्वेत्यादि। कपिर्भीमं परिघं भयानकमर्गलमादाय मेघ वद्ध्वान ध्वनति स्म तेऽपि किङ्कराः तडित्वन्त इवाम्बुदाः नेदुः नदन्ति स्म किङ्कराणां कृष्णत्वात् मेघैः सादृश्यं आयुधानाञ्च तडितेति ॥ ५ ॥

भ० दध्वानेत्यादि। कपिर्हनूमान् भीमं भयानकं परिघं लौह वन्मुद्गरमादाय गृहीत्वा मेघ इव दध्वान ध्वनयम्बे तेऽपि दीप्त प्रहरणाराक्षसास्तडित्वन्तमेघा इव नेदुः शब्दितवन्तः ॥ ५ ॥

कपिनाम्भोधिधीरेण समगंसत राक्षसाः। वर्षा सङ्गततोयौघाः समुद्रेणेव सिन्धवः ॥ ६ ॥

ज०म० कपीत्यादि। कपिना अम्भोधिधीरेण क्षोभ्यत्वात् राक्षसाः समगंसत सङ्गताः समोगमीत्यादिना तङ् लुङ् यथा सिन्धवो नद्यः सङ्गततोयौघाः वर्द्धितजलपूराः समुद्रेण सङ्गच्छन्ते ॥ ६ ॥

कपिनेत्यादि। ते राक्षसाः समुद्रवद्वीरेण कपिना सममं सं॰
सत मिलिताबभूवुः समोगमच्छेति मं मान्तोऽदन्तनदायतानेषः
यथा वर्षास्वद्भुतजलपूराः विन्ध्यवासघः समुद्रेण सङ्गताभवन्ति
॥ ६ ॥

लाङ्गूलमुद्धतं धुन्वमुद्वहन् परिघं गुरुं। तस्थौ तोर
णमारुह्य पूर्व्वं न प्रजहार सः ॥ ७ ॥

॥ एते प्रकीर्णकाः ॥

लाङ्गूलेत्यादि। स हनूमान् लाङ्गूलं पुच्छमुद्धतं उच्छ्रितं सं॰म॰
धुन्वन् धूञ्कम्पनदति स्वादौ पठितः परिघं गुरुं उद्वहन् तोर
णमारुह्य तस्थौ न तु पूर्व्वं प्रजहार प्रहृतवान् शूराणां पश्चात्
प्रहारित्वात् ॥ ७ ॥

एते प्रकीर्णकाः।

लाङ्गूलेत्यादि। स हनूमान् तोरणं बहिर्द्वारमारुह्य उद्धृत सं॰
मुच्छ्रितं लाङ्गूलं धुन्वन् कम्पयन् गुरुं परिघं उद्वहन् धारयन्
तस्थौ पूर्व्वं न प्रजहार शूराणां पश्चात्प्रहारित्वात् ॥ ७ ॥

एतेप्रकीर्णकाः।

॥ सिचि वृद्ध्यधिकारमाह ॥

अचारिषुः शराश्चांसि तस्मिन्नथ पयोधराः। न

चाकालीन्न पाशाजीत्रासं कपिमहीधरः ॥ ८ ॥

अवादीदित्यादि। अतः परं यूयं तिष्ठत मा पलायध्वमिति उच्चैर्महता ध्वनिना कपिरवादीत् वक्तवान् पूर्व्ववद्वृद्धिः परिवेष तथा तेन प्रकारेण प्राद्योतीत् प्रोद्वर्तितं च जेतुमैच्छत् दिवुजिगीषेच्छापणिद्युतीः क्रीडागत्योः टौ वृद्धूत इति णुः दिवोधेवेति कर्षे द्वितीया यथा रणे बहूनां शत्रूणां प्राणान् अग्रहीत् अपहृतवान् ह्मयान्तेति वृद्धिप्रतिषेधः॥ ८ ॥ भ०

अग्रेरवमिषुः कामं हरेरैः प्रोर्णविषुर्भुवं। द्विषः प्रोर्णविषुश्वान्ये यातुधानाभयद्रियः॥ १०॥

अग्रेरित्यादि। यातुधानाराक्षसा अगैः प्रहारमार्गैः रक्तं प्रो ज०म० क्षितमवमिषुः वमन्ति स्म ह्मयान्तेति वृद्धिप्रतिषेधः हरैर्भुवं प्रोर्णा विषुः छादितवन्तः अन्ये यातुधानाःभयद्रियः भयभीतीर्येषामिति भयात्पलायमानाः द्विषः प्रोर्णविषुः छादितवन्तः ऊर्णोतेर्विभा षेति विकल्पः ऊर्णोतिर्विभाषेत्यङित्पक्षे द्रष्टव्यः ङित्त्वे गुण वृद्धिप्रतिषेधात्॥ १०॥

अग्रेरित्यादि। यातुधानाअगैः प्रहारमार्गैरक्तं अवमिषुः भ० वमन्ति स्म पूर्व्ववदात्मवर्ज्यनात्व त्रिः हरैर्भुवं प्रोर्णविषुः आच्छादितवन्तः भवन्तो विषमाणा भीरर्थं येषां तेऽन्ये यातुधानाद्विषः प्रोर्णविषुः पलायन्तो चोत्कर्षः अर्थुकन्धात्वाहवे पूर्वमिच्छामिति वृद्धिराकादेशश्च॥ १०॥

अरकाषिषुरुत्सुत्तोत्साहाभिन्नदेहाः प्रियासवः। कपे
र्न्नासिषुर्नादान्मृगाः सिंहध्वनेरिव ॥ ११ ॥

॥ इति सिचि वृद्ध्यधिकारः ॥

ज०म० अरेत्यादि। च्युतोत्साहाः निरुत्साहाः अरारिषुः म्नताः स्म इति शब्दितवन्तः यतः प्रियासवः प्रियप्राणाः कपेः सम्बन्धिनो नादात् न्नासिषुः त्रस्ताः उभयत्रापि नेटीति प्रतिषिद्धे ऽतो ल्लान्तस्य देरिति विकल्पः। इति सिचि वृद्ध्यधिकारः ॥ ११ ॥

भ० अरेत्यादि। प्रिया असवः प्राणा येषां ते यातुधानाभिन्नदेहा विदीर्णशरीराभूत्वा निरुत्साहानिस्पृहाः सन्तः अरकाषिषुः म्नताः स्म इति शब्दितवन्तः कथमसौ हनात् एभिरति पक्षे न्नि: कपे र्नादात् अन्नासिषुः त्रस्ताः पूर्ववत्पक्षे न्नि: यथा सिंहस्य ध्वनेर्मृगा स्त्रस्यन्ति। इति सिचि वृद्ध्यधिकारः ॥ ११ ॥

मायानामीश्वरास्तेऽपि शस्त्रहस्तारथैः कपिं। प्रत्या
ववृतिरे हन्तुं हन्तव्यामारुतेः पुनः ॥ १२ ॥

अ०म० इतरट्प्रतिषेधमधिकृत्याह मायेत्यादि। यथानन्तरं राक्षसाये दिशोगताः ते कपिं हन्तुं पुनः प्रत्यावरृतिरे प्रति निवृत्ताः मायानामीश्वराः प्रभवः वीणेति वरन् नेहविकत्तीति नेट् आद्धुंधातुकेत्यादिना प्राप्तत्वात् रथैश्च गताः सन्तः शस्त्र हस्ताः शस्त्राणि हस्तेषु येषामिति सप्तमीत्यादिना हस्तैरोषा

दिकः क्यप् रयाः अजिघमीत्यादिना ग्रहेरोणादिसन् इषिन्द्र म्बघेत्यादिना इषेस्तन् तयोश्चितुवेत्यादिना इट्प्रतिषेधः हन्त व्या माहतेरिति हन्तूमतोयथार्थः कृत्यानां कर्त्तरिवेति षष्ठी एका च इत्यादिना इट्प्रतिषेधः हन्तेर्नमाक्तेष्वनिट्त्वात् ॥ ११ ॥

इतइट्प्रतिषेधाधिकारः मायानामित्यादि। अथानन्तरं भ० ये द्विषः प्रोर्णविषुः ते कपिं हन्तुं रयैः पुनः प्रत्यावर्त्तिरे प्रत्यागताः प्रतिनिवृत्ता हनलौ गतौ वधे वसोरस्येमनौदित इति औदि दर्शनादइनिम् कोऽहमास्ते मायानामीश्वराः प्रभवः यायायभाव कसइति वरः इवयतेरिति नेम् प्रसं हस्ते येषां ते तथा प्रस्तते हन्यतेऽनेनेति प्रसं प्रसवधे चाखुविति चः पूर्व्ववचेम् माहतेर्हनू मतोऽहन्तव्याः हन्तुं प्रक्याः स्वभावेति पचे कर्त्तरि षष्ठी ॥ १२ ॥

तांश्चेतव्यान् क्षितौ श्रित्वा वानरस्तोरणं युतान्।
जघानाधूय परिघं विजिघृक्षून् समागतान् ॥ १३ ॥

तांश्चेतेत्यादि। समुदिताएकस्यामेव वेलायां मया हन्तव्या अ०म० इति वानरस्तोरणमाश्रितवान् स्तोरणं श्रित्वा तान् राचसान् विजिघृक्षून् विगृहीतुमिच्छून् युतान् समुदितान् समागतान् ढौकितान् क्षितौ पृथिव्यां चेतव्यान् पुञ्जीकर्त्तव्यान् जघान हतवान् परिघमाधूय परिभ्राम्य तच चेतव्यानिति एकाचइतीट्प्रतिषेधः क्षिताविति क्षिप्रमौषधंख्यायामिति क्षिप् तितुचेत्यादिना इट् प्रतिषेधः श्रित्वा युतानिति श्युकः कितीट्प्रतिषेधः विजिघृक्षूनिति

वनिपदगुहोश्चेति तत्र इडविहेति वनः किलं परिक्लेति तत्रवा
रणं ठलकलबलानि ॥ १३ ॥

भ० तामित्यादि । तोरणं भित्वा परिवममवधूय परिश्राम्य वानर
स्तान् राक्षसान् अघान कीदृशान् चितौ चेतव्यान् पुञ्जीकर्त्त
व्यान् युतान् एकीभूतान् विजिघृक्षून् विग्रहं कर्त्तुमिच्छून् समाग
तान् मिलितान् चिञ्चतव्य: नेमेकाजादित्यादिना इमनिषेधः तृ
दुत्रिभूर्णोरिति श्रियुभ्यां नेम् नेमुगुहयपइति यपेः सनि नेम्
गमेरोदिवाद्गेम् ॥ १३ ॥

संजुघुक्षवआयूंषि ततः प्रतिरुरुक्षवः । रावणा
न्तिकमाजग्मुर्हतशेषा निशाचराः ॥ १४ ॥

ज०म० संज्वित्यादि । ततउत्तरकालं ये हतशेषानिशाचराः ते संजु
घुक्षवआयूंषि जीवितानि गोहितुमिच्छवः गुहेः पूर्ववत्प्रतिषेधः
रावणान्तिकमाजग्मुः आगताः प्रतिरुरुक्षवः वक्ष्यमाणमर्थं कथ
यितुमिच्छवः अत्रापि पूर्ववत्प्रतिषेधः तत्र चकारेणागमानां सनि
समुच्चितत्वात् ॥ १४ ॥

भ० समित्यादि । ततोऽनन्तरं हतशेषानिशाचरारावणस्य
समीपमाईदुः समाजग्मुः कीदृशाः आयूंषि जीवितानि गोपायि
तुमिच्छवः गुहश्चसंवृतो सन् नेमुगुहमपइति नेम् प्रतिरुरुक्षवः
वक्ष्यमाणं कथयितुमिच्छवः इडभावो पूर्ववन्नेम् ॥ १४ ॥

एकेन बहवः शूराः सायिष्यारा: प्रमत्तवत् । वैमु
ख्यम्मक्षमेत्युक्तैरु दुहंशमुखान्तिके ॥ १५ ॥

भ० मांसेत्यादि। ताम् राक्षसीम् उद्दिश्याम् मत्ताम् मवेत्य ज्ञा त्वा सरावणीमक्षिणोऽयवर्ज्जयत् कीदृशाम् मांसोपभोगेन संभू नाम् स्थूलाम् मित्राम् स्निग्धाम् सकोहग्रः उद्वृत्तनयनः उद्धूर्णित नेत्रः क्रोधवशात् क्षायोर्गतिहिंसोः केमकोवीदिति नेम् यजा दित्वात् यवस्पायोरिति जिः जिर्वोऽन्यःसुम्नायोरिति श्रादि त्वात् जस्य नः विजकोशोभीकम्पे ईदित्वात् पूर्व्ववनेम् दृतुकत्तु वर्त्तने पूर्त्तिमुदितदत्यनेन वेमत्वात् पूर्व्ववनेम् दर्भिवाम्लु मिदा जिकप्रहति चकारात् स्रेहने श्रादितदति नेम्॥ १६॥

प्रमेदिताः सपुत्रास्ते सुखाम्ता वाढविक्रमाः। अश्वि ष्टनादानिरगुः फाण्टचिनास्वपाणयः॥ १७॥

ज०म० प्रमइत्यादि। ते मक्षिणः सपुत्राः पुत्रैः सह निरगुः निर्गताः इणोगालुङि प्रमेदिताः स्निग्धीभवितुमारब्धाः आदिकर्म्मणि निष्ठा ततोविभाषाभावादिकर्म्मणोरिति प्रतिषेधः इट्पक्षे निष्ठा शीकृत्यादिना किश्वप्रतिषेधात् गुणः सुम्नाम्ताः स्वामिनि कत्ता वमनसः वाढविक्रमाः भृशपराक्रमाः अविष्टनादाः विस्पष्टवाचः मक्षिणां वाग्मित्वात् फाण्टचिनास्वपाणयः यदपृतपिष्टं कषायं उदकसम्पर्कमात्रादभिव्यक्तरसं ईषदुष्णं तदकमप्रयासमाध्यत्वात् अनायासलभ्यं फाण्टमित्युच्यते तेन चिताश्चि दक्षिनानि अस्त्रा चि पाणौ येषामिति स्वान्तादयः क्षुभ्नादिका निपातिताः॥ १७॥

भ० प्रमेदत्यादि। ते मन्त्रिणः सपुत्राः पुत्रैः सह निरगुर्निर्गतव न्तः इणस्त्रुं रूपं कीदृशाः प्रमेदिताः वह्निर्वमनमनसे आर्य्यादीम्

प्रति स्वेदं कर्त्तुमारब्धवन्तः राजप्रसादात् स्निग्धाभवितुमारब्धा विविधोपभोगेन प्रीताभवितुमारब्धावा भावादिकर्म्मणोर्वेति पक्षे इम् मुखान्ताः शोभनमनसः वाढविक्रमाः भृशपराक्रमाः अविरिब्ध नादाः निस्पष्टवाचः मन्त्रिणां वाग्मित्वात् फाण्टचित्रास्त्रपाणयः फाण्टेन कषायभेदेन चित्राणि अस्त्राणि पाणौ येषां ते तथा क्षुब्धवाढेत्यादिना स्वनवाक्यबोध्यकिफणां स्वान्तवाढविरिब्धफाण्टा निपातिताः पुनातीति पुवः प्रादेःस्वरत्यस्य योगविभागेन ह्रस्वस्यास्य गुणः इन्धिभवतेरिति नेम्॥ १७॥

तान् दृष्ट्वातिदृढान्धृष्टान् प्राप्तान् परिवृढाश्रया।
कष्टं विनर्द्दतः क्रूरान् शस्त्रघुष्टकरान् कपिः॥ १८॥

तानित्यादि। तान् दृष्ट्वा कपिः आर्द्दिंददिति वक्ष्यमाणेन सम्बन्धः किंभूतान् धृष्टान् धृष्णोतीति धृष्टः धृषीशसीवैयात्ये इतीट् प्रतिषेधः अतिदृढान् बलवतः दृढस्थूलबलयोरिति निपातनं परिवृढाश्रया परिवृढस्य प्रभोराश्रया प्राप्तान् प्रभौ परिवृढ इति निपातनं कष्टं विनर्दतः कष्टं ध्वनतः गभीररवस्य कष्टगहनयोः कषइतीट्प्रतिषेधः क्रूरान् हिंस्नान् शस्त्रघुष्टकरान् घुषिरविशब्दनइतीट्प्रतिषेधः॥ १८॥ ज०म०

तानित्यादि। कपिर्हनूमान् तान् राघवान् दृष्ट्वा द्रुतं आर्द्दिददित्यपिमश्लोकेनान्वयः कीदृशान् अतिदृढान् बलवत्तरान् धृष्टान् प्रगल्भान् परिवृढस्य प्रभोराश्रया प्राप्तान् कष्टं कष्टं श्री भ०

चक्षुःसहं विगर्हतः अव्हायमानान् क्रूरान् हिंसान् अर्थैर्घुष्टोपांघणां प्राप्तः संततधारयाहष्टोवा करोतीपेषां तान् पूर्ववत् इष इषुहृहकषघुषांक्ते निपातः॥ १८॥

अव्यर्णोगिरिकूटाभानभ्यर्णानार्दिदत् द्रुतं। वृत्तग्रस्तान्महारम्भानदान्तांस्त्रिदशैरपि॥ १९॥ युग्मकं॥

ज॰म॰ अव्यइत्यादि। अव्यर्णोऽपीडितः अर्देःसंनिविभ्यइतीट्प्रतिषेधः गिरिकूटाभान् महागिरिसदृशप्रमाणान् अभ्यर्णानविदूरान् अभेश्चाविदूर्यइतीट्प्रतिषेधः द्रुतमार्दिदत् हिंसितवान् अर्देः स्वार्थिकण्यन्तस्य लुङि रूपं वृत्तग्रस्तोऽधीतग्रस्तविद्यः णेरध्ययने वृत्तमिति इडभावोणिलुक निपात्यते महारम्भान् अनल्पव्यापारान् त्रिदशैरप्यदान्तान् अशमितान् वादान्तेत्यादिना इडभावोणिलुक निपात्यते॥ १८॥

भ॰ अव्यर्णइत्यादि। गिरिकूटाभान् पर्वतशृङ्गसदृशान् अभ्यर्णान् समीपगतान् वृत्तग्रस्तान् अधीतग्रस्तविद्यान् महारम्भान् हतव्यूहत्वात् त्रिदशैर्देवैरपि अदान्तान् अदमितान् कपिः कीदृशः अव्यर्णः अपीडितः अर्देः संनिविभ्यइति नेम् घुषिरविशब्दनइति नेम् क्षुब्धस्वान्तेत्यादिना साधनं अभिपूर्वादर्देर्व्यंतादतोरभ्यर्णे च निपातितः व्यन्तादमेर्दान्तशान्तेत्यादिना निपातः॥ १८॥

द्रमितारिः प्रशान्तोर्जान्नादापूरितदिङ्मुखः। ज
घान हृषितोहृष्टांस्त्वरितस्तूर्णमागतान्॥ २०॥

द्रमीत्यादि। ये तु प्रशान्तोजसः प्रमितबलाः बन्तोहृष्टाः ज॰म॰
तूर्णमागताः तान् कपिर्जघान व्यापादितवान् प्रतापाद्दाम्यन्तो
ऽरयोऽद्रमितायेन द्रमितारिः प्रशान्तं अनुत्साभोजोयेन सप्र
शान्तोजाः नादापूरितदिङ्मुखः तस्य हृष्टत्वात् हृषितः क्रुद्धः
त्वरितः ससम्भ्रमः अत्र द्रमितप्रशमितपूरिताः एन्ताः वाद्दान्ते
त्यादिना विकल्पितेटः हृष्टहृषितत्वरिताः हृष्यमत्वरेत्यादिना
॥ २० ॥

द्रमीत्यादि। कपिस्तूर्णं शीघ्रं आगतान् राक्षसान् त्वरितः भ॰
सन् जघान कीदृशः द्रमिताउपशमिताअरयः अचवीयेन स
तथा नादैरापूरितं दिङ्मुखं येन हृषितः क्रुद्धः कीदृशान् प्रशा
न्तोर्जान् उपशमितबलान् हृष्टान् क्रुद्धान् ज्यन्तशमेः क्तस्य लो
पोऽत्रेरिति ञिलोपः ज्यन्तदमेर्दान्तशान्तेत्यादिना निपातः हृष
त्वरिभ्यां क्तस्य वाहृषामित्यादिना विभाषितद्रम् त्वरेरनिम्पचे
श्रिवावमवेत्यादिना ऊट्॥ २०॥

तेषां निहन्यमानानां संघुष्टैः कर्णभेदिभिः। अभू
दभ्यमितत्रासमाखान्ताशेषदिग्जगत्॥ २१॥

तेषामित्यादि। तेषां रक्षसां निहन्यमानानां संघुष्टैः शब्दैः कर्ण ज॰म॰
भेदिभिः वाधिर्य्यकरैः अभ्यमितत्रासं अभिगतत्रासं जगद्भूत

आसाकाः भश्रैवादिभिरायभिन् जगति वस्तुताभमितवाचाः हृषमनन्दैति विकल्पितेटः ॥ २१ ॥

भ० तेषामित्यादि। हनूमता निघ्नमानानां तेषां राक्षसानां वपुष्टैः शब्दैः जगत् भुवनं अभ्यमितवायं प्राप्तभयं अभूत् कीदृशैः कर्णभेदिभिः श्रोत्रविदारिभिः कीदृशं अस्वाभावमध्यिता मर्षे षादिभिरायच ततया संपूर्णधुषभम् आकृपूर्वं स्वनात् वाक्याभि त्यादिना क्रमवतोर्वैमसं ॥ २१ ॥

भयसंहृष्टरोमाणस्ततस्तेऽपचितद्विषः। क्षणेन क्षीणविक्रान्ताः कपिनानेषत क्षयं ॥ २२ ॥

इतीट्प्रतिषेधाधिकारः ॥

ज०म० भयमित्यादि। ततस्ते राक्षसाः कपिना क्षणेन क्षयं विनाशमने षत नीताः कर्मणि लुङ् भयसंहृष्टरोमाणः भयोद्गतरोमाणः हृषेर्लोमस्विति विभाषितेट् अपचितद्विषः अपचितानां पूजिता नां द्वेषीणो शत्रवः अपचितश्चेति निपातः क्षीणविक्रान्ताः क्षीणं वि क्रान्तं पराक्रमो येषां श्वियोदीर्घादिति निष्ठातकारस्य नः ॥ २२ ॥

भ० भयेत्यादि। ततोऽनन्तरं कपिना ते राक्षसाः क्षणेन क्षयं अने षत प्रापिताः कर्मणि टी पुर्धुकरति गुः नाक्योऽकमतक्त्वदाहिषः न्यादिग्र्यमाडगत्यर्था इति मुख्यकर्मणि कीदृशाः भयेन संहृष्टानि उद्गतानि रोमाणि येषां वाक्यामकर्षेति वेम् अपचितानां पूजि तानां मुन्यादीनां द्विषः शत्रवः नेमेकाजिति नेम् क्षीणं विक्रान्तं

मिवेोत्थितं भागच्छत नान्यत्र यात इत्येव फलवृद्धिं प्रार्थयेति आवरीतुं वरितुमिति वृतोवेति विकल्पेनेटोदीर्घत्वं ॥ २४ ॥

भ० आवेत्यादि। प्रभञ्जनसुतोहनूमान् वनं विनाशयन् न मद यिष्ट दर्पं न कृतवान् कीदृशं आकाशं आवरीतुं आच्छादयितु मिव वीन् पक्षिणो वरितुं प्रार्थयितुमिव उत्थितं अत्युच्चत्वात् उच्चलोत्प्रेक्षा नेमेकाजित्यादौ इवर्ण्णनादिम् वृतोवेमोर्घरति वादीर्घः ॥ २४ ॥

वरिषीष्ट शिवं क्षिप्यन् मैथिल्याः कल्पशाखिनः।
प्रावारिषुरिव क्षौणीं क्षिप्तावृक्षाः समन्ततः ॥ २५ ॥

ज०म० वरीत्यादि। ये कल्पशाखिनः कल्पवृक्षाः स्वर्गादाहृत्यारो पितास्तानुन्मूल्य यथास्थानं क्षिपन् मैथिल्याः शिवं कल्याणं वरि षीष्ट प्रार्थितवान् मैथिल्याभद्रमस्त्वित्याशंसावचने लिङ् नलिङ्क्षी ति दीर्घप्रतिषेधः अन्ये च वृक्षास्तेन समन्ततः क्षिप्ताः सन्तः क्षौणीं पृथ्वीं प्रावारिषुरिवाच्छादितवन्त इव तेषामच्छादितत्वादित्यर्थः सिचि वृद्धिः परस्मैपदेष्विति वृद्धिः ॥ २५ ॥

भ० वरीत्यादि। हनूमान् मैथिल्याः शिवं मङ्गलं वरिषीष्ट प्रार्थि तवान् आशिषि टी वाघृद्रुरिति पशे इम् चलोडीपथेरिति ने मोदीर्घः किङ्कुर्व्वन् ये कल्पवृक्षाः स्वर्गाद्दानीयाशोकवनिकायामा रोपितास्तानुन्मूल्य यथास्थानं क्षिप्यन्नुन्मेरयन् शिवप्रार्थन क्षिपतार्थत्वात् वमार्येनेत्यादिना मैथिल्याःत्वत्र षष्ठी अन्ये वृक्षाः

समन्ततस्तेन क्षिप्ताः शोणितं भूमिं प्रावारिषुरिव आच्छादितव
न्त इव आत्मनि रूपं पूर्ववत्तेमोर्चः ॥ २५ ॥

संवुवूर्षुः समाकूतमाशां विवरिषुं द्रुतं। अवरिष्टा
समवार्य्यं कपिं हन्तुं दशाननः ॥ २६ ॥

सम्बुदित्यादि। रामदूतेन कपिना कर्थंदृशं हतमिति समा अ०म०
कूतमभिप्रायं सम्बुवूर्षुः सम्बरीतुमिच्छुः दशाननोद्धतमाशां विव
रिषुः प्रकटितुमिच्छुः अथ सुतमवरिष्ट प्रार्थितवान् कथंभिप्रा
ये तच्च किमर्थं कपिं हन्तुं हनिष्यामीति अवार्य्यं हन्तुमशक्यं पोर
दुपधादिति यत् सम्बुवूर्षुः विवरिषुरिति उगन्तात् सनि ग्रह
गुहोश्चेति, षकारेणेट्प्रतिषेधे प्राप्ते इट् सनिवेति विभाषेट्
तथानिट्पक्षे इकोझलीति कित्वे उदोष्ठ्यपूर्व्वस्येत्युत्वपक्षे गुण
एव ॥ २६ ॥

समित्यादि। अथ दशाननोद्धतं कपिं हन्तुं अक्षनामानं कुमारं भ०
अवरिष्ट प्रार्थितवान् पक्षे इमोर्थाभावः कीदृशं अवार्य्यं न वार्यं
कीदृशः कपिमात्रेण रामदूतेनैवं हतमिति समाकूतं स्वकीयमा
शयं संवुवूर्षुः संवरीतुमिच्छुः आशां विवरिषुः रे अक्षागच्छा
गच्छ कपिर्हन्यतामित्याशां विवरीतुं प्रकटयितुमिच्छुः आदृदृ
रिति दृञः सनीवेम् अनिम्पी वोऽस्तमिङ्गामानिति दीर्घत्वे पुर्वो
निमितनीत्यणुत्वात् चादिरवाविशुर् ॥ २६ ॥

ऊचे संवरिषीष्ठास्त्वं गच्छ शत्रोः पराक्रमं। ध्वृषीष्ठा युधि मायाभिः स्वरिता शत्रुसंमुखं॥ २७॥

ज॰म॰ ऊचे इत्यादि। किमित्याह त्वं गच्छ शत्रोः पराक्रमं सम्वरिषीष्ठाः संछादय आशिषि लिङ् लिङ्सिचोरात्मनेपदेष्विति इडोविभाषेट् उश्चेतीट् पक्षे न कित्त्वं ध्वृषीष्ठाः युधि मायाभिः कपटभूताभिः त्वं कुटिलीकृषीष्ठाः ध्वृ हूर्च्छने ऋर्छाकौटिल्ये तस्य चोदात्तत्वात् आशिषि कर्म्मणि लिङ् ऋतश्च संयोगादेरिति विभाषेट् अनिट्पक्षे उश्चेति कित्त्वं स्वरिता उपतापयिता शत्रुसंमुखं शत्रोरग्रतः अतोऽत्र स्वरिषीष्ठा इति वक्ष्यमाणेन योज्यं स्वृशब्दोपतापयोरित्यस्य स्वरति सूतिसूयेत्यादिना विभाषेट् लिङ्सिचोरिति मानुवर्त्तते॥ २७॥

भ॰ ऊचे इत्यादि। विवरणमाह इन्द्रजिन्मघवे किमित्याह हे मघ त्वं गच्छ गत्वा शत्रोः कपेः पराक्रमं संवरिषीष्ठाः आच्छादय आशिषि टो पूर्ववत् पक्षे इट् त्वं युधि संग्रामे मायाभिः कर्त्रीभिः ध्वृषीष्ठाः कुटिलीकृषीष्ठाः ध्वृ कौटिल्ये कर्म्मणि टी वा वृदृहृदिति पक्षे इमोऽभावे इमुक्ष्मेकीकनिमइति कित्वात् गुणः त्वं कीदृशः शत्रुसंमुखं यथा स्यात्तथा स्वरिता शत्रोरग्रत उपतापयितेत्यर्थः किम्वा शत्रुसंमुखं शत्रूणां प्रधानं स्वरिता उपतापकस्तोकः मुखमाद्ये प्रधाने चेत्यमरः स्वृशब्दोपतापयोः वेमूदित्वादिति पक्षे इम्॥ २७॥

ऊनं संस्वरिषीष्ठास्त्वं निर्दयः प्रधनोत्तमे। समायानामगात् माता कपेर्विधवितुं द्युतिं॥ २८॥

द्रुतमित्यादि। संस्वरिषीष्ठाः उपतापय निर्भयस्सन् आशिषि लिङ् समो गम्यृच्छीत्यात्मनेपदं अत्र स्वरत्यतीट् प्रधनोत्तमे संग्रामवरे एवमुक्तः सन् समायायानां सीता जनकः कपेर्द्युतिम्नोजोविधवितुमपनेतुमगात् गतः सीता धवितुमिति स्वरतीत्यादिसूत्रेण विभाषेट्॥ २८॥ अ०म०

द्रुतमित्यादि। त्वं प्रधनोत्तमे महायुद्धे निर्भयः सन् द्रुतं संस्वरिषीष्ठाः उपतापय शत्रुमित्यर्थात् समो गम्यृच्छेति सं एवमुक्तः सोऽक्षः कपेर्द्युतिं तेजोविधवितुं अपनेतुं अगात् गतः कीदृशः मायानां सीता जनकः सुधुञ्ञां पूर्ववत् पक्षे इम्॥ २८॥ भ०

विगाढारं वनस्यासौ शत्रूणां गाहिता कपिः। अक्षं रधितुमारेभे रद्धा लङ्कानिवासिनां॥ २९॥

विगेत्यादि। असौ कपिः वनस्य विगाढा अवलोडयिता अरं शीघ्रं शत्रूणां गाहिता विनाशयिता कर्म्मणि षष्ठी ऊदित्वादिभाषेट् स्वरतीत्यादिना अक्षं रधितुं हिंसितुमारेभे प्रक्रान्तः लङ्कानिवासिनां रक्षसां रद्धा हिंसिता रधादिभ्यश्चेति विभाषेट्॥ २८॥ अ०म०

विगेत्यादि। असौ हनूमान् अक्षं रधितुं हिंसितुं आरेभे भ० प्रक्रान्तः कीदृशः अरं शीघ्रं वनस्य विगाढा विलोडयिता शत्रूणां गाहिता नाशयिता लङ्कानिवासिनां रद्धा हन्ता गाहूविलोडने इत्यस्य ऊदित्वात् रधहिंसासंराद्ध्योः इत्यस्य च रधादित्वात् पूर्ववद्विभाषया इम्॥ २८॥

निष्कोषितव्यान्निष्कोष्टुं प्राणान् दशमुखात्मजात्।
आदाय परिघं तस्थौ वनान्निष्कुषितद्रुमः॥ ३०॥

ज०म० निष्कइत्यादि। दशमुखात्मजाहवात् प्राणान्निष्कोषितव्यान् अपनेतव्यान् अपनयार्हान् निष्कोष्टुं अपनेष्यामीति परिघमादायतस्थौ निरःकुषइति विभाषेट् निष्कुषितद्रुमः वनादपनीतवृक्षः इरिच्छायामितीट्॥ ३०॥

भ० निष्कइत्यादि। दशमुखात्मजात् अक्षात् निष्कोषितव्यान् आकर्षणयोग्यान् प्राणान् निष्कोष्टुं अपहर्त्तुं परिघं आदाय गृहीत्वा कपिः तस्थौ कीदृशः वनात् निष्कुषिता आकृष्टाद्रुमा वृक्षा येन पूर्व्ववत् निःपूर्व्वकुषोवेत् नेमृडोत्वोदिदेम्इति क्तेनेम् निषेधस्तत्र निष्कुषवर्जनात्॥ ३०॥

एष्टारमेषिता संख्ये सोढारं सहिता भृशं। रेष्टारं रेषिनं व्याघ्रेडाष्टाक्षः प्रस्खलंसतीः॥ ३१॥

ज०म० एष्टेत्यादि। कपिं युद्धेच्छेष्टारं एषिता एषणशीलोऽक्षः तासीष्येइम् गमीक्वेति षष्ठीप्रतिषेधः सोढारं प्रहरणस्य सहितारं सहिता भृशं सहनशीलः रेष्टारं हिंसकं रेषितुं हिंसितुं रोष्टा रोषणशीलः प्रस्खलंषतीर्यास्तत् विभ्रवान् रक्तिरूपं सर्व्वंषतीषष्टेत्यादिना वेट्॥ ३१॥

एष्टेत्यादि। अक्षः संख्ये युद्धे एष्टारं हिंसकं हनूमन्तं एषितुं भ०
हिंसितुं अश्वसमूहान् व्याजत् क्षिप्तवान् अक्षुर्द्धये यो कीदृशं
एष्टारं इच्छाशीलं युद्धस्येत्यर्थात् सोढारं सहनशीलं भृशमत्यर्थं
सोऽपि एषिता एषणशीलः सहिता सहनशीलः रोष्टा रोषण
शीलः इषुसुभावध्दे सहनकुशलो रिपवधे इडभाव चकारात्
वधे वेमुषहेत्यादिना वेम्॥ २१॥

अक्षैर्दिदेविषुं संख्ये दुद्यूषुः परिघं कपिः। अर्दिधिषु-
र्यशःकीर्त्तिमीर्त्सुं वृक्षैरताडयत्॥ २२॥

अक्षैरित्यादि। कपिः अर्दिधिषुः यशोवर्द्धितुमिच्छुः परिघं दुद्यू- ज०म०
षुः परिघेण क्रीडितुमिच्छुः अक्षं वृक्षैरताडयत् हतवान् कीदृशं
अक्षैर्दिदेविषुं क्रीडितुमिच्छं कीर्त्तिमीर्त्सुं वर्द्धितुमिच्छुं दिवेर्दिवशब्द-
स्य धुज्जुवावित्यस्य च सनीवन्तर्द्धेत्यादिना ऽविकल्पितेट् तत्र दिवे
रिडभावपक्षे छ्वोः शूठ् अधेराप्नृप्यृधामीदितीत्वं अभ्यासलो-
पश्च॥ २२॥

अक्षैरित्यादि। कपिः संख्ये युद्धे वृक्षैरक्षमताडयत् अक्षं भ०
कीदृशं अक्षैर्दिदेविषुं क्रीडितुमिच्छन्तं ईर्त्सुं वर्द्धयितुमिच्छुं कपिः
कीदृशः परिघेण दुद्यूषुः क्रीडितुमिच्छुः दिवोऽधेर्वेति करणे तृती-
या यशोऽर्दिधिषुः वर्द्धयितुमिच्छुः दिवुभीवादेरि अस्यविषु
पूर्णुभरेत्यादिना इमन्तत्वात् सनीवेम् इमोऽभावपक्षे छ्वोः शूठा-
वित्यादिना ऊठ् अधुरद्धौ पूर्वेण सनीवेम् आचक्षतादेरितादिर्दि

रित्यकारस्य आदेशवद्भावेऽरति रेफस्य च न ह्रिलं अनिम्पचे अपर्धापामोर्धेदति ईर विलोपस्य असाभूतन्यायेऽव वोध्यः ॥ २२ ॥

भूयस्तं धिषुमाह्वय राजपुत्रं दिदम्भिषुः। अहंस्त तः समूर्च्छावान् संग्रिश्रीषुरभूद्ध्वजं ॥ २३ ॥

ज०म० भूयइत्यादि। तं राजपुत्रं अक्षं धिषुं दम्भितुं वञ्चयितुमिच्छु भूयः पुनरपि दिदम्भिषुः वञ्चयितुमिच्छुः आह्वयागच्छेत्यहन् हत वान् ततः सोऽक्षः मूर्च्छावान् मूर्च्छायुक्तः ध्वजमात्मीयं संग्रिश्रीषुः संश्रयितुमिच्छुः अभूत् भूतः अत्र दम्भेः श्रयतेश्च सनीवन्तर्द्धेतीट् अत्र श्रयतेरनिट्पचे अज्झनगमांसनीति दीर्घः द्वितीयस्य च दम्भेश्च अभ्यासलोपः दम्भेर्हल् ग्रहणस्य जातिपरत्वाच्चिद्रुमि ति कित्त्वे अनुनासिकलोपः एकाचोवशइति भष् खरिचेति चत्वं ॥ २३ ॥

भ० भूयइत्यादि। कपिसमचं आह्वय आगच्छ युद्धे इत्युक्त्वा भूयः पुनरपि अहन् हन्तेर्लुङि कीदृशं धीषु दम्भं कर्त्तुमिच्छं अच दिदम्भिषुः दम्भं कर्त्तुमिच्छुः ततः महारानन्तर सोऽक्षोध्वजं संग्रिश्रीषुः आश्रयितुमिच्छुः सन् मूर्च्छावान् मूर्च्छितोऽभूत् भ्रस्ज श्रीत्यादिना दम्भेः श्रयतेश्च सनीवेम् दम्भेरनिम्पचे दम्भायावि ति अपर्दृलं विलोपस्य अनकारनिर्देशात् नस्य लोपः अभाम्य चेति दस्य धः श्रयतेर्वोऽज्झनिङ्गमामिति दीर्घः॥ २३ ॥

आश्वस्याथः क्षणाल्लोकान् बिभ्रक्षुरिव तेजसा।
रुषा बिभ्रज्जिपुप्रख्यं कपिं वार्णैरवाकिरत्॥ २४॥

आश्वेत्यादि। क्षणात् क्षणमात्रेणाश्वस्य संज्ञां लब्ध्वा लोकान् जगत् तेजसा क्रोधात्थेन बिभ्रक्षुरिव अथ स कपिं वार्णैरवाकिरत् संछादितवान् कीदृशं बिभ्रज्जिपुप्रख्यं अग्नितुल्यं बिभ्रज्जिषुः बिभ्रक्षुरिति सनीवन्तर्द्धेत्यादिना विभाषेट् तत्रानिट्पक्षे स्कोरिति सलोपः अस्येति षः इट्पक्षे सकारस्य जश्त्वं सुलभं॥ २४॥ ज॰म॰

आश्वस्येत्यादि। ततोऽक्षः क्षणात् आश्वस्य चेतनां प्राप्य वार्णैः कपिमवाकिरत् आच्छादितवान् कीदृशः तेजसा लोकान् बिभ्रक्षुरिव क्रोधलक्षणमत्र तेजः रुषा क्रोधेन बिभ्रज्जिपुप्रख्यं अग्नितुल्यं भ्रस्जश्नोति भ्रस्जेः सनि वेम्॥ २४॥ भ॰

संयुयूषुं दिशो वार्णैरक्षं यियविषुर्द्रुमैः। कपिर्मायामिवाकार्षीद्दर्शयन् विक्रमं रणे॥ २५॥

समित्यादि। वार्णैर्दिशः संयुयूषुं मिश्रयितुमिच्छुं अक्षं कपिः द्रुमैर्यियविषुः योतुमिच्छुर्मायामिवेन्द्रजालमिवाकार्षीत् कृतवान् रणे विक्रमं दर्शयन् योतेः सन् सनीवन्तर्धेति विभाषेट् ओःपुयण्ज्यपरे इतीत्वं अज्झनगमां सनीति दीर्घः॥ २५॥ ज॰म॰

समित्यादि। कपीरणे विक्रमं दर्शयन् मायामिव अकार्षीत् इन्द्रजालमिव दर्शितवानित्यर्थः कीदृशः द्रुमैरक्षं यियविषुः मिश्र भ॰

वितुमिच्छुः अतः कीदृशं वाणैरेव दिग्धः संयुयूषुं मिश्रयितुमिच्छुं अस्त्रजालीति शेषः ॥ २५ ॥

वानरं प्रोर्णुनविषुः शस्त्रैर्योधा विदिद्युते । तं प्रोर्णुनूषुरुपलैः सवृक्षैराबभौ कपिः ॥ २६ ॥

ज०म० वानेत्यादि । वानरं प्रोर्णुनविषुः छादयितुमिच्छवः विदिद्युते विद्योतते स्म द्युतिस्वाप्योरिति अभ्यासस्य कपिरपि तमपि उपलैर्वृक्षसहितैः प्रोर्णुनूषुः समवरीतुमिच्छुराबभौ भाति स्म ऊर्णोतेः पूर्ववदिभावेट् इट्पक्षे गुणः अन्यत्र अज्झनेति दीर्घः उभयत्र नन्द्राइति रेफेण द्विरुच्यते ॥ २६ ॥

भ० वानरमित्यादि । योधाः शस्त्रैर्वानरं प्रोर्णुनविषुः आच्छादयितुमिच्छवः सन् विदिद्युते दीप्तः द्युतस्वाप्योःरित्यभ्यासस्य कपिरपि वृक्षसहितैरुपलैः पाषाणैस्तमपि प्रोर्णुनूषुः आच्छादयितुमिच्छुः सन् बभौ दीप्यते स्म ऊर्णुञ् आच्छादने अस्त्रजालीत्यादिना शेषः ॥ २६ ॥

त्वां जिज्ञापयिषू शक्तिं बुभूर्षू नु जगन्ति किं । शस्त्रैरित्यक्षपातौ तौ पश्यतां बुद्धिमावहे ॥ २७ ॥

ज०भ० त्वामित्यादि । तौ कपिराक्षसौ किं त्वां शक्तिं जिज्ञापयिषू बोधयितुमिच्छू इव बुभूर्षू बिभर्तुमिच्छू जगन्ति किं नु पौनःपुन्येन भर्तुं पूरयितुमिच्छू इत्येवं बुद्धिमावहे पश्यतां प्रेक्षकाणां अक्षपातौ ज्ञानकौ

पुनर्वनं बभञ्ज कीदृशं पक्षिभिः पक्षिभिः क्षुधित्वा क्षुधितैर्भूत्वा अध्युषितं कृतनिवासं वसतिक्षुधोरितीट् ॥ ३९ ॥

भ० पवितइत्यादि। कपिः क्षुधित्वा क्षुधितोभूत्वा पयोनिधौ पूत्वा स्नात्वा फलादिकं भुक्त्वा चेत्यर्थात् शीतलैरनुगुणैर्वातैः पवितस्य क्लमः सन् भूयः पुनरपि तद्वनं बभञ्ज भग्नवान् कीदृशं पक्षिभिः पक्षिभिरध्युषितं अधिष्ठितं वनं भक्ष्याभावात् पूङः पूञश्चेति क्त्वक्त्वोर्वेम् पूङ्धीधृषेत्यादिना पुः पूञ्इदितइति क्त्वाचोवेम् वसः क्षुधेच क्षुधवसपूजार्थाश्च इतीम् ॥ ३९ ॥

उच्चैरञ्चितलाङ्गूलः शिरोऽञ्चित्वेव संवसन्। दधद्विलुभितं वातैः केशरं वह्निपिङ्गलं ॥ ४० ॥

ज०म० उच्चैरित्यादि। उच्चैरूर्द्ध अञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य शोभनविन्यासेन स्थितत्वात् शिरोऽञ्चित्वेव समवसन् अनमत्वात् पूजयित्वेव शिरोविभागः अञ्चेःपूजायामिति विभाषेट् वह्निपिङ्गलञ्च केशरं सटां दधत् बिभ्रत् वातैर्विलुभितं आकुलितं लुभोविमोहनइतीट् विमोहनमाकुलीकरणं ॥ ४० ॥

भ० उच्चैरित्यादि। कपिः कीदृशः उच्चैरञ्चितलाङ्गूलः ऊर्द्ध अञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य सतया शिरोऽञ्चित्वेव अनमत्वात् पूजयित्वेव संवसन् विभाषः वातैर्विलुभितं चञ्चलीकृतं वह्निवत्पिङ्गलं केशरं दधत् धारयन् ईदृशोवनं बभञ्जेति पूर्वेणान्वयः क्षुधवसपूजार्थाञ्चागामञ्चार्थमनुसरति इम् नेदित्पूजार्थाञ्चेरिति नलोपाभावः ॥ ४० ॥

र्थंमचरत् वेवीयीत्यादिना विभाषेद् चकल्पदकत्थमिति च लिङ्निमित्त इति यक् हेतुहेतुमद्भावश्च लिङोनिमित्तं॥४४॥

यद्येत्यादि। यदि रक्षःपतेरावणस्य स्वयं योद्धुमभिप्रायो भ० ऽकल्पस्यत् कश्चित्तं तमप्यद्याहमकर्त्स्यं अच्छेत्स्यं इति वदन् कपि रचरत् चरति स्म लृपृक्लृपकल्पने पूर्ववत् वृतादिभ्यात् स्यस नेम् तनोपक्षिदि नृत्कृदिति वेम्॥४४॥

हते तस्मिन् प्रियं श्रुत्वा कल्प्ता प्रीतिं परां प्रभुः।
तोषोऽद्यैव च सीतायाः परस्येतस्ति कल्प्स्यति॥४५॥

हतइत्यादि। हते तस्मिन् रक्षःपतौ प्रियं श्रुत्वा प्रभुः रामः अ०म० परां प्रीतिं कल्प्ता अनचिता भवानभविता वर्षः धातारकर्म कलात् सीतायाश्चाद्यैव चेतसि तोषः परोमहान् कल्प्स्यति संप स्यते तासिचक्लृपरतीट्प्रतिषेधः लुटिचक्लृपइति परस्मैपदं॥४५॥

हतेइत्यादि। तस्मिन् रावणे हते सति प्रियं श्रुत्वा प्रभूरामः भ परां प्रीतिं कल्प्ता प्राप्स्यति नेम्पेक्षाइति तेनैव पं किम च अधुनैव च सीतायाश्चेतसि परस्तोषः कल्प्स्यति भविष्यति पूर्ववत् वृतादिभ्यात् स्यसनेम् इति वदन् कपिरचरदिति पूर्वेणान्वयः ॥४४॥

आह्वय रावणोऽयोधद्येन्द्रजितमन्तिकात्। वने मत्तइव क्रुद्धोगजेन्द्रः प्रधनेऽभ्यटन्॥४६॥

ज०म० आहूयेत्यादि। अथ रावणः इन्द्रजितमाहूय अग्निकमवोचत् किमवोचदित्याह वने मत्तइव यथा गजेन्द्रोमत्तः युद्धावने पर्य्यटन् द्विषामन्तं गतवान् तथा त्वं प्रधनेषु संग्रामेष्वटन् द्विषामन्तं ययाथेति वक्ष्यमाणश्लोकेनान्वयः ॥ ४६ ॥

भ० आहूयेत्यादि। अथानन्तरं अग्निके समीपे इन्द्रजितमाहूय रावणोऽवोचत् उक्तवान् किमवोचदित्याह त्वं क्रुद्धः सन् प्रधनेषु युद्धेषु अटन् परिभ्रमन् वने मत्तोगजेन्द्रइव द्विषामन्तं ययाथेत्यग्रिमश्लोकेनान्वयः मदोभिर्य्यञ्जिदर्थे नेम्‌ञोग्धीदिति ईदित्वान्नेम् सृत्वाद्योदित्यादौ मदवर्ज्जनाच्च तस्य नः क्रुधधोकोपे आदित्वान्नेम् ॥ ४६ ॥

ययाथ त्वं द्विषामन्तं भूयोयातासि चासकृत्। अशकथ जेतुं त्वं देवान् मायाः सस्मर्थ संप्रति ॥ ४७ ॥

ज०म० ययेत्यादि। न केवलं ययाथ भूयः पुनरपि यातासि यास्यसि यातेः क्रादिनियमात्प्राप्तस्येटः अचस्तास्वत्थल्यनिटोनित्यमिति प्रतिषेधः तस्य हि तासौ नित्यमनिट्त्वं अजन्ताधातवोऽनुदात्ताइति वचनात् देवान् जेतुं त्वमसकृत् बहुधा अशकथ अशोपि उपदेशेत्वतइति थलीट्प्रतिषेधः अकेस्तासौनित्यानिट्त्वं अकिस्तुकान्ताइति वचनात् मायाश्च कूटयुद्धानि सम्प्रति युद्धे सस्मर्थ ज्ञातवानसि ऋतोभारद्वाजस्येतीट्प्रतिषेधः ॥ ४७ ॥

यथायेत्यादि। असकृत् वारंवारं दिवाममनं ययाथ प्राप्तवा भ॰
नसि सजहृयजिति वेम्लं भूयः पुनरपि याताथि च यास्यथि च
नेमेकाचिति नेम्लं देवाम् जेतुं प्रस्थ प्रक्रोभूतोऽपि सजहृय
जिति वेम् संयति युद्धे मायावनीः सस्मर्थ स्मृतवानसि नेच्छतस्थप
इति नेम्॥ ४७॥

त्वं ससर्जिथ शस्त्राणि दद्रष्ठारींश्च दुःसहान्। शस्त्रै
राद्रिथ शस्त्राणि त्वमेव मरुतामपि॥ ४८॥

त्वं येत्यादि। शस्त्राणि त्वं ससर्जिथ चिप्तवानसि अरींश्च दुःस ज॰म॰
हान् युध्यतः ददृष्ठ दृष्टवानसि न पलायितोऽसि विभाषासृजि
दृशोरिति थलि विभाषेट् अनिट्पचे सृजिदृशो र्भल्यमकिति वल
हुले मरुतामपि मध्ये त्वमेव शस्त्राणि परकीयानि शस्त्रैः स्वैरा
दिथ जग्धवानसि दृजत्यर्तिव्ययतीनामित्यदेरिट्॥ ४८॥

त्वमित्यादि। त्वं शस्त्राणि च ससर्ज्जिथ चिप्तवानसि सृजदृ भ॰
शेति वेम् दुःसहानरीन् ददृष्ठ दृष्टवानसि पूर्ववदेम्लात् पचेऽ
निम् सृजदृशोति चक् वर्द्धाकिदिति चतोरः स्वकीयैः शस्त्रैः त्वमे
वाद्वितीयः मरुतामिन्द्रादीनामपि शस्त्राणि आदिथ भचित
वानसि सृजदृशेत्यादौ अदवर्त्तनामेम्सुमित्यादिना नियमात्
नित्यमिम्॥ ४८॥

स त्वं हनिष्यन् दुर्बुद्धिं कपिं व्रज ममाज्ञया। माना
श्वीरालसीर्मायाः प्रस्तावीर्मा न विक्रमं॥ ४९॥

मानेत्यादि। मत्राक्षाचि त्वा न घातीन् न सन्धास्यसि अपि तु म०
सन्धानं करिष्यसेव इत्थं अरिं शत्रुं मा न धावीर्न न कम्पयिष्यसि
अपि त्वमवश्यमेव वानरं मा न वधीः वधं न करिष्यसि अपि त्वम्
अवश्यमेव तस्मात्त्वं निर्भयः सन् तूर्णं शीघ्रं प्रयाहि गच्छ पुम्नृणमाक्षेप
पौनःपुन्ये धुम्नृणकमे आभ्यां सूत्राभ्यां वेरितीम् यमोऽपरती
संपूर्वो बन्धनार्थः यमरमेति इम्वनौ जिघृत्यमेत्यादौ अयन्तो
त्वमायमइति न सं कर्त्तुः फलवत्त्वाभावात् इति रावणोऽवोच
दिति पूर्वेण सम्बन्धः॥ ५०॥

अनंसीच्चरणौ तस्य मन्दिरादिन्द्रजिद्व्रजन्। गते तस्मिन्नुपारंसीत् संरम्भाद्रक्षसां पतिः॥ ५१॥

अनंसीत्यादि। एवमुक्त इन्द्रजित् मन्दिरात् व्रजन् गमिष्यन् ज०म०
वर्त्तमानसामीप्ये वर्त्तमानवदिति लट् तस्य पितुश्चरणावनंसीत्
नतवान् पूर्ववत्सगिटौ गते तस्मिन् रक्षसां पतिः रावणः संरम्भात्
क्रोधात् उपारंसीत् निवृत्तवान् पूर्ववत्सगिटौ रमेरुपाच्चेति तिप्
॥ ५१॥

अनंसीदित्यादि। एवमुक्त इन्द्रजित् मन्दिरात् व्रजन् गच्छन् भ०
तस्य रावणस्य चरणौ अनंसीत् प्रणनाम तस्मिन्निन्द्रजिति गते
सति रक्षसां पतीरावणः संरम्भात् क्रोधात् उपारंसीत् निवृत्तः
उभयत्र यमरमनमेति इम्वनौ॥ ५१॥

इन्द्रजिद्विक्रमाभिज्ञोमन्यमानो वानरं जितं। संचिस्तयिषमाणोऽगान्मायां व्यञ्जिजिषुर्द्विषः॥ ५२॥

ज०म० इन्द्रेत्यादि । वानरं जितं मत्वानोऽवगत्य प्रतिविक्रमाभिज्ञः समगात् गतवान् द्विषः शत्रून् विक्रविक्रमाः उपहर्त्तुमिच्छन् पूर्व्ववत्समदति तद्मायां यश्रिजिपुः यशोकर्तुमिच्छुः शिपूक्त माशायनोलोट् तथा श्नेनंश्रादति नकारोनद्दिश्यते ॥ ५२ ॥

भ० इन्द्रजिदित्यादि । इन्द्रजित् सविक्रमाभिज्ञः ग्रतएव वानरं जितमभिभूतं मत्वा आनम् द्विषः प्रति: संविक्रविक्रमाः उपहर्त्तुमिच्छुः सन् मायां यश्रिजिपुर्य्यशोकर्त्तुमिच्छुः सन् अगात् गतः श्रिकपूक्तित्यादिना श्रिकोऽन्वय समरम् द्विष इति सम्बन्धे षष्ठी ॥ ५२ ॥

जगत्पिपविषुर्व्वायुः कल्पान्तइव दुर्द्धरः । लोकाना
मिभ्रिपोस्तुल्यः क्रतान्तस्य विपर्य्यये ॥ ५३ ॥

ज०म० जगत्यादि । कल्पान्ते युगान्ते वायुरिव दुर्धरः जगत्पिपविषुः पवितुमुत्क्षेप्तुमिच्छुः विपर्य्यये विनाशकाले लोकानामिभ्रिपोः भक्षयितुमिच्छोः क्रतान्तस्य तुल्योऽगादिति पूर्व्वेण सम्बन्धः पूर्व्ववदिट् ॥ ५३ ॥

भ० जगदित्यादि । कीदृशः जगत् भुवनं पिपविषुः पवितुमुत्क्षेप्तुमिच्छुः कल्पान्ते वायुरिव दुर्द्धरः धर्त्तुमशक्य विपर्य्यये जगतां विनाशकाले लोकान् आभिभ्रिषोः खादुमात्मसात्कर्त्तुमिच्छोः क्रतान्तस्य यमस्य तुल्यः ईदृशइन्द्रजिदगादिति पूर्व्वेणान्वयः

पूरणीये अमूढ़ स्यान्निर्लज्जयोः आभ्यां सनः श्रिकृपूङ्ङित्यादिना इम् आशिशिषोर्भक्षयितुमिच्छोरिति केचित् तन्न साधु सूत्रे अमूढ़ इत्यूदनुबन्धनिर्देशात् ॥ ५३ ॥

वने चिकरिषोर्वृक्षान् बलं जिगरिषुः कपेः। लस-द्विचित्रशस्त्रौघः संग्रामोमूर्त्तिमानिव ॥ ५४ ॥

वनइत्यादि। वने वृक्षांश्चिकरिषोः विक्षेप्तुमिच्छोः कपेर्बलं सामर्थ्यं जिगरिषुः अपनेतुमिच्छुः कयोरुगन्तत्वात् सनि ग्रहगुहोश्चेति प्रतिषेधे प्राप्ते इट्सनिवेति विकल्पे किरश्चपञ्चभ्यइतीट् किरतेरिटो दीर्घत्वं नेच्छन्तीति न दीर्घः लसन् शोभमानोविविधोवज्रप्रकारः शस्त्राणामायुधानामोघः समूहोयस्य समूर्तिमान् शरीरी संग्रामइव इन्द्रजिद्गादिति पूर्व्वेणान्वयइत्यर्थः ॥ ५४ ॥ ज० म०

वनेइत्यादि। पुनः कीदृशः वने वृक्षान् चिकरिषोर्विक्षेप्तुमिच्छोः कपेर्बलं सामर्थ्यं जिगरिषुर्भक्षयितुं नाशयितुमिच्छुः लसन् दीप्यमानोविचित्रोनानाविधः शस्त्रसमूहोयस्य मूर्त्तः संग्रामइव इन्द्रजिद्गादिति पूर्व्वेण सम्बन्धः कृञ्विक्षेपे गृञ्निगरणे आभ्यां सनः पूर्व्ववदिम् ॥ ५४ ॥ भ०

रोदिनि क्षेव चायाति तस्मिन् पक्षिगणः श्रुत्वा। मुक्तकण्ठं रुतान् वृक्षान् बन्धून् बन्धोरिवागमे ॥ ५५ ॥

ज०म० रोदीत्यादि। तस्मिन्निन्द्रजिति याकाग्याग‌च्छति सति पक्षिगणः हतान् वृक्षान् कपिनाशितान् श्रुत्वा शोकेन मुक्तकण्ठं सशब्दं नामयाहं रोदिति स्मेव रुदितवानिव नामग्रहणपूर्व्वया रोदन क्रियया व्याप्यमानत्वात् वृक्षाणां कर्म्मसंज्ञा रुदादिभ्यः तीट् बन्धून् बन्धोरिव यथा बन्धोरागमने कश्चित् बन्धून् रोदिति ॥ ५५ ॥

भ० रोदितीत्यादि। तस्मिन्निन्द्रजिति आयाति आगच्छति सति पक्षिगणः श्रुत्वा शोकेन मुक्तकण्ठं सशब्दं यथा स्यात्तथा हतान् हनूमता विनाशितान् वृक्षान् रोदिति स्मेव क्रन्दति स्मेव यथा बन्धागमने लोको हतान् बन्धून् रोदिति सशब्दरोदनक्रियायां रुदिः सकर्म्मकः रुद्भ्यायोह्रस्वश्चेतीम् हनलोगतौवधे औदित्वा स्मेम् ॥ ५५ ॥

आश्वसीदिव चायाति तद्वेगपवनाहतं। विचित्रस्तवकोद्भासि वनं लुलितपल्लवं ॥ ५६ ॥

ज०म० आश्वेत्यादि। तस्मिन्नायाति वनं तद्वेगपवनाहतं सत् आश्वसीदिव सञ्जीवितमिव लक्षि रूपं यतोविचित्रस्तवकोद्भासि लुलितपल्लवञ्च जातं पूर्व्ववदिट् ॥ ५६ ॥

भ० आश्वसीदित्यादि। तस्मिन्नायाति सति वनञ्च आश्वसीदिव संजीवितमिव श्वसप्राणने धौ रुदादयसीति ईम् कीदृशं तस्य हनूमतो वेगवायुना आहतं आघ्रातमत एव विचित्रेषु स्तवकेषु उद्भासमानं यद्वादित्वात्सेम् लुलितं मनोहरं पल्लवं यस्य स तथा ॥ ५६ ॥

न प्राणिषि दुराचार मायानामीशिषे न च। नेडिषे
यदि काकुत्स्थं तमूचे वानरो वचः॥ ५७॥

इतीडधिकारः॥

नप्रेत्यादि। वानरस्तमागच्छन्तमिदं वचनमूचे हे दुराचार ज०म०
न प्राणिषि न जीवसि अनचेत्यस्य रूपं पूर्ववदिट् अनितेरिति
णत्वं नच मायानामीशिषे नेशिता भवसि ईशः सइति इट् अधी
गर्थेति कर्म्मणि षष्ठी यदि काकुत्स्थं नेडिषे न स्तौषि ईडजनोर्ध्वे
चेति चकारात्सेचेतीट्। इतीडधिकारः॥ ५७॥

नप्रेत्यादि। वानरो हनूमान् तमिन्द्रजितं वच ऊचे किं वच भ०
इत्याह हे दुराचार त्वं काकुत्स्थं यदि नेडिषे न स्तौषि तदा न
प्राणिषि न जीवसि न च मायानामीशिषे मायानामीश्वरो न भवि
ष्यसि माया यथेष्टं न च विनियोक्ष्यसे इति वा कर्म्मणि षष्ठी धातू
नामनेकार्थत्वात् विनियोगार्थता वर्त्तमानसामीप्येऽपि वर्त्तमान
वद्विवक्ष्यतइति न्यायात् सर्व्वत्र की अनधुप्राणने रुद्धोऽयइति इम्
ईडस्तुतौ आभ्यां सर्व्वोरस्येमिति इम्। इतीडधिकारः॥५७॥

ससैन्यश्छादयन् संख्ये प्रावर्त्तिष्ट तमिन्द्रजित्।
शरः क्षुरप्रैर्मायाभिः शतशः सर्व्वतोमुखः॥ ५८॥

इदानीं विसर्जनीयस्य सरत्वधिकृत्याह। ससैत्यादि। ज०म०
इन्द्रजित् ससैन्यः सबलः तं वानरं सर्व्वतः शरैः क्षुरप्रैः भल्लैः

च्छादयन् मुहुः वलं मायाभिः अततोऽनेकधा संख्ये प्रावर्त्तिष्ट प्रवृत्तः कुक्ति रूपं तच वर्षैन्यम्च्छादयन् इति विसर्जनीयस्य वदति सत्वं हकारे परे सूत्रं अरैः क्षुरप्रैरिति अमापवादः अर्पररोमरि विसर्जनीयस्य विसर्जनीयः विसर्जनीयस्य विकारमित्यर्थः माया भिः अतश्चः सर्व्वतइति चाअरोति विकल्पः विसर्जनीयःसका रोवा ॥ ५८ ॥

भ० अतः परं विसर्जनीयसत्वाधिकारः। सकारपदमादेशमा त्रोपलक्षणं क्रमते विसन्ध्यधिकारः। सर्वैन्यइत्यादि। इन्द्रजित् सर्वैन्यः सैन्यैः सह अरैः क्षुरप्रैश्च सर्व्वतोमुखमारंवारं तं वानरं छादयन् संख्ये युद्धे मायाभिः अतश्चः अतं अतं वारान् प्रावर्त्तिष्ट प्रवृत्तः सर्वैन्यश्छादयन्नित्यत्र वेःसोऽप्रसन्धितेरिति विसर्गस्य सः स्तुसुभिरिति तालव्यत्वं अरैः क्षुरप्रैरित्यत्र कखपफयोर्मन्या वित्यस्य न विषयः अप्रसन्तइत्यस्यानुवर्त्तनात् विभक्तिव्यत्ययेन अप्रसन्तयोरिति कखपफयोर्विशेषणात् परे तु अषपरयोःस्याज्जि ष न स्यादिति जिह्वामूलीयनिषेधं षस्परयोर्न स्यादित्यनेन उप ध्मानीयनिषेधश्चाक्तः क्षुरप्रैर्मायाभिरित्यत्र रिचोऽवेइति विसर्ग स्य रेफः यद्यपि रवेइति क्रते इष्टसिद्धिः स्यात्तथापि इचइति क्रतस्य साफल्यमाह देवीदासचक्रवर्त्ती यथा क्वचिदपवादविषये ऽप्युत्सर्गोऽपि प्रवर्त्ततइति न्यायात् अभोभगोऽघोभ्योऽवेत्युविस्या दिसूत्रविषये प्रवृत्त्याशङ्कानिरासः तेन हि न्यायेन दधिना पति नेत्यादिसिद्धं मायाभिः अतश्चइत्यत्र अधिश्रचित्यस्य विषयः सर्व्व तोमुखइत्यत्र अतोऽह्न्युरित्यस्य विषयः॥ ५८ ॥

वानरः कुलशैलाभः प्रसह्यायुधशीकरं। रक्षसा
मान् यशस्काम्यंस्तमस्कल्पानदुद्रुवत् ॥ ५८ ॥

वानेत्यादि। वानरः कुलशैलाभः संग्रामे स्थिरत्वात् आयुधं अ॰भ॰ शीकरमिव नैरन्तर्य्येण पतनात् प्रसह्याभिभूय कुःपोः कःपौ चेति जिह्वामूलीयोपध्मानीयौ रक्षसामान् कुत्सितराक्षसान् पाश्येपाशप् स्वार्थिका अपि प्रकृतितोलिङ्गवचनान्यतिवर्त्तन्ते यशस्काम्यन् आत्मनो यश इच्छन् अत्र मकारे परतोमन्त्व्यप्रत्ययानिति लुप्तं विसर्जनीयषकारौ च पूर्व्वस्यानुनासिकः तमस्कल्पान् ईषदसमाप्ततमसः कुःपोरपवादः सोपदादाविति सकारः तत्र पाशकल्पकाम्येष्विति परिगणनं अदुद्रवत् ढौकते स्म णिश्रीत्यादिना चङ् ॥ ५८ ॥

वानरइत्यादि। वानरः कुलपर्व्वततुल्यः क्षोभरहितत्वात् भ॰ आयुधं शीकरमिव नैरन्तर्य्येण पतनात् प्रसह्य बोढ़ा रक्षसामान् कुत्सितरक्षांसि अदुद्रुवत् ढौकते स्म द्रावितवानित्यर्थः द्रुगतौ टो णिश्रिद्रुद्रुकमइति अङ् कीदृशः यशस्काम्यन् आत्मनो यश इच्छतीति लेःकाम्यक्लेच्छायामिति काम्यक् ततः शतृः कीदृशान् तमस्कल्पान् अन्धकारतुल्यान् त्यादेर्षोमेदृति कल्पः कुत्सितानि रक्षांसि रक्षसामाः पाशःकुत्सायामिति पाशः पुंस्त्वमभिधानात् राजानमिच्छति राजीयतीत्यादिषु नोलुपूर्वेधात्विति त्यमेनैवेष्टसिद्धौ नलोपार्थं नलोपश्चकेइति कृतं ज्ञापयति सुप्तविभक्तिकस्य विरामाश्रितकार्य्यस्यानित्यमिति तेन रक्षसामादिषु

विसर्गाभावः किम्वा रत्वस्य ग्राह्योऽसमीपादित्वात् विदुरः किम्वा सेतुकस्पफेष्वित्यस्य योगविभागात् वाशब्दस्य व्यवस्थावाचित्वाच्च पाशकाम्यकल्पेषु विसर्गस्य नित्यं सकारः ॥ ५८ ॥

धनुष्पाशभृतः संख्ये ज्योतिष्कल्पोरुकेसरः। दुधाव
निर्नमस्कारान् राक्षसेन्द्रपुरस्कृतान् ॥ ६० ॥

जं०म० धनुरित्यादि। धनुष्पाशभृतः कुत्सितधनुर्धरान् राक्षसान् ज्योतिष्कल्पोरुकेसरः अग्नितुल्यदीर्घसटो वानरः इणःषः इति पाशादिष्वेव विसर्जनीयस्य षत्वं दुधाव कम्पितवान् यस्मान्निर्नमस्कारान् अप्रणामान् राक्षसेन्द्रेणेन्द्रजिता पुरस्कृतान् अग्रतः स्थापितान् नमस्पुरसोर्गत्योरिति विसर्जनीयस्य सकारः इणउत्तरस्य तु विसर्जनीयस्य स एवाधिक्रियते तत्र नमःशब्दस्य साक्षात्प्रभृतिषु पाठात् पुरःशब्दस्य पुरोऽव्ययमिति गतिसंज्ञा ॥ ६० ॥

भ० धनुरित्यादि। वानरः संख्ये युद्धे तान् राक्षसान् दुधाव कम्पितवान् धूञ् कम्पे ठो कीदृशान् धनुष्पाशभृतः निन्दितधनुर्द्धरान् पूर्ववत्पाशः निर्नमस्कारान् नमस्कारवर्जितान् अप्रशस्तानित्यर्थः राक्षसेन्द्रपुरस्कृतान् इन्द्रजिताऽग्रतः स्थापितान् कीदृशः ज्योतिष्कल्पोरुकेसरः अग्नितुल्यवर्णविपुलसटः पूर्ववत् कल्पः सर्वत्र पूर्ववत् विसर्गाभावः वेःसकारो वा तत्र बलात्परस्य सत्व षत्वमभिविष्यतन्यदत्यच व्याख्यातं ॥ ६० ॥

स्वामिनोनिष्क्रयं गन्तुमाविष्कृतबलः कपिः। रराज
समरे शत्रून् घ्नन् दुष्कृतबहिष्कृतः॥ ६१ ॥

स्वामीत्यादि। स्वामिनः सुग्रीवस्य निष्क्रयमानृण्यं गन्तुं ज०म०
शत्रून् घ्नन् विनाशयन् कपिः समरे रराज आविष्कृतबलः प्रकटि
तसामर्थ्यः दुष्कृतबहिष्कृतः दुष्कृतं पापं बहिःकृतमनेनेति वाहि
ताग्न्यादिषु द्रष्टव्यं सर्व्वत्र इउदुपधस्य चेत्यनेनाप्रत्ययविसर्ज
नीयस्य षत्वं॥ ६१ ॥

स्वामीत्यादि। कपिः समरे संग्रामे शत्रून् घ्नन् विनाशयन् भ०
रराज दीप्यते स्म कीदृशः स्वामिनः सुग्रीवस्य निष्क्रयमानृण्यं
गन्तुं आविष्कृतं प्रकाशितं बलं सामर्थ्यं येन तादृशः दुष्कृतेन
पापेन बहिष्कृतस्त्यक्तः निष्पापइत्यर्थः दुष्कृतं बहिष्कृतं येने
ति वा पूर्व्वनिपातस्यानियमात् क्वचित् क्तान्तस्य परनिपातः आहि
ताग्न्यादेर्व्वेति परः दुर्निरावि‍र्बहिःप्रादुश्चतुरांषःकखपफेइति
परस्मचदर्शनात् निष्क्रयादिषु वेतुकखपफेवेत्यस्य वाशब्दस्य
व्यवस्थावाचित्वात् नित्यं सकारोबोध्यः विकल्पेऽपि न क्षतिः दुःखं
दुष्खञ्चेति द्विरूपदर्शनात् मूर्द्धन्यषत्वं पूर्व्ववत्॥ ६१ ॥

चतुष्काष्ठं क्षिपन् वृक्षान् तिरस्कुर्व्वन्नरीन्वणे। तिर
स्कृतदिगाभोगोदृक्षो बहुधा भ्रमन्॥ ६२॥

ज०म० चतुरित्यादि। चतसः काष्ठादिशोऽवशिष्यन् क्षेपयति क्रिया विशेषणं पूर्व्ववत् यत्नं चतसृषु दिक्षु वृक्षान् रणे भ्रमन् एकोऽपि बहुधा दृष्टो दृष्टः कपिः क्षिपत्रिति नैरादिकः शत्रींस्तिरस्कुर्व्वन् अभिभवन् तिरस्कृतदिगाभोगः अपनीतदिग्विस्तारः तिरसोऽन्यत रस्यामिति पक्षे सत्वं ॥ ६२ ॥

भ० चतुरित्यादि। स एकः कपीरणे भ्रमन् बहुधा दृष्टो जनै रित्यर्थात् किङ्कुर्व्वन् चतुष्काष्ठं वृक्षान् क्षिपन् चतसः काष्ठादिश आधारत्वेन यस्मिन् क्षेपणे क्रियाविशेषणमिदं चतसृषु दिक्षु वृक्षान् क्षिपन्नित्यर्थः अरीन् शत्रून् तिरस्कुर्व्वन् अभिभवन् तिर स्कृतदिगाभोगः आच्छादितदिग्विस्तारः पूर्व्ववद्विभाषया विस र्गस्य सकारः ॥ ६२ ॥

द्विष्कुर्व्वतां चतुष्कुर्व्वन्नभिघातं नगैर्द्विषां। बहिष्क रिष्यन् संग्रामाद्रिपून् ज्वलनपिङ्गलः ॥ ६३ ॥

ज०म० द्विष्कुर्व्वेत्यादि। असौ कपिराटीदिति वक्ष्यमाणेन सम्बन्धः कीदृशः द्विष्कुर्व्वतां द्वौ वारावभिघातं कुर्व्वतां द्विषां चतुष्कुर्व्वन् चतुरोवारान् नगैर्वृक्षैरभिघातं कुर्व्वन् द्विस्त्रिश्चतुरिति कृत्वोऽर्थ इति विसर्जनीयस्य षत्वं अरीन् संग्रामाद्बहिष्करिष्यन् अपने ष्यामीति इसुसोः सामर्थ्य इति विसर्जनीयस्य षत्वं पक्षे सामर्थ्यं चात्र प्रपेक्षानैकार्थीभावः बहिष्करिष्यन्निति इयोः परस्परव्यपेक्षत्वात् ॥ ६३ ॥

द्विरित्यादि। असौ कपिराटीदित्यपि मध्येनान्वयः किं कुर्व्वन् भ०
द्वौ वारौ अभिघातं कुर्व्वतां द्विषां नगैः पर्व्वतैश्चतुरो वारान् अभि
घातं कुर्व्वन् द्विस्त्रिश्चतुःकृत्वोऽर्थे इति सूत्रेण विभाषया कस्का
दित्वाद्रूपद्वयमिति परः समते इसोपाणावित्यादिना षाषा
दादित्वात् वा समासः। समासे सेतुकवेति रूपद्वयं निर्व्विरोधं
एवमसमासेऽपि कस्कपफेवेत्यस्य योगविभागः कार्य्यः समासपक्षे
षत्वं व्याख्यातमेव असमासेऽपि किलादित्यस्य योगविभागात्
षत्वं मनीषादित्वाद्वा संग्रामात् अरीन् प्रभून् बहिष्करिष्यन्
पूर्व्ववत् वेःषः षत्वञ्च ज्वलनवत् वह्निवत् पिङ्गलः॥ ६३॥

ज्योतिष्कुर्व्वन्निवैकोऽसावाटीत् संख्ये परार्द्धवत्।
तमनायुष्करं प्राप शक्रशत्रुर्द्धनुष्करः॥ ६४॥

ज्योतिरित्यादि। एकोऽपि ज्वलनपिङ्गलः ज्योतिष्कुर्व्वन्निव ज०म०
अग्निं दीपयन्निव पूर्व्ववत्पक्षे विसर्जनीयस्य षः परार्द्धवत् दिव
इव परार्द्धं द्युलोकः मध्याद्यसम्बन्धिन ऊर्द्ध्वभागस्योत्कृष्टत्वात्
तत्र भव इति परावराधमेति यत् संख्ये संग्रामे आटीत् परि
चक्राम इटइटीति सिचोलोपः तं वानरमनायुष्करं प्राणाप
हारिणं शक्रशत्रुरिन्द्रजित् प्राप प्राप्तवान् धनुष्करः धनुः करे
यस्येति नित्यं समासेत्यादिना षत्वं॥ ६४॥

ज्योतिरित्यादि। एकोऽसौ कपिः संख्ये परार्द्धवत् अत्युत्कृ भ०
ष्टसंख्याविशेषावच्छिन्नवत् ज्योतिष्कुर्व्वन् आटीत् परिचक्राम

परार्द्धवत् दिव्यवदिति अथमप्रुक्ता तं कपिं अक्षमपुरिन्द्रजित् प्राप कोदृशं न आयुः करोतीत्यनायुष्करं कीदृशः धनुः करे यस्य स तथा पूर्व्ववद्देःस: षत्वञ्च इसुसन्तयो: कखपफयोर्नित्यमितिषर: ॥ ६४ ॥

अस्यन्नरुष्करान् वाणान् ज्योतिष्करसमद्युतिः।
यशस्करोयशस्कामं कपिं वाणैरताडयत् ॥ ६५ ॥

ज०म० अस्यन्नित्यादि। वाणानरुष्करान् व्रणजनकान् दिवाविभेत्यादिना टः अस्यन् क्षिपन् ज्योतिष्करसमद्युतिः ज्योतिष्करणशीलः आदित्यः कर्म्मर्य्येनित्यादिना टः तेन तुल्यरत्यर्थः पूर्व्ववत् षत्वं यशस्करोयशोजननशीलः इन्द्रजिद्यशस्कामं यशसि कामोऽस्येति तं कपिं वाणैरवाकिरत् अताडयत् अतः कृकमीत्यादिना न व्यय विसर्ज्जनीयस्य सत्वं ॥ ६५ ॥

भ० अस्यन्नित्यादि। इन्द्रजिदरुष्करान् व्रणजनकान् वाणान् अस्यन् क्षिपन् वाणैः कपिमताडयत् ज्योतिष्करस्य सूर्य्यस्य समा द्युतिर्यस्य यशस्करोयशोजननशीलः कीदृशं कपिं यशस्कामं यशसि कामोयस्य सर्व्वत्र पूर्व्ववद्देःस इसान्तषत्वञ्च अरुर्ज्योतिर्यशश्च करोतीति ष्कुश्च: ॥ ६५ ॥

चकाराधस्पदं नासौ चरन् वियति मारुतिः। मर्म्मा
विद्भिस्तमस्काण्डैर्व्विध्यमानोऽप्यनेकधा ॥ ६६ ॥

इति सत्वाधिकारः।

चकारेत्यादि। अधो मारुतिर्वियति चरन् अधस्पदं पृथिव्यां पदं न चकार अधस्पदमिति मयूरव्यंसकादित्वात्‌ः कस्कादिषु चेति षत्वं मर्माणि विध्यतीति क्विप् नहिवृतीत्यादिना पूर्व्वपदस्य दीर्घत्वं। इति षत्वषत्वाधिकारः॥ ६६॥ ज॰म॰

चकारेत्यादि। अधो मारुतिर्हनूमान् वियति आकाशे चरन् मर्माणि विध्यद्भिः कालायसघटितत्वात् तमस्तुल्यैः काण्डैः शरैरनेकधाविध्यमानत्वाद्भ्रममाणोऽपि अधस्पदं पृथिव्यां पदं न चकार पूर्व्ववदेः सः अधःशिरसोःपदे तमसस्तु काण्डे नित्यं विसर्गस्य सकारइति परः। इति विसर्ज्जनीयसत्वाधिकारः॥ ६६॥ भ॰

पुरुह्नतद्विषोधूर्षु युक्तानश्वस्य वाजिनः। आयूंषि त्वक्षु निर्भिद्य प्राभञ्जनिरमोचयत्॥ ६७॥

इतः प्रभृति अपदान्तस्य मूर्द्धन्यइत्यधिकृत्याह। पुरुह्नतेत्यादि। पुरुह्नतद्विषदिन्द्रजितः सम्बन्धिनोश्वस्य रथस्य धूर्षु युक्तान् वाजिनः त्वक्षु चर्मसु निर्भिद्य प्राभञ्जनिर्मारुतिरायूंषि जीवितानि अमोचयत् त्याजितवान् धूर्षु त्वक्षिति आदेशप्रत्यययोरिति षः प्रत्ययसकारत्वात् तत्र हि इण्कोरिति वर्त्तते परेण च सकारेण प्रत्याहारः आयूंषीति नुम्विसर्ज्जनीयेत्यादिना षत्वं। वष्टिभागस्य इति छन्दोविषयत्वाज्ज्योराहृतं ततः छन्दसि वसइति क्विप्रत्ययस्य विधानात् एवञ्च प्रतनायाञ्चिपइति पाठान्तरमयुक्तं॥६७॥ ज॰म॰

अथ मूर्द्धन्यषत्वाधिकारः। पुरुह्नतेत्यादि। प्रभञ्जनस्यापत्यं हनूमान् पुरुह्नतद्विषः शक्रशत्रोर्मेघनादस्य अश्वस्य रथस्य धूर्षु भ॰

तस्याधीयमेति बहुव्रीहिः यथाधो गर्वमनेनेति षष्ठात्मकर्मधारयः प्रोषितपाथेय गर्वमोघा भाषाः भामजित्सुदिति कः भासुक्तिनि रत् सखेः पुष्पवमेति मत्त रम् पदस्यपायोरिति णिः क्रियादि त्यादौ भाषवसेति षत्वं ॥ ९८ ॥

प्रतुष्टुषुः पुनर्युद्धमासिषञ्जयिषुर्भयं । आतस्थौ रथमात्मीयानुत्सिसाहयिषन्निव ॥ ९९ ॥

प्रत्वित्यादि। अथ आनीतादिति पुनरपि युद्धं प्रतुष्टुषुः प्रस्तो- अ०म० तुमारब्धुमिच्छुः सन् अज्झनगमां सनीति दीर्घः सनाशंसभिक्ष उः नलोकेति षष्ठीप्रतिषेधः रथमातस्थौ आरूढवान् भयमासिषञ्ज- यिषुः संश्लेषयितुमिच्छुः हनूमता तत्र स्तौतेः सनि षत्वभूते सञ्जेश्च स्तौतिण्योरिति अभ्यासादुत्तरस्य षत्वं आत्मीयान् भृत्यानुत्सि- साहयिषन्निव उत्साहयितुमिच्छन्निव युध्यध्वमिति स्तौतीत्यादिना षत्वे प्राप्ते सः स्विदित्यादिना षकारस्य षत्वं ॥ ९९ ॥

प्रतुष्टुषुरित्यादि। इन्द्रजित् पुनः सज्जीभूतं रथमातस्थौ भ० आश्रितवान् कीदृशः युद्धं प्रतुष्टुषुः प्रस्तोतुमारब्धुमिच्छुः भयं आसिषञ्जयिषुः हनूमतोभयमासञ्जयितुं संश्लेषयितुं इच्छुः आत्मी- यान् अनुचरान् उत्सिसाहयिषन्निव उत्साहयितुमिच्छन्निव ञिस्तोः ष्वेरित्यादिना षत्वभूते सनि स्वेः षत्वं तत्रैव सहवर्जनात् उत्सिसाहयिषन्नित्यत्र न षत्वं ॥ ९९ ॥

बलान्यभिषिषिक्षन्तं नदद्भिः कपिवारिदं। विजिगीषुः पुनश्चक्रे व्यूहं दुर्जयमिन्द्रजित्॥ ७०॥

अ०म० बलेत्यादि। कपिवारिदं कपिं वारिदमिव बलान्यभिषिषिक्षन्तं नदद्भिः अभिषेक्तुं छादयितुमिच्छन्तं स्थादिष्वभ्यासेत्यादिना तु सकारस्याभ्याससकारस्य च षत्वं तमेवंविधं कपिं विजिगीषुर्विजेतुमिच्छुः इन्द्रजित् सन्निविष्टोऽजेरिति कुतः पुनर्व्यूहं बलसन्निवेशं दुर्जयाख्यं चक्रे हस्त्यादिसैनिकानां मण्डलस्थित्या विरच्यते॥ ७०॥

भ० बलानीत्यादि। नदद्भिर्बलानि अभिषिषिक्षन्तं छादयितुमिच्छन्तं अतएव कपिं वारिदमिव जेतुमिच्छुरिन्द्रजित् पुनर्व्यूहं बलविन्यासं चक्रे दुर्जयं जेतुमशक्यं व्यूहस्य कपेर्वा विशेषणं अभिपूर्व्वस्थिचः सनः षत्वे ञिस्नोःस्वेरिति नियमेन किलादित्यादिना गीकइति इत्यादिना च प्राप्तं षत्वं बाध्यते प्रकृतेर्व्वाधितत्वात् गीकइत्यादिना स्वेःसकारस्यापि न षत्वमिति केचित् ञिस्नोःस्वेरित्यनेन स्विनिमित्तं षत्वं बाध्यते तेन प्रकृतेः सस्य न षत्वं स्वेस्तु गीक

ज० इत्यादिना षत्वं भवत्येवेति केचित् वस्तुतस्तु षत्वभूते सनि स्विनिमित्तस्यैव षस्य निषेधः नतु गिनिमित्तस्य तेनोभयत्र गीक इति षत्वं॥ ७०॥

अभिव्यक्तः कपिं क्रोधादभ्यषिञ्चन्निशात्मनः। संप्रहारसमुद्भूतैरस्त्रैः कोष्णैरवश्च्युतैः॥ ७१॥

अभीत्यादि। राक्षसाः क्रोधात्मनोऽभियन्तः यत्नं ज॰म॰
नयन्तः पीऽन्नाकर्षणीत्यत्र अनरि मनःअभीक्रोधारतोपः उप
सर्गादिति णत्वं सम्प्रहारसम्भूतैः रक्तैः क्रोधैरीषद्दुष्टैः भवद्युतैः
प्रहारनिर्गतैः कपिमभ्यषिञ्चन्निव अभिषिक्तवन्त इव कपि इपं
प्राक्सितादड्व्यवायेऽपीति षत्वं ॥ ७१ ॥

अभीत्यादि। राक्षसाः क्रोधादात्मनोऽभियन्तोऽन्नं नयन्तः भ॰
सम्यक् प्रहारजातैः ईषद्दुष्टैर्भवच्युतैः रक्तैः कपि मभ्यषिञ्चन्निव
अभिषिक्तवन्त इव षोयनार्थे म्नः अभिषोषिषोर्णीकःसुसुभषेो
इत्यादिना षत्वं ॥ ७१ ॥

संग्रामे तानधिष्ठास्यन्निषद्य पुरतोरणं। अविषी
दन्नवष्टभ्यान् व्यष्टभ्नान्नरविष्वणान् ॥ ७२ ॥

संग्रामइत्यादि। ये प्राणिनः अभिषिञ्चन्ति तान्नरविष्वणान् ज॰म॰
राक्षसान् संग्रामे अधिष्ठास्यन् वशतन्नीकरिष्यन् कपिः उपसर्गा
दिति षत्वं पुरतोरणं पुरद्वारं अष्टभ्नात् आश्रितवान् निषद्य
तत्रैव पुरतोरणे स्थित्वा प्राणिनोमाप्रविशुरिति अविषीदन्
विषादमगच्छन् निषद्य विषीदन्निति सदिरप्रतेरिति षत्वं अवष्ट
भ्नान् अविदूरान् अवाच्चालम्बनाविदूर्य्ययोरिति षत्वं व्यष्टभ्ना
दिति अड्व्यवायेऽपि स्तम्भेरिति षत्वं स्तम्भुस्तुम्भुइत्यादिना श्नाप्रत्ययः
सम्यङ्दायामभ्यवहारक्रियायां स्वनतिर्वर्त्तते नराणांविष्वणा इति
षः नरान् सम्यङ्मभ्यवहरन्तइत्यर्थः वेश्चस्वनोभोजनइति षत्वं
॥ ७२ ॥

भ॰ संग्रामइत्यादि। हनूमान् संग्रामे निषण्णस्तिष्ठन् अविषी दन् विषण्णो न भवन् तान् राक्षसान् अधिष्ठास्यन् अभिभविष्यन् पुरतोरणं पुरीबहिर्द्वारं व्यष्टभ्नात् आक्रान्तवान् पुरतोरण मधिष्ठास्यन् तान् व्यष्टभ्नादिति वा कीदृशान् अवष्टब्धान् निकट स्थान् ऊर्ज्जितान् वा नरविलक्षणान् मनुष्यं भुञ्जानान् अधिष्ठानि विषदविलम्बाश्चार्थविलक्षणां सीकर इत्यादिना षत्वं अवष्टब्धानिति सीकइत्यादौ अवष्टम्भेत्यस्य योगविभागार्थात् कपिदर्थार्थादन्य त्रापि षत्वं सनीषादित्वात् अत्र रक्षसोरौञ्जित्यान्यथनिकटभो जनेष्विति परः॥ ७२॥

विषण्णा राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन्। यत्र व्यसहतेन्द्रोऽपि कपिः पर्य्यषहिष्ट तत्॥ ७३॥

ज॰म॰ विषेत्यादि। विषण्णा सोढ्वा कपिचेष्टितमित्यर्थात् सात्पदाद्यो रिति प्रतिषेधे प्राप्ते परिनिविभ्य इति षत्वं राक्षसाः क्रुद्धाः शस्त्र जालमवाकिरन् विक्षिप्तवन्तः लङि रूपं यत् शस्त्रजालमिन्द्रो

ज॰ ऽपि न व्यषहत न सोढवान्सः लङि रूपं तत्कपिः पर्य्यषहिष्ट लुङि रूपं सर्वैःसिवादीनामित्यादिना विभाषा षत्वं॥ ७३॥

भ॰ विषण्णेत्यादि। राक्षसाविषण्णा सोढ्वा हनूमतः प्रहारमित्य र्थात् क्रुद्धाः सन्तः शस्त्रजालं शस्त्रसमूहं मैरन्तर्य्येण सर्व्वतोविषे मात् जालमिव अवाकिरन् निक्षिप्तवन्तः षां रूपं यत्शस्त्रजालं

मेघनादः परिष्कन्दन् परिस्कन्दमनामयत्। बब
न्धादपरिस्कन्दं ब्रह्मपाशेन विस्फुरन्॥ ७५॥

ज॰म॰ मेघेत्यादि। मेघनाद इन्द्रजित् परिष्कन्दन् परितोभ्रमन् परिस्कन्दमानपरिभ्रमन्तमरिं कपिं ब्रह्मपाशेन ब्रह्मणा दत्तेन पाशेनाशीघ्रमबध्नात् बद्धवान् किं आसत्यवे रूपं करोतीति वा मलं अपरिस्कन्दं अप्राच्यभरतत्वात् तेन परिस्कन्दः प्राच्यभरते ष्विति निपातनं विस्फुरन् ईषादुद्रक्तमित्यर्थः स्फुरतिस्फुलत्यो रिति विभाषाषत्वं॥ ७५॥

भ॰ मेघेत्यादि। मेघनाद इन्द्रजित् परिष्कन्दन् परितोभ्रमन् परिस्कन्दमानं परितोभ्रमन्तमरिं हनूमन्तं ब्रह्मपाशेन बाढ़ शीघ्रं अपरिस्कन्दं निश्चलं यथा भवति तथा बबन्ध बद्धवान् न विद्यते परिस्कन्दश्चलनं यस्मादन्धनात् क्रियाविशेषणं परिर्विशे षणमिति केचित् विस्फुरन् कोपात् हर्षाद्वा कम्पमानः परिस्कन्द विस्फुरेतोः षत्व विस्कभ्नानिर्वेत्यादिना विभाषया षत्वं॥ ७५॥

विस्फुरद्भिर्गृहीतोऽसौ निष्फुरः पुरुषाशनैः। विष्फ
रितुं समर्थोऽपि नाचलद्ब्रह्मगौरवात्॥ ७६॥

ज॰म॰ विष्फुरेत्यादि। असौ कपिः पुरुषाशनैः राक्षसैः विस्फुरद्भिः हर्षाच्चलद्भिर्गृहीतः निष्फुरः अतेजाः निस्फुरेति विभाषा षत्वं

विच्छभितुं व्यापारितुं समर्थोऽपि मत्प्रगौरवात् नाचलत् न चलितः माभून्मोघो मत्प्रभुः पाश इति वेच्छयातेरिति फलं ॥ ७६ ॥

विष्फुलेत्यादि। असौ कपिर्विष्फुलद्भिर्दर्पाच्चलद्भिः पुरुषा भ० मगैः राघवैः गृहीतोऽपि निष्फुलो निश्चलः विच्छभितुं व्यावर्तितुं समर्थोऽपि मत्प्रगौरवात् नाचलत् न चलितवान् विस्फुरेत्यादिना विष्णवः सत्वं नित्यं स्फुरत्स्फुलोस्तु विभाषितं ॥ ७६ ॥

कपीढ्वं भर्त्तुरानन्दं मा न प्रोढ्वं द्रुतं वियत्। वानरं नेतुमित्युच्चैरिन्द्रजित् प्रावदत् सकान् ॥ ७७ ॥

कपीत्यादि। भर्तुः रावणस्य आनन्दं कपीढ्व कुरुध्वं लिङि अ०म० रूपं अतो वानरं द्रुतं नेतुं वियदाकाशं मा न प्रोढ्वं मागोत्पतिष्ट मांङि लुङ् इणः षीध्वलिति धकारस्य मूर्द्धन्यढकारः इत्येवमुच्चैरिन्द्रजित् सकान् भृत्यान् प्रावदत् वदेर्लङि रूपं ॥ ७७ ॥

कपीढ्वमित्यादि। यूयं भर्त्तुरावणस्य आनन्दं कपीढ्वं कुरुध्वं भ० आरूपं इगुकुर्मंढीति किल्वात्र गुणः टीठीढीधोढिष इति धस्य ढत्वं किल्वादिति षः वानरं नेतुं द्रुतं यूयं वियदाकाशं मा न प्रोढ्वं न न गच्छत अपि तु प्रोढ्वं प्रमुकच्चवर्णचे माचोगे टी षिः गुणः धेयलोपेवेति पक्षे विलोपः टीठीढीधोढिष इति धस्य ढत्वं इत्युक्तं इन्द्रजित् सकान् आत्मीयान् उच्चैर्महता ध्वनिना प्रावदत् प्रोक्तवान् ॥ ७७ ॥

सुवर्चं। सुप्रतिष्णातसूत्राणां कापिष्ठलसमत्विषां।
स्थितां वृत्ते द्विजातीनां रामाबैचत मैथिलीं ॥ ८३ ॥

सुप्रेत्यादि। येषां द्विजातीनां सुप्रतिष्णातानि यन्ततोऽर्थ ज०म
तश्च निश्चितानि सूत्राणि तेषां सुप्रतिष्णातसूत्राणां सूत्रं प्रतिष्णा
तमिति निपातनं कपिष्ठलसमत्विषां कपिष्ठलोनामद्विजर्षभो गोत्र
प्रवर्त्तकः कपिष्ठलोगोत्रहति साधुः तत्तुल्यतेजसां द्विजातीनां
वृत्ते चरिते स्थितां मैथिलीं ऐचत ॥ ८३ ॥

सुप्रेत्यादि। अयं रामो द्विजातीनां वृत्ते स्थितां मैथिलीं भ०
ऐचत दृष्टवान् यां सूत्रं कीदृशानां सुप्रतिष्णातं यत्नतोऽर्थतश्च
विशुद्धं गोभिलादिसूत्रं येषां मनीषादित्वात् सूत्रे प्रतिष्णातश्च
षत्वं कपिष्ठलसमत्विषां कपिष्ठलाख्यस्य ऋषेः समा त्विट् येषां म
नीषादित्वात् गोत्रे कपेः स्थलस्य षत्वं ॥ ८३ ॥

सर्व्वनारीगुणैः प्रष्ठां विष्टरस्थां गविष्ठिरां। प्रया
मां कुष्ठले तारां दिविष्ठामिव निर्म्मलां ॥ ८४ ॥

कीदृशीमित्याह सर्व्वेत्यादि। यावन्तो नारीगुणाः तैः प्रष्ठां ज०म०
अग्रगामिनीं प्रष्ठोऽग्रगामिनीति साधुः विष्टरस्थामासनस्थां वृत्ता
सनयोर्विष्टरइति साधुः गविष्ठिरां वाचिस्थिरां गवियुधिभ्यामिति
षत्वं अस्मादेव वचनात् सप्तम्या अलुक् कुष्ठले अयानां कौ स्थले

निवर्त्तितपञ्चोत्वादिना सात्त्वस्य ऊनस्य चात्यस्याचोरिति प्रति षेधः पुनरित्यादिनोदाहृतं ह्रात्वाभावात् ॥ ८४ ॥

सुषामीमित्यादि। पुनः कीदृशीं मैथिलीं सुषामीं प्रियम्वदां भ॰ शोभनं साम यस्या इति नान्तत्वात् स्त्रियामीप् निःसुदुर्भ्यःसामसे धवन्नीनामिति षत्वमिति परः स्वमते सुनीषादित्वात् तन्वीं कृशां गुणाहीनइति पचे ईप् सर्व्वज्योतिःषु मध्ये ज्योतिष्टमां प्रकृष्ट प्रकाशरूपां सोकोर्षादिति षत्वं शुभां कल्याणयुक्तां आत्मानं निष्टपन्तीमिव सन्तापयन्तीमिव रामूमदर्शनात् तापस्य नैर न्तर्य्याभावात् निरस्तपीसन्तत्सेवनेइति षत्वमिति परः स्वमते सनी षादित्वात् तापस्य सन्तत्सेवनमत्र विवक्षितं वनं ज्योतिःसात्कु र्व्वतीं कात्स्न्येन दीपयन्तीमित्यर्थः कात्स्न्याप्रायस्योःषस्य प्रकाशा विति षत्वात् किलादित्यादौ साहर्य्यनात् न षत्वं ॥ ८५ ॥

मधुसान्नूतकिञ्जल्कपिञ्जरभ्रमराकुलां । उल्ल
सत्कुसुमां पुण्यां हेमरत्नलतामिव ॥ ८६ ॥

मध्वित्यादि। मधुसान्नूतकिञ्जल्कं कार्त्स्न्येन मधुतामापन्नं अ॰म॰ यत्किञ्जल्कं पुष्पकेसरं तन्मधुसान्नूतकिञ्जल्कं सादेशप्रत्यययो रिति प्राप्तस्य पूर्व्ववत्प्रतिषेधः तेन पिञ्जराः पिङ्गलाः ये भ्रमराः तैराकुलां उल्लसत्कुसुमां चलत्पुष्पां हेमरत्नलतामिव यथा हेमरत्नमयीं कल्पतरुलतां पुण्यां पवित्रामाश्चर्य्यामपीत्यर्थः॥८६॥

भ० मधुषादित्यादि। पुनः कीदृशीं हेमरत्नलतामिव कल्पतरु लतामिव पुष्पां पविचां उत्तमामित्यर्थः हेमरत्नलतां कीदृशीं कार्त्स्न्येन मधुतामापन्नेन किञ्चएकेन पुष्पलेहरेण पिङ्गला धी भ्रमरालीराकुलां व्याप्तां अत्रापि षादर्व्वर्णनाय पत्वं उत्तमत्कुसुमां राजपुष्पां ॥ ८६ ॥

विलोचनाम्बु मुञ्चन्तीं कुर्व्वाणां परिषेसिचां। हृद यस्येव शोकाग्निसन्तप्तस्योत्तमस्मृतां ॥ ८७ ॥

ज०म० विलोचेत्यादि। विलोचनाम्बु अस्रु मुञ्चन्तीं विक्षिपन्तीं हृद यस्य शोकाग्निसन्तप्तस्य परिषेसिचां भृशं निर्व्वाणमिव कुर्व्वाणामैक्ष तेति पूर्व्वेण सम्बन्धः सिचेर्यङन्तात् स्त्रीलिङ्गे भावे अकारप्रत्ययः उपसर्गादित्यादिना अभ्यासव्यवायेऽपि प्राप्तस्य षत्वस्य सिचोयङ कीति प्रतिषेधः उत्तमस्मृतां पतिव्रतात्वात् ॥ ८७ ॥

भ० विलोचनेत्यादि। विलोचनाम्बु मुञ्चन्तीं अस्रु क्षिपन्तीं शोक रूपाग्निसन्तप्तस्य हृदयस्य परिषेसिचां पुनःपुनरतिशयेन वा सेचनं कुर्व्वाणामिव अग्निनिर्व्वाणाय जलसेकः क्रियतइत्युत्प्रेक्षा सिचेर्यङन्तात् संज्ञायामिति अः स्त्रियामाप् शोकरत्वादौ अयङ् सिचेति षत्वव्वर्जनाय पत्वं उत्तमस्मृतां पतिव्रतात्वात् ईदृशीं मैथिलीमैक्षतेति सम्बन्धः ॥ ८७ ॥

दृष्ट्वा तामभनग् वृक्षान् द्विषोऽसन् परिषेवतः। परित स्तान् विषिषेव क्रुद्धः स्वयमितानिव ॥ ८८ ॥

दृष्टेत्यादि। तां दृष्ट्वा वृक्षानभनक् चूर्णितवान् द्विषः अमून् ज०म०
परिसेधतः आगच्छतः अमून् हिंसन् पूर्व्ववत्प्राप्तस्य सेधतेर्गताविति
प्रतिषेधः परितश्च समन्तादुद्दिश्य चिक्षेप उन्मूलितवान् सिद्धः संयो
गादित्वादकित्त्वे गुणः क्रुद्धः स्वयमिव साक्षादिवानिलः॥ ८८॥

दृष्टेत्यादि। अयं तां सीतां दृष्ट्वा वृक्षान् अभनक् भग्नवान् भ०
किं कुर्व्वन् द्विषः अमून् अमून् हिंसन् कीदृशान् परिसेधतः सर्व्व
तोगच्छतः सीकइत्यादौ अगतिसेधेति गत्यर्थवर्ज्जनात् न षत्वं
अयं तान् वृक्षान् परितः समन्तात् प्रचिक्षेप क्षिप्तवान् क्रुद्धः सन्
स्वयं साक्षात् अनिल इव॥ ८८॥

अप्रतिस्तब्धविक्रान्तमनिस्तब्धोमहाहवे। विसोढ
वन्तमस्त्राणि व्यतस्तभ्नद्घनध्वनिः॥ ८९॥

अप्रेत्यादि। घनध्वनिर्मेघनादः अनिस्तब्धोऽनभिभूतः अप्र ज०म०
तिस्तब्धविक्रान्तं अनभिभूतविक्रमं कपि स्तम्भेरिति प्राप्तस्य षत्वस्य
प्रतिस्तब्धनिस्तब्धौ चेति प्रतिषेधनिपातनं अस्त्राणि महाहवे विसो
ढवन्तं सोढइति प्रतिषेधः व्यतस्तभ्नात् निष्पादितवान् एवं व्यव
स्तोऽवदिति योज्यं स्तम्भेर्व्यञ्जनस्य स्तम्भसिवुसहां चङीति षत्व
प्रतिषेधः॥ ८९॥

अप्रेत्यादि। घनध्वनिर्मेघनादः अप्रतिस्तब्धविक्रान्तं अनभि भ०
भूतविक्रमं हनूमन्तं व्यतस्तभ्नात् निश्चलं कृतवान् कीदृशः अनि
स्तब्धः अनभिभूतः कीदृशं महाहवे अस्त्राणि विसोढवन्तं सहि

विषसादेन्द्रजिद्बुद्धा बन्धे बन्धान्तरक्रियां। दिव्य बन्धोविषहते नापरं बन्धनं यतः ॥ ९१ ॥

इति षत्वाधिकारः।

विषेत्यादि। बन्धे दिव्ये बन्धान्तरक्रियां बन्धनविशेषकरणं ज०न०
बुद्धा इन्द्रजित् विषसाद विषादमुपगतः नियतं दिव्यबन्धं मुक्त
वानिति यतोदिव्यबन्धोनापरं स्वयं बन्धनं विषहते अतोविषसा
देति योऽयं सदिस्वञ्जोःपरस्य लिटि षत्वप्रतिषेधः पूर्वस्य तु
सदिरप्रतेरिति भवत्येव विषहतइति न प्रतिषेधः तत्र सोढरूपस्य
ग्रहणात्। इति मूर्द्धन्याधिकारः ॥ ९१ ॥

विषेत्यादि। इन्द्रजित् बन्धे बन्धान्तरकरणं बुद्धा ज्ञात्वा भ०
विषसाद विषादं गतवान् गीकइत्यादिना षत्वे प्राप्ते सदिस्वञ्जो
र्यांनाक्षेरिति प्रकृतेः षत्वनिषेधः सेस्तु षत्वमेव यतोयस्मात्
दिव्यबन्धोऽपरं बन्धनं न विषहते गीकइत्यादिना षत्वं। इति
षत्वाधिकारः ॥ ९१ ॥

मुष्णन्तमिव तेजांसि विस्तीर्णोरस्थलं पुरः। उपसे दुर्दशग्रीवं गृहीत्वा राक्षसाः कपिं ॥ ९२ ॥

इतःप्रभृति णत्वमधिकृत्याह। मुष्णेत्यादि। राक्षसाः पुरः ज०म०
कपिमादाय दशग्रीवमासेदुः ढौकितवन्तः नतु दर्शनगोचरं
गताः अप्रभातत्वात् कीदृशं तेजांसि मुष्णन्तं खण्डयन्तमिव विस्ती
र्णोरस्थलं विस्तृतवक्षसं तत्र रषाभ्यां नोणइति णत्वं ॥ ९२ ॥

रुधिरपायिणामिति रुधिरं रक्तं पिबन्तीति यथादित्वात् णिन् पुंसि ऽदान्तरइत्यादौ नैकाचकोऽस्तुवेति पाक्षिकं णत्वं मद्यकुपाणा धिपं तूर्णं कपिमादाय राक्षसाइति क्वचित्पाठः तदा मद्यक प्रधानं पानं येषां तेषामधिपं मद्यकानां पानं यत्र सोऽस्यकुपाणो देशः तस्याधिपमिति वा मद्यमेव पानं पेयं येषामिति वा करण वत्वं देशे पानस्य णत्वं नित्यं भावकरणयोः पानस्य वा णत्व मिति परः ॥ ९५ ॥

सुरापाणपरिक्षीवं रिपुदर्पहरोदयं। परस्त्रीवा हिणं प्रापुः साविस्काराः सुरापिणः ॥ ९६ ॥

सुरेत्यादि। सुरापाणात्परिक्षीवं मत्तं रावणं वा भावकरण योरिति णत्वं रिपुदर्पहरउदयोऽभ्युदयो यस्य तं परस्त्रियं वाह यितुमुपभोक्तुं शीलं यस्य तं परस्त्रीवाहिणं प्रातिपदिकान्तइति णत्वाभावः पाक्षिकः प्रापुः सुष्ठु निकटीकृताः साविस्काराः साह ङ्काराः सुरापिणः सुरापैर्युक्ताः सुरां पिबन्तीति गापोष्टक् ते येषां सन्तीति मत्वर्थीयः एकाजुत्तरपदेणइति णत्वं उकारस्य प्राति पदिकान्तस्यैकाच्त्वात् ॥ ९६ ॥ ज०म०

सुरेत्यादि। राक्षसारावणं प्रापुः कीदृशं सुरापाणेन परि क्षीवं मत्तं करणवत्वं भावकरणयोः पानस्य वा णत्वमिति परः रिपूणां दर्पहारकउदयोयस्य तं परस्त्रियं वोढुं उपभोक्तुं शीलं यस्य तं पुंसि ऽदान्तरइत्यादिना नैकाचकोऽस्तुवेति पक्षे णत्वं परस्त्री भ०

कामिषमिति पाठे नैव कवर्गवत्त्वात् नित्यं षत्वं कीदृशाः पावि
त्र्यारा: पापहाराः सुरापिकः सुरापैर्युक्ताः सुरां पिबन्तीति
सुरापाः सुपञ्जनादिति कः तथाऽत्रापि टप् पूर्ववदेकाचूमात
नित्यं षत्वं ॥ ९६ ॥

संघर्षयोगिणः पादौ प्रषेमुस्स्विदयद्विषः। प्रषिष्णु
ष्णोऽहनूमन्तं प्रमीणन्तं द्विषन्मतीः ॥ ९७ ॥

ज०म० संघेत्यादि। संघर्षयोगिणः स्पर्द्धायोगिनः सुमतिषेति षत्वं ते
ऽन्योन्याभिभवेच्छया स्विदयद्विषो रावणस्य पादौ प्रषेमुः उप
सर्गात्सुनोत्याद्यषोति षत्वं हनूमन्तं प्रषिष्णवः ढौकयन्तः द्विष
न्मतीः शत्रुबुद्धीः प्रमीणन्तं अभिभवन्तं मीञ्हिंसायां क्रैयादिकः
हिनुमिनादिति णत्वं ॥ ९७ ॥

भ० अमित्यादि। राक्षसाः स्विदयद्विषो रावणस्य पादौ प्रषेमुः
प्रणतवन्तः प्रास्वोणषइत्यादिना नादिधातुत्वात्षत्वं संघर्षयो
गिणः स्पर्द्धायुक्ताः पुर्वइत्यादिना कवर्गवत्त्वात् नित्यं षत्वं
हनूमन्तं प्रषिष्णवः प्रापयन्तः कीदृशं द्विषन्मतीः शत्रुबुद्धीः प्रमी
णन्तं अभिभवन्तं प्रास्वोणइति मीनादिर्मीर्णत्वं ॥ ९७ ॥

अवपाणि शिरो भूमौ वानरस्य यतन्छिदः। व्याम
व्ययत संक्रुद्धः समितिं रक्षसां पतिः ॥ ९८ ॥

अथेत्यादि। अथ वानरस्य वनच्छिदः शिरो भूमौ अवपाथि अ०म०
छित्वा पातयामि आनिक्षेपिति क्रुधं बधिरञ्च प्रापवेति संक्रुद्धः
रक्षसां पतिः स्वामी समितिं चमूं आमन्त्रयामास आचितवान्॥ ९८॥

अथेत्यादि। रक्षसां पती रावणः संक्रुद्धः सन् समितिं सभां म०
आमन्त्रयत उक्तवान् किमादित्याह अहं वनच्छिदो वानरस्य शिरो
भूमौ अवपाथि छित्वा पातयामीत्यर्थः बधिरञ्च प्रहरणे प्राण्व
योष इति आनिपेषणत्वं॥ ९८॥

अथ्यगादीत् प्रणिघ्नन्तं घनः प्रणिनदन्निव। ततः
प्रणिहितः स्वार्थे राक्षसेन्द्रं विभीषणः॥ ९९॥

अथेत्यादि। ततस्तत्परकालं विभीषणो राक्षसेन्द्रं प्रणि अ०म०
घ्नन्तं हनुमारभमाणं अथ्यगादीत् वक्तुं प्रवृत्तः घन इव प्रणिन
दन् गर्जन् स्वार्थे राक्षसेन्द्रस्य प्रणिहितोऽवहितमनाः सर्व्वत्र
येर्गदेति णत्वं॥ ९९॥

अथेत्यादि। ततोऽनन्तरं हनूमन्तं प्रणिघ्नन्तं हन्तुमारभ म०
माणं राक्षसेन्द्रं विभीषणो घन इव प्रणिनदन् गर्ज्जन् अथ्यगादीत्
वक्तुं प्रवृत्तः स्वार्थे रावणप्रयोजने प्रणिहितः सावधानः सर्व्वत्र
माम्यशोण इति णत्वं॥ ९९॥

प्रणिजाप्य दशग्रीव प्रणियातुमलं दूषं। प्रणिगजा
नीहि हन्यन्ते दूता दोषे न सत्यपि॥ १००॥

ज०म० प्रणीत्यादि । हे दग्रीव प्रणिग्राम्य रोषं त्यज रीढि कूपनि रूपं प्रमामष्टानामिति दीर्घः दर्पं प्रणियातुमलं न किञ्चित् पूर्व्वं वचलं प्रणिजानीहि अवगह सत्यपि दोषे न हन्यन्ते दूता इति जानातेः प्रेषधातोरुपदेशावस्थायां अकबाद्यपान्तत्वात् प्रेषे विभाषेत्यादिना णत्वं ॥ १०० ॥

भ० प्रणीत्यादि । हे दग्रीव प्रणिग्राम्य प्राम्नोभव प्रमेर्ध्या रूपं यन्तोप्रमादिमिद इति दीर्घः इलोपः दर्पं क्रोधं प्रणियातुं प्राप्तुं अलं नार्हसि निषेधार्थोऽलं शब्दः उभयत्र प्राम्नोण इति णत्वं त्वं प्रणिजानीहि अवगच्छ पूर्व्ववदकबाद्यपान्तात्मने रिति पक्षे णत्वं दोषे सत्यपि दूता न हन्यन्ते नीतिरित्यर्थात् ॥ १०० ॥

प्राणयन्तमरिं प्रोचे राक्षसेन्द्रोविभीषणं । प्राणिणि षुर्न पापोऽयं योऽभाङ्क्षीत्प्रमदावनं ॥ १०१ ॥

ज०म० प्राणेत्यादि । अरिं कपिं यः प्राणयति जीवयति तं प्राणयन्तं विभीषणं स्वसप्राणमे अनयत्य स रूपं अनितेरिति णत्वं प्रोचे राक्षसेन्द्रः न प्राणिणिषुः न जीवितुमिच्छुरयं पापः उभौ साभ्यासस्येति णत्वं सर्वैरपि योऽभाङ्क्षीत् भग्नवान् प्रमदावनं सप्तम्यलक्षणा वृद्धिः ॥ १०१ ॥

भ० प्राणेत्यादि । अरिं हनूमन्तं प्राणयन्तं जीवयन्तं विभीषणं राक्षसेन्द्रः प्रोचे उक्तवान् अनितेर्न्तःस्थ रूपं किमुक्तवानित्याह

अथ पापोद्दुरात्मा रावणेन प्राणिनिषूर्ण जीवितमिच्छुः ममितेः यमि रूपं प्रात्मनोऽपदृत्यादिना आत्मनेति विभाषया णत्वं योऽयं मम द्रावणं अभाङ्क्षीत् भग्नवान् त्वां रूपं ॥ १०१ ॥

प्राघानिषत रक्षांसि येनाप्तानि वने मम। न प्रहण्मः कथं पापं वद पूर्व्वापकारिणं ॥ १०२ ॥

प्राघेत्यादि। मम आप्तानि अक्षप्रभृतीनि येन वने प्राघानिषत मारितानि कर्म्मणि लुङ् चिण्वदिट् हो हन्तेरिति घत्वं तपर परिच्छिन्नाकारपूर्व्वस्य नकारस्य हन्तेरत्पूर्व्वस्येति णत्वं न भवति तं पूर्व्वापकारिणं पापं कथं न प्रहण्मः न मारयाम इति वद कथय त्वोर्व्वेति णत्वं ॥ १०२ ॥ अ॰म॰

प्राघेत्यादि। येन ममाप्तानि रक्षांसि अक्षप्रभृतीनि रणे प्राघानिषत मारितानि कर्म्मणि टी हनग्रहदृशश्च इति मिण् संर्हेर्घो ञ्णितिचेति घः हनोऽङ्को प्रीणन इत्यत्र प्रत्युपलक्षणं हस्यान्यथा ल्ये णत्वाभाव इति बोध्यं तेन घत्वेऽपि णत्वनिषेधः होघत्वे इति णत्व निषेधार्थं परस्मैपदं तं पूर्व्वापकारिणं पापं कपिं कथं वयं न प्रहण्मः इति त्वं वद प्रात्मनोऽपदृत्यादौ मवान्तहन इति पक्षे णत्वं पूर्व्वापकारिणमिति कुर्व्वइत्यादिना कवर्गवत्त्वात् नित्यं णत्वं ॥ १०२ ॥ भ॰

वेश्मान्तर्पणं कोपान्मम शत्रोः करिष्यतः। मा का र्षीरक्षरक्षणं प्रयाणार्थममेध्यमं ॥ १०३ ॥

